लोके इति डल्हणः । नामानि—"रीठाकरञ्जकस्त्वन्यो गुच्छलो गुच्छपुष्पकः । रीठा गुच्छफलोऽरिष्टो मङ्गल्यः कुंभबीजकः । प्रकीयः सोमवल्कश्च फेनिलो रुद्रसंज्ञकः" । रा. नि । गुणाः—"रीठाकरञ्जस्तिक्तोष्णः कटुःस्निग्धश्च वातजित् । कफघ्नः कुष्ठकण्डूघ्नस्त्वग्दोषश्वासकासहा" रा. नि ॥

**अरिष्टा** । उ. ३६. **मन्त्रसूत्रवेणिका** । मन्त्रितवस्त्रादिखण्डः । अरिष्टा वस्त्रादिभिर्मन्त्रपुरस्कृतैर्बन्धः इति डल्हणः । हिं.—गांठ, तावीज; म.—टोटका; त.—इरक्षापन्तनं, काप्पु; सिं.—यन्त्रय; मल.—यन्त्रं യന്ത്രം, उरुक्कु, रक्षा; इं.—Charm, amulet, bandage to cure a bite. "अरिष्टो दंशबन्धनं" इति वैजयन्ती ॥

**अरुष्करः** । सू. ७ etc. अरूंषि स्फोटैर् व्रणान् करोति । भल्लातः ॥

**अरुष्करजम्** । चि. १९. **भल्लातकबीजतैलम्** । see **आरुष्करम्** ।

**अर्कः** । सू. २. etc. अर्काभानि पर्णान्यस्य । उपविषजातीयक्षुपः । N. O.—*Asclepiadeae* । हिं.—मदार, मंदार, आक, आकडा; उ.—मुदार; बं.—आकन्द; म.—रुई, आकडा; कों.—रूवी; गु.—आकडो; सिन्धी.—Byclospa, बैक्लोस्पा; तै.—जिल्लेडु, एक्के, अर्कमु, मंदारमु; क.—एक्केमाले, एक्के, यक्के, अर्कगिड; तु.—येक्केमाले; त.—पतापडं, एरुक्कु; सिं.—वरा; मल.—एरुक्कु എരുക്കു, एरिक्कु; पा.—खरक, खुर्क; इं.—Gigantic Swallow-wort, Madar; ल.—*Calotropis gigantea* । नामानि—"अर्कः सूर्याह्वयः पुष्पी विक्षीरोऽथ विकीरणः । जंभलः क्षीरपर्णी स्यादास्फोटो भास्करो रविः" । ध. नि । गुणाः—"अर्कस्तु कटुरुष्णश्च वातहृद्दीपनः सरः । शोफ-

व्रणहर: कण्डूकुष्ठप्लीहकृमीञ्जयेत्" । ध. नि । "रक्तार्कपुष्पं मधुरं सतिक्तं कुष्ठक्रिमिघ्नं कफनाशनञ्च । अर्शो विषं हन्ति च रक्तपित्तं संग्राहि गुल्मे श्वयथौ हितं तत् । "क्षीरमर्कस्य तिक्तोष्णं स्निग्धं सलवणं लघु । कुष्ठगुल्मोदरहरं श्रेष्ठमेतद्विरेचनम्" । भा. प्र । अस्य पुष्पक्षीरमूलत्वग्निर्यासादि ग्राह्यम् । see अलर्क: । अर्क:श्वेतरक्तभेदेन द्विविध: । चिकित्सितपञ्चमाध्याये "अर्कामृता-क्षीरजले" इत्यत्र "अर्कामृताक्षारजले" इत्यवश्यं पठनीयं ॥

**अर्कजटा** । उ. ५. अर्कवृक्षस्य मूलम् । आककी जड । अर्कमूल-मित्येव सुश्रुतपाठ: ॥

**अर्कपुष्पी** । उ. १. अर्कस्य अर्कवृक्षस्य पुष्पमिव पुष्पमस्या: । **अजगन्धाभेद:** । see **सुवर्चला** । नागवल्लीसमानलता गुडूची तुल्यदला सूर्यमुखीसदृशगोलपुष्पा काचित् लताविशेष इति केचित् । पयस्या अर्कसदृशपत्रपुष्पा लतैव, श्वेतदूर्वाविशेषां केचि-दाहुरिति डल्हण: सुश्रुतशारीरव्याख्यायां । सूर्यवल्लीत्यपरे । कुडुंबिनीति भाष्यकार: । **हिं.**—अर्कहुली, अन्धाहुली, दधियार; **बं.**—बडक्षीरुई; **म.**—पहारकुडुंबी, शिरदोडी, सूर्यफूल-वल्लि; **को.**—शिरदोडी, देवभोंवरी; **गु.**—खरणेर, सूरजमुखी; **क.**—मरुलिगनकसा । **नामगुणा:**—"अर्कपुष्पी क्रूरकर्मा पयस्या जलकामुका । अर्कपुष्पी कृमिश्लेष्ममेहापित्तविकाराजित्" । भा. प्र । सर्वांशो ग्राह्य: ॥

**अर्जक:** । **सू.** ६ etc. अर्जयति । अर्ज सर्ज अर्जने । श्वेतपर्णासो नाम **क्षुद्रतुलसी** । शुक्लकुठेर इति क्षीरस्वामी । श्वेतकुठेरक इति चरकोपस्कारे । N. O.—*Labiatae* । **हिं.**—तुलसी, अजबला, सबझा, वाबुइ; **बं.**—बबुई तुलसी, वाबुइ; **म.**—आजवला; **तै.**—विबूदिपत्रि; **कों.**—कामकस्तूरि; **काश्मीरी.**—हस्बु;

Hazbo; द.—सबझा; क.—कामकस्तूरि, नीरुतुळसि, कम्मगगरे, कव्वेगग्गिगिड; तु.—कामकस्तूरि; त.—तिरुनीरुपचै, करण्टे, उरुत्तिरचटे; सिं.—अकमेझ; मल.—चिरुतुळसि ചെറുതുളസി; रामतुळसी इत्येके; बर्मा.—काला पिङ्गेन् Kala Pingain; Fr फ्.—Basilic Cultive; Ger जर्मन.—Basilien-kraut; पा.—फरञ्जमुष्क; इं.—Sweet Basil; ल.—*Ocimum Basilicum* । बर्बरीकाकारो लघुमञ्जरीकः सूक्ष्मपत्रो निर्गन्धः श्वेतकुठेरक इति डल्हणः। नाजबू इति चरकप्रसादनी । पोदीना इति शिवदीपिका । **नामानि**—"अर्जकः क्षुद्रतुलसी क्षुद्रपर्णो मुखार्जकः। उग्रगन्धश्च जंभीरः कुठेरश्च कठिञ्जरः" । रा. नि । **गुणाः**— अर्जकः शीतलस्तिक्तः श्लेष्मामयविनाशनः । द्विविधं च विषं हन्याद्दुष्टरक्तविनाशनः" । ध. नि । अस्य पत्रं ग्राह्यम् ॥

**अर्जुनः** । सू. १५ etc. शौक्ल्यात्, इन्द्रप्रियत्वादित्येके । "अर्जुनः ककुभे पार्थे कार्तवीर्यमयूरयोः । मातुरेकसुतेऽपि स्यात् धवले पुनरन्यवत् । नपुंसकं तृणे नेत्ररोगे स्याद् अर्जुनी गवि । उषायां बाहुदानद्यां कुट्टन्यामपि च क्वचित्" इति मेदिनी । स्वनामप्रसिद्धः श्वेतवल्कलवान् वृक्षः । N. O.—*Combretaceae* । हिं.—कोह, कौह, काह, कहु, अर्जुन; उ.—अर्जुन; बं.—अर्जुनगाछ; म.—अर्जुनसादडा, सारढोल; गु.—साजदान, सादडो, आसोंदरो, कडायो; तै.—तेल्लमाद्दिचेट्टु, येर्माद्दि; क.—मत्ति, तोरमत्ति, बिळिमत्ति, सोहोन्ने, कदुरेकिविगन मर, होळेमत्ति, अश्मर; मुंबापुर्यां.—अर्जुनसादडा; कों.—मत्तीरूक्; त.—मरुतै; सिं.—कुंबुक्; मल.—नीर्मरुतु നീർമരുത്, वेण्मरुतु; इं.—Arjuna myrobalan; ल.—*Terminalia arjuna* । **नामानि**—"ककुभोऽर्जुननामाख्यो नदीसर्जश्च कीर्तितः । इन्द्रद्रुर्वी-

**रवृक्षश्च** वीरश्च धवलः स्मृतः" । भा. प्र । **गुणाः**—"ककुभः शीतलो हृद्यः क्षतक्षयविषास्रजित् । मेदोमेहव्रणान् हन्ति तुवरः कफपित्तहृत्" । भा. प्र. । अस्य त्वग्ग्रहणीया ॥

**अर्णवमलः** । उ. ११. **समुद्रफेनः** ॥

**अर्धशक्तिः** । सू. २. **देहार्धबलम्** । तल्लक्षणं यथा—"स्तनयोरन्तरे घ्राणे सर्वसन्धिषु कक्षयोः । स्वेदोद्गमो ललाटे च शक्त्यर्धमिति निर्दिशेत्" इति । "हृदि स्थानस्थितो वायुर् यदा वक्त्रं प्रपद्यते । व्यायामं कुर्वतो जन्तोस्तद्बलार्धस्य लक्षणं" इति सुश्रुतः । बलार्ध लक्षणं केचिदन्यथा पठन्ति,—"कक्षाललाटनासासु हस्तपादादि सन्धिषु । प्रस्वेदान्मुखशोषाच्च बलार्धं तद्धि निर्दिशेत्" । इति । "हृदयस्थो यदा वायुर्वक्त्रं शीघ्रं प्रपद्यते । मुखस्य शोषं लभते तद्बलार्धस्य लक्षणम्" ॥

**अलम्** । सू. २१ etc. अलति । 'अल भूषणादौ' । **हरितालम्** ॥

**अलक्तकः** । चि. ४ etc. न लजते स्म अलक्तकः, अलति वा । **लाक्षा** ॥

**अलक्तकरसः** । चि. ४ etc. **लाक्षारसः** ॥

**अलंबुषा** । चि. ८. अलं पुष्णाति । **लज्जालुकाभेदः** । हिं.—लज्जालुभेद, फूलशोला ; बं.—फूलशोला ; म.—लाजाळुभेद ; क.—रिशामणी ; त.—वरळ्त्तुपिट, तोट्ट चुर्णकि ; सिं —हीन् नितिकुम्ब ; मल.—मुक्कुट्टि മുക്കുററി, तीण्टानाळि തീണ്ടാനാഴി; इं—A sort of sensitive plant । **नामगुणाः**—"अलम्बुषा खरत्वक् च तथा मेदोगला स्मृता । अलम्बुषा लघुः स्वादुः कृमिपित्तकफापहा" । भा. प्र । अस्याः सर्वांशो ग्राह्यः ॥

**अलर्कः** । सू. १५. । अलति भूषयतीति । **श्वेतार्कः** । "अलर्को

श्वेतार्के स्याद्योगोन्मादितकुक्कुरे इति मेदिनी । N. O.—*Asclepiadeae* । हिं.—सफेद आक, मन्दार बं.—श्वेत आकन्द; म.—पांढरी रुई; गु.—धोळो आकडो; तै.—तेल्ल जिल्लेडु; क.—बिळेयक्के; सिं.—हेळवरा; मल.—वेळ्ळेरुक्कु വെള്ളെരുക്ക; पा.—दुध; अ.—उषर; इं.—Siva's flower, White swallow wort; ल.—*Calotropis Procera* । नामानि—"अलर्को गणरूपः स्यान्मन्दारो वसुकोपि च । श्वेतपुष्पः सदापुष्पः स बालार्कः प्रतीयसः" । भा. प्र । गुणाः—"श्वेतार्कः कटुतिक्तोष्णो मलशोधनकारकः । मूत्रकृच्छ्रास्रशोफार्तिव्रणदोषविनाशनः" । रा. नि । "अर्कद्वयं सरं वातकुष्ठकण्डूविषव्रणान् । निहन्ति प्लीहगुल्मार्शःश्लेष्मोदरशकृत्कृमीन । अलर्ककुसुमं वृष्यं लघु दीपनपाचनम् । अरोचकप्रसेकार्शःकासश्वासनिवारणम्" । भा. प्र । क्षीरपुष्पमूलत्वगादि ग्राह्यम् ॥

**अलर्कः** । उ. ३८. योगोन्मादितकुक्कुरः । हिं.—बावले कुत्ते; मल.—पेप्पट्टि പേപ്പട്ടി, भ्रान्तन्नायि; इं.—Mad dog । "अलर्कस्तु योगितः" इति वैजयन्ती । "रोगितः" इति हलायुध पाठः ॥

**अलाबुः** । उ. २२. कटुकालाबुः ॥

**अलाबुः** । उ. ३७. न लम्बते । स्वनामख्यातफलशाकलता । कटुकालाबुर्वेति केचित् । N. O.—*Cucurbitaceae* । हिं.—तोम्बी, लौकी, कद्दू, गृहलौआ; बं.—लाउ; म.—दुध्याभोंपळा; गु.—तुंबडी, आलडी; तै.—आनप, सुरा, अलाबुवु; क.—सोरे, एलची, ईसगायिबळ्ळि; कों.—दुद्दि; त.—चुरै; तु.—तुरै; सिं.—लबु, दिय लबु; मल.—चुरा ചുരാ, पाल्च्चुरा; इं—Water-gourd, Bottle-gourd, Long white

gourd, White Pumpkin, Pumpkin, Squash ; ल.—*Cucurbita lagenaria* ; Fr फ्र.—Gourde ; Ger जर्मन्.—Flaschenkurbis । नामानि—"अलाबू. कथितास्तुम्बी द्विधा दीर्घा च वर्तुला" । भा. प्र । गुणाः—"तुंबी समधुरा स्निग्धा पित्तघ्नी गर्भपोषकृत् । वृष्या वातप्रदा चैव बलपुष्टिविवर्धनी" । रा. नि । अस्याः मध्यमफलं ग्राह्यम् । सा च दीर्घवर्तुलादिभेदादनेकधेति डल्हणः ॥

**अलिः** । उ. ३७. अलति दंशे । वृश्चिकः । "लेपतोऽलिकुलजं विषमाशु" । "अलिः द्रोणश्च वृश्चिके" इति नरहरिः ॥

**अल्लकम्** । चि. ८. धान्यकम ॥

**अवन्तिसोमम्** । सू. २६ etc. अवन्तिषु अभिषुतं सोममिव । कांजिकम् ॥

**अवन्ती** । सू. ५. मालवा नाम जनपदविशेषः । Name of a country, north of the Narmada; its capital was Ujjayini । "अवन्त्युज्जयिनी ज्ञेया" इति हलायुधः । "मालवास्स्युरवन्तयः" इति वैजयन्ती । "स्यात्साकेतमयोध्यायां विदेहा मिथिलापुरी । महोदया कान्यकुब्जा कान्यकुब्जं महोदयं । काशी वाराणस्यवन्ती विदिशा चोज्जयिन्यपि । प्राग्ज्योतिषं कामरूपं द्वारका द्वारवत्यपि" इति च दृश्यते ॥

**अवरान्नम्** । सू. ८. विदलान्नम् । यथा—"यवगोधूमचणका माषो मुद्गाढकौ तथा । मकुष्ठकः कुलत्थश्च मसूरस्त्रिपुटस्तथा । निष्पावकः कलायश्च विदलान्नं प्रकीर्तितम्" । वैदलान्नमिति डल्हणः । विदलसस्यान्नमितीन्दुः । "शमिजाः शिंबिजाः शिंबीभवाः सूप्याश्च वैदलाः" इति भावमिश्रः ॥

**अवल्गुजः** । सू. ६ etc. अवल्गोरशोभनाज्जायते । वाकुची ॥

**अवल्गुजकः** । सू. ६. वाकुची ॥

**अविः** । सू. ५ etc. अवति, अव्यते वा । अव रक्षणादौ । मेषः । "उरभ्रो रोमशोप्यवि"रिति वैजयन्ती । हिं.—भेड, मेंड; बं.—मेडा; म.—मेंढा; क.—तागरु; त.—चेम्मरियाडु, चेम्बिलियाडु; सिं.—बेटलु; मल.—चेम्मरियाटु ചെമ്മരിയാട്, कुरियाडु; इं.—Sheep; ल.—*Ovis aries* । "नानादेशविशेषेण मेषा नानाविधा अमी" । रा. नि । **नामानि**:—"मेढ्रो मेढो हुडो मेष उरणोप्येडकोपि च । अविर्वृष्णिस्तथोर्णायुः कथ्यन्ते तद्गुणा अथ" । **मांसगुणाः**-"मेषस्य मांसं पुष्टौ स्यात् पित्तश्लेष्मकरं गुरुः । तस्यैवाण्डविहीनस्य मांसं किंचि लघु स्मृतम्" । भा. प्र । **दुग्धगुणाः**-आविकं लवणं स्वादु स्निग्धोष्णं चाश्मरीप्रणुत । अहृद्यं तर्पणं वृष्यं शुक्रपित्तकफप्रदम् । गुरु कासानिलोद्भूते केवले चानिले वरं" । भा. प्र । **दधिगुणाः**-"आविकं दधि सुस्निग्धं कफपित्तकरं गुरु । वाते च रक्तवाते च पथ्यं शोफव्रणापहम्" । रा. नि । **तक्रगुणाः**-"अवितक्रमपथ्यं स्यादम्लं दुर्गन्धकारकम् । दीपनं कटुकं चोष्णं लेखनं लघु पित्तकृत् । रक्तदोषकरञ्चैव कफवातविनाशकं" इति द्रव्य गुणे । **नवनीतगुणाः**—"नवनीतं स्मृतं चाव्याः पाके शीतं सरं लघु । योनिशूले कफे वाते शोफे चार्शसि चोदरे । जठराग्नौ सदा शस्तं कृमिज्वरकरं परं । कण्डूं वान्तिं चारुचिं च करोतीति बुधाः जगुः । नि. र । **घृतगुणाः**—"पाके लघ्वाविकं सर्पिः सर्वरोगविनाशनम् । वृद्धिं करोति चास्थीनामश्मरीशर्करापहम् । चक्षुष्यमग्निधुक्षणं वातदोषनिवारणम । भा. प्र । "पाके लघ्वाविकं सर्पिर्न च पित्तप्रकोपनम् । कफेनिले योनिदोषे शोफे कम्पे च तद्धितम्" । ध. नि. । "मैडकं घृतमतीव गौरवाद्वर्ज्यमेव सुकुमारदेहिनां । बुद्धिपाटवकरं बलावहं सेवितं च कुरुते नृणां वपुः" । रा. नि । **मूत्रगुणाः**—"कासप्लीहोदरश्वासशोफवर्चोग्रहे हितम् । सक्षारं

कटुकं तिक्तमुष्णं वातघ्नमाविकं" । ध. नि । "गोऽजाविमहिषी-णाञ्च स्त्रीणां मूत्रं प्रशस्यते । म. पा॥

**अशोकः** । चि. ३ etc. अश्नतेऽशोकः, शोकनाशकत्वाद्वा नास्ति शोको यस्मादिति वा । स्वनामख्यातो **लोहितकुसुमवृक्षः** । N. O.—*Leguminosae* । हिं.—अशोक, अशोगी, अशोली; बं.—अशोकगाछ, अस्पाल, अंगनाप्रिय; मुंबा.—अषोका; म.—अशोक; गु.—आशुपालो; तै.—अशोकमानु; क.—अशोक, असुगे, कंकलिमर; त.—अचोकं, अचोकु; सिं.—अशोक, होपलु; मल.—अशोकं അശോകം; बर्मा.—Thawgabo तवगबो; उर्दु.—अशोक; इं.—Asoka tree; ल.—*Saraca indica, Jonesia Asoca* । **अशोकनामगुणाः**— "अशोको हेमपुष्पश्च वञ्जुलस्ताम्रपल्लवः । कंकेलिः पिण्डपुष्पश्च गन्धपुष्पो नटस्तथा ॥ अशोकः शीतलस्तिक्तो ग्राही वर्ण्यः कषायकः । दोषापचीतृषादाहकृमिशोषविषास्रजित्" । भा. प्र । "अशोकः शिशिरो हृद्यः पित्तदाहश्रमापहः । गुल्मशूलोदराध्माननाशनः कृमिहारकः" । रा. नि । अस्य त्वगादिकं ग्राह्यम् ॥

**अशोकरोहिणी** । उ. २. शोकहन्त्री रोहत्यगं वाऽशोकरोहिणी, अशोक इव रोहतीति वा, । **कटुका** । "कटुः कटंभराऽशोकरोहिणी कटुरोहिणी" इत्यमरः । अशोकसदृशपलाशलतेत्येके ॥

**अश्मन्तः** । उ. १८. अश्मन्तकः ॥

**अश्मन्तकः** । शा. २. अश्मानमन्तयति । अम्लोटकसदृशो वन्यवृक्षविशेषः । हिं.—सिरहटा, आबुटा; बं.—आवडा; म.—आपटा; क.—अश्मर । मुळंप्लाशु इति केरलेष्वेके । Identified by some with Plectranthus aromaticus । **नामानि**— "अश्मन्तकश्चन्द्रकस्तु कुद्दालश्चाम्लपत्रकः । श्लक्ष्णत्वग्बालुकापर्णः

स्मृतो यमलपत्रकः" । ध. नि । **गुणाः**—"अश्मन्तकः स्यान्मधुरः कषायः सुशीतलः पित्तहरः प्रमेहजित् । विदाहतृष्णाविषमज्वरापहो विषार्तिविच्छर्दिहरश्च भूतजित्" । रा. नि । अन्ये कोविदारसदृशयुग्मपत्रं लताविशेषमश्मन्तकमाचक्षते इति डल्हणः । कोविदारवृक्षसदृशोम्लपत्रो अम्लोट इति लोकप्रसिद्धो वृक्ष इत्येके । कोमलपत्रो मधुरफल इति केचित् । मालुयासदृशपत्रो वृक्ष इति चक्रपाणिदत्तः । अस्य मूलादिकं पक्वफलं च ग्राह्यम् ॥

**अश्मभिद्** । शा. १ etc. **अश्मभेदः** । "पलाशभस्माश्मभिदा ग्रन्थ्याभे" इत्यत्र "ग्रन्थीभूते शटीसिद्धं पालाशे वापि भस्मनि" इति केषांचन पाठः ॥

**अश्मभेदः** । **सू. १५** etc. अश्मानमुद्भिद्य जायते । **क्षुपविशेषः** । N O.—*Amarantaceae* । **हिं**—पाखानभेद, पाथरचुर; **बं.**—पाथरचूरी ; **म.**—पाषाणभेद ; **गु.**—पाषाणभेद ; **तै.**—तेलमुरुपिण्डि, पेण्टिदोण्ड ; **क.**—अलिलगया ; बिळेसूलि, बिळेहूलि, बिळिहिण्डिगिड ; **त.**—चेरुपूळै ; कल्लुरुवि इत्येके ; **सिं.**—पहणबेय, पोल्पला ; **मल.**—चेरुपूळा ൭ചറൂള ; कल्लूर्वञ्चि इति केचित् ; **इं.**—Irissp ; **ल.**—*Achyranthus lanata; Coleus Aromaticus* इत्यन्ये ; **नामानि**—पाषाणभेदकोऽश्मघ्नः शिलाभेदोऽश्मभेदकः । स चैवोपलभेदश्च नगाभिद्दृषदश्मजित्" । ध. नि । **गुणाः**—अश्मभेदो हिमस्तिक्तः कषायो वस्तिशोधनः । भेदनो हन्ति दोषार्शोगुल्मकृच्छ्राश्महृद्रुजः । योनिरोगान् प्रमेहांश्च प्लीहशूलव्रणानि च" । भा. प्र । अस्य मूलं ग्राह्यम् । अभावे सर्वांशो ग्रहणीयः ॥

**अश्मभेदकः** । **चि. १४.** अश्मभेदः ॥

**अश्वः** । **सू. ५** etc. अश्नुते । अशू व्याप्तौ । घोटकः । **हिं.**—

घोडा ; म.—घोडा ; तै.—गुर्रमु ; क.—कुदिरि ; त.—कुति-रै ; सिं.—अश्वय, कुदिर ; मल.—कुतिरा കുതിര ; इं—Horse : ल.—*Eguus caballus* । **नामानि**—"घोटकेऽप्यश्वतु-रगास्तुरंगाश्च तुरंगमाः । वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः" । भा. प्र । **अश्वभेदाः**—"आरट्टसिन्धुजवनायुजपारसीककांबोज-बाह्लिकमुखा विविधास्तुरंगाः । साम्राणशेफकमुखा अपि देशतस्स्यु-र्वर्णेन तेपि च पुनर्बहुधा भवन्ति । श्वेतः कर्कः सोथ रक्तस्तु शोणो हैमः कृष्णो नीलवर्णस्तु नीलः । शुभ्रैर्नेत्रैर्मल्लिकाक्षो निदिष्टः कृष्णैरक्तः सोयमिन्द्रायुधाख्यः । इत्थं नानावर्णभेदेन वाजी ज्ञात-व्योयं लोकरूढैः सुधीभिः । अत्रास्माभिर्न प्रपञ्चः कृतोस्मादाजा-नेयोऽप्यत्र वाजी कुलीनः । सुकुलः सुविनीताश्वः किशोरस्तुरगा-र्भकः । वाजिनी बडवा वामी प्रसूताश्वाऽश्विनी च सा" रा. नि । **मांसगुणाः**—"अश्वमांसन्तु तुवरं वह्निकृत्कफपित्तलं । वातहृद् बृंहणं बल्यं चक्षुष्यं मधुरं लघु" । भा. प्र । "अश्वमांसं भवेदुष्णं वातघ्नं बलदं लघु । पित्तदाहप्रदं नृणां तदेतच्चातिसेवनात्" । रा. नि । "घोटकः कटुकः पाके दीपनः कफपित्तकृत् । वातहृद् बृंहणो बल्यश्चक्षुष्यो मधुरो लघुः" । म. पा । **दुग्धगुणाः**—"आश्वमुष्णं पयो रूक्षं बल्यं वातकफापहम् । लवणाम्लं लघु स्वादु सर्वमेकशफं तथा" । म. पा । **दधिगुणाः**—"दीपनीयम-चक्षुष्यं वातलं दधि वाडवं । रूक्षमुष्णं कषायं च कफमूत्रापहं च तत्" । ध. नि । **तक्रगुणाः**—"अश्वातक्रन्तु तुवरं किञ्चिद्वात-करं मतं । अग्निदीप्तिकरं रूक्षं नेत्र्यं मूर्च्छाकफापहं" इति वैद्यक-निघण्डौ । **नवनीतगुणाः**—"अश्विन्या नवनीतं तु तुवरं कटुकं मतं । अचक्षुष्यं स्मृतं चोष्णं कफवातविनाशनं" । नि. र । **घृतगुणाः**—"वृद्धिं करोति देहाग्नेर्लघु पाके विषापहम् । तर्पणं नेत्र-रोगघ्नं दाहनुद्वडवाघृतम्" । भा. प्र । "अश्वासर्पिस्तु कटुकं मधुरं

च कषायकम् । ईषद्दीपनदं मूर्छाहारि वातालदं गुरु" । ध. नि। **मूत्रगुणाः**—"अश्वमूत्रं तु तिक्तोष्णं तीक्ष्णं च विषदोषजित् । वातप्रकोपशमनं पित्तकारी प्रदीपनं" । रा. नि । "खरोष्ट्रेभनराश्वानां पुंसां मूत्रं हितं मतं" । म. पा ॥

**अश्वकर्णः** । सू. १५ etc. अश्वस्य कर्ण इव पत्रमस्य । **शालभेदः** । ह्रस्वशालः । पूर्वदेशे गन्धमुण्डः पिप्पलसदृश इति डल्हणः । सर्जभेद इति चक्रः । शाल इति केचित् । असनादिगणे 'शालच्छागकर्णाश्वकर्णा' इति दर्शनादश्वकर्णः शालपर्यायेनान्यथा चावगम्यते। संग्रहगुह्यरोगप्रतिषेधेपि "धवशालाश्वकर्णाजकर्णत्वग्भिःकफोत्थित" मिति पदत्रयमेकत्रैव दृश्यते । हिं.—छोटा शाल; बं.—शालगाछ; म.—लघु राळेचा वृक्ष ; क.–सज्जरदामर ; तै.–एपचेट्टु ; त.—आचामरुतु ; सिं.—सिहिन्मुरुत ; मल.–चिरुमरुतु ചെറുമരുത്; **नामानि**—"जरणद्रुमोश्वकर्णस्तार्क्ष्यप्रसवश्च सस्यसंवरणः । धन्यश्च दीर्घपर्णः कुशिकतरुः कौशिकश्चापि" । रा. नि । **गुणाः**—"अश्वकर्णः कटुस्तिक्तः स्निग्धः पित्तास्रनाशनः । ज्वरविस्फोटककण्डुघ्नः शिरादोषार्तिकृन्तनः;" । रा. नि । उदरचिकित्सिताध्याये "साश्वकर्णैः सगोमूत्रै" रित्यत्र "साश्वगन्धैः सगोमूत्रै"रित्येव मुद्रितचरकपाठः ॥

**अश्वखुरा** । उ. ३. अश्वस्य खुरमिव कुसुमं यस्य । **अद्रिकर्णी** । अश्वक्षुरेति पाठः । "गिरिकर्ण्यपरा नीला वाजिखुरा व्यक्तगन्धकुसुमा च । अश्वखुरा तुरगखुरप्रतिमा स्याच्छंखिनी कृष्णा"इति मञ्जरी । कृष्णशंखपुष्पीतीन्दुः । क्षुद्ररोगप्रतिषेधाध्यायव्याख्यायां "श्वेताश्वखुरजा मषी"त्यत्र अश्वखुरेण कृता मषीति वेतीन्दुः ॥

**अश्वगन्धा** । शा. २ etc. अश्वस्य गन्ध एकदेशो मेढ्रमिव मूलमस्याः । **स्वनामख्यातक्षुपविशेषः** । This small shrub is common in Bombay, Nagpur, Western India and

occasionally found in Bengal । N. O.—*Solanaceae* । हिं.—असगन्ध, वाराहीगेठी ; बं.—अश्वगन्धा ; म.—आसंध, आसगन्ध, आस्कन्ध ; गु.—आसोंध, आसुन्ध, असन ; कों.— अश्वगन्धि ; Goa गोवा.— फातरफोद Fatarfoda; तै.—पेन्नेरु, अश्वगन्धि ; क.—सोगदेबेरु, अंगर, अमक्किरे, हिरिमद्दिनगड्डे, हिरेगेड्डे ; उर्दु.—असगन्ध ; त.—अचुवकन्ति, अमुक्किरा ; अमुकरा ; सिं.—अमुकरा, अस्गोडु ; मल.—अमुक्कुरम् അമുക്കുരം, अमुक्किरं, पीवट्टा ; पा.—मेहेमन् बरी ; इं.—Winter cherry, ल.—*Withania Somnifera Physalis flexuosa* । **नामानि**—"गन्धान्ता वाजिनामादिरश्वगन्धा हयाह्वया । वराहकर्णी वरदा बलदा कुष्ठगन्धिनी" । भा. प्र । **गुणाः**—"अश्वगन्धा कषायोष्णा तिक्ता वातकफापहा । विषव्रणक्षयान् हन्ति कान्तिवीर्यबलप्रदा" । ध. नि । "अश्वगन्धाऽनिलश्लेष्मश्वित्रशोथक्षयापहा । बल्या रसायनी तिक्ता कषायोष्णातिशुक्रला" । भा. प्र । अस्याः मूलादिकं ग्राह्यम् ॥

**अश्वघ्नः** । शा. १ etc. अश्वं हन्ति । **करवीरः** ॥

**अश्वतरः** । सू. ६. तनुरश्वः । वेगसरो नाम गर्दभेनाश्वायामुत्पन्नोऽश्वविशेषः । हिं.—खच्चर ; बं.—खचर ; म.—खेंचर ; क.—हेसरकत्ते ; त.—कोवेर्कलुतै ; सिं.—अश्वतरया ; मल.—कोवर्कलुता കോവർക്കഴുതാ ; इं—Mule; ल.—*Mulus* **नामानि**—"तज्जो घोट्यामश्वतरो शीघ्रवेगोऽगपूजितः" । म. पा । **गुणाः**—"बल्यमाश्वतरं मांसं बृंहणं कफपित्तलं" म. पा ॥

**अश्वत्थः** । सू. २१ etc. न श्वःश्विरं शाल्मलीवृक्षादिवत् तिष्ठति । The age of a famous Peepul tree at Anuradhapura, in Ceylon, was said to have been 2147 years in 1852, and must be over 2220 years now. **स्वनामाख्या-**

तवृक्षः । N. O.—*Urticaceae* । हिं.—पीपलवृक्ष , पीपरवृक्ष , बाध ; बं.—अशोथगाछ , अश्वत्थ ; म.—पिंपळ ; गु.—पीपलो, जारि ; दखा.—आनिपीपल ; कों.—पिंपळ ; तै.—राविचेट्टु , चलदळमु , बोधिद्रुममु , कुलुजुव्विचेट्टु , रायिमानु ; क.—अरळी , अरसे , अश्वत्थ , पिप्पलमर , रङ्गिवसरि ; तु.—अत्तसमर ; त.—अरचमरं , तिरुमरं , नारायणं , वनकन्ति ; सिं.—एसतु , बो ; मल.—अरयाल् അരയാൽ , अरशुमरं ; पा.—दरख्तलरजां ; फ्.—Figuier-ou-arbre des Pagodes ; जर्मन्.—Religioser Fiegenbaum; ई.—Bo tree, Holy fig tree, Sacred Peepul, Sacred fig, Peepul tree; ल.—*Ficus Religiosa* । **नामानि**—"पिप्पलः श्यामलोऽश्वत्थः क्षीरवृक्षो गजाशनः । हरिवासश्चलदलो मङ्गल्यो बोधिपादपः" । म. पा । **गुणाः**—"पिप्पलो दुर्जरः शीतः पित्तश्लेष्मव्रणास्रजित् । गुरुस्तुवरको रूक्षो वर्ण्यो योनिविशोधनः" । भा. प्र । "अश्वत्थवृक्षस्य फलानि पक्वान्यतीव हृद्यानि च शीतलानि । कुर्वन्ति पित्तास्रविषार्तिदाहं विच्छर्दिशोषारुचिदोषनाशं" रा. नि । अस्य त्वक्पत्रादिकं ग्राह्यम् ॥

**अश्वमारः** । सू. १९. अश्वं मारयति । करवीरः ॥

**अश्वमारकः** । सू ३०. करवीरः ॥

**अष्टापदम्** । उ. २२. अष्टौ अष्टौ पदानि पंक्तावस्य । चतुरंगपीठम् । शारीफलकम् । हिं.—शतरञ्जखेलने का तख्ता ; बं.—छक ; म.—बुद्वळांचापट , चौपट ; त.—चतुर[illegible]कै ; मल.—चतुरङ्गप्पलका ചതുരംഗപ്പലക ; ई[illegible]hess Board । "काञ्चने शारिफलके स्यादष्टापदमस्त्रियां" इति वैजयन्ती ॥

**अष्टीला** । नि. ११. दीर्घवर्तुलाकाराशिलाखण्डः । हिं.—पत्थर·

कीसी गांठ ; मल.—अग्निक्कुट्टि അഗ്നിക്കുട്ടി ; इं.—Cylindric stone ॥

**असनः** । सू. १५. अस्यति रुजम् । असु क्षेपणे । छागकर्णसदृशपत्रः पीतशाल इति प्रसिद्धः शालवृक्षविशेषः । N. O.—*Leguminosae* । हिं.—विजयसार, बिजैसार, असन, अस्ना, आसना ; बं.—पियाशाल ; म.—बिबला, असाणा, असणा, होन्ने, वडिलुरिया ; गु.—बीयो, आसन; द्खा.—नटका दमुला ; तै.—वेगि, एगि, मद्दिचेट्टु, पेद्दगि ; क.—हुनेमर, रक्तहोन्ने, बेंगमर ; कपिन्नहाने ; त.—वेङ्कै ; मल.—वेङ्ङ വേങ്ങ; पा.—कमरकस ; खुने सियवुषाने हिन्दि ; अ.—दमुला अख्वेना हिन्दि ; इं.—Kino tree: ल.—*Pteroearpus marsupium* । नामानि—"असनस्तु महासर्जः सौरिर्बन्धूकपुष्पकः । प्रियको बीजकः श्यामः सुनीलः प्रियशालकः" । ध. नि । गुणाः—"बीजकः कुष्ठवीसर्पश्वित्रमेहगुदाक्रिमीन् । हन्ति श्लेष्मास्रपित्तञ्च त्वच्यः केश्यो रसायनः" । भा. प्र । "असनः कटुरुष्णश्च तिक्तो वातार्तिदोषनुत् । सारको गलदोषघ्नो रक्तमण्डलनाशनः" । रा. नि । सारकाष्ठमेव ग्राह्यम । मूलत्वगित्येके ॥

**असितजीरकः** । चि. १४. कृष्णजीरकः । उपकुञ्चिकेति संग्रहपाठः । N. O.—*Ranunculaceae* । हिं.—कालाजीरा ; उर्दु.—कुलंजन ; बं.—कालजीरे ; म.—शाहाजिरें ; गु.—शाजीरूं ; तै.—नल्ल जीलकर्र ; क.—करिजीरिगे ; त.—करुंचीरकं ; सिं.—कलुदुरु ; मल.—करिंजीरकं കരിംജീരകം ; इं.—Black cumin, Black Caraway seed ; ल.—*Nigella sativa ;* फ्र.—Cumin noir ; जर्मन्.—Schwarzer Kummel; Gr. ग्रीक्.—Melanthion ; अ.—कमुने अश्वद् ; पा.—स्याह धाना ; कों.—करिजिरे ; बर्मा.—Satmung शतमङ्ग ; तु.—कप्पुजी-

रद्दरि । तद्द्विविधं स्थूलसूक्ष्मभेदेन । नामानि—"कृष्णाजाजी तु जरणा सुगन्धः कणजीरकः । काश्मीरजीरका वर्षा कालिः स्यात् कालपेशिका" । ध. नि । गुणाः—"जरणा कटुरुष्णा च कफशोफनिकृन्तनी । रुच्या जीर्णज्वरघ्नी च चक्षुष्या ग्राहिणी परा" । बीजं ग्राह्यम् ॥

**असितसुरसः** । चि. ३. कृष्णतुलसी । N. O.—*Labiatae* । हिं.—काली तुलसी ; बं.—कालतुलसी ; म.—काळी तुळस ; गु.—कालीतुलसी ; तै.—कृष्णतुलसी ; क.—करेतुलसी ; तु.—कप्पुतुळचि ; मल.—करिन्तुळसि കരിന്തുളസി, कृष्णतृत्तावु ; सिं.—मदुरुतला ; इं.—Bleak basil, Purple stalked Basil । "कृष्णा तु कृष्णलसी" इति नरहरिः । see सुरसा ॥

**असृक्** । चि. ९. कुंकुमम् । रुधिरमिति चरकपाठः । कल्पस्थाने तृतीयाध्याये "अञ्जनं चन्दनोशीरमज्जासृक्शर्करोदकम् । लाजचूर्णैः पिबेन्मन्थ" मित्यत्र असृक्पदस्य रक्तचन्दनमिति शिवदीपिका । तन्न ; अजासृगित्येव तत्र समीचीनः पाठः । "तमजासृक्चन्दनोशीराञ्जनलाजचूर्णैः सशर्करोदकैर्मन्थं पायये" दिति पठत्याचार्यसुश्रुतः । तस्माच्छागरुधिरमित्यवश्यमवगन्तव्यम् ॥

**अहिः** । सू. ६ etc. आहन्तिः । सर्पः । हिं.—सांप ; म.—सर्प ; क.—हावु ; त.—पांपु ; सिं.—नयि ; मल.—पाम्पु പാമ്പ്; इं.—Snake । ल.—*Ophidia* । नामानि—"सर्पो दंष्ट्री भुजंगोऽहिर्भुजगोऽथ सरीसृपः । उरगः कञ्चुकी व्यालो द्विजिह्वोऽथ भुजंगमः" । ध. नि ॥

**अहिकञ्चुकः** । शा. १. अहिनिर्मोकः ॥

**अहिकेसरः** । चि. ७. नागकेसरः ॥

**अहिनिर्मोकः** । उ. ३. सर्पत्वक् । हिं.—सांपकी सफेद ऊपरी खाल ; छोटे सांपकी काँचुली इति शिवदीपिका । बं.—खोलस ; म.—सापाची कांत ; त.—पाम्बुचट्टै ; मल.—पाम्पिन्तोल्, പാമ്പിൻതോല്, पाम्पिन्वळा, उरिवळि ; इं.—The slough of a snake । "सर्पाचरस्तु निर्मोकः कञ्चुको निल्वयन्यपि" इति वैजयन्ती ॥

**अहिनिर्मोचनम्** । उ. ५. अहिनिर्मोकः ।

**अहिमारः** । उ. २१. अहिं मारयति । अरिमेदः ॥

**अहिमारकः** । उ. २१. अरिमेदः ॥

---

# आ ।

**आक्षम्** । सू. ५. बिभीतकबीजतैलम् । हिं.—बहेडेका तेल ; म.—बेहेड्याचें तेल ; मल.—तान्नियेण्णा താന്നിയെണ്ണ ।

**आखुः** । शा. १ etc. आखनत्याखुः । मूषिकः । हिं.—मूसा, चूह ; बं.—इन्दुर ; म.—उंदीर ; क.—इलि ; त.—एलि ; सिं.—मीय ; मल.—एलि എലി; इं.—Rat, Mouse; ल.—*Mus rattus, Mus musculus* । नामानि—"मूषिको मूषकः सिंगोप्याखुरुन्दुरुको नखी । खनको बिलकारी च धान्यारिश्च बहुप्रजः" । रा. नि । मांसगुणाः—"स्निग्धो बलकरः शुक्रवर्धनो मधुरो लघुः । दुर्नामकृमिदोषघ्नो वातहारी च मूषिकः" । अ. सं । उक्तं हि सुश्रुतसंहितायामप्यष्टादशविधा मूषिका इति । यथा—"लालनः पुत्रकः कृष्णो हंसिरश्चिक्किरस्तथा । च्छुच्छुन्दरोऽलसश्चैव कषायदशनोपि च । कुलिंगश्चाजितश्चैव चपलः कपिलस्तथा । कोकिलोऽरुणसंज्ञश्च महाकृष्णस्तथोन्दुरः । श्वेतेन महता

सार्धं कपिलेनाखुना तथा । मूषिकश्च कपोताभस्तथैवाष्टादश स्मृताः'' इति ॥

**आखुकर्णी** । चि. २०. आखोः मूषिकस्य कर्ण इव पर्णमस्याः । **मूषिककर्णी** । आखुकर्णाभपत्रा । हिं.—मूसाकानी, चूहाकन्नी, बुलबला इति शिवदीपिका ; बं.—इंदूरकाणीपाना, (काली दन्ती वेति केचित्) ; म.—उंदीरकानी ; गु.—उन्दरकर्नी ; तै.—एलुकचेविचेट्टु ; क.—वलिहरुवे ; त.—चवरियार् कून्तल् इत्येके । सिं.—मीकन्पला ; मल.—एलिचेवि ; पा.—गोरोमुष, सतर ; अ. आजानुलफार ; ल. *Ipomoea Reniformis*, *Salvania Cuculiata* इत्येके । स्थूलसूक्ष्मभेदेन सा द्विधा । **नामगुणाः**—आखुकर्णी त्वाखुकर्णपर्णिका भूदरीभवा । आखुकर्णी कटुस्तिक्ता कषाया शीतला लघुः । विपाके कटुका मूत्रकफामयकृमिप्रणुत । भा. प्र । अस्या सर्वांशो ग्राह्यः ॥

**आगारधूमः** । चि. २१ etc. **गृहधूमः** ॥

**आजम्** । मू. ५. **अजाक्षीरम्** ॥

**आजम्** । मू. ६. **अजमांसम्** । हिं.—बकरेका मांस ; म.—मेंढ्याचें मांस ; सिं—एलुमस् ; मल.—आट्टिराचि ആട്ടിറച്ചി ; इं.—Mutton । see अजः ॥

**आज्यम्** । सू. ७ etc. आ अज्यते । **सर्पिः** ॥

**आटरूषः** । चि. १९. अटान् गच्छतो रूषत्-टरूषः । **वासा** ॥

**आटरूषकः** । सू. १० etc. **वासा** ॥

**आटा** । मू. २६. **शरारिपक्षी** । अटत्याटिः । आटीति पाठः । ''आटिः शरारिरातिःस्या''दिति हलायुधः । जलवर्धनी नाम पक्षिविशेष इति डल्हणः । ''विचित्रजलचारिणी''ति मदनपालः ।

हिं.—बतक ; बं.—शराल ; म.—बदक ; क.—बादुकोळि ; त.—वात्तु ; सिं.—तारावा ; मल.—तारावु താറാവ്, वात्तु, आदि ; इं—Duck ; ल.—*Anas domestica, Turdus gingingianus* इत्येके । "कुशाटावदने स्नाव्ये" इत्यत्रारुणदत्त प्रभृतयः केचित् प्रस्खलन्ति । कुशाटा नाम शस्त्रं वदने स्नाव्ये योज्यमिति सर्वाङ्गसुन्दरा । चन्द्रनन्दनस्त्वत्र निपुणं व्याख्यायति ; "कुशवदनं तथा आटावदनं ते द्वे स्नाव्ये रोगे कार्ये तेनेकं शस्त्रं कुशवदनं द्वितीयमाटावदन"मिति । कुशापत्रमाटामुखं चेति संग्रहपाठः स्फुटतया भाति सुश्रुतमतानुसारी । आटीमुखमिति सुश्रुतः पठति ॥

**आढकी** । सू. ६ etc. आढौकते । शिंबीधान्यविशेषः । "आढकी तु तुवर्यां स्त्री परिमाणान्तरे त्रिषु" इति मेदिनी । N. O.—*Leguminosae* । हिं.—अडहर, अरहर, तोर, डुमुर ; बं.—अडहर, अड़हड़, आड़रि ; म.—तुरी ; गु.—तुवर, डङ्गरि ; तै.—कंदुलु ; क.—तोगरि, करिडहु, तुरुकुतोगरिगिड, कटणाकट्ठु ; कों.—तोरि ; तु.—तोगोरि ; त.—तुवरै, इयवै ; मल.—तुवरा തുവര ; पा.—शाखुल ; इं.—Pigeon Pea, Dholl, Cadjan Pea, Congo Pea; ल.—*Cajanus indicus, C. Bichlor, C. Flavus* । नामानि—"आढकी तुवरी तुल्या करवीरभुजा तथा । वृत्तबीजा पीतपुष्पा श्वेता रक्ताऽसिता त्रिधा" । ध. नि । गुणाः—"आढकी तुवरा रूक्षा मधुरा शीतला लघुः । ग्राहिणी वातजननी वर्ण्या पित्तकफास्रजित्" । भा. प्र । अस्याः बीजं पुराणं ग्राह्यम् ॥

**आतपत्रम्** । सू. २ etc. आतपात्त्रायते । छत्रः । हिं.—छाता, छतरी ; म.—छत्री, छत्र ; त.—कुडै ; सिं.—कुडे ; मल.—कुटा കുട ; इं.—Umbrella, ल.—*Umbella* ; तै.—गोडुग ।

"छत्रं स्यादातपत्रं तन्नृपलक्ष्म नृपस्य चेत्" इति वैजयन्ती । "छत्र-धारणमोजस्यं चक्षुष्यं हिमघर्मजित्" म. पा ॥

**आत्मगुप्ता ।** सू. ६ etc. आत्मना गुप्ता स्पर्शाविषयत्वात् । कपिकच्छुः ॥

**आनूपम् ।** अनूपदेशवासिप्राणिवर्गमांसं । अनूपवर्गस्तु पञ्चविधः । तद्यथा—"कूलेचराः प्लवाश्चापि कोषस्थाः पादिनस्तथा । मत्स्या-श्चैते समाख्याताः पञ्चधानूपजातयः" तत्र कूलेचराः—"लुलाय गण्डवाराहचमरीवारणादयः । एते कूलचराः प्रोक्ताः यतः कूले चरन्त्यपां" । प्लवाः—"हंससारसकारण्डवकक्रौञ्चशरारिकाः । नन्दीमुखी सकादम्बा वलाकाद्याः प्लवाः स्मृताः" । कोषस्थाः—"शंखः शंखनखश्चापि शुक्तिशम्बूककर्कटाः । जीवा एवंविधाश्चा-न्ये कोषस्थाः परिकीर्तिताः" । पादिनः—"कुंभीरकूर्मनक्राश्च गोधामकरशंकवः । घण्डिकः शिशुमारश्चेत्यादयः पादिनः स्मृताः । आनूपास्तेषु विज्ञेयाः श्लेष्मलाः वातकोपनाः" इति । रा. नि ॥

**आपानभूमिः ।** चि. ७. आ संभूय पिबन्त्यत्र । **मद्यपानस्थलम्** । मद्यपीनेके स्थान । Liquor shop. Place where people drink together । "आपानं पानगोष्ठी स्या"दिति हलायुधः । "आपानं पानगोष्ठिका" इति यादवामरौ । मल.—कळ्ळुषाप्पु കള്ളുഷാപ്പ് ; कुटिस्थलम , चारायकडा ।

**आमकमूलकम् ।** उ. २१. बालमूलकं ॥

**आमतैलम् ।** उ. १ etc. **अपक्वतिलतैलम्**, तिलकल्कनिपीडनेन मुष्टितः परिस्रुतम । सद्यस्कमभिनवं वाऽपक्वं तिलतैलमिति हाराणचन्द्रः । "आमे तैलेन सिंचेच्च"इत्यत्र "आमतैलेन सिंचेच्च" इत्यवश्यं पठनीयम् ॥

**आममूलम् ।** सू. ६. बालमूलकम् ॥

**आममूलकम्** । सू. ८ etc. **बालमूलकम्** ॥

**आमयम्** । चि. १४ etc. आमम् रोगं यात्यनेन । **कुष्ठम्** ॥

**आमलः** । चि. ४. "कोलळाजामलद्राक्षा" इत्यत्र आमलस्थाने मधु इत्येव चरकसंग्रहयोः पाठः ॥

**आमलकः** । सू. ५ etc. **स्वनामख्याततरुः** । "नित्यमामलके लक्ष्मीर्नित्यं हरितगोमये । नित्यं शंखे च पद्मे च नित्यं शुक्के च वाससि" । "यस्सदामलकैः स्नानं करोति स विनिश्चितम् । वलीपलितनिर्मुक्तो जीवेद्वर्षशतं नरः" । N. O.—*Euphorbiaceae* । हिं.—आमला, आमरा, आवले, आंवला, अणोरा, औंला; अम्लिका; उ.—आमिला, बं.—आमलकी, आम्ला; उत्.—अण्डा; पश्चा.—अंबली, अंबुल; काश्मी.—अऊँला; म.—आंवळा, आवळा. आंवळी, आंवले; गु.—आंबळां, आमली; तै.—उसिरिका, तिफचमु, नेल्लि, आमलकमु; क.—नेल्लि; कों.—आवाळो; तु.—नेल्लि; त.—नेल्लिमरं, नेल्लिक्कायि; बर्मा,—झिफियु-सि, शबजु; अ.—आमलज; पा.—आमला; मल.—नेल्लि, नेल्लिक्का നെല്ലിക്കാ; सिं.—नेल्लि, अंबुल; फ्रं.—Phyllanthe Emblic; ज.—Gebrauchlicher Amlabaum; इं.—Awla tree, Emblic myrobalan, Indian Gooseberry, Gooseberry tree; ल.—*Emblica officinalis, Phyllanthus emblica* नामानि—"आमलकी वयस्था च श्रीफला धात्रिका तथा । अमृता च शिवा शान्ता शीतामृतफला तथा । जातीफला च धात्रेयी ज्ञेया धात्रीफला तथा । वृष्या वृत्तफला चैव रोचनी च चतुर्दश" । रा. नि । पक्वफलं ग्राह्यं । । गुणाः—"विद्यादामलके सर्वान् रसान् लवणवर्जितान्" इति चरकः । "तान् गुणांस्तानि कर्माणि विद्यादामलकीष्वपि । यान्युक्तानि हरीतक्या वीर्यस्य

तु विपर्ययः" । च. चि । "त्रिष्वामलकमाख्यातं धात्री तिष्यफलाऽमृता । हरीतकीसमं धात्रीफलं किन्तु विशेषतः । रक्तपित्तप्रमेहघ्नं परं वृष्यं रसायनम् । हन्ति वातं तदम्लत्वात् पित्तं माधुर्यशैत्यतः । कफं रूक्षकषायत्वात् फलं धात्र्यास्त्रिदोषजित् । यस्य यस्य फलस्येह वीर्यं भवति यादृशम् । तस्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत्" । भा. प्र । "शिवाऽभावे शिवा मता" इति भावमिश्रः ॥

**आमलकलेहम्** । चि. ६. रसायनाध्यायोक्तश्च्यवनप्राशः ॥

**आमलकशुक्तिः** । उ. ३९. धात्रीफलत्वक् ॥

**आमलकी** । उ. ५. आमलके गुणानामलकी । आमलकः ॥

**आमाशयः** । सू. ६ etc. आमस्याशयः । भुक्तमात्रस्याधारो दृतिसमाकार आमाशयः स नाभेरूर्ध्वं इति प्रत्यक्षशारीरात् । Stomach । "नाभिस्तनान्तरं जन्तोरामाशय इति स्मृतः" इति चरकः ॥

**आम्रः** । सू. ६ etc. अम्यतेभिलष्यते । स्वनामप्रसिद्धवृक्षः । उक्तमस्ति—"बालं पित्तानिलकफकरं तच्च बद्धास्थि तादृक्पक्वं दोषत्रितयशमनं स्वादु पुष्टिं गुरुं च । दत्ते धातुप्रचयमधिकं तर्पणं कान्तिकारि ख्यातं तृष्णाश्रमशमकृतौ चूतजातं फलं स्यात्" । रा. नि । N. O.—*Anacardiaceae* । हिं.—आम ; बं.—आम ; म.—आंबा ; गु.—आंबो ; Bom.—तयेत ; कों.—आंबो ; ते.—मावि, आमु, मामिडि ; क.—माविनमर ; तु.—कुकु ; त.—मामरं, तितळं, मान्ति ; मलायी.—मांपलम ; सिं.—अंब ; मल.—मावु മാവു ; पा.—आंबा, नहसक् ; अ.—अम्बज ; फ्र.—Manguier ; जर्मन.—Mangobaum; इं.—Mango tree ; ल.—*Mangifera indica*, *M. Domestica* ; "पक्वं त्वाम्रफलं सुगन्धि मधुरं स्निग्धं परं बृंहणं रुच्यं

वातहरं च हृद्यमलघु ग्राही प्रमेहघ्नगुरु । शीतं वर्ण्यमपित्तलं व्रणहरं श्लेष्मास्ररोगापहं यद्दृष्ट्वा मन उल्लसत्यपि मुनेः किं वर्णनं भूतले" इति । नामानि—"आम्रः प्रोक्तो रसालश्च सहकारोऽतिसौरभः । कामांगो मधुदूतश्च माकन्दः पिकवल्लभः । भा. प्र । क्वचित् पुस्तके ग्रन्थान्तरम्— "अपुष्पफलवानाम्रः पुष्पितश्चूत उच्यते। पुष्पैः फलैश्च संयुक्तः सहकार स उच्यते" इति । आम्रपुष्पगुणाः—"आम्रपुष्पमतीसारकफपित्तप्रमेहनुत् । असृग्दुष्टिहरं शीतं रुचिकृद् ग्राहि वातलम् । भा. प्र । आमाम्रफलगुणाः— "आम्रं बालं कषायाम्लं रुच्यं मारुतपित्तकृत् । तरुणं तु तदत्यम्लं रूक्षं दोषत्रयास्रकृत्" । भा. प्र । पक्वाम्रगुणाः- पक्वाम्रो मधुरः शुक्रवर्धकः पौष्टिकः स्मृतः । गुरुः कान्तितृप्तिकरः किञ्चिदम्लो रुचिप्रदः । हृद्यो मांसबलानां च वर्धकः कफकारकः । तुवरश्च तृषावातश्रमाणां नाशकः स्मृतः" । नि. र । "मधुना तरक्षयप्लीहवातश्लेष्महरं परम् । सघृतं वातपित्तघ्नं दीपनं बलवर्णकृत्" इति राजवल्लभः । आम्रातियोगगुणाः—"मन्दानलत्वं विषमज्वरं च रक्तामयं बद्धगुदोदरं च । आम्रातियोगो नयनामयं वा करोति तस्मादति तानि नाद्यात् । एतदम्लाम्रविषयं मधुराम्रपरं न तु । मधुरस्य परं नेत्रहितं त्वाद्या गुणा यतः । शुण्ठ्यम्भसोऽनुपानं स्यादाम्राणामतिभक्षणे। जीरकं वा प्रयोक्तव्यं सह सौवर्चलेन च" इति । आम्रबीजगुणाः—"आम्रबीजं तु मधुरं किञ्चिदम्लं कषायकं । वान्त्यतीसारहृद्दाहनाशनं च बुधैर्मतं" इति । पल्लवगुणाः— "आम्रच्छदस्तु तुवरो ग्राहको रुचिकारकः । वातपित्तकफान् हन्तीत्येवं च परिकीर्तितम्" । नि. र । प्रायेणास्याखिलाण्यवयवानि ग्राह्याणि ॥

**आम्रातः** । सू. ६ etc. आम्रं तद्रसं आ ईषत् अतति याति । स्वनामप्रसिद्धः **अम्लफलवृक्षविशेषः** । N. O.—*Anacardia-*

*ceae* । हिं.—अंबाडा ; बं.—आमडा ; म.—आंबाडा ; कों.—अंबाडो ; गु.—जंगली आंबो, अंमेडा ; तै.—अडविमामिडि, अंबाळमु ; क.—अंबटे, अमटेमर ; तु.—अंबडे ; त.—काट्टुमा, अंपुट्टै ; सिं.—एंबरेल्ल ; मल.—अम्पळं അമ്പഴം, अम्पाळं ; इं.—Hogplum, Wild mango; ल.—*Spondias mangifera* । नामानि—"आम्रातकः पीतनकः कपिचूतोऽम्लवाटकः । शृङ्गी कर्पी रसाढ्यश्च तनुक्षीरः कपिप्रियः" । ध. नि । गुणाः—"आम्रातकं कषायाम्लमामं हृत्कण्ठहर्षणं । पक्वं तु मधुराम्लाख्यं स्निग्धं पित्तकफापहम्" । रा. नि । आमपक्वफले ग्राह्ये । "आम्रातमम्लं वातघ्नं गुरूष्णं रुचिकृत्सरं । पक्वन्तु तुवरं स्वादु रसे पाके हिमं स्मृतं । तर्पणं श्लेष्मलं स्निग्धं वृष्यं विष्टंभि बृंहणं । गुरु बल्यं मरुत्पित्तक्षतदाहक्षयास्रजित्" । भा. प्र ॥

**आम्रातकः** । सू. १० etc आम्रातः ॥

**आम्रास्थि** । उ. ३ etc. **चूतफलबीजमज्जा** । हिं.—आमकी गुठली ; म.—आंब्याचीकोय ; मल.—माङ्ङयण्टि മാങ്ങയണ്ടി ; The kernel of the mango ॥

**आयतनम्** । सू. ७. आयतन्तेऽत्र । **दुष्टानां वधस्थानम्** । आघातनमघतनमाहननमिति च पाठा दृश्यन्ते । Place of execution ; मल.—कुलनिलं കൊലനിലം, कुलक्कळम् । "आघातस्तु वधस्थली" इति त्रिकाण्डशेषे ॥

**आरग्वधः** । सू. १५ etc. **स्वनामख्यातवृक्षः** । आसमन्ताद्रुजां वधोत्रारग्वधः, आरगं रोगशङ्कामपि हन्तीति वा । N. O. *Leguminosae* । हिं.—अमलतास, आमलटास्, धनवहेडा, किरवारो, शोणहाली ; बं.—सोंदाल, सोनालु, राखालनडी, वानरनडी ; म.—बाहावा, बाहवा ; गु.—गरमालो ; उत्.—सुनारी ; तै.—

रेलचेट्टु, आरग्वधमु, कोलपेन्न ; क.—कक्के, कोंदे, आरगिनमर, आरेवतमर, हेग्गके ; कों.—कक्काथि ; तु.—कोंदे त.—कोन्रै, इराचविरुट्टं ; सिं.—एसळ ; मल.—कणिक्कोन्ना കണിക്കൊന്ന, वन्कोन्ना ; कोन्ना ; प.—गिरदानालि Girda nali ; पा.—खियारे चंबर ; अ.—खियारे शंबर ; इं.—Pudding Pipe tree or Indian Laburnum; Purging Cassia ; ल.—*Cassia Fistula* । नामानि— "आरग्वधो राजवृक्षः शम्याकश्चतुरंगुलः । आरेवतो व्याधिघातः कृतमालः सुवर्णकः । कर्णिकारो दीर्घफलः स्वर्णाङ्गः स्वर्णभूषणः । भा. प्र । गुणाः— "आरग्वधो गुरुः स्वादुः शीतलः स्रंसनो गुरुः । ज्वरहृद्रोगपित्तास्रवातोदावर्तशूलनुत् । तत्फलं स्रंसनं रुच्यं कुष्ठपित्तकफापहम् । ज्वरे तु सततं पथ्यं कोष्ठशुद्धिकरं मतं"। भा. प्र। अस्य फलमज्जत्वगादिकं ग्राह्यम् ॥

**आरण्यकुलत्थः** । उ. १६. कुलत्थिका ॥

**आरनालम्** । चि. १ etc. आच्छैति । 'ऋ गतौ' । नलति । 'नल गन्धे' । आरो नालो गन्धो यस्य । **गोधूमकांचिकम्** । मल.—कोतम्पुकाटि കോതമ്പുകാടി । "आरनालं तु गोधूमैरामैः स्यान्निस्तुषीकृतैः । पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः । भा. प्र ॥

**आरुकम्** । सू. ६ etc. **काबेलदेशे प्रसिद्धः फलविशेषः** । "आरुकं वीरसेनं च वीरं चीनारुकं तथा । विद्याज्जातिविशेषेण तच्चतुर्विधमारुकम्" । ध. नि । N. O.—*Rosaceae* । हिं.—आलुबुखारा, आलुबोखारा ; बं.—आलुबखेरा ; म.—अलुबुखार, अरुक, चीरारुक ; गु.—आलु ; तै.—आलुबुकारा ; त.—आलुपुक्काराप्पळं ; मल.—आलुबुकार് ആലുബുക്കാർ ; अ.—

इज्जास्; ई.—Bokhara Plum, Cherry Plum, Prunum; ल.—*Prunus Communis* । आडू इति शिवदीपिकाचरकप्रसादनीकारौ । **गुणाः**—"तच्च विद्याच्चतुर्जाति पत्रपुष्पादिभेदतः । आरुकाणि च सर्वाणि मधुराणि हिमानि च । अर्शःप्रमेहगुल्मास्रदोषविध्वंसनानि च" । रा. नि । पक्वफलं ग्राह्यम् ॥

**आरुष्करम् । सू. १६.** भल्लातकबीजतैलम् । भिलावेका तेल ॥

**आरेवतः । उ. ३२.** आरेवयति रेचयति मलं सारकत्वात् । रेवती रोगदेवता, अरेवत्यां भव आरेवत इति वा । **आरग्वधः** ॥

**आर्जकं पत्रम् । चि. ३.** अर्जकस्य दलम् ॥

**आर्तगलः । चि. ५** etc. आर्तः क्षीणो गलति । गल अदने । **सहचरः** । हिन्ताल इति केचिदितीन्दुः । चिकित्सितैकादशाध्याये "कपोतवंकातिबले"त्यत्र "कपोतवंकार्तगल" इति सुश्रुतः पठति । आर्तगलः ककुभकः सुगन्धिमूलः "कौह्य"इति नाम्ना पूर्वदेशे प्रसिद्धः, अन्ये तु आर्तगलः 'कुखक' इत्याहुः, बहिः केशरः कण्टकितफलो विटप इत्यन्ये इति डल्हणः । होगल इति प्रसिद्ध इति भाष्यकारः । सुश्रुतोत्तरनवमाध्याये तु "पत्तूरार्तगलाग्निकै" रित्यत्र, 'आर्तगलः कण्टकफलो जलमुक्तदेशज इति डल्हणः । नीलकुरण्डक इत्येव निघण्डुरत्नाकरकारः । **नामानि**—"अगेटः स्यादार्तगलो बहुकण्टः प्रघर्षणः" । म. पा । मूलं ग्राह्यम् । सर्वांशो वा ग्रहणीयः ॥

**आर्द्रकम् । सू. ६** etc. आर्द्रायां भूमौ जातं, आर्द्रयति जिह्वां वा, अर्दति कफं वा । **स्वनामख्यातकन्दशाकविशेषः** । N. O.—*Scitamineae* । "आर्द्रकाज्जायते शुण्ठी संस्कारेण लघीयसी" इति संग्रहे । यही अदरक छीलकर सुखादेनेसे सोंठ होता है ।

हिं.—अदरक, आदूरख, आदी ; बं.—आदा ; म.—आलें ; गु.—आदु ; तै.—अल्लम् ; क.—अल्ल ; त.—इंचि ; सिं.—अमुइंगुरु ; मल.—इञ्चि ഇഞ്ചി; पा.—जिंजबीलतर ; अ.—जिंजिबिलरतब ; इं.—Green ginger; ल.—*Amomum zingiber* । नामानि—"आर्द्रकं शृङ्गवेरं स्यात् कटुभद्रं तथार्द्रिका" । भा. प्र । गुणाः—"आर्द्रिका भेदिनी गुर्वी तीक्ष्णोष्णा दीपनी मता । कटुका मधुरा पाके रूक्षा वातकफापहा । ये गुणाः कथिताः शुण्ठ्यास्तेपि सन्त्यार्द्रकेऽखिलाः । भोजनाग्रे सदा पथ्यं लवणार्द्रकभक्षणम् । अग्निसन्दीपनं रुच्यं जिह्वाकण्ठविशोधनम्" । भा. प्र । आर्द्रकनिषेधः—"कुष्ठपाण्ड्वामये कृच्छ्रे रक्तपित्ते व्रणे ज्वरे । दाहे निदाघशरदोर्नैव पूजितमार्द्रकम्" । भा. प्र । अस्य मूलं ग्राह्यम् ॥

**आर्द्रकनागरम्** । चि. १७. अशुष्कं नागरम् । आर्द्रकम् ॥

**आर्द्रकपेशिका** । चि. ७. आर्द्रनागरस्य दीर्घलघुशलाका । आर्द्रकदलानीतीन्दुः । ताजे आर्द्रककी काटकर बनाई हुई बारीक पेशियें ॥

**आर्द्रकशकलम्** । चि. ८. आर्द्रकपेशिका ॥

**आर्द्रद्राक्षा** । चि. ८. अशुष्का द्राक्षा । ताजे अंगूर । मल.—पच्चमुन्तिरिङ्ङा പച്ചമുന്തിരിങ്ങാ ॥

**आर्द्रिका** । सू. ६ etc. आर्द्रधान्यकम् । हिं.—कच्चा धनियां ; मल.—पच्चक्कोत्तम्पालरि ; इं.—Fresh coriander । पुष्पफलोपेतो हरितधान्यविटप आर्द्रा कुस्तुंबरीत्युच्यते, अल्लेति लोके इति डल्हणः । "आर्द्रा कुस्तुंबरी कुर्यात् स्वादुदौर्गन्ध्यहृद्यताम्" इति सुश्रुतः ॥

**आलुकम्** । सू. ६. कन्दशाकविशेषः । तद्बहुधा रक्तालुकमधु-कालुकादिभेदेन । हिं.—आलु; म.—अलुं; त.—किळंकु; तै.—गड्डे; सिं.—अल; मल.—किळङ्कु கிழங்கு; इं.—Bulb ॥

**आवनेयम्** । चि. ७. पानपात्रविशेषः । चषकम् । Drinking vessel । आवरेयमितीन्दुपाठः ॥

**आवर्तकी** । चि. १९. रक्तपुष्पपीतकीलविशिष्टा कोंकणादिदेश-प्रसिद्धा लताविशेषः । हिं.—भगवतवल्ली, भगत्वल्ली, रक्तआ-हुली; आहुली तलाड्वल्ली इति च प्रसिद्धा । भगद्ली इति शिव-दीपिकाकारः । करवीर इति पाठ्यकारः । आवर्तकी रक्तपुष्पा महाजालिनी नाम च वमनद्रव्यमितीन्दुः । मूलादिकं ग्राह्यम् । चटची इति केरलेष्वेके । रङ्गलतेत्यपरे । नामानि—"आवर्तकी तिन्दुकिनी विभाण्डी विषाणिका रङ्गलता मनोज्ञा । सा रक्तपुष्पी महदादिजाली सा पीतकीलापि च चर्मरङ्गा । वामाव-र्ता च संप्रोक्ता भूसंख्या शशिसंयुता" । रा. नि । गुणाः—"आवर्तकी च कुष्ठघ्नी सोर्ध्वाधोदोषनाशनी । कषाया शीतला वृष्या त्रिदोषघ्न्यातिसारजित् । शोफगुल्मोदरानाहक्रिमिजालवि-नाशिनी" । ध. नि ॥

**आविकम्** । सू. ५. मेषीदुग्धम् । हिं.—भेडका दूध; म.—मेंढी चें दूध; क.—कम्बळकुरिय हालु; इं.—Ewe's milk। see अविः ॥

**आविकम्** । सू. ६ etc. मेषमांसम् । हिं.—भेडका मांस; म.—बोकडाचें मांस; सिं.—बेडलुमस्; इं—Mutton । see अविः ॥

**आविकम्** । सू. २९. अविना तल्लोम्ना निर्मितम् । मेषरोमनिर्मितं कम्बलम् । see रल्लकः ॥

**आविकशाटकः** । सू. १७. मेषरोमनिर्मितः कम्बलः । भेडकी ऊनसे बनाहुआ वस्त्र । Woollen cloth । see **रल्लकः** ॥

**आवी** । शा. १. प्रसववेदना । Pains of childbirth । **मल.**— ईत्तुनोवु ഈററുനോവു ॥

**आसङ्गम्** । see **अमृतासङ्गम्** ॥

**आसवः** । आसूयते । मद्यविशेषः । "यदपक्वौषधांबुभ्यां सिद्धं मद्यं स आसवः । आसवस्य गुणा ज्ञेया बीजद्रव्यगुणैः समाः" । भा. प्र । When raw vegetables are used for fermentation, the resulting fluid is called Asava । **उक्तं च**— "मद्याकाराधिकद्रव्यमदिराद्यैः कृतस्तु यः । सोरिष्टः स्यादासवस्तु द्रव्याण्यासुत्य यः कृतः" इति ॥

**आसीनप्रचलायितम्** । सू. ८. आसीनस्य उपविश्य निद्रां आसेवमानस्य प्रचलायितं दोलनं । **बं.**—ढोला ; **मल.**— उरक्कं तूङ्ङल् ഉറക്കം തൂങ്ങൽ ॥

**आसुतम्** । सू. ५. शुक्तसन्धितं कन्दादिकं । चिरकालावस्थितम्लं कन्दादियुक्तं शुक्तविशेषमासुतमुच्यते । "कन्दमूलफलाद्यं च लवणोदकसंयुतं । सन्धानाच्चिरकालाम्लमासुतं परिकीर्तितं" इति । **हिं.**—अचार, आचार ; **त.**—ऊर्काय् ; **सिं.**—अच्चारु ; **मल.**— अच्चार् അച്ചാർ, उप्पिलिट्टतु ; **इं.**—Pickles ॥

**आसुरी** । सू. ६. अस्यते आसुरी, असुरस्त्रीव वा । **रक्तसर्षपः** । **हिं.**—राई ; **बं.**—सरिषा, राजसर्षे ; **म.**—मोहोरी ; **गु.**— राई ; **तै.**—आवालु ; **क.**—सासिवे ; **सिं.**—रतु अब ; **मल.**— चेक्कडुकु ചെങ്കടുക ; **अ.**—खरदल ; **इं.**—Red mustard, Indian mustard; **ल.**—*Sinapis Dichotoma* । **नामानि**—

"आसुरी राजिका राजी रक्तिका रक्तसर्षपः । तीक्ष्णगन्धा मधुरिका क्षवकः क्षुवकः क्षवः" । रा. नि । **गुणाः**—"आसुरी कटुतिक्तोष्णा वातप्लीहार्तिशूलनुत् । दाहपित्तप्रदा हन्ति कफगुल्मक्रिमिव्रणान्" । रा. नि । बीजं पुराणं ग्राह्यम् ॥

**आस्फोतः** । सू. ३० etc. आस्फुटत्यास्फोटः । **अर्कः** । see आस्फोता ॥

**आस्फोता** । चि. १० etc. **उत्पलसारिवा** । सूत्रस्थाने क्षारविध्युक्तआस्फोतपदम् स्त्रीलिङ्गमिति डल्हणः । कोविदार इति हेमाद्रिः । गिरिकर्णिकेत्यरुणदत्तः । चिकित्सितदशमाध्याये एकत्र उत्पलसारिवेति सर्वाङ्गसुन्दरा । अस्फुरमल्लिकेति चक्रपाणिदत्तः । वज्रकतैलयोगे "चित्रकास्फोतनिम्बा"दित्यत्र शारिबेत्येव डल्हणः । "आस्फोतस्तु पुमानर्कपर्णे स्यात् कोविदारके । आस्फोता गिरिकर्ण्यां च वनमल्ल्यां च योषिति" इति मेदिनी ॥

## इ ।

**इक्षुः** । सू. १ etc. इष्यत इक्षुः । **स्वनामप्रसिद्धमधुरवृक्षः** "अतीव मधुरो मूले मध्ये मधुर एव तु । अग्रेष्वक्षिषु विज्ञेय इक्षूणां लवणो रसः" इति सुश्रुतः । "मूलादूर्ध्वं तु मधुरा मध्येतिमधुरास्तथा । इक्षवस्तेग्रभागेषु क्रमाल्लवणनीरसाः" इति नरहरिः । N. O.—*Gramineae* । हिं.—गन्ना, गांडा, पांडा, ईख, उख्; बं.—कुशिर, आक; म.—ऊंस; प्राकृतम्.—ऊंस्; गु.—शेरडी; तै.—चेरुक, चिरकु, चेरुकु; क.—कब्बु; त.—करुम्पु; तु.—कम्पु; सिं.—उक्; अ.—कस्बुशसकर; पा.—नेशकर; पश्चा.—शंकिर सर्कह; फ्.—Canne a Sucre; ज.—

Achtes zuckerrohr ; इं.–Sugar cane ; ल.–*Saccharum officinarum* । नामानि—"इक्षुर्दीर्घच्छदः प्रोक्तस्तथा भूरिरसोपि च । गुडमूलोसिपत्रश्च तथा मधुतृणः स्मृतः" । भा. प्र । स्वरसो ग्राह्यः । गुणाः—"इक्षुः सरो गुरुः स्निग्धो बृंहणः कफमूत्रजित् । वृष्यः शीतः पवनजिद् भुक्ते वातप्रकोपन." । ध. नि । स अनेकविधः । तद्यथा—"पौण्ड्रको भीरुकश्चैव वंशकः श्वेतपोरकः । कान्तारस्तापसेक्षुश्च काष्टेक्षुः सूचिपत्रकः । नैपालो दीर्घपत्रश्च नीलपोरोथ कोशकृत् । इत्येता जातयः स्थौल्या"दिति सुश्रुतः । बोरदशतपत्रपाण्डुकवेत्रकोद्रवकत्राणिप्रभृतयोपि बह्व्यो जातयो वर्तन्ते । "पीयूषोपमितं त्रिदोषशमनं स्याद्दन्तनिष्पीडितं तद्वद्वद्गृहयन्त्रजं तदपरं श्लेष्मानिलघ्नं कियत् । एतद्वातहरं तु वातजननं जाड्यप्रतिश्यायदं प्रोक्तं पर्युषितं कफानिलकरं पानीयमिक्षूद्भवम्" । रा. नि । "नलश्चेक्षोरभावतः" इति भावमिश्रः ॥

**इक्षुगण्डिका** । चि. २ etc. इक्षुखण्डः । गन्नेकी गण्डेरी , गन्नेके टुकडे, गन्नेकी गांठ । काश इत्येके । इक्षुरक इति केरलेषु केचित् । "शुद्धेक्षुकाण्डमापोथ्य नवे कुंभे हिमांभसा । योजयित्वा क्षिपे"दित्यादिसुश्रुतवचनमत्रानुस्मरणीयमेव ॥

**इक्षुरः** । चि. ३ etc. इक्षुमिक्षुगन्धं रातीक्षुरः । **कोकिलाक्षः** । N. O.—*Acanthaceae* । हिं.—तालमखाना ; उर्दु.—तालमखाना ; बं.—कुलियाखाडा , कुलेखाडा , कुलेकांटा , तालमाखना ; म.—विखरा , कोलिस्ता , ताळीमखाना ; गु.—एखरो ; उत्.—कुइलिरखा , माखुरेण ; दखा.—कोलसी ; तै.—नीरुगोब्बि , कोरिमिडि , गोलिमिडिचेट्टु ; क.—कोळवाळिके , मुळ्ळंकोले , गोरिमिडि , नीरुप्पिगिड , कुळुगोलिके ; कों.—कोळ्वुळे झाड् ; त.—नीर्मुळ्ळि ; तु.—कोवेमुळ्ळुदै ; सिं.—इकिरिय ; मल.—वयल्चुळ्ळि വയൽച്ചുള്ളി ; बर्मा.—सूपदन Soopadan ;

जर्मन.—Langblattriger Sterndorn ; इं.–Long leaved Barleria; ल.—*Barleria longiflora, Hygrophila Spinosa, Astercantha longifolia* । नामानि—"कोकिलाक्षस्तु काकेक्षुरिक्षुरः क्षुरकः क्षुरः । भिक्षुः काण्डेक्षुरप्युक्त इक्षुगन्धेक्षुबालिका" । भा. प्र । गुणाः—"क्षुरकः शीतलो वृष्यः स्वाद्वम्लः पित्तलस्तथा । तिक्तो वातामशोथाश्मतृष्णादृष्ट्यनिलास्रजित्" । भा. प्र । मूलबीजे ग्राह्ये ॥

**इक्षुरकः** । उ. ४०. इक्षुरः ॥

**इक्षुराजिः** । चि. १९. वाकुची । इन्दुराजीति शुद्धःपाठः । "मथितं चेन्दुराजिम"दित्येव संग्रहपाठः ॥

**इक्षुविकृतिः** । सू. २९. इक्षुरसविकारः । फाणितगुडमत्स्यण्डिकाखण्डशर्कराः ॥

**इक्ष्वाकुः** । क. १. इक्षुमिच्छामाकरोति । कटुकालाबुः । "इक्ष्वाकुः कटुतुम्ब्यां स्त्री सूर्यवंशनृपे पुमान्" इति मेदिनी ॥

**इक्ष्वारिका** । चि. ३. इक्षुरिव आसमन्तादृच्छति । इक्षुरिव अलति व्याप्नोति इति वा । काशतृणः । इक्ष्वालिकेति चरकपाठः । पुण्ड्रक इक्षुभेद इति केचित् । स्वयंजातेक्षुमूलमित्येके ॥

**इंगुदी** । चि. ३. इंगुः रोगस्तं द्यति । स्वनामख्यातमदगन्धिवृक्षः । N. O.—*Simarubeae* । हिं.—हिंगोट , इंगोट , गोंदी ; बं.—जियापुता , इङ्गोट् ; म.—हिंगणबेट ; गु.—इंगोरिया ; तै.—गरा ; क.—इंगळ ; त.—इंकुणमरं ; मल.—ओटल्मरं ഓടല്‍ മരം, नञ्चुण्टा ; अ.—हिलेलजे ; इं.—Delil ; ल.—*Balanites Roxburghii* । Ximenia Aegyptiace इति A. C. Kaviratna । नामगुणाः—"इंगुदोऽङ्गारवृक्षश्च तिक्तकस्तापसद्रुमः । इंगुदः कुष्ठभूतादिग्रहव्रणविषक्रिमीन् । हन्त्युष्णः श्वित्रशूल-

अस्तिक्तकः कटुपाकवान" । भा. प्र । मूलत्वक्पत्रफलादीनि ग्राह्याणि ॥

**इत्कटः** । सू. १५ etc. शरभेदः । इक्षुरिति हेमाद्रिः । शरविशेष इतीन्दुः । सूक्ष्मपत्रिका दीर्घलोहितयष्टिकाकाण्ड इत्यरुणदत्तः। काला ईख इति शिवदीपिका । खरछद इति चरकोपस्कारे । खग्गलीति डल्हणः । चिकित्सितैकादशाध्याये कुशाद्यघृतयोगव्याख्यायां 'महती खग्गली' इति डल्हणः । उत्कट इत्येव सुश्रुतपाठः ॥

**इन्दीवरम्** । चि. ११. इन्दिरिन्दी वा लक्ष्मीस्तस्या वरमभीष्टम् । **नीलपद्मम्** । N. O.—*Nymphaeceae* । **हिं.**—नीलकमल; **बं.**—नीलकमल; **म.**—निळेंकमळ; **गु.**—नीलकमल; **क.**—नीलतावरे; **त.**—करुंनैतल्, करुंकुवळै; **सिं.**—निलुपिल्; **मल.**—नीलाम्पल् നീലാമ്പല്, नीलत्तामरा; **इं.**—Blue lotus; **ल.**—*Nymphaea stellata* । "विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम् । रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम्" । भा. प्र । **नामानि**—"सौगन्धिकं नीलपद्मं भद्रं कुवलयं कुहम् । इन्दीवरं तामरसं कुवलं कुड्मलं मतम्" । ध. नि । पुष्पं ग्राह्यम् । शरवालिकाभेदो दीर्घपत्रो बहुलपुष्प इति डल्हणः ।

**इन्दुः** । चि. ७. कर्पूरम् । "चन्द्रनामानि चाथ स्या"दिति वैजयन्ती ॥

**इन्दुराजिका** । चि. २०. वाकुची ॥

**इन्दुलेखा** । उ. १. वाकुची ॥

**इन्द्रः** । उ. ३५. कन्दविषभेदः । सुश्रुतप्रतिपादितपालकमेवैतदिति केचिदाहुः ॥

**इन्द्रगोपः** । सू. २७. इन्द्रो गोपो रक्षकोऽस्य वर्षाभवत्वात् । मृग-नक्षत्रसंभूतो रक्तवर्णकोद्भिज्जो भास्वरलघुकीटविशेषः । यः प्रावृट्कालजो **जन्तुविशेषः** इन्द्रवधूरिति लोके इति शार्ङ्गधरसंहिताव्याख्यायामाढमल्लः । स चानेकप्रकारवर्ण इत्येके । **हिं.**—वीरबहुटी ; **बं.**—मखमली ; **म.**—वीरबाहुटी ; मृगाचेकिडे ; **त.**—तंपलप्पूचि ; **इं.**—Scarlet-fly, ladyfly; **ल.**—*Mutella occidentalis* । **नामानि**—"शक्रगोपस्तु वर्षाभू रक्तवर्णेन्द्रगोपकौ । रा. नि । **गुणाः**- "इन्द्रगोपेति नाम्ना या लोके वीरबहूटि च । सैव इन्द्रवधू प्रोक्ता योऽसौ कृमिविशेषकः । वर्षर्तुसंभवो भूरिरक्तवर्णः प्रदृश्यते । स चोष्णो रूक्षगुणवान् क्लीबौषध्युपयोगिक. । लेपनात्तैलयोगाच्च सेवितो यदि मानवैः । कामेन्द्रियः स्थौल्यकरस्तत्कठोरत्वकारकः । शिश्नशैथिल्यहर्ता च तथार्द्धाङ्गकफामये । वातादिसम्भवे रोगे तांबूलेन सहाशनात् । तद्रोगहारी नियतं कथितोऽयं भिषग्वरैः" इति तन्त्रान्तरात् ॥

**इन्द्रयवः** । सू. १५ etc. इन्द्रस्य कुटजवृक्षस्य यवाकृतिबीजत्वात् यवो बीजम् । **कुटजफलः** । आरग्वधादिगणे कुटजशब्दोऽपि सुश्रुतसंहितायां पृथग्दृश्यते । **हिं.**—इन्द्रजौ, कूड़ा का फल ; **बं.**—इन्द्रयव ; **म.**—इन्द्रजव , कुड्याचेंबीज ; **गु.**—इंदरजव ; **तै.**—कुडिसेपालु , कुडिसिविेत्तुलु ; **क.**—कोडसिगेय बीज ; **त.**—कुटचप्पालैयरिचि , वेप्पालरिचि ; **सिं.**—केळिन्दएट ; **पा.**—जबान कुँचिस्क ; **अ.**—लेसानुत् असाफीर ; **मल.**—कुटकप्पालरि കുടകപ്പാലരി; **इं.**—Seeds of Holarrhena antidysenterica । **नामानि**—"उक्तं कुटजबीजं तु यवमिन्द्रयवं तथा । कालिङ्गं चापि कालिङ्गं तथा भद्रयवा अपि" । भा. प्र । "क्वचिदिन्द्रस्य नामैव भवेत्तदभिधायकम्" । इत्यमरः । **गुणाः**—"इन्द्रयवं त्रिदोषघ्नं संग्रा-

हि कटु शीतलम् । ज्वरातीसाररक्तार्शोवमिवीसर्पकुष्ठनुत् । दीपनं गुदकीलास्रवातास्रश्लेष्मशूलजित्” । भा प्र । शुष्कं ग्राह्यम् ॥

**इन्द्रवारुणी** । चि. १९. इन्द्रं वारयति । ऐन्द्री नाम तिक्तरसप्रधाना लता । N. O.—*Cucurbitaceae* । हिं.—इन्द्रायण, इन्द्रारुण, फरफेंदुआ ; बं.—राखालशशा, राखालनाडू ; म.—लघुकांवडळ, लघुइन्द्रावण ; गु.—इन्द्रवारणुं, इन्द्रवरणी, इन्द्रायणां ; तै.—पापरबुडम, वेरिपुच, एतिपुचा ; कों.—कावण्टाळि ; क.—हावुमेके, हामेके, इन्द्रावरूणि ; तु.—ककेण्टेल् ; त.—पेत्तिकारि, आत्तुत्तुम्मट्टि, पेयिक्कोम्माट्ट ; सिं.—यक्कोमड्डु ; पञ्जा.—तूमा ; पा.—खुर्यजातल्ख, कविस्तेतल्ख ; अ.—हंजल, औलक्वम ; बर्मा.—काया-सि Kaya-si ; मल.—पेकुम्मट्टि, പേക്കുമ്മട്ടി, (काट्टुवेळ्ळरि इत्येके) ; इं.—Colocynth, Indian wild gourd or bitter apple ; bitter Cucumber; ल.—*Citrullus colocynthis* । नामानि—“ऐन्द्रीन्द्रवारुणी न्द्राह्वाथेन्द्रवारुर्मृगादनी । गवादनी क्षुद्रफला वृषभाक्षी गवाक्ष्यपि” । ध. नि । गुणाः— “इन्द्रवारुणिका तिक्ता कटुः शीता च रेचनी । गुल्मपित्तोदरश्लेष्मक्रिमिकुष्ठज्वरापहा” । रा. नि । अस्याः मूलं फलसस्यञ्च ग्राह्ये ॥

**इन्द्रवृक्षः** । सू. ३०. इन्द्रस्य वृक्षः । बृहत्फलः कुटजः । वृक्षको नन्दीवृक्षः, इन्द्रवृक्षः कुटज इत्यरुणदत्तः । इन्द्रवृक्षोऽर्जुन इति हेमाद्रिः । इन्द्रवृक्षः कुटज एव, द्विविधो हि कुटजः बृहत्फलश्वेतपुष्पः स्निग्धपत्रः पुमान्, अणुफलवृन्ता श्यावारुणपुष्पा स्त्रीरिति डल्हणः । इन्द्रवृक्षो बृहत्फलः कुटजः, कुटजस्तु क्षुद्रफल इत्यनयोर्विशेष इति भाष्यकारः ॥

**इन्द्राणीशाकम्** । चि. १८. इन्द्रस्य सुरसो यस्मिन्, दिव्यइत्यर्थः,

अत एवेन्द्राणी । इन्द्रः कुटज इव आनयति सेवनेन जीवयति इति वा । निर्गुण्डीदलम् । केचित् मत्स्याक्षक इत्याहुरिति चक्रपाणिदत्तः । "इन्द्राणी करणे स्त्रीणां पौलोमीसिन्धुवारयो"रिति मेदिनी ॥

**इन्द्राभः** । सू. ६. पक्षिविशेषः । कङ्कसदृशो विविधवर्ण इति हेमाद्रिः ॥

**इन्द्राह्वयः** । उ. ५. कुटजः ॥

**इभपिप्पली** । चि. १४. इभोपपदा पिप्पली । **गजापिप्पली** ॥

**इषीका** । सू. २१. ईष्यते । 'ईष उञ्छे' । 'ईष गतिहिंसादानेषु' । शरकाण्डः । मल. —अम्पत्तण्टु അമ്പത്തണ്ട് । "द्वादशांगुलं शरकाण्डमङ्गुलिपरिणाह"मित्येवात्र सुश्रुतपाठः । शरेषिकेति पठत्याचार्यचरकः । शरपुष्पस्य नाला शरिकेति प्रसिद्धा इति चक्रपाणिदत्तः । दर्भमूलतृणमित्यरुणदत्तः । काशशलाकेति हेमाद्रिः । "इषीका काश उच्यते" इति हलायुधः ॥

---

## उ ।

**उग्रम्** । उ. ५. शिग्रुबीजम् । see **उग्रयष्टी** ॥

**उग्रगन्धा** । उ. ३९. वचा । "उग्रगन्धाऽजमोदायां वचायां छिक्किकौषधौ" इति मेदिनी ॥

**उग्रयष्टिः** । उ. ५. "नतशुकतरुपुष्पबीजोग्रयष्ट्यद्रिकर्णीनिकुंभाग्निविलै"रित्यत्र बीजोग्र इति पदच्छेदं कृत्वा पठति वंश इतीन्दुः । पुष्पं नागकेसरं, बीजं मदनफलं, उग्रं शिग्रुबीजम्, यष्टी मधुकं चेति व्याख्यायति शिवदीपिकाकारः । उग्रा यष्टी चेत्येके । उग्रा

वचा। वचाऽस्मिन् योगेन्यत्रापि दृश्यते। उग्रयष्टिरास्थिसंहार इत्यपरे। विदारीति कैरली॥

**उग्रा**। सू. ८ etc. वचा॥

**उच्चटा**। क. ४ etc. श्वेतगुंजा। "श्वेतगुंजोच्चटा प्रोक्ता" इति। हिं–सफेद घूंघुची; बं.–श्वेतकूँच, सादा कुंच; म.–पांढरी गुंजा; गु.—चणोठी धोली; क.—गुलगुञ्जे; त.—वेळ्ळैकुन्रि; सिं.–हेलओलिन्द; मल.—वेळुत्त कुन्नि വെളുത്തകുന്നി; इं.–White bead tree। नामानि—"अपरा श्वेतकांबोजी श्वेतगुंजा भिरीटिका। काकादनी काकपीलुर्वक्त्रशल्या सितोच्चटा"। ध नि। see गुञ्जा। अस्या मूलादिकं ग्राह्यम्। उच्चटा घुंघुराख्यः शणघण्टाकारफलोऽल्पो विटपः सरयूपकण्ठे हिमवति वारेन्द्र्यां च प्रायश उपलभ्यते इति डल्हणः सुश्रुताष्टात्रिंशत्तमाध्यायव्याख्यायां। वाजीकरणाध्यायव्याख्यायामुच्चटां महामुस्तेतीन्दुः। "सिद्धं पयो बस्तमुष्कमुच्चटेक्षुरकं मधु" इत्यत्र "उच्चटा सोमवल्ली च प्रचला तरला तथा। महौषधी सर्वगमा वृद्धिदा वार्धिता पुरा" इत्यभिधानमप्युद्धृत्यापरौषधीरेवेति चेन्दुः॥

**उच्चिटिङ्गः**। उ. ३७. वृश्चिकविशेषः। "वृश्चिकस्तनुदीर्घोत्र उच्चिटिङ्गः स्मृतो बुधैः"रिति मञ्जरी। चींटा वा झींगर। चीडु इति केरलेष्वेके॥

**उज्जालः**। सू. ६. क्षुधान्यभेदः। उज्जल उज्वाल इति पाठौ॥

**उड्रः**। see उद्रः॥

**उण्डुकः**। शा. ३. उन्दुकमिति पाठः। पक्वाशयस्यैकदेशे विभक्तमलाधार उण्डुको विद्यते। पुरीषधार इति चरकपाठः। Coecum। "उण्डुकं पुरीषोण्डुकं वा नाम बृहदन्त्रस्य आद्यभागश्चतुरंगुलायतः स्थालिकाकारो दक्षिणवंक्षणोत्तरिकप्रदेशस्थः। तं

वामपार्श्वतः प्रविशति क्षुद्रान्त्रभागश्चरमः स्वबन्धन्यां खातद्वयोपलक्षितः । प्रवेशद्वारञ्च संदंशाकाराभ्यां कलावृतमांसतन्तुमयीभ्यां कपाटिकाभ्यामुपलक्षितं—मलस्य विपरीतगतिवारणाय" । प्र, शा ॥

**उत्कटुकासनम्** । सू. ९ etc. "गुदपार्ष्णीसमायोगः प्राहुरुत्कटुकासनम्" । 'उभड' (उकुडु) इति लोके इति डल्हणः । कुन्तिचिरुप्पु" इति केरलेषु ॥

**उत्कारिका** । सू. ८ etc. **रोटिका** इति हेमाद्रिः । "शुद्धा उत्कारिकाः कार्याः चन्द्रमण्डलसन्निभाः" इति चरकचिकित्सितवाजीकरणाध्याये । लप्सिके (हलुआ) त्यरुणदत्तः । पुपूलिकाकृतिरिति पदार्थचन्द्रिका । स्विन्नपिष्टपिण्डीतीन्दुः । गोलाकारो कश्चिद्भक्ष्यविशेषः "कुयक्कट्टा" इति नाम्ना इति केरलेषु केचित् । माषादिकृतमूषिकोत्काराकृतिव्यञ्जनविशेष इत्यपरे ॥

**उत्क्रोशः** । सू. ६. उच्चैः क्रोशति । **मत्स्यघातपक्षी** । बं.—मछरङ्ग ; म.—पाणकावळा ; मल.—मीन्पोत्मा മീൻപൊത്മ, मीन्कळत्ति , मीन्चाण्टि ; इं.—King-fisher ; ल.—*Alcedo ispida* । कुररभेदः मत्स्याशीति डल्हणः ॥

**उत्क्रोशः** । शा. २. कुररः ॥

**उत्क्षेपः** । सू. ३. चमरीवालादिकृतो व्यजनविशेषः । वेञ्चामरमिति केरलेषु । Fly-brush or whisk of a yak-tail । मयूरपिच्छादिकृत इत्यरुणदत्तः ॥

**उत्तमकारुणी** । उ. ३०. करम्भा ॥

**उत्तमा** । चि. १९ etc. **त्रिफला** ॥

**उत्तरवारुणी** । उ. ३७. करम्भा । इन्द्रवारुणीत्येके ॥

**उत्तुंडिकी** । उ. ३०. **करंजः** । कर्पासीति पाठ्यकारः ॥

**उत्पाङ्गिलः** । उ. ३६. **मर्कोटः** । उलंकल डरोगल उलुंगिल इति पाठाः । पिपीलिकेति सुश्रुतपाठः । अलांगुल इति गयी ॥

**उत्पलम्** । सू. ३ etc. उत्पलति । 'पल गतौ' । **जलजविशेषः, कमलभेदः** । नीलोत्पलम् । नीलकुमुदमित्येके । लघुकमलमिति केचित् । नीलसुन्धी इति विज्ञायते वङ्गेषु । **त.**—चेङ्कलुनीर्; **क.**—नेइदिलु ; **तै.**—नल्लकुलुव ; **म.**—लघुकमळ ; **सिं.**—निलुपुल ; **मल.**—आम्पल् ആമ്പല്, अक्कात्पूवु, अल्लि ; **इं.**—Blue lily; **ल.** —*Nymphaea Caerulea; N. stellata;* इति केचित् । पुष्पं ग्राह्यम् । उत्पलं द्विधा—नीलं रक्तं च । रात्रिविकाशीनि हेमाद्रिः। रक्तोत्पलमित्यरुणदत्तः । अंजनादिगणे नीलोत्पलमिति सुश्रुतपाठ । "ईषेच्छ्वेतं पद्मं नालिनंच तदुक्तमीषद्रक्तं । उत्पलनीषन्नीलं त्रिविधमितीदं भवेत् कमलं" इति नरहरिः । उत्तरस्थानाष्टादशाध्याये "धातक्युत्पलपर्णिभि"रित्यत्र "धातकी शिलपर्णिभि" रिति सुश्रुतपाठः । "उत्पलानि कषायाणि रक्तपित्तहराणि च" इति चरकः ॥

**उत्पलकन्दकम्** । सू. ६. **उत्पलस्य कन्दम्** । उत्पलके कन्द ॥

**उत्पलपर्णी** । उ. १८. अर्कपुष्पीत्यर्थेन शीतपर्णीति भाष्यकारः । शिलपर्णीति पदद्वयमिति डल्हणः । शिला मनःशिला, पर्णी शालपर्णी ॥

**उत्पलसारिबा** । शा. २. उत्पलाभपत्रा । चन्दनगन्धा कृष्णसारिबा, **श्यामालता** । "इन्द्रजंबूकवत्पत्रा सुगन्धा कलघण्टिका । कृष्णा तु सारिवा श्यामा गोपी गोपवधूश्च सा" इति भावमिश्रः । **हिं.**—कालीसर, सालसा, करिसांबा, करिया साऊ, करिया वांसा, करिआसाठ, दुधिलता ; गुलीसर इत्येके ; **बं.**—श्यामा-

लता, कृष्णअनन्तमूल ; म.—काळी उपलसरी ; गु.—कालां फूलवाली उपलसरी ; तै.—नेल्लतिग ; सिं.—कलुहिरसुसु, महइरिसुसु ; मल.—करुत्त नरुनीण्टि കറുത്ത നറുനീണ്ടി, पाल्वाळ्ळि ; इं.—Black creeper ; ल.—*Ichnocarpus frutescens*, *Echites malabaricus* । नामानि—"सारिबाऽन्या कृष्णमूली कृष्णा चन्दनसारिबा । भद्रा चन्दनगोपा तु चन्दना कृष्णवल्ल्यपि" । ध. नि । गुणाः—"कृष्णमूली तु संग्राही शिशिरा कफपित्तजित् । तृष्णारुचिप्रशमनी रक्तपित्तहरा स्मृता" । ध. नि । मूलं ग्राह्यम् । लता ग्राह्येत्यपरे ॥

**उदकीर्या** । सू. १५. उदेन जलेन कीर्यते । **करंजभेदः** । करंज इति केचित् । पूतिकरंज इति हेमाद्रिः । हिं.—करञ्जिया, अरारि ; बं.—डहरकरमच ; म.—घोरकरञ्ज ; तै.—पेदकरञ्ज । नामानि—"उदकीर्यस्तृतीयोऽन्यः षड्ग्रन्थो हस्तिचारिणी । मदहस्तिनिका रोही हस्तिरोहणकः प्रियः" । ध. नि । गुणाः—"करञ्जी स्तम्भनी तिक्ता तुवरा कटुपाकिनी । वीर्योष्णा वमिपित्तार्शः क्रिमिकुष्ठप्रमेहजित्" इति । मूलत्वक्बीजपत्रादिकं ग्राह्यम् ॥

**उदमन्थः** । सू. ३. द्रवेणालोडितो ससर्पिष्को सक्तुः । see मन्थः ॥

**उदश्वित्** । शा. ६. उदेन जलेन श्वयति वर्धते । **तक्रम्** । "अर्धं दधि अर्धं जलं यत्र तदुदश्वित्" इति रायमुकुटः ॥

**उदीच्यम्** । चि. २ etc. उदीचि जातम् । **वालकम्** ॥

**उदुम्बरः** । सू. १० etc. उल्लंघितमंबरमनेन । उदतिशयेनांबते वा । "उदुम्बरस्तु देहल्यां वृक्षभेदे च षण्डके । कुष्ठभेदेपि च पुमांस्ताम्रेपि स्यान्नपुंसकम्" इति मेदिनी । **यज्ञाङ्गवृक्षः** । N. O.—*Urticaceae* । हिं.—गूलर, गुल्लार ; बं.—यज्ञडुमुर ; म.—उम्बर ; गु.—उम्बरो ; तै.—अत्तिमानु, मेदिचेट्टु,

मेडि ; क.—अत्तीमर ; त.—अत्तिमरम् ; तु.—अत्तिमर ; कों.—रुंदि-रूकु ; सिं.—दिंबुल्, अत्तिका ; मल.—अत्ति അത്തി ; इं.— Country fig tree, cluster-fig, or Gular fig tree ; ल.—*Ficus Glomerata* । **नामानि**—"उदुम्बर: क्षीरवृक्षो हेमदुग्ध: सदाफल: । अपुष्पफलसम्बन्धो यज्ञाङ्ग: शीतवल्कल:" । ध. नि । **गुणा:**—"उदुम्बरो हिमो रूक्षो गुरु: पित्तकफास्रजित् । मधुरस्तुवरो वर्ण्यो व्रणशोधनरोपण:" । भा. प्र । "औदुम्बरं फलमतीव हिमं सुपक्वं पित्तापहं च मधुरं श्रमशोफहारि । आमं कषायमतिदीपनरोचनं च मांसस्य वृद्धिकरमस्रविकारहारि" । रा. नि । पक्वफलं त्वगादिकं च ग्राह्यम् ॥

**उद्दाल:** । **सू.** ६ etc. **आरण्यकोद्रव:** । **हिं.**—वनको कोदों ; **बं.**—वनकोद्रव ; **म.**—रानहरीख ; **मल.**—काट्टुवरकु കാട്ടുവരക ; **इं.**—An inferior wild grain । **नामानि**—"उद्दालो वनकोद्रव:" । भा. प्र । **गुणा:**—"उद्दालकस्तु वीर्योष्णो लेखनो वातलो लघु: । रूक्ष: स्वादु: कषायश्च श्लेष्मजिद्बद्धमूत्रविट्" । इति । पुराणं धान्यं ग्राह्यम् ॥

**उद्दालक:** । **शा.** २ etc. **उद्दाल:** ॥

**उद्र:** । **सू.** ६. उनत्ति उन्द्-रक । **जलविडाल:** । उड् उन्द्र इति पाठौ । उद् इति प्रसिद्ध इति हाराणचन्द्र: । ओदुन इति लोके इति डल्हण: । **हिं.**—ऊदबिलाव ; **बं.**—उद्बिराल, उद्बेराल ; **म.**—जलमांजर ; **त.**—नीर्प्पूनै ; **सिं.**—दियबल्ला ; **मल.**—नीर्प्पूच्चा നീർപ്പൂച്ച, नीर्नाय् ; **इं.**—Otter ; **ल.**—*Lutra vulgaris* । "उद्रस्तु जलमार्जारजलाखुनकुलप्लवा:" इति त्रिकाण्डशेष: ॥

**उन्दुकम्** । see **उण्डुकम्** ॥

**उन्दुरः** । क. ४. आखुः । "भद्रमूषिक आसन्दी कुन्दुरुन्दुरुरुन्दुरः । मूषको वज्रदशनः क्रमः काण्डो बिलेशयः" इति वाचस्पतिः ॥

**उन्दुरुः** । सू. २९. उनत्युन्दुरुः । आखुः ॥

**उपकुञ्चिका** । चि. ३ etc. उपकुञ्चयत्यल्पीकरोति दोषान् । **कृष्णजीरक** । see असितजीरकः । स्थूलजीरक इत्येके । एलेति केचित् ॥

**उपकुल्या** । चि. १५. दन्ती ॥

**उपकुल्या** । चि. १९. उपकोलति संस्त्यायत्युपकुल्या । **पिप्पली** । "पिप्पली मागधी कृष्णा चपला तीक्ष्णतण्डुला । उपकुल्या कणा श्यामा कोला शौण्डी तथोषणा" । ध. नि ॥

**उपकुल्ये** । चि. १५. पिप्पली गजपिप्पली चेति चरकपाठः ॥

**उपचक्रः** । सू. ६. उपमितं चक्रेण तुल्यनामत्वात् । **पक्षिविशेषः** । चक्रवाकभेद एवेत्येके । A variety of the ruddy goose । हंसभेद इति केचित् । "उपचक्रः श्वभ्रचरः कृशचञ्चुर्मदाविलः" इति हेमाद्रिटीकायां । क्रकरभेद इति डल्हणः । चकोरभेद इति चक्रपाणिदत्तः । चक्रवाक इति हाराणचन्द्रः । तेट्टा इति केरलेष्वेके । 'सक्वालिहिणिन्' इति सिंहलभाषायां । see **क्रकरः** ॥

**उपचक्रकः** । सू. ६. उपचक्रः ॥

**उपलभेदकः** । चि. ११. अश्मभेदः । अश्मभिदिति चरकपाठः ॥

**उपानत्** । शा. ६. पादं उपनह्यते, पादमुपनह्यति वा । चर्मपादुकेत्येके । **पदत्राणम्** । हिं.—जूता, सिलीपर ; फा.—पापोश ; म.—जोडा, पायपोस, पैजार ; त—चेरुप्पु ; मल.—चेरुप्पु ചെരുപ്പ്; इं.—A slipper, shoe । **नामानि**—"पादुकानुपदीना स्यादु-

पानत् पादरक्षिणी"ति वैजयन्ती । पादरक्षणमिति हलायुधपाठः । **गुणाः**— "पादुकाधारणं नेत्र्यमायुष्यं पादरोगनुत्" इति मदनपालः । "पादरोगहरं वृष्यं रक्षोघ्नं प्रीतिवर्धनम् । सुखप्रचारमोजस्यं सदा पादत्रधारणम् । अनारोग्यमनायुष्यं चक्षुषोरुपघातकृत् । पादाभ्यामनुपानद्भ्यां सदा चङ्क्रमणं नृणां" इति सुश्रुतः ॥

**उपोदका** । सू. ६. etc. उपगतमुदकमत्र । उपोदिका उपोदकी चेति पाठौ । **पत्रशाकविशेषः** । N. O.—*Basellaceae* । **हिं**— पोई ; **बं.**—पुईशाक ; **म.**—थोरमयाळ , थोरवेल ; **गु.** –पोथी ; **कों.**—वाळि ; **तै.**—अल्लुबचलि ; **क.**—बिळि बसळे ; **तु.**— बोल्दुबसले ; **त.**–पचलैकीरै ; **सिं.**—निवीति ; **मल.**—वसळचीरा വസളച്ചീര , वशळा ; **इं.**—Indian Spinach, Malabar night-shade ; **ल.**—*Basella alba* । **नामानि**—पोतक्युपोदिका सा तु मालवाऽमृतवल्लरी" । भा. प्र । **गुणाः**—"उपोदकी कषायोष्णा कटुका मधुरा च सा । निद्रालस्यकरी रुच्या विष्टम्भश्लेष्मकारिणी" । रा. नि । "पोतकी शीतला स्निग्धा श्लेष्मला वातपित्तनुत् । अकण्ठ्या पिच्छिला निद्राशुक्रदा रक्तपित्तजित् । बलदा रुचिकृत्पथ्या बृंहणी तृप्तिकारिणी" भा. प्र । प्रायेणाऽस्याः पत्रं ग्राह्यम् ॥

**उभयहरिद्रा** । चि. १९. निशाद्वयम् ॥

**उमा** । सू. ५ etc. उं शिवं माति , मिमीते वा ; अवते ऊयते वा । "उमाऽतसीहैमवतीहरिद्राकीर्तिकान्तिषु" इति मेदिनी । **अतसी** ॥

**उरगः** । चि. ५. उरसा गच्छति । **अहिः** ॥

**उरभ्री** । उ. १८. उरु भ्राम्यति-उरभ्रः , उरं रभते वा । **मेषश्री** । "उरभ्रो रोमशोऽप्यविः "इति वैजयन्ती ॥

**उरुबूकः** । सू. २४ etc. उरुं महान्तं वायुं वायति । **एरण्डः** ॥

**उरुमाणः** । सू. ६. औत्तरापथिको **मधुरस्निग्धफलवृक्षविशेषः** । मार्यीफल इति पाश्चात्यभाषा । उरुमाल इति चरकोपस्कारपाठः । 'नास्पाति' इति हाराणचन्द्रः ॥

**उलकम्** । नि. १४. उलुकमिति पाठः । हरितावस्थं **शिंबीधान्यम्** । कृतान्नविशेष इति केचित् । ओकुलमितीन्दुपाठः । काण्डस्थान्य-पक्वानि भृष्टानि सस्यानीति । उलखड़ इति वङ्गेष्वेके । "शकृज्जा बहुविड्धान्यपर्णशाकोलकादिभि"रित्यत्र "शाकोलक"मित्येकपद-मित्यपरे । "माषपिष्टान्नविदलपर्णशाकैः पुरीषजाः" इति सुश्रुतः पठति । "माषपिष्टान्नलवणगुडशाकैः पुरीषजाः" इत्येवात्र हाराण पाठः ॥

**उलूकः** । सू. ६ etc. वल-समवाये ऊक सम्प्रसारणम् । उलति नेत्राभ्यां दहत्युलूकः, ऊर्ध्वालोकनादिति निरुक्तम् । "उलूकः पुंसि काकाराविन्द्रे भारतयोधिनि" इति मेदिनी । **पेचको नाम या-मिनीचरः** । हिं.–उल्लू; बं.–पेचा; म.–घुबड; त.–आन्तै, कोट्टान्; सिं.–बकमुणा; मल.–ऊमन् ഉമൻ, मूंगा; इं.–Owl; ल.–*Strix flammea* । **नामानि**—"उलूको नक्तचारी च दिवान्धः कौशिकस्तथा । कौशी घर्घरको भीरुः काकशत्रुर्निशा-चरः" । ध. नि । **गुणाः**—"औलूकं पित्तलं भ्रान्तिकरं वातप्र-कोपनम् । प्रसहा वायसोलूकश्येनगृध्रादयस्तथा । सिंहादिवद्गु-णस्तेषां विशेषाच्छोषिणे हिताः" । रा. नि ॥

**उल्बः** । उ. १. **गर्भावरणरूपो सुसूक्ष्मचर्मविशेषः** । "उल्बं च कललं स्मृतं"इति हलायुधः । Uterine, germ ॥

**उशीरम्** । सू. ३ etc वश + ईरन् किच्च । उश्यते काम्यते इत्यु शीरम् । **स्वनामप्रसिद्धसुगन्धतृणमूलम्** । N. O.—*Gramina-*

ceae । हिं.—खस, खसखस, काला वाला: उर्दु,—वाला; बं.—खशखश्, वेणारमूल, व्याणारमूल; म.—काळा वाळा; गु.—कालो वालो; ते.—आपुरुगड्डु, नेलदमु, करुवेरुविडवाल, वट्टिवेरु; क.—मुडिवाळ, लावंच, कसुवु, बालदगेरु, गंडुगं-जलगरिके, उशीर; तु.—मुड्यल; कों.—भाणावालो; पश्चा.—पन्नि; त.—वेट्टिवेर्, इलामच्चै; सिं.—सुवन्दहोट, सेवेन्दरा; मल.—रामच्चं രാമച്ചം; इं.—Cuscus grass; Sweet rush; ल.—*Andropogon muricatus* । अस्य मूलं ग्राह्यम् । तल्लक्षणं यथा—"दीर्घमूलं दृढं सूक्ष्ममुत्तमं गन्धसंयुतं । देशे साधारणे जातं लामज्जं भद्रकं भवेत् । मध्ये सारविहीना या सरला कीटवर्जिता । नलिका सा भवेत् भद्रा विपरीता तु निन्दिता" इति नामानि—"उशीरममृणालं स्यादभयं समगन्धिकम् । व्रणप्रियं वीरतरं वीरं वीरणमूलकम्" । ध. नि । गुणाः—"उशीरं शीतलं तिक्तं दाहश्रमहरं परम । पित्तज्वरार्त्तिशमनं जलसौगन्ध्यदायकं" । रा. नि । अन्यच्च—"उशीरं पाचनं शीतं स्तंभनं लघु तिक्तकम । मधुरं ज्वरहृद्वान्तिमदनुत् कफपित्तकृत् । तृष्णास्रविषवीसर्पदाहकृच्छ्रव्रणापहम्" । भा. प्र ॥

**उशीरम्** । सू. २९. लामज्जकव्यजनम् । हिं.—खसके पंखा; मल.—रामच्चविशरि; इं.—Cuscus fan । "वालोशीरैश्च वीज्येत" इत्यत्र "व्यज्येत बालव्यजनै"रित्येव सुश्रुतपाठः ॥

**उशीरम्** । शा. १. मृणालम् । "चन्दनोशीरकल्केन लिंपेदूरुस्तनोदरं" इत्यत्र "चन्दनमृणालकल्कैश्चास्याः स्तनोदरं विमृद्गीया" दित्येव चरकपाठः । संग्रहेऽपि तद्वदेव दृश्यते । अमृणालमिति चेदुशीरमेव ॥

**उष्ट्रः** । सू. ५ etc. ओषति, उष्यते वा । 'उष दाहे । स्वनामख्या-

तपशुविशेषः । हिं.—ऊंठ ; बं.—उट ; म.—उंट ; त.—ओ-ट्टकं , ओट्टै ; क.—ओट्टे ; सिं—ओटुवा ; मल.—ओट्टकं ഒട്ടകം ; इं.—Camel ; ल.—*Camelus dromedarius* । **नामानि**—"उष्ट्रः क्रमेलको वक्रग्रीवः शाखाशनो मयः । शृंखलः करभो दीर्घजंघो धूम्रो मरुप्रियः" । म. पा । **मांसगुणाः**—"उष्ट्रमांसं लघु स्वादु चक्षुष्यमनिलापहम् । उष्णमर्शःप्रशमनं मेदःपित्तकफापहम्" । ध. नि । **दुग्धगुणाः**–"औष्ट्रं दुग्धं लघु स्वादु लवणं दीपनं तथा । कृमिकुष्ठकफानाहशोथोदरहरं सरम्" । भा. प्र । "उष्ट्रीक्षीरं कुष्ठशोफापहं तत्पित्तार्शोघ्नं तत्कफाटोपहारि । आनाहार्त्तिं जन्तुगुल्मोदराख्यं श्वासोल्लासं नाशयत्याशु पीतम्" । रा. नि । **दधिगुणाः**–"विपाके कटु सक्षारमम्लं स्यादौष्ट्रकं दधि । वातमर्शांसि कुष्ठानि कृमीन् हन्युदराणि च" । ध. नि । **तक्रगुणाः**—"औष्ट्रं तक्रं तु विरसं गुरु हृद्यं च दोषलम् । पीनसश्वासकासेषु शस्तमुक्तं मनीषिभिः" इति । **नवनीतगुणाः**—"औष्ट्रं तु नवनीतं स्याद्विपाके लघु शीतलम् । व्रणकृमिकफास्रघ्नं वातघ्नं विषनाशनम्" । रा. नि । **घृतगुणाः**–"घृतमौष्ट्रं तु मधुरं विपाके कटु शीतलं । कुष्ठकृमिहरं वातकफगुल्मोदरापहम्" । रा. नि । "औष्ट्रं कटु घृतं पाके शोषक्रिमिविषापहम् । दीपनं कफवातघ्नं कुष्ठगुल्मोदरापहम्" । भा. प्र । **मूत्रगुणाः**—"औष्ट्रकं कटु तिक्तोष्णं लवणं पित्तकोपनं । बल्यं जठररोगघ्नं वातदोषविनाशनं" । रा. नि । शर्कराभेदनयोगे "क्रौञ्चोष्ट्रासभास्थीनी"त्यत्र उष्ट्रास्थिशब्दस्य वरुणवृक्षबीजमिति शिवदीपिकाकारः व्याख्यायति ॥

**उष्ट्रधूम(क)ः** । उ. ३७. उच्चिटिंगः । "उष्ट्रवर्णतया प्रोक्तः सः एव ह्युष्ट्रधूमकः । रात्रिको रात्रिचाराच" इति संग्रहे ॥

———

# ऊ ।

**ऊषकः** । सू. १५ etc. ऊष रुजायां । **क्षारमृत्तिका** । हिं.—खारी मिट्टी ; कल्लरनमक इति शिवदीपिकाकारः । चिकित्सास्थानचतुर्दशाध्याये दाधिकघृतयोगव्याख्यायां वातसाह्वयस्तदेव सिंहमूत्रमितीन्दुः । ऊषत्यरुणदत्तः । ऊषकः क्षारमृत्तिका वाराणसीसमीपे वडतरदेशे बाहुल्येन भवतीति डल्हणः । उवर्मण्णु इति केरलेषु ॥

**ऊषकः** । चि. ११. see **ऊषणः** ॥

**ऊषणः** । चि. ११. ऊषत्यूषणः, ऊष रुजायां । उषणापि , उष दाहे , तीक्ष्णतण्डुलत्वात् । **पिप्पली** । अत्र ऊषक इति केषांचन पाठः । see **क्षारोदकम्** ॥

**ऊषणम्** । सू. ७ etc. **मरिचम्** । कफकुष्ठचिकित्सायां "कुष्ठोषणवचे"त्यत्र "मरिचवचाकुष्ठ"मित्येव सुश्रुतपाठः । "ऊषणं मरिचे क्लीबं कणायामूषणा स्त्रियां" इति मेदिनी ॥

---

# ऋ ।

**ऋक्षः** । सू. ६. ऋश्य ऋष्य इति पाठौ । **मृगविशेषः** । see **ऋश्यः** ॥

**ऋक्षः** । सू. ६ etc. ऋक्षति , ऋक्ष्णोति । "ऋक्षः पर्वतभेदे स्याद् भल्लूके शोणके पुमान् । कृतवेधनेन्यलिङ्गं नक्षत्रे च नपुंसकं"इति मेदिनी । भल्लूको नाम लोमशमृगविशेषः । हिं.—रीछ , भालू ; बं.—भल्लूक ; म.—अस्वल , रीस ; क.—करडी ; त.—करटि ; सिं.—वलसा ; मल.—करटि കരടി; इं.—Bear ; ल.—*Ursus ursinus* । **नामानि**—"ऋक्षो भल्लूकोथ भल्लः सशल्यो दुर्घोषः स्याद्भल्लुकः पृष्ठदृष्टिः । द्राघिष्ठः स्याद्दीर्घकेशश्चिरा-

युर्ज्ञेय: सोयं दुश्चरो दीर्घदर्शी" । रा. नि । **मांसगुणा:**—"ऋश्य: स्निग्धो गुरुर्वृष्य: स्वादूष्ण: पवनापह: । म. पा. ॥

**ऋद्धि: । सू. १५** etc. गौडदेशप्रसिद्ध: **कन्दविशेष:** । "ऋद्धि: स्यादौषधीभेदे समृद्धावपि योषिति"इति मेदिनी । म.—सुरुडशेंग ; त.—इरुत्ति ; सिं.—सुळुदडकलत् । "ऋद्धिर्वृद्धिश्च कन्दौ द्वौ भवत: कोशयामले । श्वेतलोमान्वित: कन्दो लताजात: सरन्ध्रक: । स एव ऋद्धिर्वृद्धिश्च भेदमप्येतयोर्ब्रुवे । तूलग्रन्थिसमा ऋद्धिर्वामावर्तफला च सा । वृद्धिस्तु दक्षिणावर्तफला प्रोक्ता महर्षिभि"रिति भावप्रकाशकार: । "प्रयोगेष्वनयोरेकां यथालाभं प्रयोजयेत् । यत्र द्वयानुसृष्टि: स्याद्द्वयमप्यत्र योजयेत्" इति नरहरि: । यस्य गृहे ऋद्धिवृद्धी स्त: तस्य वसुवृद्धिर्भवतीति प्रसिद्ध इत्याढमल्ल: । महाश्रावणीत्यरुणदत्त: । श्रावणीत्येके । केवणी इति कोङ्कणेषु । अस्या कन्दो ग्राह्य: । अभावे वाराही बला वा ग्राह्या । ऋद्धिस्थाने चिडियाकंद इति केचित् । **गुणा:**—"ऋद्धिर्मधुरशीता स्यात् क्षयपित्तानिलाञ्जयेत् । रक्तदोषज्वरं हन्ति वर्धनी कफशुक्रयो:" । ध. नि । "ऋद्धिर्बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरु: । प्राणैश्वर्यकरी मूर्च्छारक्तपित्तविनाशिनी" । भा. प्र. ॥

**ऋश्य: । सू. ६.** इयर्ति ऋश्य: । ऋष्य ऋक्ष इति पाठौ । **मृगविशेष:** । हिं.—रोज । "रोहिदृश्यो हरिणवन्मृदुश्रृङ्ग: प्रतापस:" इति वैजयन्ती । नीलाण्ड इत्यत्र नीलांग इति केषांचन पाठ: । "ऋश्यो नीलाण्डको नील" इति धन्वन्तरीयनिघण्डौ । मरमान् इति केरलेष्वेके । The painted or white-footed antelope इति A. C. Kaviratna । "ऋष्यो नीलाण्डकश्चापि गवयो रोझ इत्यपि । गवयो मधुरो बल्य: स्निग्धोष्ण: कफपित्तल:" । भा. प्र ॥

**ऋषभ: । शा. १** etc. **ऋषभक:** ॥

**ऋषभकः** । सू. ६ etc; ऋषति । 'ऋषी गतौ' । **कन्दविशेषः,** कूर्चशीर्षकः । गौडे काश्मीरे च प्रसिद्धः । अभावे क्षीरविदारी शतावरी वा ग्राह्या । **त.**–कतिर्प्पै; **मल.**—एटवकम् എട്ടവകം । अस्य कन्दः ग्राह्यः । ऋषभकोपि ह्रस्ववृक्षः सहस्रछिद्रो विषाणीति शार्ङ्गधरसंहिताव्याख्यायामाढमल्लः । "ऋषभो वृषशृङ्गवत्" इति । Difficult to identify; said to grow on the summits of the Himalayas, having leaves like bull's horns । **नामानि**— "ऋषभो दुर्धरो धीरो मातृको वृषभो वृषः । विषाणी ककुदिन्द्राक्षो बन्धुरो गोपतिस्तथा" । ध. नि । **गुणाः**— "ऋषभो मधुरः शीतः पित्तरक्तसमीरनुत् । शुक्रश्लेष्मकरो दाहक्षयज्वरहरश्च सः" रा. नि । ऋषभकस्थाने शुभ्रवहमनामिति केचित् । "ऋषभस्त्वौषधान्तरे । स्वरभिद्वृषयोः कर्णरन्ध्रकुम्भीरपुच्छयोः" इति मेदिनी ॥

# ए ।

**एकैषिका** । चि. १७ etc. **त्रिवृत्** । मांसीतीन्दुः । शतावरीत्येके । मुखरोगप्रतिषेधाध्याये "एकैषिकान्वितै"रित्यत्र महादूर्वेतीन्दुः । दूर्वा वेति केचित् ॥

**एटगजः** । **एडगजः** ॥

**एडगजः** । सू. ६. etc. एडवन्मेषाक्षवद्गज्यते शब्द्यते । एडो मेष एव गजो यस्य । भञ्जकत्वादिति वा । **प्रपुन्नाटः** । N. O.—*Leguminosae* । **हिं.**—चकवड, पमार, पवाड, पुआड, पनेवाड ; **बं.**—चाकुन्दा, दादमर्दन, एडांचि, **म.**—टांकळा, टायकडा, तरोटा, तरवड ; **गु.**—कुवाडियो ; **तै.**—तगिरिस, तांट्यमु ; **क.**—तगचे, तगचिं, गंडुतगासि, तगरिस्यनागिड,

चगचे ; तु.—तजंक् ; कों.—ताय्किळो, दद्दुघन ; त.—तकरै, पिण्डु ; सिं.—एत्तोर ; मल.—पोन्नांतकरा ൧പൊന്നാംതകര , तकरा ; पा.—संजिसवोया ; अ.—कुलिकुल ; सञ्जी ; बर्मा.—Dan-kilay-iwai ; इं.—Foetid cassia, Ringworm shrub ; ल.—*Cassia tora* । नामानि—"चक्रमर्दः प्रपुन्नाटो दद्रुघ्नो मेषलोचनः । पद्माटः स्यादेडगजश्चक्री पुन्नाट इत्यपि" । भा. प्र । गुणाः—"चक्रमर्दो लघुः स्वादू रूक्षः पित्तानिलापहः । हृद्यो हिमः कफश्वासकुष्ठदद्रुकृमीन् हरेत् । हन्त्युष्णं तत्फलं कुष्ठकण्डुदद्रुविषानिलान् । गुल्मकासक्रिमिश्वासनाशनं कटुकं स्मृतम्" । भा. प्र । "चक्रमर्दः कटुस्तीव्रमेदोवातकफापहः । व्रणकण्डूतिकुष्ठार्तिदद्रुपामादिदोषनुत्" । रा. नि । अस्य पत्रं बीजं च ग्राह्यम् ॥

**एणः** । सू. ६ etc. एणेयः । कृष्णवर्णो मृगविशेषः । "ताम्रोऽत्र हरिणः कृष्णस्त्वेणः कमलसंज्ञितः"इति । कृष्णसार इति जेज्जटः । हिं.—काला हरिण ; म.—कृष्णहरण ; मल.—कृष्णमृगं, करिंपुळ्ळिमान् ; इं.—Indian Antelope or Black buck ; ल.—*Antilope cervicapra* । मांसगुणाः—"एणमांसं हिमं रुच्यं ग्राहि दोषत्रयापहम् । षड्रसं बलदं पथ्यं लघु हृद्यं ज्वरास्रजित्" । म. पा ॥

**एरकसक्तुः** । चि. २२. एरकातृणधान्यलाजासक्तुः । एरका काश्मीरेषु 'पित्ती' अन्यत्र दण्डेरकपट्टेरकभेदेन प्रसिद्धा इत्येके । निर्ग्रन्थितृणभेद इत्यपरे । हिं.—पोथीतृण ; बं.—होगला ; म.—एरका ; गु.—एरका ; इं.—Elephant grass ; ल.—*Typha Angustifolia* । नामानि—"एरका गुन्द्रमूला च शिविर्गुन्द्रा शरीति च" इति भावमिश्रः । गुणाः—"एरका शिशिरा वृष्या

चक्षुष्या वातकोपिनी । मूत्रकृच्छ्राश्मरीदाहपित्तशोणितनाशिनी" । भा. प्र । see गुन्द्रा ।

**एरण्डः** । सू. ५ etc. ईरयति वायुं मलं वा । 'ईर गतौ कम्पने च' । **स्वनामख्यातवृक्षविशेषः** । N. O.—*Euphorbiaceae* । **हिं.**—अरण्ड, सफेद अरण्ड ; **बं.**—भेरेण्डा, एरडी ; **म.**—पांढरा सुर्ती एरण्ड ; **गु.**—एरडो ; **कों.**—एरडि ; **तै.**—आमुदालचेट्टु ; **क.**—हरळु, औड्लगिड ; **तु.**—अलंबुड ; **त.**—आमणक्कु, चित्तामणक्कु, मुत्तुकोट्टैचेटि ; **सिं.**—एण्डरु, एरण्डु ; **मल.**—नल्लावणक्कु നല്ലാവണക്ക, चिट्टामणक्कु ; **प.**—अरण्ड ; **आसा.**—एडि ; **उरिया.**—गब् ; C. P.—गुडि ; **बर्मा.**—केसुमि ; **मलायी.**—Miniak—Jarah, **पा.**—बेद्अंजीर ; **अ.**—शिखा, खिरवा ; **जर्मन.**—Ricinus ; Gemeiner Wunderbaum ; **फ्र.**—Recin ; **इं.**—Caster oil Plant ; **ल.**—*Ricinus communis* । **नामानि**—"शुक्ल एरण्ड आमण्डश्चित्रो गन्धर्वहस्तकः । पञ्चांगुलो वर्धमानो दीर्घदण्डोऽप्यदण्डकः । वातारिस्तरुणश्चापि रुबुकश्च निगद्यते" । भा. प्र । **गुणाः**—"एरण्डयुग्मं मधुरमुष्णं गुरु विनाशयेत् । शूलशोथकटीबस्तिशिरःपीडोदरज्वरान् । ब्रध्नश्वासकफानाहकासकुष्ठाममारुतान् । एरण्डपत्रं वातघ्नं कफक्रिमिविनाशनम् । मूत्रकृच्छ्रहरं चापि पित्तरक्तप्रकोपणम् । वाताग्रदलं गुल्मबस्तिशूलहरं परं । कफवातक्रिमीन् हन्ति वृद्धिं सप्तविधामपि । एरण्डफलमत्युष्णं गुल्मशूलानिलापहम् । यकृत्प्लीहोदरार्शोघ्नं कटुकं दीपनं परम् । तद्वन्मज्जा च विड्भेदी वातश्लेष्मोदरापहः" । भा. प्र ॥

**एरण्डद्वयम्** । चि. १. शुक्लैरण्डः रक्तैरण्डश्च ॥

**एर्वारुः** । सू. ६ etc. आ—ईर्यते । **फलशाकलताविशेषः** । उर्वारुरि-

ति पाठः । N. O.—*Cucurbitaceae* । हिं.—बड़ी ककड़ी, कंकडि; फूट इत्येके ; बं.—काकुड़, कांकुड ; म.—कांकडी ; गु.—काकडी ; तै.—दोसकाय ; क.—सौत्तेबळ्ळि ; तु.—तौत्ते ; त.—कक्करि, वेळ्ळरि ; मल.—वलिय वेळ्ळरि വലിയ വെള്ളരി, कक्करि ; कों.—मग्गे ; इं.—Cucumber ; ल.—*Cucumis utilissimus* । मध्यमफलं ग्राह्यम् । ग्रीष्मकर्कटिकेति डल्हणः । नामानि—उर्वारुः कर्कटी प्रोक्ता व्यालपत्रा च लोमशा । स्थूला तोयफला चैव हस्तिदन्तफला मुनिः" । ध. नि । सा महत्क्षुद्रभेदेन द्विविधा । गुणाः—"उर्वारुकं पित्तहरं सुशीतलं मूत्रामयघ्नं मधुरं रुचिप्रदम् । संतापमूर्छापहरं सुतृप्तिदं वातप्रकोपाय घनं तु सेवितम्" । ध. नि । "कोमलैर्वारुकं तिक्तं लघु स्वाद्वतिमूत्रलम् । शीतं रूक्षं रक्तपित्तमूत्रकृच्छ्रास्रदोषजम् । तत्पक्वं पित्तलं चाग्निदीपनञ्च तृषापहम् । उष्णं त्रिदोषशमनं कृमिदाहहरं मतम् । गृहे जीर्णन्तु तज्ज्ञेयमुष्णं पित्तकरं मतम् । कफवाय्वोर्नाशकरं प्रोक्तमायुर्विदैर्जनैः । क्षुद्रमैर्वारुकं शीतं मधुरं रुचिकारकम् । कासपीनसकारि स्यात् पाचकं श्रमपित्तहम् । आध्मानवाय्वोः शमनं" इति वैद्यकनिघण्टौ ॥

**एलवालु** । सू. १५. एलेव वलते । **स्वनामप्रसिद्धगन्धद्रव्यविशेषः** । कङ्कोलसदृशं कुष्ठगन्धि । हिं.—एलवा, एलुआ ; बं.—लालु, एलवालुक ; म.—एलवालुक, कलङ्गडले, वेलची ; गु.—एलवा ; तै.—कुतुडवुडमचेट्टु, कुतुखुडम ; क.—कलंगडले; त.—एलवालुकं ; सिं.—एल्वालु, पेत्तिकपुरु ; मल.—एलवालुकं ഏലവാലുകം । अस्य बीजं ग्राह्यम् । हरिवालुकं कृष्णगन्धिकफलसदृशमिति डल्हणः । नामानि—"एलावालुकमालूकं वालुकं हरिवालुकं । एल्वालुकं कपित्थं स्याद्दुर्वर्णं प्रसरं दृढम्" । ध. नि । तेजपत्रवृक्षस्य बीजमिति केचित् । गुणाः—"एल्वालु

शीतलं हन्ति कण्डूकुष्ठकफक्रिमीन् । तृट्छर्दिकफपित्तास्रहृन्मूत्रगद-जित् लघु" । म. पा ॥

**एलवालुकम्** । सू. २१ etc. एलवालु ॥

**एला** । सू. ६ etc. एलयति मुखदौर्गन्ध्यमित्येला । **स्वनामख्यात-**पण्यद्रव्यम् । "एला कक्कोलबीजाभा सा ग्राह्या कोद्रवाकृतिः । या कक्कोलसमाकारा कर्पूररेणुसंयुता । सरला सा त्रुटिःश्रेष्ठा विपरीता तु नेष्यते" इति । एला द्विधा–सूक्ष्मा स्थूला च । "एला सूक्ष्म-फला वरा" इति भावमिश्रः । अस्या बीजं ग्राह्यम् । N. O.—*Scitamineae* । **हिं.**—इलायची, एलाची ; **बं.**—इलाइच ; **म.**—एलची ; **गु.**—एलची ; **तै.**—एलकी ; **क.**—एलक्किगिड ; **तु.**—एलकि ; **त.**—इलाच्चि , एलं , एलरिचि ; **सिं.**—एन्साल् ; **मल.**—एलं ஏலம் , एलत्तरि ; **कों.**—एळ ; **बर्मा.**—Palah ; Bala ; **मलायी.**—Ruputage Pinvar ; **ग्री.**—Cardamom Elettarie ; **इं.**—Cardamom ; **पा.**—हैल , हिल ; **अ.**—काकले सगीर–या–काफले सिगार ; **ल.**—*Elettaria cardamomum* । "एलाद्वयं शीतलतिक्तमुक्तं सुगन्धि पित्तार्तिकफापहारि । करोति हृद्रोगमलार्तिबास्तिपुंस्त्वघ्नमत्र स्थविरा गुणाढ्या" इति नरहरिः । see भद्रैला and सूक्ष्मैला ॥

**एलाद्वयम्** । चि. १ etc. **भद्रैला सूक्ष्मैला च** ॥

**एलायुग्मम्** । सू. १५. **एलाद्वयम्** । एलादिगणे एका एलैव सुश्रुत-संहितायां ॥

---

# ऐ ।

**ऐकशफम्** । सू. ५. **अश्वायाः क्षीरम्** । **हिं.**—घोडीका दूध ; **म.**—घोडीचें दूध ; **क.**—कुदिरेयहालु ; **मल.**—कुतिरप्पाल्

കുതിരപ്പാല്; इं.—Mare's milk । "अश्वःकिण्वी हरिकान्तः शालिहोत्रश्च मुद्गभुक् । श्रीपुत्रश्चामरी हेषी राजस्कन्धो मरुद्रथः । वातायनश्चैकशफ" इति त्रिकाण्डशेषे । "गव्यं माहिषमाजं च कारभं स्त्रैणमाविकम् । ऐभमैकशफं चेति क्षीरमष्टविधं मतं" इत्यत्रैकशफपदस्यार्थविनिश्चयने महती विचिकित्सा वर्तते । यद्यपि सन्देहनिवारणायालमेतत प्राचीनाचार्यवाक्यशकलमिति मन्ये । "क्षीराकरा गौर्महिषी अजावी करभी गजा । हयी स्त्री चाष्टमी तेषां पृथक्कर्मगुणान् शृणु" इति । "अतः क्षीराणि वक्ष्यन्ते कर्म चैषां गुणाश्च ये । अवीक्षीरमजाक्षीरं गोक्षीरं माहिषं च यत् । उष्ट्रीणामथ नागीनां वडवायाः स्त्रियास्तथा" इति चरकसंहितायामपि दृश्यते । "गव्यमाजं तथा चौष्ट्रमाविकं माहिषं च यत । अश्वायाश्चैव नार्याश्च करेणूनां च यत्पयः" इति सुश्रुतोऽपि पठितवान् स्फुटतया । अश्वायाश्च नार्याश्च करेणूनां चेति चकारत्रयमनुक्तसमानजातीयक्षीराणां समुच्चयार्थं, तेनाश्वतरीखरीमृगीखड्गिनीक्षीराणामपि ग्रहणमित्यत्र व्याख्याति डल्हणः । "रूक्षोष्णं बडवाक्षीरं बल्यं शोषानिलापहम । अम्लं पटु लघु स्वादु सर्वमैकशफं तथा" इति भावमिश्रमदनपालौ । अविभागखुरवडवागर्दभ्यादीनां क्षीरमित्येव बहवो व्याख्यातारः । वडवायाः क्षीरमिति स्थापयति चक्रपाणिदत्तः । एकः शफः खुरो यासां ता एकशफाः, अत्राश्वाया इति वक्तव्ये यदेकशफमिति सामान्यशब्दप्रयोगं करोति, तद्वेगसरीप्रभृतीनामप्येकशफानां ग्रहणार्थमिति शिवदासः । एकशफाः खरादयः पञ्च एव । तथा च श्रीभागवतं, "खरोऽश्वोऽश्वतरो गौरः शरभश्चमरी तथा । एते चैकशफाः" इति ॥

**ऐंगुदम्** । उ. १८. इंगुदीबीजम् ॥

**ऐंगुदम्** । उ. ३०. इंगुदीबीजतैलम् । म.—हिंगणबेट तेल; मल.—ओटत्तेण्णा ഓടത്തെണ്ണ ॥

**ऐन्द्रम्** । सू. ५. **गांगांबु** । वर्षाद्वारा आकाशसे गिराहुआ जल । तत्रान्तरीक्षं चतुर्विधमिति सुश्रुतः । तद्यथा–धारं, कारं, तौषारं, हैममिति । तेषां धारं प्रधानं, लघुत्वात् । तत्पुनर्द्विविधम्–गांगं सामुद्रं चेति । गांगमाकाशाधिष्ठानं, सामुद्रं पुनरवन्यधिष्ठानम् ।

**ऐन्द्री** । चि. २२ etc. **इन्द्रवारुणी** । "विशालैन्द्रीन्द्रवारुणी" इति वैजयन्ती ॥

**ऐभम्** । सू. ५. **हस्तिन्याः क्षीरं** । हथिनीका दूध । **मल,**—आनप्पाल् ആനപ്പാല് **इं.**–Elephant's Milk ॥

**ऐरण्डम्** । सू. ५. **एरण्डफलोद्भवं तैलम्** । **हिं.**—एरण्डका तेल, अरंडीके तेल ; **उर्दु.**—चितेरिण्टीका–तले ; **तै.**—आमुदं ; **क.**–हरेलेण्णै ; **त.**—विळक्केण्णै, आमणक्केण्णै ; **मल,**—आवणक्केण्णा ; **इं.**—Castor oil ; **ल.**—*Oleum ricini* । "अग्र्यमैरण्डं तु विरेचने" इति चरकः ॥

**ऐरण्डम्** । सू. ७. **एरण्डकाष्ठम्** । एरण्डकी लकड़ी ॥

**ऐरावतः** । सू. ६. इरावत्या, विद्युत इवायम् । **नागरंगो नाम फलवृक्षविशेषः** । N. O.—*Aurantiaceae* । **हिं.**—नारंगी ; **बं.**—कमलालेबु ; **म.**—नारिंग ; **गु.**—नारिंगी ; **तै.**—नारंगमु, नारंजि ; **क.**--कित्तळे ; **तु.**—कित्तुलि ; **कों.**—सोन्नारिंग ; **त.**—नारंकं, नारत्तै, कोळिञ्चि, आरंचिप्पळं ; **सिं.** –नारं ; **उरिया.**—सन्तला ; **अ.**—नारंज ; **बर्मा.**–Lieng-mau; Sung-zen; **चैना.**–Kan, Kiuh; **मलायि.**—Simao; **मल.**–मधुरनारकं മധുരനാരകം; **इं.**–Sweet orange ; **ल.**—*Citrus Aurantium* । **नामानि**—"नारंगः स्यान्नागरंगः सुरंगस्त्वग्गन्धश्चैरावतो वक्त्रवासः । योगी रंगो योगरंगः सुरंगो गन्धा-

ङ्योयं गन्धपत्रो वरिष्ठः" । रा. नि । पक्वफलं ग्राह्यं । **गुणाः**— "नारंगं मधुरं चाम्लं गुरूष्णं चैव रोचनम् । वातामकृमिशूलघ्नं श्रमहृद्बलरुच्यकम्" । रा. नि । ऐरावतमैरावणिका कृष्णलोहिताल्पफलेति डल्हणः । ऐरावतनागरंगयोरीषद्भेदोऽस्तीति केचित् ॥

**ऐर्वारुः** । उ. २२. एर्वारुः ॥

**ऐलेयम्** । उ. २२. एलवालु ॥

---

## ओ ।

**ओदनः** । सू. ६ etc. **अद्रवाणि सिक्थान्योदनः** । "ओदनो भक्त उच्यते" इति । हिं.—चावलोंके भात, उबाला चावल ; त.—अन्नं ; मल—चोरु ചോറു ; इं.—Boiled rice । **नामानि**— "अन्नं जीवनमाहारः कूरं कशिपुरोदनम् । अन्धो भिस्साऽदनं भोज्यमन्नाद्यमशनं तथा" । ध. नि । **गुणाः**—सुधौतांस्तण्डुलान् स्फीतांस्तोये पञ्चगुणे पचेत् । तद्भक्तं प्रस्रुतं चोष्णं विशदं गुणवन्मतम् । भक्तं वह्निकरं पथ्यं तर्पणं रोचनं लघु । अधौतमस्रुतं शीतं गुर्वरुच्यं कफप्रदम्" । भा. प्र ॥

**औद्भिदम्** । सू. ६ etc. **लवणविशेषः** । हिं.—रेहगवा, रेहका नमक, रेहगमानोन, सोराखार, खारीनमक ; म.—सोरमीठ ; गु.—खारानुंलूण, सुरोखार ; त.—चवुद्दुप्पु ; मल.—वेटियुप्पु വെടിയുപ്പു ; सिं.—उद्भिदलुणु ; पोदलुणु ; तै.—पद्लुउप्पु ; चिट्ठुभूस्मु ; क.—पद्लुप्पु ; **मलायी**.—Sundawn ; **बर्मा**.— Yandzeing ; अ.—अबकर ; फा.-षोरभा ; इं.—Saltpetre, Nitre ; ल.—*Potassium nitras* । Fossil salt इत्येके । Some say, Autbhida is evidently salt manufactured

from vegetable substances. The name, however, is sometimes applied to Sambhari salt । नामानि—"औद्भिदं भूमिजं भौमं पार्थिवं पृथिवीभवम्" । म. पा । गुणाः—"लघु तीक्ष्णोष्णमुत्क्लेदि सूक्ष्मं वातानुलोमनम् । सतिक्तं कटुकं क्षारं विद्याल्लवणमौद्भिदम्" । ध. नि । पृथिवीभवमौद्भिदमिति पदार्थचन्द्रिका । उत्तरदेशभवमुत्कारिकालवणमौद्भिदमिति शिवदासः । भूमिमुद्भिद्योत्पन्नस्य क्षारोदकस्य सूर्यरश्मिभिर्वह्निना वा क्वथनाद्यल्लवणमुत्पद्यते तदौद्भिदमिति डल्हणः । औद्भिदमौत्कारिकालवणं केचित् शांभरिलवणमाहुरिति चक्रपाणिदत्तः । पांशुलवणमित्येके । शोधितमेव ग्राह्यम् ॥

**औषधम्** । चि. ४ etc. शुण्ठी । "तामलक्यमृतौषधैः" । "मूलं बिल्वस्य चौषध"मित्यत्र "नागरमेव च" इत्येव सुश्रुतपाठः । बिल्वशब्दः संग्रहेपि न दृश्यते ॥

**औष्ट्रकम्** । सू. ५. उष्ट्रीक्षीरम् । हिं.—ऊँटनीका दूध; म.—उंटिणी चें दूध; क.—ओट्टयहालु; त.—ओट्टैप्पाल्; मल.—ओट्टकप्पाल् ഒട്ടകപ്പാല്; इं.—Camel's Milk । see उष्ट्रः ॥

## क ।

**ककुद्मान्** । उ. ३९. ककुदस्यास्ति । वृषभः ॥

**ककुभः** । सू. २ etc. ककुभः सन्त्यस्य दिग्व्यापकत्वात् ककुभः । "ककुभो रागभेदेपि वीणांगेऽर्जुनपादपे" । अर्जुनवृक्षः । see अर्जुनः ॥

**कङ्कः** । सू. २५ etc. कंकते । ककि गतौ । दीर्घचञ्चुः महाप्रमाणः पक्षिविशेषः । दहाकाकमन्ये । 'हाड़गिला' इत्याभाष्यतेति केचित् । कङ्कः वक्रचञ्चुः कृष्णवर्णः प्रसिद्ध एवेति डल्हणः । बं.—काँक;

त.—नारै ; मल.—नारा നാരാ , ञारा ; इं.—Heron ; ल.—*Ardea cinera* । **तस्य लक्षणमाह**,—"कङ्कः स्यात्कङ्कमल्लाख्यो बाणपत्रार्हपक्षकः । लोहपृष्ठो दीर्घपादः पक्षाधःपाण्डुवर्णभाक्" इति । **नामानि**—"कङ्कस्तु लोहपृष्ठः स्यात् संदंशवदनः खरः । रणालङ्करणः क्रूरः स च स्यादामिषप्रियः" । रा. नि । **मांसगुणाः**—"चक्रवकङ्कवकोटादिमांसं स्निग्धं हिमं गुरु । मधुरं सृष्टविण्मूत्रं वातपित्तास्रनाशनम्" । भ. पा । "वृष्यो वीर्यविवर्धनः कफकरः कङ्कस्तथा भासकः" इत्यत्रिसंहितायां । "कङ्कश्छद्मद्विजे ख्यातो लोहपृष्ठकृतान्तयोः" इति मेदिनी ॥

**कङ्कोलम्** । चि. २१. ककते गच्छति, कोलति संस्त्यायति । **मरिचाकृतिस्सुगन्धद्रव्यविशेषः** । ककोलमिति चरकपाठः । "ककोलकं शुभं विद्धि वेष्टितं सूक्ष्मया त्वचा । स्निग्धं गुरुकमत्यन्तमन्यथातीव निन्दितं" इति । N. O.—*Piperaceae* । **हिं.**—कबाब्चीनी , शीतलचीनी ; **बं.**—कांकला ; **म.**—कंकोळ , शीतळचिनी , कापुरचीनी , **गु.**—चणकबाब , कंकोल ; **कों.**—हिमसिमिरि , गंधमेणसु ; **तै.**—चलवमिरियालु , कवाबचीनी ; **क.**—गंधमेणसु , बालमेणसु ; **त.**—वालिमळकु , तक्कोलं ; **सिं.**—वलगमिरिस् ; **मल.**—वाल्मुळकु വാല്മുളക് , चीनमुळकु ; (तक्कोलप्पुट्टिल् इत्येके) **अ.**—कबाबह् , हब्बउलरुस ; **पा.**—किबाबेह् , हब-एल-अरूस ; **ग्री.**—Mahilyun, Karifiyun ; **इं.**—Cubebs, Tailpepper ; **ल.**—*Cubeba officinalis*, *Piper Cubeba* । **नामानि**—"कंकोलकं कृतफलं कोलकं कटुकं फलं । चूर्णं कन्दफलं द्वीपं मारीचं माधवोचितं" । ध. नि । "तक्कोलं त्रिपुटं कोलं कोलकं बहुबीजकम् । चक्रबीजं कोषफलं नीपं कटुफलं तथा" इति सरस्वतीनिघण्डौ । **गुणाः**—"कंकोलं लघु तीक्ष्णोष्णं तिक्तं हृद्यं रुचिप्रदम् । आस्यदौर्गन्ध्यहृद्रोगकफवातामयान्ध्य-

हृत्" भा. प्र । अस्य फलं ग्राह्यम् । अभावे जातीपुष्पं, तदभावे लवङ्गं; सूक्ष्मैला वा ग्राह्या ॥

**कंकोलकम्** । उ. २२. कंकोलं ॥

**कंगुः** । सू. ६ etc. कं सुखं गच्छति । **तृणधान्यविशेषः** । N. O.—*Graminaceae* । हिं.—कंगनी, कांकुनी: बं.—कंगुनी, काङ्नी; म.—कांग; गु.—कांग; तै.—कोर्रलु, प्रैंकणपुचेट्टु; क.—नवणेअक्कि, कंगो, आरिके, तेनेगिड; कों.—वरयि; त.—तिनै; सिं.—तन, वल्मेनेरि; मल.—तिना തിന; पा.—गल; इं.—Italian millet, Pannick seed, Deccan grass; ल.–*Panicum Italicum*, *Setaria Italica*, *Lataria Italica* । "कृष्णा रक्ताश्च पीताश्च श्वेताश्चैव प्रियंगवः" इति सुश्रुतः । नामानि—"प्रियंगुः कंगुकश्चैव चीनकः पीततण्डुलः । अस्थिसंबन्धनश्चैव कंकनी पटु कथ्यते" । ध. नि । "पीततण्डुलिका कंगुः प्रियंगुः कर्कटी मता । सितकंगुस्तु मुसटी रक्तकंगुस्तु शोधिका । चीनकः काककंगुःस्या"दिति मदनपालः । पुराणं धान्यं ग्राह्यं । गुणाः—"कंगुस्तु भग्नसन्धानवातकृद्बृंहणी गुरुः । रूक्षा श्लेष्महराऽतीव वाजिनां गुणकृद् भृशम्" । भा. प्र ॥

**कच्छपः** । नि. १० etc. कच्छे पिबति । कूर्मः ॥

**कच्छुरा** । सू. १५ etc. कच्छूं रोगं राति । दुरालभा । "कच्छुरा शूकशिम्ब्यां च दुःस्पर्शयोरपि" इति मेदिनी । अम्बष्ठादिगणे सुश्रुतसंहितायां तत्पाठो न दृश्यते । ह्रस्वकपिकच्छुरित्येके । अतीसारचिकित्सिते "कपित्थकच्छुराफञ्जी"त्यत्र कच्छुरेति डल्हणः ॥

**कटकम्** । सू. २८. खलीनं, यद्धि लौहमयं घोटकमुखाभ्यन्तरे प्रग्रहयोजनार्थं दीयते तद् । "खलीनं कविकं स्मृत"मिति हलायुधः । "कवियोऽस्त्री खलीनोऽस्त्री पञ्चांगी कविका कविः" इति वैजयन्ती । कविकेति सुश्रुतपाठः । हिं.—लगाम ; म,—लगाम ; बं.—कड़िआल ; त.—कटिवाळं ; मल.—कटिवाळं കടിവാളം, कटिञ्ञाण् ; इं.—Bit of the bridle ॥

**कटंकटेरी** । चि. ९. हरिद्रा ॥

**कटंकटेरी** । चि. ९ etc. दार्वी ॥

**कटंकटेर्यौ** । उ. ३०. निशाद्वयम् ॥

**कटभी** । सू. ७. कटत्यावृणोति कटभी । अद्रिकर्णी । नीलापराजितेत्येके ॥

**कटंभरा** । उ. ६. कटं बिभर्ति । कटभी । कटभीतीन्दुश्चक्रपाणिदत्तश्च । प्रसारिणीति केचित् । श्वेतगुंजेति कैरली ॥

**कटिल्लः** । सू. ६. कटिं लाति कटिल्ल ; कटत्यावृणोति वा । कठिल्लक इति चरकपाठः । क्षुद्रकारवेल्लः । रक्तपुनर्नवेति हेमाद्रिः । "कठिल्लकस्तु पर्णासे वर्षाभूकारवेल्लयोः" इति मेदिनी ॥

**कटु** । उ. ५. मरिचम् ॥

**कटुः** । उ. २४. सर्षपः ॥

**कटुकत्रयम्** । उ. ३९. त्रिकटु ॥

**कटुकदौग्धिकम्** । उ. ३७. कटुकालाबुः । पदद्वयमित्येके ॥

**कटुकमत्स्यकः** । चि. १४. शुष्कशफरीमत्स्यः । मल.—उणङ्ङिय कटुमीन् ഉണങ്ങിയ കടുമീൻ ॥

**कटुकरोहिणी** । चि. १. कटुका ॥

**कटुका** । सू. १० etc. **कटुरोहिणी** । N. O.—*Ranunculaceae* । हिं.—कुटकी; उर्दु.—कुतकी; बं.—कटकी; म.—कडुकी, केदारकुटकी; गु.—कुडु; तै.—कटुकरोहिणी, नल्लकोलकर; क.—केदारकटुकी, कटुकरोहिणी; त.—कडुकरोकणि; सिं.—कुळुरेहेण, कटुकरोस्न; काश्मी.—कडर; पा.—खर्बकेसियाह, खरबेका हिन्दि; अ.—खर्बक अस्वद, खरतु: मल.—कटुकरोहिणी കടുകരോഹിണി; इं.—Black Hellebore: ल.—*Helleborus niger, Picrorrhiza Kurroa* । **नामानि**—"कटुवी तु कटुका तिक्ता कृष्णभेदा कटुंभरा । अशोका मत्स्यशकला चक्रांगी शकुलादनी । मत्स्यपित्ता काण्डरुहा रोहिणी कटुरोहिणी" । भा. प्र । **गुणाः**—"कटुवी तु कटुका पाके तिक्ता रूक्षा हिमा लघुः । भेदिनी दीपनी हृद्या कफपित्तज्वरापहा । प्रमेहश्वासकासास्रदाहकुष्ठक्रिमिप्रणुत्" भा. प्र । अस्याः मूलं ग्राह्यम् । सा द्विधा—पीतां पीतरोहिणीति कथ्यते । कफजमूत्राघाताचिकित्सिते "कटुकैलाकरञ्जं" चेत्यत्र कटुकास्थाने "कैंबुक"मित्येव चरकपाठ इत्यनुस्मारयामि ॥

**कटुकाफलम्** । सू. २९. **अलाबुफलम्** । कटुतुम्बीफलमित्येके । कर्कोटफलमितीन्दुः । कटुरोहिणीफलमिति हेमाद्रिः । दूधी (घीया) का शाक इति शिवदीपिकाकारः । निंबफलमिति केरलेष्वेके । पदद्वयमिति भास्करव्याख्या । सुश्रुतसूत्रषट्चत्वारिंशत्तमाध्याये 'जातीकोशोथ कर्पूरं जातीकटुकयोःफलं' इत्यत्र कटुकाफलं लताकस्तूरिकेति पञ्जिकाकारौ, श्रीब्रह्मदेवस्तु लघुकक्कोलकमाह इति डल्हण । लताकस्तूरिका दक्षिणापथे विटप इति दृश्यते । पटोलफलमिति च केचित् ॥

**कटुकालाबुः** । चि. ८. **तिक्ततुम्बी** । N. O.—*Cucurbitaceae* ।

हिं.—तितलौकी, कटुलौकी, कटवीतोंबी, जंग्लिखडु ; बं.—क-ड्वी तोम्बी ; तितलाऊ ; म.—कडूभोंपळा, कडुदुध्याभोंपळा ; रानभोंपळा ; गु.—कडवीतुंबडी ; तै.—चेतिआनप, आनपकायि ; क.—कहिसोरे, एलचा, ईसगायिबळ्ळि ; कों.—काडुदुद्दि ; तु.—काद्दुदुरे ; सिं.—तित्तलबु ; त.—काददुचुरै, कूटंपिल्ल् ; मल.—काद्दुचुरा കാട്ടുചുര, कैप्पन्चुरा, पेच्चुरा ; पा.—कदुतल्ख ; अ.—करडलमर ; फ्रा.—Gourde ; ज.—Flaschen-kurbis ; इं.—Bitter bottle-gourd ; ल.—*Lagenaria Vulgaris* । नामानि—"कटुकालांबुनी तुंबी लंबा पिण्डफला च सा । इक्ष्वाकुः क्षत्रियवरा तिक्तबीजा महाफला" । ध. नि । गुणाः—"कटुतुंबी हिमा हृद्या पित्तकासविषापहा । तिक्ता कटुर्विपाके च वातपित्तज्वरान्तकृत्" । भा. प्र । "कटुतुंबी कटुस्तीक्ष्णा वान्तिकृच्छ्वासवातजित्" । रा. नि । वल्ली फलं च ग्राह्यं ॥

**कटुकालांबुः** । उ. ३८. कटुकालाबुः ॥

**कटुतैलम्** । सू. ७ etc. सर्षपतैलम् । हिं.—कडुयातेल ; म—शिरशेल ; मल.—कटुकेण्णा കടുകെണ്ണ । Mustard oil । गुणाः—कटु तिक्तं तथा ग्राहि उष्णं स्यात् कफवातनुत् । कृमिपाण्डुशोधनं स्यात् पित्तकृत् सार्षपं स्मृतम् । कर्णरोगे कृमिरोगे तथा वातामयेषु च । कण्डूकुष्ठामये चैव कफमेदोगुणेषु च । प्रशस्तं सार्षपश्चैव रोगाणाञ्च विभावयेत् । वस्तिकर्मणि नो शस्तं पित्तदाहकरं महत्" इत्यत्रिसंहितायां । "कटुतैलवान्" इत्यत्र "सर्षपतैलभृष्ट" इत्येव संग्रहपाठः । परिलेहिकाचिकित्सिते "कटुतैलं विपाचयेत्" इत्यत्र "सार्षपं तैलं" इत्येव सुश्रुतपाठः ॥

**कटुत्रयम्** । चि. ८. त्रिकटु ॥

**कटुत्रिकम्** । उ. ५. त्रिकटु ॥

**कटुफलम्** । चि. २१. कटु फलं यस्य । **लताकस्तूरी** । N. O.—*Malvaceae* । हिं.—मुष्कदाना, वेदमुष्क, लताकस्तूरी, मकस्तान्; बं.—लताकस्तूरी, कालकस्तूरी; म.—लताकस्तूरी, कालकस्तूरी; गु.—लताकस्तूरी; कों.—कस्तूरीभेण्टो; तै.—कस्तूरिबेंड, कर्पूरिबेण्ड; क.—काडुकस्तूरि, कलिकस्तूरि; त.—वेत्तिलैक्कस्तूरि, इरट्टकतुत्ति; मल.—वेत्तिलक्कस्तूरि വെററില കസ്തൂരി काट्टुकस्तूरि; सिं.—कपुकिमिस्सा; पा.—मक्स्तन; अ.—हब-उल-मिष्क; कव्वुमिष्का; इं.—Musk mallow; ल.—*Hibiscus Abelmoschus* । **नामानि**—"लताकस्तूरिका चान्या सैव दक्षिणदेशजा" इति । **गुणाः**—"लताकस्तूरिका स्वादुर्वृष्या शीता लघुः स्मृता । नेत्र्या तिक्ता छेदनी च तीक्ष्णा बस्तिविशोधिनी । बस्तिरोगं कफं तृष्णां मुखरोगं च नाशयेत् । लालास्रावं वमिं वातं दौर्गन्ध्यं च मदं जयेत् । अलक्ष्मीनाशिनी प्रोक्ता भवेद्देशे च दक्षिणे" इति निघण्टुरत्नाकरात् । कर्कोटफलमितीन्दुः ॥

**कटुरोहिणी** । सू. १५. कटुः सती रोहति । **कटुका** ॥

**कट्तृणम्** । चि. १. रोहिषं नाम गन्धतृणविशेषः । see **श्यामकम्** । केषुचिद्योगेषु किराततिक्तमेव ग्राह्यं 'पथ्याकुस्तुंबर्या'दिष्विवेति केचित् । भूतीकमिति सुश्रुतपाठः ॥

**कट्फलः** । सू. १५ etc. कटु फलमस्य । **लघुकाश्मर्यः** । जातिपत्रिकावदस्य बीजोपर्यपि कोमला त्वक्वर्तते । सैव रामपत्री । N. O.—*Myricaceae* । हिं.—कायफल; बं—कट्फल; म.—कायफळ, कुम्भ्याचीसाल; गु.—कायफल; तै.—पापरबुडम; क.—किरुसिवनि; त.—चिरुकुमिळ्; सिं.—हीन् देमट; मल.—चिरुकुमिळ् ചെറുകുമിഴ്; पा.—उदुलवर्क; अ.—कण्डुला,

दारशीशवान ; इं.–Box myrtle, Bay-berry ; ल.–*Myrica Sapida* । नामानि—"कट्फलः सोमवल्कश्च कैटर्यः कुंभिकापि च । श्रीपर्णिका कुमुदिका भद्रा भद्रवतीति च" । भा. प्र । गुणाः—"कट्फलस्तुवरस्तिक्तः कटुर्वातकफज्वरान् । हन्ति श्वासप्रमेहार्शः कासकण्ठामयारुचीः" भा. प्र । त्वक्पुष्पं च ग्राह्यम् । मूलकाष्ठं महणीयमिति केचित् । Myristica malabarica इत्येके ॥

**कट्वङ्गः** । सू. १५ etc. कटून्यंगान्यस्य रौक्ष्यात् । स्योनाकः ॥

**कट्वङ्गफलम्** । सू. १५. वत्स-ग ; पर्वतनिंबफलम् । टुंटुकमदनफलार्थेन पदद्वयमिति हेमाद्रिचन्द्रनन्दनौ । अरुणदत्तस्तु, कट्वंगफलमरलुकफलमिति । महानिंबफलमित्येव सुश्रुतपाठः । वत्सकादिगणस्तु पिप्पल्यादिरित्येव सुश्रुतसंहितायां ॥

**कट्वी** । सू १८. etc. कटुका । पैत्तिकहृद्रोगचिकित्सायां "कट्वीमधुककल्कं च" इत्यत्र "यष्ट्याह्विकातिक्तकरोहिणीभ्यां कल्क"मित्येव चरकपाठः ॥

**कठिल्लः** । सू. ६. कटिल्लः ॥

**कणः** । सू. १५ etc. पिप्पली । उपकुल्येति तिक्तकघृतयोगे संग्रहपाठः । हस्तिपिप्पलीति व्याख्यायतीन्दुः । चरकोपि मागधिकेति पठितवान् । पिप्पलीत्येव सुश्रुतपाठः ॥

**कणमूलम्** । चि. २१. पिप्पलीमूलम् । कणमूलमित्यत्र कणाशब्दो लुप्तनिर्दिष्टः । तेनात्र कणा च कणामूलं च ग्राह्यम् । अत एव च मुनिनात्र व्योषशब्दो निर्दिष्ट इतीन्दुः ॥

**कणरेणुका** । चि. ३. पिप्पली रेणुका च । पिप्पलीबीजमित्येकपदमितीन्दुः । दध्ना युक्तां पिप्पलीं रेणुकां पिबेदिति पदद्वयमित्यरुणदत्तः ।

"अरेणुकां मागधिकां च तुल्यां दध्ना पिबेत् कासगदाभिभूतः" इति सुश्रुतः पठति । "रेणुकापिप्पलीक्वाथो हिंगुकल्केन संयुतः । पानादेव हि पञ्चापि हिक्का नाशयति क्षणात्" इति शार्ङ्गधरः ॥

**कणा** । सू. ७ etc. कणाः सन्त्यस्याः । **पिप्पली** । "कणा जीरक-कुंभीरमक्षिकापिप्पलीषु च" इति मेदिनी ॥

**कणे** । चि. १९. **पिप्पलीद्वयमिति** संग्रहपाठः । चरकसुश्रुतयोः उपकुल्या इत्येकपदमेव दृश्यते । अथापि तन्त्रान्तरदर्शनादुपकुल्याद्वयं ग्राह्यमिति डल्हणः ॥

**कण्टकारिका** । चि. १ etc. **कण्टकारी** ॥

**कण्टकारी** । चि. ३ etc. कण्टकानियर्ति । **स्वनामख्यातो कण्टकतिक्तशाकक्षुपविशेषः** । N. O.—*Solanaceae* । **हिं.**—कटेरी, कटेली, कटेहली ; **बं.**—कंटकारी, काँटावेगुन ; **म.**—रिंगणी, भुइरिंगणी ; **गु.**—वेटीभोरिंगणी, पथरिंगणी ; **कों.**—चिञ्चर्टि ; **औत्कली.**—कण्टमारिष ; **उर्दु.**—दोरला ; **पञ्जा.**—मोहोकरी ; **तै.**—नेलमुलक, व्राकुडु, नेलमुल्लाकु, पिन्नमुलक ; **क.**—कण्टकारि, नेलबदने, नेलगुळ्ळ, रामगुळ्ळगिड ; **तु.**—गुळ्ळ ; **त.**—कण्टङ्कात्तिरि, उतरवाणि ; **सिं.**—कटुवेल्बटु ; **मल.**—कण्टकारि കണ്ടകാരി, कण्टकारिच्चुण्टा ; वेळ्ळोट्टुवलुतिना इत्येके ; **अ.**—हदाका ; **पा.**—बदिन्जन-इ-बर्रि ; **इं.**—Wild Eggs Plant, Bitter-sweet woody nightshade ; **ल.**—*Solanum jacquinii*, *S. Xanthocarpum* । **नामानि**—"कण्टकारी तु दुस्पर्शा क्षुद्रा व्याघ्री निदिग्धिका । कण्टालिका कण्टकिनी धावनी दुष्प्रधर्षिणी" । ध. नि । **गुणाः**—"कण्टकारी सरा तिक्ता कटुका दीपनी लघुः । रूक्षोष्णा पाचनी कासश्वासज्वरकफानिलान् । निहन्ति पीनसं श्वासपार्श्वपीडाहृ-

दामयान् । कण्टकारीफलं तिक्तं कटुकं दीपनं लघु । रूक्षोष्णं श्वासकासघ्नं ज्वरानिलकफापहम्" । भा. प्र । अस्या मूलफलादिकं ग्राह्यम् । मूलाभावे सर्वांशो ग्रहणीयः । कफजमूत्राघातचिकित्सायां "स्वरसं कण्टकार्या वा" इत्यत्र "कैटर्यरसेन वापि" इति दृश्यते चरकसंहितायां । अथापि, "निदिग्धिकायाः स्वरसं पिबेत् कुडबसंमितम् । मूत्रदोषहरं कल्यं" इत्येव सुश्रुतपाठः ॥

**कण्डनम्** । सू. २६. तण्डुलमलः । तण्डुलकण्डनमिति संग्रहपाठः । हिं.—चोकर ; बं.—कांडान ; म.—कोंडा, तरडें ; त.—तवुडु ; मल.—तविटु തവിട ; अरित्तविटु ; सिं.—कुड ; इं.–Bran, clean rice dust । "तण्डुलस्य तु यो मलः । शंबूकः कण्डनं चासौ" इति वैजयन्ती ॥

**कण्डरा** । स्थूलस्नायुः । मल.—पेरुञरम्पु ; इं.—Tendons । रज्ज्वाकाराणाञ्च पेशीनां शुभ्रमसृणदृढप्रान्तभागाः कण्डरा इत्युच्यन्ते । ताः स्वरूपतः स्नायुनिर्मिता रजतशुभ्रा बहुभारसहाश्च । तासां पेशीष्वेव स्नायुष्वेव वानुप्रवेशः । स्नायवो वृत्ताः कण्डरा भवन्तीति हि प्राञ्चः इति प्रत्यक्षशारीरात् । "वृत्तास्तु कण्डराः सर्वा विज्ञेयाः कुशलैरिह" इति सुश्रुतः । "कण्डरा तु महास्नायुर्महानाडी च सा स्मृता" इति नरहरिः । "हस्तयोर्द्वे पादयोर्द्वे ग्रीवाभागेथ पृष्ठतः । प्रत्येकं तु चतस्रः स्युः कण्डरा इति षोडशः" ॥

**कण्डूकरी** । सू. १५. कपिकच्छुः ॥

**कतकम्** । चि. ११. कस्य जलस्य तको ह्रासः प्रकाशो यस्मात् । अस्य फलसंपर्कात् जलप्रसादो भवति । वारिप्रसादनफलम् । शशकपुरीषप्रतिमफलमंबुप्रसादनमिति डल्हणः । N. O.—*Loganiaceae* । हिं.—निर्मलीफल ; बं.—निर्मलफल, निर्माली ;

म.—निवळीच्याबिया, चिल्हार; गु.—निर्मली; कों.—चिलबीयि; तै.—चिल्लचेट्टु, कतकमु, इन्दुपु; क.—चलिबीज, चिल्लुबीज, चिल्लिकायि; त.—तेट्टांकोट्टै, अक्कोलम्; सिं.—इंगिणी; मल.—तेत्तांपरल् തേററാംപരല്; इं.—Clearing nut; ल—*Strychnos Potatorum* । नामानि—"कतकं छेदनीयश्च कतं कतफलं मतम् । अंबुप्रसादनफलं श्लक्ष्णं नेत्रविकारजित्" । ध. नि । गुणाः—"कतकस्य फलं नेत्र्यं जलनिर्मलताकरम् । वातश्लेष्महरं शीतं मधुरं तुवरं गुरु" । भा. प्र । "कतकस्य फलं तिक्तं चक्षुष्यं पित्तलं मृदु । वारिप्रसादनं कृच्छ्रशर्करामश्मरीं जयेत्" । ध. नि । "कतकः कटुतिक्तोष्णश्चक्षुष्यः कृमिदोषनुत् । रुचिकृच्छूलदोषघ्नो बीजमंबुप्रसादनः" । रा. नि । फलं ग्राह्यम् ॥

कतकात्फलम् । सू. १५ etc. कतकम् ॥

कत्तृणम् । चि. १. etc. कुत्सितं तृणं । कट् तृणम् । "कत्तृणं तृणमित्युद्भयोः" इति मेदिनी । श्यामकम् ॥

कदंबः । सू. १० etc. कदति । कं वायुं दमयतीति वा । स्वनामख्यातवृक्षः । N. O.—*Rubiaceae* । हिं.—कदम, कदंब; बं.—कदम, म.—कळंब; गु.—कदंब, कलम; तै.—कदंबमु, प्रेखणम, कडिमिचेट्टु; क.—कडब, काडंब, कडहदमर, कडवल; कडउ, कडंबा; त.—कटम्पं, कटम्पु; मैसूर्.—हेलतेगे Heltege, अरसेनतेगा Arsenatega; सिं.—कोळों; मल.—कटम्पु കടമ്പു; अ.—कदंब; इं.—Cadamba, Wild cinchona; ल.—*Anthocephalus cadamba* । नामानि—"कदंबो वृत्तपुष्पश्च नीपस्तु ललनाप्रियः । कादंबर्यः सिन्धुपुष्पो मदाढ्यः कर्णपूरकः" । रा. नि । गुणाः—"कदंबस्तु कषायः स्याद्रसे शीतो गुणेपि च । व्रणसंरोहणश्चापि कासदाहविषापहः" ।

ध. नि । फलपत्रत्वक्पुष्पादीनि ग्राह्याणि । भग्नप्रतिषेधे "कदंबोदुंबराश्वत्थसर्जार्जुनपलाशजैः" इत्यत्र कदंबस्थाने मधूक इति पठति सुश्रुतः ॥

**कदरः** । सू. १०. कं दृणाति कफघ्नत्वात् कदरः । "कदरः खदिरे श्वेते क्रकचऽव्याधिभेदयोः" इति मेदिनी । श्वेतखदिरः । "सिते तु तस्मिन् कदर" इति वैजयन्ती । हिं.—सफेद खैर ; पपरियाकत्था ; बं.—पापरीखयेर ; म.—पांढरा खैर ; गु.—खेर धोला सारवालो ; तै.—तेल्लचंड, तेल्लतुम्मचेट्टु, वेणुतुरुचेट्टु ; क.—बिळिय तर्ति ; त.—वेळ्ळैक्करुङ्कालि ; सिं.—हेलकिहिरिय ; मल.—वेळ्ळक्करिङ्ङालि ; इं.—White mimosa । नामानि—"खदिरः श्वेतसारोऽन्यः कदरः सोमवल्कलः" । भा. प्र । आपीतसारः खदिराकार इत्येके । गुणाः—"श्वेतस्तु खदिरस्तिक्तः कषायः कटुकूष्णकः । कण्डूतिभूतकुष्ठघ्नः कफवातव्रणापहः" । रा. नि । काष्ठसारं ग्राह्यम् ॥

**कदली** । सू. ३ etc. केन वायुना दल्यते कदली । "रंभावृक्षेऽथ कदली पताकामृगभेदयोः" इति मेदिनी । स्वनामख्यातवृक्षः । N O.—*Scitamineae* । हिं.—केला, केरा, सबेज्, केलापेड् ; केलि ; बं.—कला, केला ; म.—केळ ; गु.—केळुं ; कों.—केळि ; दखा.—मओझ, Maoz ; तै.—अरटि, कदळमु, वुरुगचेट्टु, दोंड्तोगे ; क.—बाळे ; तु.—बारे ; त.—वाळै, अरंपै ; सिं.—केहेल् ; मल.—वाळा വാഴ; बर्मा.—नापियाबिन ; जावा.—गोदङ् Godang ; पा.—मावज, मोज ; अ.—तना ; ज.—Gemeiner Pisang ; फ्र.—Bananier, Plantanier ; इं.—Plantain or Banana tree ; ल.—*Musa Sapientum*, *M. Paradisiaca* । नामानि—"कदली सुकुमारा च रंभा स्वादुफला मता । दीर्घपत्रा च निःसारा मोचा हस्तिविषाणिका" । ध. नि ।

गुणाः—"बाले फलं मधुरमल्पतया कषायं पित्तापहं शिशिररुच्यमथापि नालम्। पुष्पं तदप्यनुगुणं क्रिमिहारि कन्दं पर्णं च शूलशमकं कदलीभवं स्यात्"। अपिच—"रंभापक्वफलं कषायमधुरं बल्यं च शीतं तथा पित्तं चास्रविमर्दनं गुरुतरं पथ्यं च मन्दानले। सद्यः शुक्रविवृद्धिदं क्लमहरं तृष्णापहं कान्तिदं दीप्ताग्नौ सुखदं कफामयकरं संतर्पणं दुर्जरं"। रा. नि। **कदलीपुष्पगुणाः**—"कदल्याः कुसुमं स्निग्धं मधुरं तुवरं गुरु। वातपित्तहरं शीतं रक्तपित्तक्षयप्रणुत्"। वै. नि। **कदलीदण्डगुणाः**—योनिदोषहरो दण्डः कादल्योसृक्दरं जयेत्। रक्तपित्तहरः शीतः सुरुच्योग्निप्रवर्द्धनः"। अपिच—"कदलीमोचकं हृद्यं कफघ्नं क्रिमिनाशनम्। तृष्णाप्लीहज्वरं हन्ति दीपनं बस्तिशोधनं" इति राजवल्लभः। **कदलीकन्दगुणाः**—शीतलः कदलीकन्दो बल्यः केश्योस्रपित्तजित्। वह्निकृद्दाहहारी च मधुरो रुचिकारकः"। भा. प्र। **कदलीजलगुणाः**—"रंभातोयं शीतलं ग्राहि तृष्णाकृच्छ्रान् मेहान् कर्णरोगातिसारान्। अस्रस्रावं स्फोटकान् रक्तपित्तं दाहं हन्यादस्रयोनिं च शोषान्"। "माणिक्यमर्त्यामृतचंपकाद्या भेदाः कदल्या बहवोपि सन्ति" इति भावमिश्रः॥

**कदलीगर्भः**। चि. १८. कदलीदण्डः। **रंभायाः अन्तर्भागस्थितमृदुलदीर्घवृत्तावयवविशेषः**। हिं.—केलेका खम्भ, केलेके वृक्षके भीतरका गोभ; बं.—थोड़; म.—कालें; मल.—वाळक्काम्पु, വാഴക്കാമ്പ്, उण्णित्तण्टि; इं.—The heart of the plantain tree। गर्भस्था कदलीति चक्रपाणिदत्तः। "कृत्तः स्विन्नः सलिलविधूतः कृत्ततन्तुप्रभिन्नः कंबोर्भूत्वा जलविरहितः क्षारजंबीरपुष्टः। मध्ये मध्ये तनुशकलितेनार्द्रकेणातिपूर्णः स्वादुस्तूर्णं भवति सुतरां गर्भदण्डः कदल्याः" इति॥

**कनकः**। उ. ३२. धत्तूरः। "धत्तूरः कनको धूर्तो देवता कितवः

शठः । उन्मत्तको मदनकः कालिश्च हरवल्लभः” इति धन्वन्तरीयनिघण्टौ । चम्पक इति शिवदीपिका ॥

**कनकम्** । उ. १. कनति । ‘कनी दीप्तौ’ । **स्वर्ण** । “कनकं हेम्नि पुंसि स्यात् किंशुके नागकेसरे । धत्तूरे काञ्चनारे च कालीये चम्पकेपि च” इति मेदिनी । “दाहे च रक्तमथ यच्च सितं छिदायां काश्मीरकान्ति च विभाति निकाषपट्टे । स्निग्धं च गौरवमुपैति च यत्तुलायां जात्या तदेव कनकं मृदुरक्तपीतम्” । रा. नि । **हिं.**–सोना ; **बं.**—सोना ; **म.**—सोनें ; **गु.**—सोनु ; **तै.**—बंगार ; **क.**—चिन्न, स्वर्ण ; होन्नु ; **त.**—पोन , पोन्नु , तङ्कं ; **सिं.**–रत्रन् ; **मल.**—स्वर्ण സ്വർണ്ണം , पोन्नु , तङ्कं ; **पा.**–झारातिला , तिला ; **अ.**—जहब् ; **इं.**—Gold ; **फ्र.** and **ज.**–Geld ; **बर्मा.**–Shue-Saku ; **ल.**—*Aurum* । **नामानि**—“स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । तपनीयं शातकुंभं काञ्चनं चेति कथ्यते” । ध. नि । शोधितमारितं ग्राह्यम् । **गुणाः**—“स्वर्णं स्निग्धकषायतिक्तमधुरं दोषत्रयध्वंसनं शीतं स्वादु रसायनं च रुचिकृच्चक्षुष्यमायुष्प्रदम् । प्रज्ञावीर्यबलस्मृतिस्वरकरं कान्तिं विधत्ते तनोः संधत्ते दुरितक्षयं श्रियमिदं धत्ते नृणां धारणात्” । रा. नि । “सुवर्णाभावतः स्वर्णमाक्षिकं प्रक्षिपेत् बुधः” इति भावमिश्रः ॥

**कनकम्** । उ. ३९. **नागकेसरम्** । “नागपुष्पं मतं नागं केसरं नागकेसरम् । चाम्पेयं नागकिञ्जल्कं कनकं हेम काञ्चनम्” । ध. नि ॥

**कनकक्षीरी** । सू. ३०. **काञ्चनक्षीरी** । स्नुहीत्येके । धत्तूरः स्नुही चेति पदद्वयमिति शिवदीपिका । मालवदेशे प्रसिद्धा, व्यवहारस्तु कंगुष्ठेनैव इति हाराणचन्द्रः ॥

**कनीयपञ्चमूलम्** । चि. १ etc. **लघुपञ्चमूलम्** ॥

**कनीयपञ्चमूली** । क. ४. लघुपञ्चमूलम् ॥

**कंतकः** । चि. १२. कँबुक इति पाठः । "कञ्चकोशीरकुब्जकाः" इति सुश्रुतः पठते । कञ्चको मध्यलेखानिचितः ऋजुकपत्र ईषद्रक्तमूलः कवह्लक इति मालवके प्रसिद्धः, अन्ये तु कञ्चकस्थाने ककुभ इति पठन्ति, स च प्रसिद्ध इति डल्हणः । "ककुभोशीरकुब्जकाः" इत्येव भाष्यकारपाठः । कँबुकमिति मुंबापुरमुद्रितसंग्रहपाठः । कच्छुरमिति शिवपुर (Trichur) मुद्रितसंग्रहग्रन्थेषु दृश्यते । कच्छुरं तुनिकं रंगद्रव्यमितीन्दुः । विकन्तक इति शिवदीपिकाकारः ॥

**कंदुः** । सू. ६. अपूपपचनपात्रविशेषः । लोहमयन्युब्जपात्रम् । अंगारतप्ता भित्तिरितीन्दुश्चन्द्रनन्दनश्च । हिं.—तन्दूराकृति भट्टी; बं.—तुन्दुर; 'ताओया' इत्येके । मल.—दोशचट्टि ദോശച്ചട്ടി, चूळा इत्येके; इं.–Iron Plate or Pan । "कंदुर्ना स्वेदनी स्त्रिया"मिति वैजयन्ती ॥

**कपिः** । शा. ३ etc. कम्पते चलति । वानरः । हिं.—वन्दर; बं.—वानर; म.—माकड; तै.—मंगि; क.—मंग; त.—कुरंकु; सिं.—वन्दुरु; मल.—कुरङ्ङु; इं.–Monkey; ल.–*Macacus sinicus*; Egy.— Kafu; Heb.—Koph; It.—Monna । नामानि—"मर्कटो वानरः कीशो हरिः शाखामृगः कपिः । प्लवङ्गमो वनौकाश्च प्लवङ्गः प्लवगः प्लवः" । ध. नि । मांसगुणाः—"संतर्पणो वृष्यतमः श्लेष्मलो बलवर्धनः । कषायो बद्धविण्मूत्रआमवातकफापहः । वानरः पवनश्वासमेदःपाण्डुकृमीञ्जयेत्" । ध. नि ॥

**कपिकच्छुः** । नि. ११ etc. कपीन् कषति, कपीनामपि कच्छूः यस्याः इति वा । आत्मगुप्ता । N. O.—*Leguminosae* । हिं.–

कौंछ, गोंच, कवाँच, किवांच, कोंच ; बं.—आल्कुशी, धुनार-गुंड, दया ; शूयाशंबु इति पूर्वबङ्गे ; म.—कुहिली, कुइली, खाजकुहिरी ; गु.—कउचों, कौंचा ; कवचा ; तै.—पिल्लियडुगु, चुलगुण्डि ; क.—नसुगुन्नि, नसुकुन्नरी, तुरचि, काडवरे, नायिसोणगुबाळ्ळि ; कों.—खवल्यावालि ; द्रवा.—काञ्च कूर्ये ; त.—पूनैक्कालि ; सिं.—वन्दुरुमे ; पा.—हुब् उल् कुल्य् ; मल.—नाय्क्कुरणा നായ്ക്കുരണ; इं.–Cowhage, Cowitch, Cowach; ल.–*Mucuna Pruriens* । नामानि—"आत्मगुप्ताऽजडाऽव्यण्डा कण्डुरा प्रावृषायणी । ऋष्यप्रोक्ता शूकशिंबी कपिकच्छू च मर्कटी" । स. नि । गुणाः—"कपिकच्छूर्भृशं वृष्या मधुरा बृंहणी गुरुः । तिक्ता वातहरी बल्या कफपित्तास्रनाशिनी । तद्बीजं वातशमनं स्मृतं वाजीकरं परम्" । भा. प्र । बीजं ग्राह्यं, अप्राप्तौ मूलं ग्रहणीयम् । सन्यासचिकित्सायां "कपिकच्छ्वववर्षणं" इत्यत्र "गुप्तफलावघर्षे" इत्येव सुश्रुतः पठति । महाकल्याणघृतयोगे कपिकच्छूरित्यत्र कच्छूफलमिति नावनीतकपाठः ॥

**कपिंजलः** । सू. ६ etc. कमिव पिञ्जयते । **गौरतित्तिरिः** । **हिं.**—सफेदतीतर, गोरैया ; म.—गौरतित्तिरपक्षी ; **सिं.**—सुदुवटुवा ; गिनिवेन्रन् इति केचित् ; **मल.**—वेळ्ळत्तित्तिरि വെള്ളത്തിത്തിരി, कपितारिप्पुळ्ळु ; आळ्क्काट्टि इत्येके ; इं–Yellow-wattled Lapwing ; **ल.**—*Sarciophorus* ; *Francoline Partridge* इत्यपरे। "कपिंजल इति प्राज्ञैः कथितो गौरतित्तिरि" रिति भावमिश्रः । लघुमांस इति त्रिकाण्डशेषे । see **तित्तिरिः** । **मांसगुणाः**—"कपिञ्जलो लघुः शीतः कफासृक्पित्तहाग्निदः" । रा. व ॥

**कपित्थः** । **सू.** ६ etc. **स्वनामख्यातवृक्षः** । कपिस्तिष्ठत्यत्र तत्फलप्रियत्वात् । N. O.—*Rutaceae* । **हिं.**—कैथ, कोइथ ;

कवथ ; बं.—कयेथबेल , कथ्बेल , कएतबेल ; कवेत् बेल ; म.—कावँठ , कवठीचेंझाड ; गु.—कोंठ , कविथ ; तै.—वेलग , कपित्थमु ; एलांगाकाय ; क.—बेलदमर , वेललु ; द्खा.—कथबेल , खएथ ; कों.—बेलपत्रि-फल ; त.—विळामरं , विळाकपित्तं , वेळ्ळिल् ; सिं.—गिवुलु , जूल् , दिव्व.ल् इत्येके ; मल.—विळार्-मरं വിളാർമരം , विळावु ; बर्मा.—महन् ; अ.—कविथा ; पा.—कबिथा ; फ्रं.— Feronia geant ; ज.— Elephantenapfel; इं.—Elephant or Wood-apple ; ल.—*Feronia Elephantum* । नामानि—"कपित्थस्तु दधित्थःस्यात्तथा पुष्पफलः स्मृतः । कपिप्रियो दधिफलस्तथा दन्तशठोपि च" । भा. प्र । आमपक्वफलानि ग्राह्याणि। गुणाः—"कपित्थमामं संग्राहि कषायं लघु लेखनम् । पक्वं गुरु तृषाहिक्काशमनं वातपित्तजित् । स्वाद्वम्लं तुवरं कण्ठशोधनं ग्राहि दुर्जरं" । भा. प्र । अन्यच्च—"आमं कण्ठरुजं कपित्थमधिकं जिह्वाजडत्वापहं तद्दोषत्रयवर्धनं विषहरं संग्राहकं रोचकम् । पक्वं श्वासवमिश्रमक्लमहरं हिध्मापनोदक्षमं सर्वं ग्राहि रुचिप्रदं च कथितं सेव्यं ततः सर्वदा" । रा. नि ॥

**कपित्थकः** । उ. ३. कपित्थः ॥

**कपित्थमध्यम्** । उ. ३८. कपित्थफलान्तर्मज्जा । बालकपित्थफलमिति केचित् ॥

**कपित्थवृक्षः** । उ. ५. कपित्थः ॥

**कपिला** । उ. ७. कपिलवर्णा , स्वर्णवर्णा गौ । तासामचिन्त्यप्रभावत्वात् , न श्वेतरक्तकृष्णाः । "गोविशेषे मृगादन्यां शिंशपारेणुकाह्वयोः । रीत्यन्तरे च विबुधैः कपिला पञ्चसु स्मृता" । रा. नि ॥

**कपीतनः** । सू. १५. कपीनां ई लक्ष्मीं तनोति । अश्वत्थभेदो वृक्षविशेषः । पुष्पाश्वत्थः । "शिरीषाम्रातकाश्वत्थगर्दभाण्डे कपीतनः"

इति त्रिकाण्डशेषे । N. O.—*Malvaceae* । हिं.—पारसपीपल, पारिशपीपल, गजदन्तसहोरा, गजहुंड; बं.—गजशुण्डी, पलाशपिपुल; म.—पारसापिंपळ, थोरपिंपरी; गु.—पारशपीपलो; कों.—भेंडी, वद्लिखरैकपुस; तै.—गंगराविचेट्टु; द्रवा.—पोरिष; क.—कंद्रोळ, जोगियरळे, हूवरसि, बंगाळि, अडविबेण्डेमर; तु.—जोगिमर; त.—पूवरचु, पूप्परुत्ति; सिं.—गमसूरिय; मल.—पूप्परुत्ति പൂപ്പരുത്തി, पूवरशु, चीलान्ति; कल्लाल् इत्येके; पा.—येलावेलय; फ्र.—Thespesia afeuilles de Peuplier; ई.—Heartwood, Portia tree, Tulep tree; ल.—*Thespesia Populnea*, *Hibiscus Populnea* । नामानि—"पारिशोऽन्यः फलीशः स्यात् कपिचूडः कपीतनः" । भ. पा । गुणाः—"पारीषो दुर्जरः स्निग्धः कृमिशुक्रकफप्रदः । फलेऽम्लो मधुरो मूले कषायस्वादुमज्जकः । भा. प्र । त्वक्फलादिकं ग्राह्यम् ॥

**कपोतः** । सू. ६ etc. को वातः पोत इव यस्य । **अरण्यकपोतः** । कपोतः वनवासी पाण्डुक इति लोके, स च नानाविध इति डल्हणः । हिं.—कबूतर; म.—कबुतर; क.—पारिवाळ; त.—पुरा; सिं.—नीलकोबेयि; मल.—प्रावु പ്രാവു; ई.—Dove; ल.—*Turtur Cambayensis* । नामानि—"पाण्डुस्तु द्विविधो ज्ञेयश्चित्रपक्षः कलध्वनिः । द्वितीयो धवलः प्रोक्तः स कपोतः स्फुटस्वनः" । भा. प्र । see **पारावतः** । "कपोतो घुघुकृत् पाण्डुधूसरो धूम्रलोचनः" इति चाभिधानः । कपोतः पारावतेपीति वैजयन्ती । गुणाः—"स्वादुः कषायश्च लघुः कपोतः कफपित्तहा" । रा. नि । "कपोतो बृंहणो बल्यो वातपित्तविनाशनः । तर्पणः शुक्रजननो हितो नृणां गुणप्रदः" इत्यत्रिसंहितायां ॥

**कपोतवंका** । चि. ११ etc. ब्राह्मी । ब्रह्मसुवर्चलेतीन्दुः । कटभी-

सदृशपत्रो विटपी मध्यदेशे प्रसिद्ध इति डल्हणः । सुवर्चलेतीन्दुरु-त्तरतृतीयाध्यायव्याख्यायां । श्रावणीति केरलेष्वेके । पूतना-प्रतिषेधाध्यायव्याख्यायां कवडवङ्कीति लोके प्रसिद्धा ब्रह्मसुवर्चला-परपर्यायेति डल्हण एव गदितवान् ॥

**कमलम्** । सू. ३ etc. कं जलमलति भूषयति । पङ्कजम् । दिनविका-शीति हेमाद्रिः । त्रिवर्णमित्येके । तच्च श्वेतरक्तनीलभेदेन त्रिवि-धम् । N. O.—*Nymphaceae* । हिं.—कमल, कनेल ; बं.—पद्म ; म.—कमळ ; गु.—कमल; तै.—पद्मम‍ु, तामर, कों.—कमल, साळक ; क.—कमल, तावरे ; त.—तामरै ; तु.—तामरे, अल्लिगे ; सिं.—नेलुं, तामर ; मल.—तामरा താമര; पा.—नीलुफर ; अ.—करंबुलमा ; फ्र.–Nelumbo ; ज.–Pactige nelumbo ; इं.–Egyptian or Sacred Lotus ; ल.–*Nelumbium speciosum* । नामानि–"सहस्रपत्रं कमलमर-विन्दं महोत्पलम् । नलिनं पुष्करं पद्मं सारसं सरसीरुहम् । पङ्केरु-हं तामरसं राजीवं च कुशेशयम्" । स. नि । पुष्पं ग्राह्यम् । गुणाः—"कमलं शीतलं वर्ण्यं मधुरं कफपित्तजित् । तृष्णादाहा-स्रविस्फोटविषवीसर्पनाशनम् । विशेषतः सितं पद्मं पुण्डरीकमिति स्मृतम् । रक्तं कोकनदं ज्ञेयं नीलमिन्दीवरं स्मृतम् । धवलं कमलं शीतं मधुरं कफपित्तजित् । तस्मादल्पगुणं किञ्चिदन्यद्रक्तोत्पला-दिकं" । भा. प्र ॥

**कमलरजस्** । सू. १५. कमलोद्भवं रजः । पद्मकेसरमिति सुश्रुत-पाठः ॥

**कंपिल्लः** । सू. ७. कंपिलदेशे भवः कंपिल्लः । रक्तचूर्णविशेषः । Kamala powder is used as an orange-brown dye, especially for silk । "इष्टिकाचूर्णसङ्काशश्चन्द्रिकावान् प्रभेद-नः । सौराष्ट्रदेशे खनिजः स हि कम्पिल्लको मतः" । इति ग्रन्थान्तरे ।

N. O.—*Euphorbiaceae* । हिं.—कबीला, कमीला ; कमला ; बं—कमिलागुडि, कमलागुंडि ; काश्मी.—कमिला ; कों.—कोमटि ; म.—कपिला, शेन्द्री ; गु.—कपिलो ; तै.—कपिला-पोदि, कुंकुमा ; क.—बसरे, चन्द्रहित्तु ; मल.—काम्पिल्लाला കമ്പിപ്പാലാ इति केचित् ; अ.—किनाबिला, किन्बीर ; पा.—कन्बिलाय, कनबेला ; इं.—Kamela, Kamala dye, monkey face tree ; Rottlera ; ल.—*Rottlera Tinctoria*, *Mallotus Philippinensis* । नामानि—"कम्पिल्लकोथ रक्तांगो रेची रेचनकस्तथा । रञ्जनो लोहितांगश्च कर्कशो रक्तचूर्णकः" । ध. नि । गुणाः—"कांपिल्लः कफपित्तास्रकृमिगुल्मोदरव्रणान् । हन्ति रेची कटूष्णश्च मेहानाहविषाश्मनुत्" । भा. प्र । "तच्छाकं शीतलं तिक्तं वातलं ग्राहि दीपनं" इति निघण्टुरत्नाकरे ॥

**कंपिल्लकः** । सू. १५. कंपिल्लः ॥

**कंबलः** । चि. १. काम्यते कंबलः । मेषादिरोमजाततवस्त्रविशेषः । see **रल्लकः** ॥

**कंबलम्** । चि. ५. see **सप्तकंबलं** ॥

**करघाटः** । उ. ३७. मदनः ॥

**करंजः** । सू. २ etc. कं शिरः जलं वा रञ्जयति । स्वनामख्यातवृक्षः । N. O.—*Leguminosae* । हिं.—करंज, कञ्जा, कोरंग, किड्मल ; पञ्जा.—सुकचैन ; बं.—करंचा ; म.—करंज ; गु.—करंज ; तै.—कानुगु, कानुगु, कोन्विचेट्टु ; क.—होंगे, हुलिगिलिमर ; त.—पुंकुमरं ; सिं.—करन्द ; तु.—कोरङ्कु, कोरंगि ; पुंग ; कों.—करिंजेरुक् ; मल.—उङ्कु ഉങ്ങ്, पुङ्कु ; इं.—Indian Beech ; ल.—*Pongamia glabra* । नामानि—"करंजो नक्तमालश्च पूतिकश्चिरबिल्वकः । पूतिपर्णो वृद्धफलो रोच-

नश्च प्रकीर्यकः" । रा. नि । गुणाः—"करंजः कटुकस्तीक्ष्णो वीर्योष्णो योनिदोषहृत् । कुष्ठोदावर्तगुल्मार्शोव्रणक्रिमिकफापहः । तत्पत्रं कफवातार्शःक्रिमिशोथहरं परं । भेदनं कटुकं पाके वीर्योष्णं पित्तलं लघु । तत्फलं कफवातघ्नं मेहार्शःक्रिमिकुष्ठजित्" । भा. प्र । "करंजः कटुरुष्णश्च चक्षुष्यो वातनाशनः । तस्य स्नेहोऽतिस्निग्धश्च वातघ्नः स्थिरदीप्तिदः" । रा. नि । मूलत्वगादिकं ग्राह्यम् । श्यामादिगणे करंजद्वयमिति सुश्रुतपाठः ॥

**करंजकः** । चि. १२. करंजः ॥

**करंजयुग्मम्** । सू. १५. करंजः पूतिकरंजश्च । एकश्चिरबिल्वः द्वितीयः कण्टकी विटपकरंज इति डल्हणः ॥

**करंजिकम्** । कारंजिकम् ॥

**करभः** । उ. ११. किरति, कीर्यते वा । उष्ट्रः । "करभो मणिबन्धादिकनिष्ठान्तोष्ट्रतत्सुते" इति मेदिनी ॥

**करभी** । चि. १५. उष्ट्री । हिं.—ऊँटनी ; मल.—ओट्टकप्पेटा കട്ടകപ്പേട്; इं.—Female camel ॥

**करमर्दः** । सू. ६ etc. करं मृद्नाति, करेण मृद्यते इति वा । स्वनामप्रसिद्धः । N. O.—*Apocynaceae* । हिं.—करौंदा, करौंदी ; बं.—करम्चा, अम्लकरंजा ; (काटाकरंजा इति हाराणचन्द्रः) म.—करवंद ; गु.—करमदां, करमदी ; तै.—ओकचेट्टु, कलिवि, वाकालिन ; क.—करवदी, करिजिगे, हरीकाळिवि ; कोरिण्ट, कवळिक्कायिगिड ; तु.—कर्ण्टेपुळि ; कों.—काराञ्च ; त.—पेरुंकळाचेटि ; सिं.—करंब, जेंसन् ; मल.—पनिचैं പനിച്ചം, कळावु, नरिञ्चन्पुळि, करण्टा ; इं.—Jasmine-flowered carissa, Bengal Currants ; ल.—*Carissa Carandas* । नामानि—"करमर्दः सुषेणश्च कराम्लः करमर्दकः ।

आविग्नः पाणिमर्दश्च कृष्णपाकफलो मुनिः" । रा. नि । आमपक्वफलानि ग्राह्याणि । करमर्दः कण्टकिफल इति चन्द्रिका, तद्द्विविधं महद्दल्पं च, तत्र महत्प्रायशो ग्रामभवमम्लं च अल्पा तु करमर्दी वनजा मधुराम्लफलेत्याहुरिति शिवदासः । गुणाः—"करमर्दद्वयं त्वाममम्लं गुरु तृषाहरम् । उष्णं रुचिकरं प्रोक्तं रक्तपित्तकफप्रदम् । तत्पक्वं मधुरं रुच्यं लघु पित्तसमीरजित्" । भा. प्र ॥

**करमर्दकः** । सू. ६ etc. **करमर्दः** ॥

**करंभा** । सू. १५. **उत्तमारणी** । इन्दीवरीति सुश्रुतपाठः । इन्दीवरत्वेन नीलोत्पलमिति हाराणचन्द्रः । कर्कश इत्येव संग्रहे । N. O.—*Asclepiadaceae* । **हिं.**—उतरण, सागोवनी ; **पञ्जा.**—तरोत्तु ; **सिन्धी.**—खरयाल ; दुधवेल ; **कों.**—उत्तरणी ; **बं.**—छागलबती ; **म.**—उतरणी ; **गु.**—चमारदुधेली, नागलादूधी ; **तै.**—गुरुट्टिचेट्टु, जुट्टुपु, दुष्टुपु ; **क.**—उगुरु सुत्तुबळ्ळि, हालकोराट्टिगे ; हालकोराट्टिगनबळ्ळि ; तलआरन बळ्ळि ; जुत्तुवे ; **त.**—अच्चाणिमूलि, उत्तामणि, वेलिप्परुत्ति ; उत्तमताळि, कुडगरं ; **मल.**—वेलिप्परुत्ति ; **इं.**—Hairy flowered cynanchum ; **ल.**—*Daemia extensa* । **नामानि**—"इन्दीवरी युग्मफला दीर्घवृत्तोत्तमारणी । पुष्पमञ्जरिका द्रोणी करंभा नलिका च सा" । रा. नि । **गुणाः**—इन्दीवरी कटुः शीता पित्तश्लेष्मापहारिका । चक्षुष्या कासदोषघ्नी व्रणकृमिहरा परा" । रा. नि । अस्याः पत्रादिकं ग्राह्यम् ॥

**करवीरः** । चि. १९. करं वीरयति । 'वीर विक्रान्तौ' । उपविषजातीयस्वनामप्रसिद्धवृक्षविशेषः । "करवीरः कृपाणे स्याद्दैत्यभेदाश्वमारयोः" इति मेदिनी । N. O.—*Apocynaceae* । **हिं.**—कनेर, कनैली ; **बं.**—करवी ; **म.**—कण्हेर, कणेर ; **गु.**—कणेर ; **कों.**—चवे कनेरी ; **तै.**—कस्तूरिपट्टे, गन्नेरु, करवीरमु ;

क.—कणगिलु, कणिगिन, कणिगलु, पडुळेगिड; वाफणलिंगे: त.—मलै अलरि; अचुवपरि, अयमरं; सिं.—अलरिय, कणेरु; मल.—काट्टलरि കാട്ടലരി, अरळि, कणवीरं; अ.—सुमुल हिमार, खरजेहरा; पा.—देफलि; इं.—Oleander, Sweet-scented oleander, Roseberry Spurge; ज.—Wohiriechender; ल.—*Nerium odorum* । नामानि—"करवीरोश्वहाऽश्वघ्नो हयमारोश्वमारकः । श्वेतकुन्दः श्वेतपुष्पः प्रतिहासोऽश्वमोहकः । द्वितीयो रक्तपुष्पश्च चण्डको लगुडस्तथा । चण्डातको गुल्मकश्च प्रचण्डः करवीरकः" । ध. नि । स तु श्वेतरक्तपीतकृष्णकुसुमभेदाच्चतुर्विधः । "चतुर्विधोयं गुणे तुल्य" इति नरहरिः । गुणाः—"करवीरः कटुस्तिक्तो वीर्येणोष्णो ज्वरापहः । चक्षुष्यः कुष्ठकण्डूघ्नः प्रलेपाद्विषमन्यथा" । ध. नि ॥

करवीरकः । चि. १५. करवीरः ॥

करहाटः । उ. २२. करं हन्ति दुःस्पर्शत्वात् कं रहयति वा करहाटकः । मदनः । "पिण्डीतके पद्मकन्दे करहाटपदं विदुः" इति शाश्वतः ॥

करीरः । सू. ६. etc. किरति । 'कॄ विक्षेपे' । करिणमीरयति वा । मरुजो उष्ट्रप्रियो गूढपत्रवृक्षः । N. O.—*Capparideae* । हिं.—करील, उदकाटार; कचड़ा इति लोके इत्येके; बं.—करील, कचरा; म.—नेबती; गु.—केरडी; तै.—एनुगदन्त, सुसुदतु, कवरकुराक; क.—निष्पतिगे; त.—करिमुळ्ळि; पा.—कुराका, कोबिर; अ.—किअबरा; इं.—Caper Plant, Caper Berry; ल.—*Capparis Aphylla* । नामानि—"निष्पत्रकः करीरश्च करीरग्रन्थिलस्तथा । क्रकरो गूढपत्रश्च करकस्तीक्ष्णकण्टकः" । रा. नि । अस्य त्वग्ग्राह्या । मध्यमफलं च ग्रहणीयं ।

गुणाः—"करीरः कटुकस्तिक्तः स्वेद्युष्णो भेदनः स्मृतः । दुर्नामकफवातामगरशोथव्रणप्रणुत्" । भा. प्र । "करीरमाध्मानकरं कषायं कटूष्णमेतत्कफकारि भूरि । श्वासानिलारोचकसर्वशूलविच्छर्दिखर्जूव्रणदोषहारि" । रा. नि । It is described as a thorny plant, growing in deserts and fed upon by camels । "वंशांकुरे करीरोऽस्त्री वृक्षभिद्घटयोः पुमान्" इति मेदिनी ॥

**कर्कः** । सू. ६ etc. कुलीरकः । see **कर्कटः** ॥

**कर्कटः** । उ. २४. कृणोति । **कुलीरकः** । हिं.—केकडा ; बं.—कांक्डा ; म.—खेंकडा ; त.—नण्डु ; सिं.—ककलुवा ; मल.—ञण्टु ഞണ്ടു ; इं.—Crab ; ल.—*Brachyura*, *cancer* । **नामानि**—"कर्कटः स्यात् कर्कटकः कुलीरश्च कुलीरकः । संदंशकः पङ्कवासस्तिर्यग्गामी स चोर्ध्वदृक्" । रा. नि । **मांसगुणाः**—"कृष्णकर्कटकस्तेषां बल्यः कोष्णोऽनिलापहः । शुक्लः सन्धानकृत् सृष्टविण्मूत्रोऽनिलपित्तहा" इति सुश्रुतः । "कर्कटो बृंहणो वृष्यः शीतलोऽसृग्दरापहः" इत्येके ॥

**कर्कटकः** । सू. ८. कर्कटः ॥

**कर्कटकी** । चि. ३. कर्कटशृङ्गी ॥

**कर्कटशृङ्गी** । चि. ३ etc. कर्कट इव शृङ्गं यस्याः । **स्वनामख्यातकर्कटदंशाकारौषधिः** । N. O.-*Anacardiaceae* । हिं.—काकडासिंगी ; बं.—काँकडाशृङ्गी, काँकड़ाशिङा ; म.—काकडाशिंगी ; गु.—काकडासींगी ; तै.—कर्कटाशृङ्गी ; क.—कर्कटीशृङ्गी ; त.—कर्काटचिरुङ्कि, कर्कटकाचिङ्कि ; सिं.—कुकुलुसुंगु ; मल.—कर्कटशृङ्गि കർക്കടശൃംഗി ; काश्मी.—काकडाशृङ्गि ; इं.—Galls ; ल.—*Rhus Succedanea* । The

galls are horn-like excrescences caused by insects on the branches of Rhus Succedanea. They are hard, hollow, thin-walled, generally cylindrical, tapering to either extremity । हिमालयप्रान्तेष्वाकाश्मीरात्सिमलापर्यन्तप्रदेशेषु भूयसा जायन्ते । नामानि—"शृङ्गी कर्कटशृङ्गी च कुलीरा कर्कटाह्वया । कुलीरशृङ्गी चक्रा च महाघोषा नवांगिनी । चन्द्रास्पदा विषाणी च शृङ्गी वनजमूर्धजा" । ध. नि । गुणाः—"शृङ्गी कषाया तिक्तोष्णा कफवातक्षयज्वरान् । श्वासोर्ध्ववाततृट्कासहिक्कारुचिवमीन् हरेत्" । भा. प्र ॥

**कर्कटाख्या** । चि. ३ etc. **कर्कटशृङ्गी** ॥

**कर्कटाह्वयः** । उ. २४. **कर्कटशृङ्गी** । महामायूरघृतयोगे कर्कटाह्वय इत्यत्र "सुरदारु"रित्येव चरकपाठः ॥

**कर्कन्धुकम्** । सू. १९. हृस्वबदरफलम् । see **कर्कन्धूः** ॥

**कर्कन्धूः** । सू. ६ etc. कर्कं कण्टकं दधाति । **क्षुद्रबदरवृक्षः** । "कर्कन्धूः क्षुद्रवदरं कथितं पूर्वसूरिभि"रिति । N. O.—*Rhamneae* । हिं.—छोटेबेर ; बं.—सेया कुल ; म.-लघुबोर ; क.—किरुयेरनु ; मल.-चिरुलन्ता ചെറുലന്താ, तुरटि , तुटरि , तुटलि ; ल.—*Zizyphus Sororia* । **गुणाः**—"अम्लं स्यात् क्षुद्रबदरं कषायं मधुरं मनाक् । स्निग्धं गुरु च तिक्तं च वातपित्तापहं स्मृतम्" इति । मूलपक्वफलादिकं ग्राह्यम् । see **बदरी** ॥

**कर्कशम्** । सू. ६. **स्वल्पकर्कोटकफलम्** । A smaller variety of momordica dioica । कर्कशस्य कंपिल्लार्थं नाविदित्वैवात्र चक्रपाणिदत्तव्याख्यामनुसृतवान् । राजिमत्पटोलार्थेन केचित् ॥

**कर्कारुः** । सू. ६. कर्कश्वासावियर्ति–अरुर्बस्तिशोधनः सरणत्वात्

ककरुः । कर्कं ह्रासं श्वेततामृच्छति । ह्रस्वकूष्माण्डः । हिं.—बहुत छोटे पेठा, कुम्हडी; म.—लघुकोहोळा; तै.—गुम्मडितोगे; मल.—चिरुकुम्पळं ചെറുകുമ്പളം, नेय्कुम्पळं; इं.—Very small pumpkin । कूष्माण्डभेद इति चक्रपाणिदत्तः । वाडवं त्रपुषं 'खरवारू' इति लोके इति डल्हणः । काशीफल इति शिवदीपिकाकारः । "ककरुरथ कूष्माण्डः" इति हलायुधः । "कूष्माण्डी तु भृशं लघ्वी ककरुरपि कीर्तिता" इति भावमिश्रः । मध्यमफलं ग्राह्यम् । **गुणाः**—ककरुर्ग्राहिणी शीता रक्तपित्तहरा गुरुः । पक्वा तिक्ताऽग्निजननी सक्षारा कफवातनुत्" । भा. प्र ॥

**कर्केतनः** । उ. ३६. रत्नविशेषः । पद्मरागमणिः । पद्मरागविशेष इति जेज्जटः । माणिक्यमिति पाठ्यकारः । कर्कोटकमणिरित्येव मुद्रितचरकपाठः । पद्मराग इति चक्रपाणिदत्तः । "स्निग्धा विशुद्धाः समरागिणश्च आपीतवर्णा गुरवो विचित्राः । त्रासव्रणव्याधिविवर्जिताश्च कर्केतनास्ते परमाः पवित्राः" । इति गारुडे ॥

**कर्कोटः** । सू. ६ etc. फलशाकलताविशेषः । N. O.—*Cucurbitaceae* । हिं.—ककोडा, खेखसा; धारकरेल इत्येके; बं.—कांकरोल; म.—कर्टोली; गु.—कंटोला; कों.—फागिल; पञ्जा.—किरारा; मुंबापुर्यां.—कार्टोलि; तै.—आगाकर, काकोटकी; क.—माडहागल, कार्चिबाळिळ; त.—एकारवाळि, मलै पावक्का, पिळ्ळैप्पाकिल्, चिरुपाकै; तु.—काडकञ्चल; सिं.—तुंबकरविल; मल.—उण्टप्पावल् ഉണ്ടപ്പാവല്, पावा, कुरुट्टुपावल्, वेण्पावल्, काट्टुकैप्पा; ल.—*Momordica dioica* । **नामानि**—"कर्कोटकी स्वादुफला मनोज्ञा च कुमारिका । अवन्ध्या चैव देवी च विषप्रशमनी तथा" । ध. नि । मध्यमफलं ग्राह्यम् । एतत्फलञ्च स्थावरविषान्तर्गतफलविषे वर्तते सुश्रुतकल्पद्वितीयाध्याये । **गुणाः**—"कर्कोटी मलहृत्कुष्ठहृल्लासारुचिनाशनी ।

श्वासकासज्वरान् हन्ति कटुपाका च दीपनी" । भा. प्र । "कर्कोटकी कटूष्णा च तिक्ता विषविनाशनी । वातघ्नी पित्तहृच्चैव दीपनी रुचिकारिणी" । रा. नि । "कर्कोटकफलं ज्ञेयं कारवेल्लकवद्गुणै"रिति राजवल्लभः ॥

**कर्कोटी** । उ. ३०. वन्यकर्कोटः । वन्ध्याकर्कोटकीति संग्रहपाठः । निष्फला वनजा कारवल्लीतीन्दुः । हिं.–वांझ ककोडा ; बं.–तित् कांकरोल ; म.—वांझकर्टोली ; गु.—वांझकंटोला ; कडवीधीसोडी इत्येके ; तै.—आगारकर ; क.—बंजेमाडहागल ; मल.—काट्टुपावल् കാട്ടുപാവൽ । सर्वांशो ग्राह्यः । कर्कोट इत्येके । **नामानि**—"वन्ध्यकर्कोटकी देवी मनोज्ञा च कुमारिका । नागारिःसर्पदमनी विषकण्टकिनी तथा । विज्ञेया नागदमनी सर्वभूतप्रमर्दिनी । वध्यापुत्रप्रदा चैव ज्ञेया योगीश्वरी तथा" । ध. नि । **गुणाः**—"वन्ध्यकर्कोटकी तिक्ता कटूष्णा च कफापहा । स्थावरादिविषघ्नी च शस्यते सा रसायने" । रा. नि ॥

**कर्णिकारः** । शा. ३. कर्णिकामियर्ति कर्णिकारः । आरग्वधः । "कर्णिकारः पुमानारग्वधद्रौ च द्रुमोत्पले" इति मेदिनी । ह्स्वारग्वध इति केचित् । स तु रक्तकुसुमविशिष्टो पलाशसदृशपत्रो वृक्षभेदः । प्रायेण पर्वतेष्वेव दृश्यते । N. O.—*Helictereae* । हिं.—कनेर, छोटा अमलतास ; कठचम्पा इत्येके । बं.—छोटा सोंदाल; म.—लघुबाहवा, वृक्षकमल; पांगारा इत्येके ; तै.—गोगुचेट्टु ; किरुगके ; गु.—नहानो गरमाळो ; दखा.—कनि-एर ; क.—किरुगके ; त.—चिरुकोन्रै ; सिं.—किणिहिरिय , सिहिन एसळ ; मल.—चिरुकोन्ना ചെറുകൊന്ന ; ज.—Ahornblattriger ; ल.–*Peterospermum Aserifolium* । **नामानि**–"वृक्षोत्पलः कर्णिकारः परिव्याधो द्रुमोत्पलः । कोकः कनकपुष्पश्च सुगन्धः परिकीर्तितः" । स. नि । त्वगादिकं ग्राह्यम् । **गुणाः**—"कर्णिका-

रो रसे तिक्तः कटूष्णः कफशूलहृत् । उदरक्रिमिमेहघ्नो व्रणगुल्मनिवारणः" रा. नि ॥

**कर्परः** । सू. ६. खर्पर इति पाठः । अपूपपचनपात्रविशेषः । ज्वालासन्तप्तकपाल इतीन्दुः । श्वभ्राकारं तदेव न्युब्जं खर्परमिति हेमाद्रिः । लोहकपाल इति शिवदीपिकाकारः । पत्तिरिचट्टि इति केरलेषु । "कटाहः कर्परो लट्वः" इति वैजयन्ती ॥

**कर्पूरः** । सू. ३ etc. शुभ्रतरनिर्यासरूपं स्वनामख्यातगन्धद्रव्यम् । N. O.—*Lauraceae* । हिं.—कपूर, कापुर; उर्दु.—कफुर, पछ कफुर; बं.—कर्पूर; म.—कापूर; गु.—कपूर; तै.—कर्पूरमु; क.—कर्पूर; त.—कर्पूरं; सिं.—कपुरु; बर्मा.—पयो, पारोङ्क; मुंबापुर्यां.—भीमसेनिकपूर; मल.—कर्प्पूरं, கர்ப்பூரம், पच्चकर्प्पूरं; फ्र.—Camphre; ज.—Kampher; पा.—कफुर; इं.—Camphor; ल.—*Camphora officinarum* । "कर्पूरो द्विविधः प्रोक्तः पक्वापक्वविभेदतः । पक्वात्कर्पूरतः प्राहुरपक्वं गुणवत्तरम् । तत्रापि स्यात् यदक्षुण्णं स्फटिकाभं तदुत्तमम् । पक्वञ्च सदलं स्निग्धं हरितद्युति चोत्तरम् । भंगे मनागपि चलेन्निपतन्ति ततः कणाः । हस्ते निघृष्य कर्पूरं रेखां हस्तस्य लक्षयेत् । यदि सा दृश्यते विद्धे कर्पूरमतिभद्रकं" इति । नामानि—"कर्पूरः शीतलरजः शीताभ्रः स्फटिको हिमः । चन्द्रस्तुषारस्तुहिनः शशीन्दुर्हिमबालुकः" । ध. नि । चिरस्थं ग्राह्यम् । गुणाः—"कर्पूरः शीतलो वृष्यश्चक्षुष्यो लेखनो लघुः । सुरभिर्मधुरास्तिक्तः कफपित्तविषापहः । दाहतृष्णास्यवैरस्यमेदोदौर्गन्ध्यनाशनः" । भा. प्र । कर्पूरभेदाः—"पोतासो भीमसेनस्तदनु शितकरः शंकरावाससंज्ञः प्रांशुः पिञ्जोऽब्दसारस्तदनु हिमयुता वालुका जूटिका च । पश्चादस्यास्तुषारस्तदुपरि सहिमः शीतलः पक्विकान्या कर्पूरस्येति भेदा गुणरसमहसां वैद्यदृश्येन

दृश्याः" । कर्पूरलक्षणानि–"स्वच्छं भृंगारपत्रं लघुतरविशदं तोलने तिक्तकं चेत् स्वादे शैत्यं सुहृद्यं बहलपरिमलामोदसौरभ्यदायि । निःस्नेहं दार्ढ्यपत्रं शुभतरमिति चेद्राजयोग्यं प्रशस्तं कर्पूरं चान्यथा चेद् बहुतरमशने स्फोटदायि व्रणाय" । रा. नि । "सुगन्धिमुस्तकं देयं कर्पूराभावतो बुधै"रिति भावमिश्रः ॥

**कर्पूरमल्लिकामाला** । सू. ३. कर्पूरेणाधिवासितमल्लिकासूनविरचितमाला । कर्पूरग्रथिता मल्लिकाग्रथिताश्च माला इति पदद्वयमिति हेमाद्रिः । कर्पूरखण्डमिश्रग्रथिता मालेति केचित् । कर्पूरमल्लिकायाः लतायाः सूनैः कृता मालिकेत्यपरे ॥

**कर्बुदारः** । क. ९. श्वेतकोविदारः । कोविदारः शरदि पुष्पति, कर्बुदारस्तु वसन्ते पुष्पति । त्वक्पुष्पादिकं ग्राह्यम् । कोविदारकर्बुदारौ रक्तश्वेतपुष्पभेदाद्युगपत्रापरपर्यायौ "काञ्चन"इत्यभिधीयेते इति सुश्रुतसूत्रैकोनचत्वारिंशत्तमाध्यायव्याख्यायां हाराणचन्द्रः । N. O.—*Leguminosae* । हिं.—सफेदकचनार; बं.—श्वेतकांचन; कों.—धवेमंदारु; क.—बिळीमंदार, बिळीकंचिवाळदगिड; त.—कोक्कुमन्तारै; मल.—वेळुत्तमन्तारं വെളുത്തമന്താരം; ल.—*Bauhinia acuminata* । **गुणाः**—"श्वेतस्तु काञ्चनो ग्राही तुवरो मधुरः स्मृतः । रुच्यो रूक्षः श्वासकासपित्तरक्तविकारहा । क्षतप्रदरनुत्प्रोक्तो गुणाश्चान्ये तु रक्तवत्" । वै. नि । शेलुरिति केचित् । श्लेष्मातकभेद इति डल्हणः शाकवर्गव्याख्यायाम् ॥

**कलमः** । सू. ६. मगधादिषु स्वनाम्ना प्रसिद्धः शालिधान्यविशेषः । वेदाग्रहारेषु प्रसिद्ध इति केचित् । हिं.—कलमीधान; बं.—कलमाधान । "कलमः कालविख्यातो जायते स बृहद्वने । काश्मीरदेश एवोक्तो महातण्डुल एव च" इति । "कलापकास्तु कलमाः" इति वैजयन्ती । कलमोऽन्तर्वेद्यां कलविरिति लोके इति डल्ह-

णः । "पित्तश्लेष्मकरो वृष्यः कलमो मधुरस्तथा" इति नरहरिः । "कलमोऽसृक्त्रिदोषघ्नश्चक्षुष्यः स कषायवान्" । राज. व । पुराणमेव ग्राह्यम् ॥

**कलंबः** । सू. ६. के जले लंबते । **जलजशाकविशेषः** । हिं.—कलमीशाक, करेवु ; बं.—कलमी ; म.—करंबोशाक ; नाडि. ची भाजि इत्येके ; मल.–कोयुप्पा കൊഴുപ്പ ; ल.–*Ipomoea Aquatica* । कलंबी कलंबुरिति च पाठौ । "कलंबुर्नाडिकाकारः शुषिरो बहुतोयजः" इति । 'कलंबः शायके नीपे नालिशाके कलम्बपि" इति विश्वः । नालिका तस्मादल्पा सूक्ष्मा च इति हेमाद्रिः । **नामगुणाः**—"कलंबी शतपर्वी च कथ्यन्ते तद्गुणा अथ । कलंबी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी" । भा. प्र । प्रायेण पत्रं ग्राह्यम् ॥

**कलंबुः** । see **कलंबः** ॥

**कलशी** । सू. १५. etc. कलशिर्गर्गरी पृथुलत्वात्, शुक्रतनूकरणादिति वा । **पृश्निपर्णी** ॥

**कला** । शा. ३. **धात्वाशयान्तरमर्यादा** । Membrane—Mucous, Serous, Synovial etc । हिं.—झिल्ली । दधतीति धातवो रसरक्तमांसादयः, कफपित्तपुरीषाण्यपि प्राकृतानि स्वकर्मणा दधतीति धातवः, तेषामाशया अवस्थानप्रदेशा धात्वाशयाः, तेषामन्तरेषु मर्यादाः सीमाभूता इत्यर्थ इति डल्हणः । "यस्तु धात्वाशयान्तरेषु क्लेदोवतिष्ठते यथास्वमूष्मभिर्विपक्वः स्नायुश्लेष्मजरायुच्छन्नः काष्ठ इव सारो धातुरसशेषोऽल्पत्वात् कलासंज्ञ इति वृद्धवाग्भटेनाभिहितं कलास्वरूपम् । कला नाम सूक्ष्मकौषेयवासःसमाकारा नानाविधसंस्थाना मांसस्याश्च आशयानां च सर्वेषामन्तर्बहिरावृत्य तिष्ठन्ति, यथादेशकर्म संज्ञाञ्च लभन्ते इति प्रत्यक्षशारीरात् ॥

**कलायः** । **सू.** ६ etc. कलमयते । "अय गतौ" । कं वातं लाति इति वा । **सतीनः** । "कलायो वर्तुलः प्रोक्तः सतीनश्च हरेणुकः" इति भावमिश्रः । त्रिपुटक इति केचित् । वनचणक इत्येके । मुद्गवनमुद्गकलायमकुष्ठमसूरमंगल्यचणकसतीनत्रिपुटकहरेण्वाढकीप्रभृतयो वैदलाः इति सुश्रुतः । N. O.—*Leguminosae* । हिं.—मटर; केराव; बं.—वांटुलामटर, मठर; क्षुद्रमटर इत्येके; म.—वाटाणें; गु.—वटाणा; तै.—गुंडुशनगलु; पेद्दैब इति केचित्; क.—बटाणि, बट्टगडले; तु.—बटाणि; कों.—बट्टणे; त.—पटाणि; मल.—मलङ्कटला, उण्टक्कटला; इं.— Garden Pea, Common Pea; ल.—*Pisum sativum* । **नामानि**—"कलायो मुण्डचणको हरेणुश्च सतीनकः । त्रासनो नलकः कण्ठी हरेणुर्वर्तुलः स्मृतः" । ध. नि । पुराणं ग्राह्यम् । **गुणाः**—"कलायः कुरुते वातं पित्तदाहकफापहः । रुचिपुष्टिप्रदः शीतः कषायश्चामदोषकृत्" । रा. नि । "कलायो मधुरः स्वादुः पाके रूक्षश्च शीतलः" । भा. प्र ॥

**कलिः** । चि. १८ etc. कलयति । कल्यते वा । 'कल गतौ संख्याने च' । **विभीतकः** । "विभीतकस्त्रिलिंगः स्यात् कलिस्तिष्यः कलिद्रुमः" इति वैजयन्ती । ग्रन्थिविसर्पचिकित्सायां कलिरित्यत्र विभीतक इति भाति चरकपाठः । "कलिर् विभीतके शूरे विवादेऽन्त्ययुगे युधि" इति हैमः ॥

**कलिंगम्** । सू. १५. etc. इन्द्रयवः । रोध्रासवयोगे "इन्द्रसाह्वा" इति चरकपाठः ॥

**कलिंगकः** । चि. १. कुटजः ॥

**कलिंगकम्** । चि. १६. इन्द्रयवः ॥

**कलिंगयवः** । चि. ८ etc. इन्द्रयवः । पदद्वयमित्येके ॥

**कलोड्यम्** । सू. ६. ह्रस्वोत्पलकन्दः । चिञ्चोटकमिति केचित् व्याख्यायन्ति । गलोड्यं, गालोड्यं, अङ्कालोड्यं, अङ्गलोड्य-मिति च पाठान्तराणि । गिलोड्य इत्येव सुश्रुतपाठः । गिलं मधुजं बीरफलं, उड्यं जिज्ञासितव्यमिति पदद्वयमिति हाराणचन्द्रः । गिलोड्यः कन्दः प्रावृड्जातः शणपत्राकारो वल्लीयुक्तश्चर्मण्वतीनदी-भवश्वेतपाषाणसदृशः 'गुगिलोट' इति लोके इति सुश्रुतप्रमेहचि-कित्सितव्याख्यायां डल्हणः । ह्रस्वमुत्पलमितीन्दुः । "किंचोल-स्त्वङ्गलोड्यक" इति वैजयन्ती । पद्मबीजमिति बहवः । "पद्मबी-जं तु पद्माक्षं गालोड्यं पद्मकर्कटी" । ध. नि । पद्मकोरकमिति पाठ्यकारः । "गिलोड्यपियालपुष्करबीजे"त्यादिसुश्रुतवचनादेव गिलोड्योन्य इति सिद्ध्यति । मृणालबिसशालूकादिजलकन्दवर्ग प्रस्तावनायां पद्मबीजप्रसंगो नावश्यक एवेति मन्ये ॥

**कवलिका** । सू. २९. औषधद्रव्यं कवलयतीति कवलिका । वस्त्रखण्डमयपाली । चैलखण्डिका । व्रणकल्कौषधाच्छादनरूप-द्विगुणचतुर्गुणमृदुकर्पटविरचिता । सा चौषधस्वरसनिःसरणनिवा-रणार्थं भग्नोक्तपलाशोदुंबरादीनां त्वक्पत्रादिकृतेति डल्हणः । वंशा-दिविदलशकला इति भग्नचिकित्सितव्याख्यायामेकत्र निबन्धसं-ग्रहकारः ॥

**कवली** । सू. २९. कवलिका ॥

**कसेरुः** । शा. २. कं शृणाति । शॄ हिंसायां । कशेरुरिति पाठः । तृणविशेषः । अस्य कन्दोतीव सूकरप्रियः । N. O.—*Cyperaceae* । हिं—कसेरू, कशेरु; बं.—केशुर; म.—कचरा; पञ्जा.—कसेरुडिला; गु.—कसेलां; तै.—इट्टिकोति, गुण्डति गगड्डि; क.—सेकिनगडे; सिं.—कोकाटिय; मल.—करिमुत्त-क्का കരിമുത്തങ്ങ, करीक्का; ल.—*Scripus Grossus* ।

"कसेरुः द्विविधं तत्तु महद्राजकसेरुकम् । मुस्ताकृति लघु स्याद्यत्तच्चिचोढमिति स्मृत"मिति भावमिश्रः । लोमशकृष्णवर्तुलसूक्ष्मस्तडागकन्द इति हेमाद्रिः । नामानि—"गुण्ठकन्दः कसेरुःस्यात् क्षुद्रमुस्ता कसेरुका । सूकरेष्टः सुगन्धिश्च सुकन्दो गन्धकन्दकः" । रा. नि । गुणाः—"कसेरुकद्वयं शीतं मधुरं तुवरं गुरु । पित्तशोणितदाहघ्नं नयनामयनाशनम् । ग्राहि शुक्रानिलश्लेष्मारुचिस्तन्यकरं स्मृतम्" । भा. प्र । "कसेरुकः कषायोऽल्पमधुरोऽतिखरस्तथा । रक्तपित्तप्रशमनः शीतो दाहश्रमापहः" । रा. नि । कन्दो ग्राह्यः ॥

**कसेरुकः** । सू. ६ etc. कशेरुक इति पाठः । कसेरुः ॥

**कस्तूरी** । चि. २१. कसति गन्धोऽस्याः । मृगाण्डजा । Ruminantia । "बाले जरति च हरिणे क्षीणे रोगिणि च मन्दगन्धयुता । कामातुरे च तरुणे कस्तूरी बहुलपरिमला भवति" इति कस्तूरीमृगलक्षणम् । "कपिला पिंगला कृष्णा कस्तूरी त्रिविधा क्रमात् । नेपालेपि च काश्मीरे कामरूपे च जायते" । "साप्येका खरिका ततश्च तिलका ज्ञेया कुलित्थापरा पिण्डान्यापि च नायिकेति च परा या पञ्चभेदाभिधा । सा शुद्धा मृगनाभितः क्रमवशादेषा क्षितीशोचिता पक्षत्र्यादिदिनत्रयेषु जनिता कस्तूरिका स्तूयते । चूर्णाकृतिस्तु खरिका तिलका तिलाभा कौलत्थबीजसदृशी च कुलित्थिका च । स्थूला ततःकियदियं किल पिण्डिकाख्या तस्याश्च किञ्चिदधिका यदि नायिका सा"इति कस्तूरीनिकरलक्षणम् । "कामरूपोद्भवा श्रेष्ठा नैपाली मध्यमा भवेत् । कामरूपोद्भवा कृष्णा नैपाली नीलवर्णयुक् । काश्मीरदेशसंभूता कस्तूरी ह्यधमा मता" इति भावमिश्रः । हिं.—कस्तूरी, मुश्क ; उर्दु.—मिष्क ; बं.—मृगनाभि ; म.—कस्तुरी ; गु.—कस्तूरी ; तै.—कस्तूरी ; क.—कस्तूरी ; त.—कस्तूरि, मिरुकमतं, सिं.—कस्तुरि, उरुला ; मल.—कस्तूरि കസ്തൂരി ; दखा.—मुष्क ; बर्मा.—काडो ; मलाई.—

जवात ; अ.–मिस्क ; पा.–मुष्क ; इं.–Musk ; ल.–*Moschus moschîferus* । नामानि—“दर्पं कस्तूरिका नाभी कस्तूरी गन्धवाह्लिका । मृगनाभिर्मृगमदो वेध्यमुख्यं मृगाण्डजम्” । स. नि । गुणाः–“कस्तूरिका कटुस्तिक्ता क्षारोष्णा शुक्रला गुरुः । कफवातविषछर्दिशीतदौर्गन्ध्यशोषहृत्” । भा. प्र । अकृत्रिमा ग्राह्या । कस्तूरीलक्षणम्— “या गन्धं केतकीनां वहति परिमलं वर्णतः पिञ्जराभा स्वादे तिक्ता कटुर्वा लघुरथ तुलिता मर्दिता चिक्कणा स्यात् । दग्धा नो याति भस्म्यं शिमिशिमिकुरुते चर्मगन्धा तु चान्ते सा भद्रा लोभनीया वरमृगतनुजा राजयोग्या प्रदिष्टा” । कृत्रिमकस्तूरीलक्षणम्—“या स्निग्धा धूमगन्धा वहति विनिहिता पीततां पाथसोंतर्निःशेषं या निविष्टा भवति हुतवहे भस्मसादेव सद्यः । या च न्यस्ता तुलायां कलयति गुरुतां मर्दिता रूक्षतां च ज्ञेया कस्तूरिकेयं खलु कृतमतिभिः कृत्रिमा नैव सेव्या” । कस्तूरीप्रशंसा – “शुद्धो वा मलिनोस्तु वा मृगमदः किं जातमेतावता कोप्यस्यानवधिश्चमत्कृतिनिधिः सौरभ्यमेको गुणः । येनासौ स्मरमण्डनैकवसतिर्भाले कपोले गले दोर्मूले कुचमण्डले च कुरुते संगं कुरंगीदृशां” । रा. नि । कस्तूर्यभावे कंकोलं क्षेपणीयं विदुर्बुधाः । कंकोलस्याप्यभावे तु जातीपुष्पं प्रदीयते” । भा. प्र ॥

**कह्लारः** । सू. ३ etc. के जले ह्लादते । कल्हार इति पाठः । ह्रस्वसितकुमुदम् । “कह्लारं ह्रस्वपाथोजं सौम्यं सौगन्धिकं महत् । म. पा । “सौगन्धिकं तु कह्लारं” इत्येके । N. O.—*Nymphaeceæ* । हिं.—कमोदनी, बबूला, चन्द्रविकाशी, कोई ; बं.—शुंदिफुल्, शाल्क ; हेला, श्वेतशुन्दि ; म.—पांढरे उत्पल ; गु.—पोयण, फेयणां ; तै.—अल्लिकाड ; क.—बिलियनैदिलु ; त.—चिरुवेळ्ळांपल्, अल्लि ; सिं.—हेलमालि ; एंबुल ; मल.—नैतल् ൶ൈതല്‍, चेरिय वेळ्ळांपल् इं.—White

water-lily ; ल.–*Nymphæa stellata, N. lotus* । सन्ध्याविकाशि पद्मिनीपुष्पमिति हेमाद्रिः । सौगन्धिकमित्यरुणदत्तः । नामानि—"धवलोत्पलं तु कुमुदं कह्लारं कैरवं च शीतलकम् । शशिकान्तमिन्दुकमलं चन्द्राब्जं चन्द्रिकांबुजं च नव" । रा. नि । गुणाः—"कुमुदं शीतलं स्वादु पाके तिक्तं कफापहम् । रक्तदोषहरं दाहश्रमपित्तप्रशान्तिकृत्" । ध. नि । पुष्पं ग्राह्यम् ॥

**कांस्यम्** । सू. ७ etc. ताम्रवङ्गयोरुपधातुः । "अष्टभागेन ताम्रेण द्विभागकुटिलेन च । विद्रुतेन भवेत् कांस्यं तत्सौराष्ट्रभवं शुभम् । तीक्ष्णशब्दं मृदुस्निग्धमीषच्छ्यामलशुभ्रकम् । निर्मलं दाहरक्तञ्च षोढा कांस्यं प्रशस्यते । तत्पीतं दहने ताम्रं खरं रूक्षं घनासहम् । मर्दनादागतज्योतिस्सप्तधा कांस्यमुत्सृजेत्" इति रसरत्नसमुच्चयः । "श्वेतं दीप्तं मृदुज्योतिश्शब्दाढ्यं स्निग्धनिर्मलम् । घनाग्निसहमच्छांगं कांस्यमुत्तममीरितम्" । रा. नि । हिं.—काँसी ; बं.—कांसा ; म.—कांसें ; गु.—कांसु ; तै.—कञ्चु ; क.—कञ्चु ; त.—वेण्कलं ; सिं.—लोकड ; मल.—ओट्टु ഓട്, वेळ्ळोट्टु ; इं.–Bell metal, White Copper , Queen's metel ; ल.–*Bronze* ; अ.—तालिकून ; पा.—रोईन । नामानि—"ताम्रत्रपुजमाख्यातं कांस्यं घोषं च कंसुकम् । उपधातुर्भवेत्कांस्यं द्वयोस्तरणिरंगयोः" । भा. प्र । शोधितमारितं ग्राह्यम् । गुणाः—"कांस्यं कषायं तीक्ष्णोष्णं लेखनं विशदं सरम् । गुरु नेत्रहितं रूक्षं कफपित्तहरं परम्" । भा. प्र ॥

**काकः** । सू. ७ etc. काशब्दं कायति ककते वा लौल्यात् । वायसः । हिं.—कौआ, काग ; बं.—वायस ; म.—कावळा ; क.—कागि, त.—काकै ; सिं.—कवुडु ; मल.—काक्का കാക്ക ; इं.–Crow ; ल.—*Corvus splendens* । नामानि—"काकोऽथ वायसो ध्वांक्षः काणोऽरिष्ट उलूकजित् । बलिभुक् चिरजीवी च धूलिजंघो

निमित्तकृत। ध. नि। गुणाः—"काकमांसन्तु चक्षुष्यं लघु चाग्नि-प्रदीपनम् । धातुवृद्धिकरं बल्यं क्षतरोगं क्षयं हरेत् । कृष्णकाकस्य मांसन्तु ज्ञेयं काकसमं गुणैः" । वै. नि ॥

**काकजंघा** । सू. ३०. काकस्य जंघेवावयवो यस्याः । गुंजा । गुंजेत्येव सुश्रुतपाठः। काकमाचीविशेष इत्येके । हिं.—मसी, काकजंघा, चकशोनी; बं.—कांगुड काउली, केओयाठेंगा; म.—कांग; गु.—अघेडी; तै.—नालादुब्बीणीके; क.—चीलेच; ल.—*Leea Hirta* । नामानि—"काकजंघा ध्वांक्षजंघा काकपादा तु लोमशा । पारावतपदी दासी नदीकान्ता प्रचीबला"। ध. नि। गुणाः—"काकजंघा तु तिक्तोष्णा कृमिव्रणकफापहा । बाधिर्याजीर्णजिर्ज्जीर्णविषमज्वरहारिणी" । रा. नि । उत्तरस्थाने भूतग्रहप्रतिषेधाध्यायव्याख्यायां लोमशपादिकेतीन्दुः । मूलं ग्राह्यं । "काकजंघा हिमा तिक्ता कषाया कफपित्तजित् । निहन्ति ज्वरपित्तास्रज्वरकण्डूविषक्रिमीन्" भा. प्र ॥

**काकणन्ती** । नि. १४. गुंजा ॥

**काकतिक्ता** । सू. १५. काकस्यापि तिक्ता । गुंजा । शार्ङ्गेष्टेति सुश्रुतपाठः । काकजंघेति डल्हणहाराणचन्द्रौ । करंजिकेति हेमाद्रिः । लताकरंज इत्येके । काकमाचीत्यन्ये ॥

**काकनासा** । क. ४ etc. काकस्य नासेव फलमस्याः । महाश्वेतकाकमाची । हिं.—कौआठोठी; बं.—काकटूडी, केउयाठंडी; म.—थोरकावळी; गु.—श्वेतपीलुडी; तै.—काकदोंडचेट्टु, वेलुमसन्दिचेट्टु; क.—हिरियकागेदोंडे; त.—चिरुकोवै; ल.—*Leea æquata* । काकतुण्डफलेतीन्दुः । काकजंघेत्येके । नामानि—"काकनासा ध्वांक्षनासा काकतुण्डफला च सा । सुरंगी तस्करस्नायुर्ध्वांक्षतुण्डफला मता" । ध. नि । गुणाः—"काकना-

सा तु मधुरा शिशिरा पित्तहारिणी । रसायनी दार्ढ्यकरी विशेषात् पलितापहा" । रा. नि । च्यवनप्राशयोगे काकनासिकेति चरकपाठः । वासाफलका काकतुण्डक इत्यन्ये इति चक्रपाणिदत्तः। मूलादिकं ग्राह्यम् । "काकनासा कषायोष्णा कटुका रसपाकयोः । कफघ्नी वामनी तिक्ता शोथार्शःश्वित्रकुष्ठहृत्" । भा. प्र ॥

**काकमाची** । सू. ६ etc. काकवन्मचति वर्णेन संपृच्यते, काकान् मञ्चते इति वा । N. O.—*Solanaceæ* । **पत्रशाकविशेषः** । मृष्टफला स्वनामप्रसिद्धा इति डल्हणः । हिं.—मकोय, कवैया; बं.—गुडकामाई ; म.—लघुकावळी, कांगोणी ; गु.—कांगोणी, पीलुडीनीजात ; तै.—कामञ्चे चेट्टु ; त.—मणत्तक्काळि ; क.—काकेमेंचि, कवय्या, कावईकाके ; सिं.—कलुकेम्मेरियं ; मल.—मणत्तक्काळि മണത്തക്കാളി; तूतुवळं इत्येके ; पा.—रोवातरीख ; अ.—एलबुस्शालब ; ल.—*Solanum nigrum* । **नामानि**—"काकमाची ध्वांक्षमाची काकाह्वा चैव वायसी । कट्वी कटुफला चैव रसायनवरा स्मृता" । ध. नि । मूलफलादिकं ग्राह्यम् । **गुणाः**—काकमाची त्रिदोषघ्नी स्निग्धोष्णा स्वरशुक्रदा । तिक्ता रसायनी शोथकुष्ठार्शोज्वरमेहजित् । कटुर्नेत्रहिता हिक्काच्छर्दिहृद्रोगनाशिनी" । भा. प्र ॥

**काकमालिका** । उ. ३५. वनमल्लिका । मल.—काट्टुमुल्ला കാട്ടുമുല്ല । कोमलाश्चिकेति संग्रहपाठः । "काकमाल्यां वनोद्भवा" इति वैजयन्ती ॥

**काकाण्डकी** । उ. २४. काकाण्डोला ॥

**काकाण्डोला** । सू. ६. काकस्याण्ड इव फलं यस्याः । **कोलाशिंबी नाम कपिकच्छुविशेषः** । निःशूका कपिकच्छुरिति हेमाद्रिः । कटभीत्यरुणदत्त इन्दुश्च । कपिकच्छुसदृशशिंबः काकाण्ड इति डल्हणः । हिं.—करियासेम, सुअरासेम, चमरियासेम, काली-

सेम ; बं.—शेमगाछ ; म.—गोडकुहिली , गोडीकुहिरी ; खरसंवळि , आवईचीशेंग ; गु.—कालीवालोर , कागडोलिया ; तै.—कारुचिकटु ; सूअरा सेवीति पाश्चात्यैः ; क.—कूगरी ; मल.—कट्टन्पयरु കട്ടൻപയറു , काट्टुपयरु , कुट्टाटन्पयर् , चण्टिप्पयरु ; पेरुमण्णप्पयरु इति भास्करव्याख्या ; इं.–A Kind of cowhage । नामानि—"दधिपुष्पी तु खट्वांगी खट्वा पर्यंकपादिका । वृषभी सा तु काकाण्डी ज्ञेया सूकरपादिका" । ध. नि । गुणाः—"कोलशिंबी समीरघ्नी गुर्व्युष्णा कफपित्तकृत् । शुक्राग्निसादकृद्वृष्या रुचिकृद्बद्धविड्गुरुः" । भा, प्र । "कफपित्तकरा गुर्वी रञ्जनी वातनाशिनी । उष्णवीर्या स्वादुरसा काकाण्डी माषवद्भवेत्" । ध. नि । मध्यमफलं ग्राह्यम् । "फलानि माषवद्विद्यात् काकाण्डोलात्मगुप्तयोः" इत्यत्र "काकाण्डोमात्मगुप्तानां माषवत्फलमादिशे"दिति चरकपाठदर्शनाद् बहुवचनमिति केचित् प्रस्खलन्ति । चक्रपाणिदत्तेनापि "काकाण्डः शूकरशिंबी , उमा अतसी इति व्याख्यातम् । "शूकशिंबीसदृशशिखः काकाण्डः शूकरशिंबीति लोके , उमा अतसी , आत्मगुप्ता शूकशिंबी , अन्ये तु "फलानि माषवद्विद्यात् काकाण्डोलात्मगुप्तयो"रिति वाग्भटे द्विवचनं दृष्ट्वा काकाण्डोलः कटभीति व्याचक्षत" इति शिवदासोऽप्युच्चैस्तरं निगदितवान् । अथापि "काकाण्डोलात्मगुप्ताना"मित्येव शुद्धचरकपाठ इति दर्शयित्वा चरकोपस्कारप्रसादनीकारौ तत्सन्देहं निवारयतः । "माषैः समानं फलमात्मगुप्तमुक्तं च काकाण्डफलं तथैव" इति सुश्रुतवाक्यमप्यवश्यमेवात्रानुस्मरणीयम् ॥

**काकादनी** । चि. १५ etc. काकैरद्यतेऽसौ । श्वेतगुंजा । काकणन्तिकेत्यरुणदत्तः कृष्णश्रीफलिकेत्यपरे । काकमाचीविशेष इति केचित् । काकमारीत्येके । नामानि—"अपरा श्वेतकांबोजी श्वेत-

गुंजा भिरीटिका । काकादनी काकपीलुर्वक्त्रशल्या सितोच्चटा" । ध. नि । गुणाः—"गुंजाद्वयं तु तिक्तोष्णं बीजं वान्तिकरी शिफा । शूलघ्नं विषहृत्पत्रं वश्ये श्वेता च शस्यते" । रा. नि । मूलादिकं ग्राह्यम् । हिं.—सफेदघूंघची ; बं.—सादाकुंच ; म.—पांढरीगुंज ; गु.—चाणोठी धोली ; मल.—वेलुत्त कुन्नि വെളുത്ത കുന്നി । see उच्चटा ॥

**काकाह्वा** । चि. १८. काकजंघा ॥

**काकोदुंबरिका** । चि. १९. काकप्रिया उदुंबरी । स्वनामख्यातखरपत्रविशेषः । N. O.—*Urticaceæ* । हिं—कठूमर, तटमिला, कठगूलरि ; कैंवरीति शिपदीपिका । बं.—यज्ञडुमर, काकडुमर ; म.—काळाउंबर ; गु.—कालो उंबरो ; क.—अडवि अत्ति; त.—पेयत्ति, काट्टत्ति ; सिं.—कोटदिंबुल् ; मल.—पेयत्ति പേയത്തി, काट्टत्ति ; ल.—*Ficus Oppositifolia* । नामानि—"काकोदुंबरिका फल्गू राजिफल्गुः शिवाटिका । फल्गुनी फलसंभारी मलयूश्श्वित्रभेषजा" । ध. नि । गुणाः—"मलयूः स्तंभकृत्तिक्ता शीतला तुवरा जयेत् । कफपित्तव्रणश्वित्रकुष्ठपाण्ड्वर्शकामलाः" । भा. प्र । "काकोदुंबरिका शीता पक्वा गौल्याल्पिका कटुः । त्वग्दोषपित्तरक्तघ्नी तद्वल्कं चातिसारजित् । उदुंबरत्वचा शीता कषाया व्रणनाशिनी । गुर्विणी गर्भसंरक्षे हिता स्तन्य प्रदायिनी" । रा. नि । त्वगादिकं पक्वफलं च ग्राह्यम् । खस्खसिया डुमुर इति हाराणचन्द्रः । अञ्जीर इत्येके । "अञ्जीरं मञ्जलं ज्ञेयं काकोदुंबरिकाफलम् । अञ्जीरं शीतलं स्वादु गुरु पित्तास्रवातजित् । तस्मादल्पगुणं ज्ञेयमञ्जीरं लघु वा गुणैः" इति मदनपालः ॥

**काकोली** । शा. २ etc. मोरंगदेशप्रसिद्धः कन्दविशेषः । हिं.—काकोली ; म.—कांकोली ; क.—कट्टवतिगे, काउली ; तै.—

तेलुमणिचेट्टु ; त.—इराळि ; सिं.—कवेलु ; ल.-*Zizyphus napica* । नामानि—"काकोली मधुरा शुक्ला क्षीरा ध्वांक्षोलिका स्मृता । वयस्था स्वादुमांसी च वायसोली च कर्णिका" । ध. नि । कन्दः ग्राह्यः । गुणाः—"काकोली मधुरा स्निग्धा क्षयपित्तानिलार्तिनुत् । रक्तदाहज्वरघ्नी च कफशुक्रविवर्धिनी" । रा. नि । "जायते क्षीरकाकोली महामेदोद्भवस्थले । यत्र स्यात् क्षीरकाकोली काकोली तत्र जायते । पीवरीसदृशः कन्दः क्षीरं स्रवति गन्धवान् । स प्रोक्तः क्षीरकाकोली काकोलीलिंगमुच्यते । यथा स्यात् क्षीरकाकोली काकोल्यपि तथा भवेत् । एषा किञ्चिद्भवेत् कृष्णा भेदोयमुभयोरपि" । भा. प्र । काकोली मधुरा च वर्णतः क्षीरप्राया वर्णत: शुक्ला च क्षीरकाकोली अत्यन्तक्षीरयुक्ता । एतद्द्वयं विटपविशेषेण दक्षिणोत्तरेतीव प्रसिद्धमिति केचित् । अभावे अश्वगन्धा शतावरी वा ग्राह्या । Not yet identified ; grows on the Himalayan breast, particularly in Morung or Nepal ॥

**काकोलीद्वयम्** । शा. २ etc. काकोली क्षीरकाकोली च । एका काकोली कवडीसंज्ञा अन्या क्षीरकाकोली पयस्विनीसंज्ञा । "काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु । बृंहणं वातदाहास्रपित्तशोषज्वरापहम्" । भा. प्र ॥

**काकोलीयुगलम्** । चि. २१. काकोलीद्वयम् । "काकोलीयुगलाभावे निक्षिपेच्च शतावरीम्" इति ॥

**काकोल्यौ** । सू. १५. जी. ग. काकोलीद्वयम् ॥

**काक्षी** । उ. ३४. कषति काक्षी । कक्षे भवा इति वा । कांक्षीति पाठः । तुंबुरुमृत, गोपीचन्दनम् । see सौराष्ट्री । "काक्षी तुवरिकायां च सौराष्ट्रमृद्यपि स्त्रियां" इति मेदिनी ॥

**काचोषलवणम्** । चि. १८. see कालोस्थलवणम् ॥

**काच्छी** । उ. ६. सौराष्ट्री । काम्क्षीति केषांचन पाठः । "काच्छीं च हस्तिमूत्रेण" इत्यत्र "सौराष्ट्रीं च समांशानि गजमूत्रेण पेषयेत्" इत्येव सुश्रुतः पठति ॥

**काञ्चनम्** । उ. १ etc. काञ्चति (ते) । काचि दीप्तौ । **कनकम्** । तिमिरप्रतिषेधाध्याये "ताम्रायोरूप्यकाञ्चनै"रित्यत्र "हेमायोरूप्यताम्रकै"रित्येव संग्रहपाठः ॥

**काञ्चनक्षीरी** । चि. १५. काञ्चनमिव क्षीरं यस्याः । **स्वर्णक्षीरिणीक्षुपः** । "कण्टकी कण्टपत्रा च पीतपुष्पा क्षुपा भवेत् । स्वर्णक्षीरी कण्टफला कृष्णबीजा च सुस्थिरा" इति शिवनिघण्टुः । "हेमवर्णं पयस्तस्या हिमवद्भूमिसंभवा । सा नागजिह्विकाकारा तन्मूलं वणिजौषधं" इति तल्लक्षणमपरैरप्युक्तम् । N. O.—*Papaveraceae* । हिं.— कटेहरी, चोक, सत्यानासी कटेरी, पीले फूलकी कण्ड्याई इति केचित्; बं.—स्यालकण्ट, चोक; म.—कांटे धोत्रा, चोख; गु.—दारुडी; तै.—ब्रह्मदंडि; क.—अरसिन उम्मत्त, गोळ गोळिके, दत्तूरिगिड; चिक्कणिके; द्रखा.—परेंगि दत्तूर; उरिया.—कण्टकुषं; त.—कुटियोट्टि, पिरम्मतण्डु; सिं.—रन्किरि गोकटु; मल.—पोन्नुम्मत्तं പൊന്നുമ്മത്തം, मञ्ञुम्मं; एरुमक्कळ्ळि इत्येके; इं.—Yellow Thistle, Prickly or mexican Poppy; ल.—*Argemone mexicana* । **नामानि**—"कटुपर्णी हैमवती हेमक्षीरी हिमावती । हेमाह्वा पीतदुग्धा च तन्मूलं चोकमुच्यते" । भा. प्र । **गुणाः**—"क्षीरिणी कटुतिक्ता च रेचनी शोफतापनुत् । कृमिदोषकफघ्नी च पित्तज्वरहरा च सा" । रा. नि । सर्वांशो ग्राह्यः । "तस्याः क्षीरं बिन्दुमात्रं नेत्रे क्षिप्तं घृताप्लुतम् । शुक्रञ्चाप्यधिमांसञ्च नक्तान्ध्यं चैव नाशयेत्" इति गणनिघण्टुः ॥

**काञ्जिकम्** । सू. ३०. कञ्जयति दीपयत्यग्निं बध्नाति दोषानि वा ।
स्वनामख्यातधान्याम्लम् । "कुल्माषधान्यमण्डादिसंहितं काञ्जिकं विदु"रिति शार्ङ्गधरः । "तुलामितं षाष्टिकतण्डुलस्य प्रगृह्य चान्नं विधिवद्विधाय । द्रोणेंभसि क्षिप्तमथ त्रियामं तत्सप्त रक्षेत् पिहितं प्रयत्नात् । तत्रैव कल्कं सकलं निरस्येत् तत्काञ्जिकं कथ्यत आरनालं" इति अत्रिसंहितायां । "यवाद्यं निस्तुषं धान्यं प्लावयेदंबुनि त्र्यहम् । तन्नीरं तु पृथङ् नीत्वा लवणं तत्र निःक्षिपेत् । राजिकाजीरमरिचहिंगुचूर्णं प्रमाणतः । तदेवात्यम्लतां प्राप्तं कांजिकं परिकीर्तितम् । एवं कुर्याद्वरारोहे युक्त्या मंडतुषोदयोः" इति निघण्डुरत्नाकरात् । हिं.–कांजी ; बं.–काँजी ; सिं.—काडिदिय ; म.—कांजी ; मल.—वेप्पुकाटि വെപ്പുകാടി, मट्टुकाटि , काटि ; इं.—Rice-vinegar, fermented rice or Paddy liquor, Sour gruel । **नामानि**—"कांजिकं चैव सौवीरं कुल्माषाभिषुतं तथा । अवन्तिसोमं धान्याम्लमारनालं महारसम्" । ध. नि । **गुणाः**—"काञ्जिकं भेदि तीक्ष्णोष्णं रोचनं पाचनं लघु । दाहज्वरहरं स्पर्शात् पानाद्वातकफापहम् । माषादिवटकैर्यत्तु क्रियते तद्गुणाधिकम् । लघु वातहरं तत्तु रोचनं पाचनं परम् । शूलाजीर्णविबन्धामनाशनं वस्तिशोधनम् । शोषमूर्छाभ्रमार्तानां मदकण्डूविशोषिणां । प्रशस्यते न काञ्जीकं कुष्ठिनां रक्तपित्तिनां । पाण्डुरोगे यक्ष्मणि च तथा शोषातुरेषु च । क्षतक्षीणे तथा श्रान्ते मन्दज्वरनिपीडिते । एतेषां न हितं प्रोक्तं काञ्जिकं दोषकारकम्" । भा. प्र । अतीतसप्तरात्रं ग्राह्यम् ॥

**काणकपोतः** । सू. ६. प्रतुदजातीयः कपोतभेदः । मल.–मोटोत्ति, മോടോത്തി, चेङ्गालि , अरिप्रावु , पोटा ; कुरुदट्टुप्रावु इति केचित् । इं.—Turtle dove, Spotte Pigeon ; ल.—*Turtur* । **नामगुणाः**—"कपोतो घुघुकुरपाण्डुरन्यः काण-

कपोतकः । किञ्चिल्लघुः परं काणकपोतः सर्वदोषकृत्" । म. पा। "कषायः स्वादुलवणो गुरुः काणकपोतकः" इति सुश्रुतः। वनवासी पाण्डुकपोत इति डल्हणः। अरुणवर्णकमपि कपोतमाहुरन्ये । काणकपोत इत्यत्र काणशब्दोल्पवचनः यथा "काणो मेघः" इतीति चक्रपाणिदत्तः । अन्योऽरुणकपोतभेद इति हेमाद्रिः॥

**काणविकाणिके** । उ. ५. काणविषाणिके इति पाठः । काणविकाणिके इत्येव सुश्रुतसंग्रहयोः पाठः। काकोली क्षीरकाकोली च। गुंजाद्वयमिति कैरली। कटुतुंबी मेषशृङ्गी चेति केचित्॥

**काणा** । उ. ५. काकोली । गुञ्जेति केचित्॥

**काण्डदारु** । उ. ५. देवदारु । सरलमित्येके॥

**कादंबः** । सू. ६. कदंबस्यायं संघचारित्वात् कादंबः । हंसविशेषः। "कादंबः स्यात् पुमान् पक्षिविशेषे सायकेपि च" इति मेदिनी । राजहंस इति हाराणचन्द्रः । ईषत्पीतवर्णविशिष्टो हंस इति केचित्। कृष्णवर्ण इत्यन्ये । कलहंसोतिधूसरपक्ष इति डल्हणः। "कादंबः कलहंसश्च हंस आधूसरच्छदः" इति वैजयन्ती । रक्तचंचूशिरः कृष्णपादादियुक्तः 'कयंब' इत्यपरे । हिं.—बत्तक; बं.—बालहाँस इत्येके; मल.—तविट्टन्नं തവിട്ടന്നം; इं.—Goose with dark grey wings । कटमान्कोयि इति केरलेषु केचित्। see हंसः॥

**कान्ता** । शा. २ etc. प्रियंगुः। "कान्ता नार्यां प्रियंगौ स्त्री शोभने त्रिषु ना धवे । लोहे च चन्द्रसूर्यायःपर्यायान्तःशिलासु च" इति मेदिनी॥

**कान्तापुष्पम्** । उ. ३७. प्रियंगुपुष्पं॥

**कान्तारः** । सू. ५. कान्तमुखमियर्ति कान्तारः, कान्ता अरका

भागा अस्य वा । इक्षुविशेषः, वनेक्षुः । हिं.—काजली ऊख; कातारे; बं.—काजला; तै.—गोप्पयडवि; मल.—कादट्टुकरिम्पु; इं.—Wild sugarcane; कृष्णेक्षुरिति केचित् । 'घली' इति प्राकृता इत्येके । काला गन्ना इति भावप्रकाशभाषाटीकाकारः । शतपर्वकाद्धीनगुणः । "कान्तारेक्षुर्गुरुर्वृष्यः श्लेष्मलो बृंहणः सरः" इति भावमिश्रः ॥

**कामात्ता** । सू. ७. **काकमाची** । काकमाचीति चरकपाठः ॥

**कामुका** । सू. १५. कामयते । 'कमु कान्तौ' । **वासन्तीभेदः** । रक्तपुष्पविशिष्टो मल्लिकाभेद इति केचित् । रक्तमञ्जरीत्यरुणदत्तः । "प्राचीफलो नदीकान्तः कामुका रक्तमञ्जरी" । स. नि । नदीकान्तोतिमुक्तक इति पदार्थचन्द्रिका । कुन्द इति केरलेष्वेके । प्राचीबल इति सुश्रुतपाठः । काकजंघेति प्राञ्च इति भाष्यकारः । मत्स्याक्षकः, काकजंघा नदीपिप्पली वेत्यपरे, केचिदाचार्या एवं वदन्ति—यद्यपि प्राचीबलशब्देन काकजंघा गण्डदूर्वा जलपिप्पली चोच्यते तथाप्यत्र काकजंघैव, काकमाचीसान्निध्याद्वातकफकृमिबाधिर्यहरत्वाच्च इति डल्हणः ॥

**कांबलिकः** । चि. ६. **कन्दयूषः** । see **रसः** । "तक्रं कपित्थचांगेरीमरिचाजाजिचित्रकैः । सुपक्वः खडयूषोऽयमथं कांबलिकोऽपरः । दध्यम्ललवणस्नेहतिलमाषसमन्वितः" इत्येके । तत्पाकविधानं—तक्रस्य प्रस्थः कपित्थचांगेरीशाकमरिचकृष्णजीरकचित्रकाणां प्रत्येकं पलम् । एभिर्मुद्गयूषः पाच्यः । एष खडयूषः । खडयूषे दध्नाऽम्लीकृते तत्र सैन्धवतिलमाषचूर्णप्रक्षेपेण कांबलिको भवति । "दधिमध्वम्लसिद्धस्तु यूषः कांबलिकः स्मृतः । पुनः सौवर्चलाजाजीबीजपूरकसौरभैः । संयोज्य मथितः स्वच्छ एष कांबलिको भवे"दित्यपरे । A kind of gruel ॥

**कायमानम्** । सू. ३. वेण्वादिनिर्मितगृहविशेषं, **शिबिरम्** ।

हिं.—छप्पर, झोंपडा; म.—छप्पर; निवारा; त.—ओलैक्कू-रै, कुटिचै; सिं.—पन्दलम, मडुव; मल.—पन्तल् പന്തൽ; इं.—Pandal, shed। "कायमानं तृणकुटी" इति त्रिकाण्डशेषे। "वेश्यागृहे कायमानं तथेदं केलिमण्डपे" इति वैजयन्ती॥

**कायस्था**। चि. ४. कायस्तिष्ठत्यनया। काये तिष्ठति निष्फला न भवति। **हरीतकी**। क्षीरकाकोलीत्यरुणदत्तः। सूक्ष्मैला ब्राह्मी गुडूची निर्गुण्डी वेत्येके॥

**कायस्था**। चि. ६. काये तिष्ठति। **काकोली**। धात्रीत्येके। see **वयस्था**॥

**कारंजः**। सू. १७. **करंजः**॥

**कारंजबीजम्**। उ. ७. **करंजस्य बीजम्**। कारञ्जफलमिति चरकपाठः॥

**कारंजिकम्**। उ. १३. **करंजस्य बीजम्**। करंजके बीज॥

**कारण्डवः**। सू. ६. करण्डे भवं कारण्डं पञ्जरबन्धं वाति कारण्डवः। **दीर्घचरणकृष्णवर्णो हंसविशेषः**। महापक्षो जलपक्षिविशेष इति वैजयन्ती। "कारण्डवः काकवक्त्रो दीर्घाङ्घ्रिः कृष्णवर्णभाक्" इति केचित्। शुक्लहंसभेदोऽल्पः, अन्ये करहवमाहुरिति डल्हणः। कारण्डः इति पाठः। कारण्डः कपर्दिकाख्यो बृहद्धंसभेद इति केचन। मल.—कारन्नर् കാരന്നം; इं.—Black swan। जलकुक्कुट इत्येके॥

**कारभम्**। सू. ५ etc. **उष्ट्रीक्षीरम्**। see **औष्ट्रकम्**॥

**कारवी**। चिं. ८ etc. **कृष्णजीरकः**। "कारवी मधुरादीप्यत्वक्पत्रीकृष्णजीरके" इति मेदिनी। नारायणचूर्णयोगव्याख्याया-मल्पजीरक इति चक्रपाणिदत्तः। स्थूलजीरक इत्येके॥

**कारवी** । चि. १४ etc. केन जलेन रौति । रु शब्दे । **अजमोदा** । यवानीत्येके ॥

**कारवेल्लः** । सू. ६ etc. कारेण वेल्लति । **स्वनामख्यातफलशाकलता** । N. O.—*Cucurbitaceae* । हिं.—करैला, करेला, करेली; बं.—बडकरेला, उच्छे; करोला; म.—कारली; गु.—कारेलुं; कों.—कारात्ते; उत्.—शलरा; तै.—काकर; पोट्टिकाकर; क.—हागला, मिडिगायि, तु.—कञ्चाल; तं.—पाकै, मितिपाकल्; सिं.—करविल; मल.—नेरुंपावल् ഒപ്പം പാവല്, कय्पा; पा.—कारेलाह्; अ.—किस्सउलाहिमार, क्विसउल्-बर्रि; फ्रं.—Momordique charantia; ज.—Gurkenahnlicher Balsamapfel; इं.—Momordica, Bitter gourd; ल.—*Momordica charantia* । **नामानि**—"कारवल्ल्यंगारवल्ली सुषवी कारवल्लिका । दौर्वल्यकः पचारुश्च बाहुवल्ली कठिल्लकः" । ध. नि । मध्यमफलं ग्राह्यम् । **गुणाः**—"कारवेल्लं हिमं भेदि लघु तिक्तमवातलम् । ज्वरपित्तकफास्रघ्नं पाण्डुमेहक्रुमीन् हरेत् । तद्गुणा कारवेल्ली स्याद्विशेषाद्दीपनी लघुः" । भा. प्र । "कारवल्ली सुतिक्तोष्णा दीपनी कफवातजित् । अरोचकहरा चैव रक्तदोषकरी च सा" । रा. नि । "कारवेल्लमवृष्यं च रोचनं कफपित्तजित्" इति राजवल्लभः ॥

**कारवेल्लकः** । सू. ६ etc. **कारवेल्लः** । ज्वरघ्नशाकवर्गे कठिल्लमित्येव चरकसुश्रुतयोः पाठः । तत्र पुनर्नवेत्यर्थेनैव डल्हणचक्रपाणिदत्तौ ॥

**कार्पासः** । **स्वनामख्यातक्षुपविशेषः** । करोति क्रियते वा । 'कृञः पासः' । N. O.—*Malvaceae* । हिं.—कपास, नरमावाडी; बं.—कार्पास, कापस; म.—कापशी, गु.—कपास, बणरुक-

पास, वण; कों.—काप्पुसु; तै.—पत्ति; क.—हत्ति, अरळे, अंजिगिड; तु.—पर्त्ति; त.—परुत्ति, उत्तिरि; सिं.—कपु; मल.—कुरुप्परुत्ति കുരുപ്പരുത്തി; बर्मा.—वह्; अ.—ह्वुसकुतन; पा.—कुतन; फ्र.—Cottonier de I'Inde; ज.—Indische Baum Wollenstaude; इं.—Indian cotton plant; ल.—*Gossypium herbaceum*, G. Indicum । नामानि—"कार्पासो नग्नजित्तुण्डी तुण्डिकेरी पटंपटी । नीचानन्ता समुद्रान्ता कार्पासी सुसुमा तथा" । स. नि । गुणाः—"कार्पासकी लघुः कोष्णा मधुरा वातनाशिनी। तत्पलाशं समीरघ्नं रक्तकृन्मूत्रवर्द्धनम् । तत्कर्णपिटकानादपूयास्रावविनाशनम् । तद्बीजं स्तन्यदं वृष्यं स्निग्धं कफकरं गुरु" । भा. प्र ॥

**कार्पासम्** । सू. २५ etc. पिचुः । हिं.—रूई, कपास; म.—कापूस; तै.—तुति; क.—हति; त.—पञ्चु; सिं.—कपुपिळि; मल.—पञ्ञि പഞ്ഞി; इं.—Cotton ।

**कार्पासमज्जा** । उ. २४. कार्पासबीजमज्जा । कपासके बीजोंकी मज्जा ॥

**कार्पासास्थि** । उ. ३. कार्पासस्य बीजम् । हिं.—कपासके बीज, बिनौले; म.—सरकी; त.—परुत्तिकोट्टै; मल.—परुत्तिकुरु, പരുത്തിക്കുരു; बं.—माकाटी ॥

**कार्पासी** । नि. ७ etc. कार्पासः । अर्शसां निदाने "बिंबीकर्कन्धूखर्जूरकार्पासीफलसन्निभै"रित्यत्र "तुण्डिकेरी"त्येव संग्रहपाठः ॥

**कालकूटम्** । उ. ३५. कालमपि कूटयति, दहति। कन्दविषभेदः। "स्पर्शाज्ञानं कालकूटे वेपथुः स्तंभ एव च" इति सुश्रुतः । उक्तं हि—"देवासुररणे देवैर्हतस्य पृथुमालिनः । दैत्यस्य रुधि-

राज्ञातस्तरुरश्वत्थसन्निभः । निर्यासः कालकूटोस्य मुनिभिः परिकीर्तितः । सोहिछत्रे शृंगवेरे कोंकणे मलयेऽभवत्" । रा. नि । स हि मधुवर्ण इति दृश्यतेऽत्रिसंहितायाम् ॥

**कालमाला** । सू. १५. कालमाल इति सुश्रुतपाठः । "कालमालो विडंग"मिति पाठः समीचीनः । **कृष्णार्जकः** । **हिं.**—काला तुलसी ; **म.**—काळा आजवला ; **सिं.**—कलु अक्मेल्ल ; **त.**—करुं. तुळचि ; **मल.**—करिंतुळसि കരിംതുളസി । see **अर्जकः** । वनतुलसीति केरलेष्वेके । कृष्णमाल्लिका बर्बरिकेति लोके इति डल्हणः । कृष्णतुलसीति हाराणचन्द्रः । **नामानि**—"कृष्णार्जकः कालमालः करालः कृष्णमल्लिका" । म. पा । "कालपर्णी तु सुरभिः करालः कालमालकः" इति वैजयन्ती । पत्रं ग्राह्यम् । **गुणाः**—"त्रयोर्जकाः कटूष्णाः स्युः कफवातामयापहाः । नेत्रामयहरा रुच्याः सुखप्रसवकारकाः । कृत्रिमं च विषं हन्यू रक्तदोषविनाशनाः" । रा. नि ॥

**कालमुष्ककः** । सू. ३०. **कृष्णवर्णपुष्पो मुष्ककवृक्षः** । असितमुष्कक इति सुश्रुतपाठः । **हिं.**—काला मोखा ; **मल.**—करुत्त मलंप्लाशु കറുത്ത മലംപ്ലാശ് । see **मुष्ककः** । मोक्ष इत्यरुणदत्तः । घण्टापारुलि इति समाख्यात इति हाराणचन्द्रः । "श्वेतः कृष्णश्च स द्वेधा" इति नरहरिः । "श्वेतपुष्पः कृष्णपुष्पः पीतपुष्पस्तथैव च । पीतो रम्यो वरस्तेषु कालमुष्काः प्रकीर्तिताः" इत्येके । "मुष्ककः कालपुष्पस्तु वरः श्वेतादिपुष्पतः" इति च दृश्यते । मूलत्वगादिकं ग्राह्यम् ॥

**कालरात्रिः** । सू. ७. **मरणदिवसपूर्वरात्रिः** । संहारप्रवृत्तमहाकालीति हेमाद्रिः । कल्पान्तरात्रिरित्येके । यमभगिनीति केचित् । Last night of death.

**काललवणम्** । चि. १५. लवणविशेषः । हिं.—काचियानोन, कचलोन; कालानमक; बं.—कालालोण; म.—बांगडखार; गु.—बंगडीखार; त.—कारुप्पु; सिं.—कलुलुणु; मल.—कारुप्पु കാരുപ്പ്; इं.—Black salt । सौवर्चलं तदेव निर्गन्धं काललवणमित्युच्यते । काललवणं विडलवणमेव अन्ये तु सौवर्चलाकारं लवणमाहुरिति चक्रपाणिदत्तः । **नामानि**—"नीलकाचोद्भवं काचातिलकं काचसंभवम् । काचसौवर्चलं कृष्णलवणं पाक्यजं स्मृतम् । काचोत्थं हृद्यगन्धं च तत्काललवणं तथा । कुरुविन्दं काचमलं कृत्रिमं च चतुर्दश" । ध. नि । शोधितं ग्राह्यम् । **गुणाः**—"काचादिलवणं रुच्यमीषत्क्षारं च पित्तलम् । दाहकं कफवातघ्नं दीपनं गुल्मशूलहृत्" । ध. नि ॥

**काललोहम्** । सू. १४ etc. **कृष्णायसम्** । हिं.—इस्पात, फौलाद; बं.—विदरी; म.—तिखें; पोलाद; गु.—मोलुं; क.—होगरलोह; त.—अयचु; सिं.—यकड, वाणे; मल.—कारिरुम्पु കാരിരുമ്പ്, उरुक्कु; इं.—Steel । **नामानि**—"कृष्णायसी कृष्णलोहमयः कालायसः सरं । गिरिसारं चाश्मसारं पिण्डं पारशवं मतम" । स. नि । **गुणाः**—"लोहं रूक्षोष्णतिक्तं स्याद्वातपित्तकफापहम् । प्रमेहपाण्डुशूलघ्नं तीक्ष्णं मुण्डाधिकं स्मृतम्" । रा. नि ॥

**कालविषाणिके** । उ. ५ see **काणविकाणिके** ॥

**कालशाकम्** । सू. ६ etc. आर्द्रीयो शाकविशेषः । **कलंबभेदः** । हिं.—नाडीकाशाक, नरिचा; बं.—नलितपाट्; म.—कुळीची भाजी, नाडीशाक; गु.—करली; तै.—करिवेपचेट्टु; । **नामानि**—"नाडीकं कालशाकं च श्राद्धशाकं च कालकम्" । भा. प्र । "नाडीकशाकं द्विविधं तिक्तं मधुरमेव च" इत्यायुर्वेद

विज्ञाने । गुणाः—"कालशाकं सरं रुच्यं वातकृत् कफशोथहृत् । बल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम्" । भा. प्र । "कालशाकः कटुस्तिक्तः पटुरग्निप्रदीपनः । पाचको भेदको रुच्यो वातलोष्णः सरः स्मृतः । कफशोषविषार्शानां नाशनः परिकीर्तितः" । चुञ्चुशाकमित्येके । कैडर्यपत्रमिति केरलेषु केचित् । अस्य पत्रं ग्रहणीयम् । कलंबक इति शिवदीपिकाकारः । see कलंबः ॥

**कालशेयम्** । चि. ८ etc. कलस्यां दधिकुंभे भवं ढक् । तक्रम् ॥

**काला** । चि. १४ etc. **नीलिनी** । श्वयथुचिकित्सिते "कालाजश्रृंगी सरले"त्यत्र मंजिष्ठेतीन्दुः ॥

**काला** । उ. २५. **शारिबा** (जेज्जटः) । कालविषाणिकेत्यत्र काला कटुतुंबीत्येके । काकोलीत्यपरे ॥

**कालानुसारी** । उ. १३ etc. कालानुसारिबेति सुश्रुतपाठः । तगरमितीन्दुः । मेथीति केरलेष्वेके ॥

**कालानुसारी** । उ. २७. कालेन मृगमदेनानुसार्यते । **तगरम्** । गन्धतैलयोगे तगरस्य द्विरुच्चारणं भागद्वयप्रतिपादनार्थमिति डल्हणः । तगरभेद इति हाराणचन्द्रः । तुंबुर्वितीन्दुः । अगार्वित्येके ॥

**कालानुसार्या** । शा. २ etc. **उत्पलसारिबा** । कालपदानुगतशब्दा सारिबा इत्यर्थः । कालानुशारिवेत्येव सुश्रुतचक्रदत्तभावमिश्रप्रमुखानां पाठः । तदनुसृत्यैव अरुणदत्तो व्याख्यायति । सारिबाद्वयमिति शार्ङ्गधरेणापि पठितः । कालानुसारिबा इत्यत्र केचिदाचार्या अस्मिन् तैले क्षीरशुक्लकं पठन्ति , क्षीरशुक्लकं क्षीरविदारी इति डल्हणः । तन्न , यस्माच्छारीरेस्मिन् बलातैलयोगे क्षीरशुक्लेत्यपरशब्दोपि दृश्यते । कालानुसारिबा तगरं, अस्य द्वौ भागौ देयौ पुनस्तगरशब्दोपादानादिति भाष्यकारः । उशीर-

मितीन्दुः । मेथिकेति केरलीयेष्वेके । 'काळन्' इत्यस्ति खलु कश्चिद्व्यञ्जनाविशेषः, तमनुसर्तुमत्यन्तोपयोगित्वान्मेथिकैव कालानुसार्येति ते प्रमादाद्वा मुक्तकण्ठं व्यवहरन्ति ॥

**कालाम्लम्** । सू. ५. कालेन चिरकालावस्थेनाम्लम् । नत्वम्लद्रव्यसंयोगात् । "उप्पिलिट्टतु" इति केरलेषु । कोलाम्लमित्येके । Kalamla is something that has become sour through age and not anything that is naturally sour, or sour in a state of freshness । शुक्तमिति वैद्यकनिघण्डौ ॥

**कालिंगम्** । सू. ६. कुत्सितं लिंगमस्य । मधुरफलविशेषः । पक्वफलं ग्राह्यम् । कृष्णबीजं कूष्माण्डसदृशं कलिन्देति लोके इति डल्हणः । N. O.—*Cucurbitaceae* । हिं.—तरबूज, हिन्दोना, जमाडका; बं.—तरमूज; म.—कालिंगड, टरबूज; गु.—तरबूज, तडबूच; करिंगु; कों.—बचंग; उर्.—तरपुज; तै.—इर्बूजि; क.—बचंगायि, कल्लंगडि, कालेंगबळ्ळि; कौंडे; तु.—बचंगायि; त.—चक्करैक्कुम्मट्टि, पिच्चाप्पळं, वत्ताक्कु; सिं.—कालिंगफल, कोमर्डु; पञ्जा.—तण्डुर; मल.—कुम्माट्टिक्का കുമ്മട്ടിക്ക, तण्णिमत्ता, वत्तक्का; बर्मा.—फ-रयि; अ.—बेलिख शिचि; फ्र.—Melond' eau Pasteque; ज.—Wassermalone; इं.—Water melon; ल.—*Citrullus Vulgaris* । नामानि—"मांसलफलः कालिंगश्चित्रफलश्चित्रवाल्लिकाश्चित्रः । मधुरफलो वृत्तफलो घृणाफलो मांसलो नवधा" । रा. नि । "कालिन्दं कृष्णबीजं स्यात् कालिंगञ्च सुवर्तुलम्" । भा. प्र । गुणाः—"कालिंगो मधुरः शीतः पित्तदाहश्रमापहः । वृष्यः संतर्पणो बल्यो वीर्यपुष्टिविवर्धनः" । रा. नि ॥

**कालीयम्** । उ. ३२. पीतचन्दनं, उत्तराखण्डप्रसिद्धः । हिं.—पीलाचन्दन, कलंबक; बं.—पीतचन्दन; म.—पिंवळे चन्दन;

गु.—पीळो चन्दन; पा.—संदल अबीयज; सिं.—कहवन् सन्दुन्; मल.—मञ्ञचन्दनं മഞ്ഞച്ചന്ദനം; इं.—Yellow Sandal-wood; ल.—*Santalum flonum* । कृष्णचन्दनमित्येके । कृष्णकाष्ठं अगरुभेद इति केचित् । कालीयकं दारुहरिद्रानुकारि प्रसिद्धमिति डल्हणः । **नामानि**—"कालीयकं तु कालीयं पीताभं हरिचन्दनम् । हरिप्रियं कालसारं तथा कालानुसार्यकम्" । भा. प्र । काष्ठं ग्राह्यम् । **गुणाः**—"पीतं च शीतलं तिक्तं कुष्ठश्लेष्मानिलापहम् । कण्डूविचर्चिकादद्रुक्रिमिहृत् कान्तिदं परम्" । रा. नि । "कालीयकं रक्तगुणं विशेषाद्व्यंगनाशनम्" । भा. प्र ॥

**कालीयकम्** । सू. २२ see **कालीयम्** ॥

**कालीयकम्** । उ. २५. कालयति दोषान् । **दार्वी** । "कालीयकं दारुनिशा दार्वी पीतद्रु पीतनः" इत्यभिधानः । स्त्रीलिंगमित्येके ॥

**कालीयचन्दनम्** । see **कालीयम्** ॥

**कालोषलवणम्** । चि. १०. काललवणं ऊषलवणं च । "विडं कालोत्थलवण"मिति चरकपाठः । see **काललवणम्** ॥

**काशः** । सू. ६ etc. काशते काशः । **श्वेतचामरपुष्पो नाम तृणविशेषः** । N. O.—*Gramineæ* । हिं.—कास, काही; बं.—केशेघास; म.—कसई, कसाड; गु.—कांसडो; तै.—रेलु; कों.—कसाड; क.—काजुल, किरयिकागच्छे; मल.—कुशा; इं.—Thatch grass; ल.—*Saccharum spontaneum* । काण्डेक्षुरिति चरकपाठः "शरेक्षुकुशकाशाना"मित्यत्र वाजीकरणाध्याये । **नामानि**—"काशः काण्डेक्षुरुद्दिष्टः काकेक्षुर्वायसेक्षुकः । इक्ष्वारिकेक्षुकाण्डश्च स चैवेक्षुरकः स्मृतः । श्वेतचामरपुष्पश्च तथेक्षुकुसुमश्च सः" । ध. नि । मूलं ग्राह्यम् । **गुणाः**—"काशः

स्यान्मधुरस्तिक्तः स्वादुपाको हिमः सरः । मूत्रकृच्छ्राश्मदाहास्र-क्षयपित्तजरोगजित्" । भा. प्र ॥

**काश्मरी** । सू. १० etc. कृशयति तनूकरोति काश्मरी काश्मर्यश्च । गांभारीवृक्षः । N O.—*Verbenaceæ* । हिं.—खंभारी, कंभारी, गभारी, कुंभेर, शिवण, खुमेर; बं.—गांभारी; गाभार; म.—शिवण, सावनी; गु.-शिवण, शेवन; तै.—गुमुडु, साह्रांगुवुडीचेट्टु, पेद्दगुमडु; क.—शीवनि, गुलुडु गिड, काश्मिरीमर; त.-पेरुंकुमिळ्, पेरुंकुमुळन्. अरुचाविरा, गुम्मडुतेक्कु; सिं.-अत्देमड; मल.-कुमिळ् കുമിള്, कुंपिळ्; ल.-*Gmelina Arborea; G. Asiatica* इत्येके । नामानि-"काश्मर्या काश्मरी हीरा काश्मर्यो मधुपर्ण्यपि । श्रीपर्णी सर्वतो-भद्रा गंभारी कृष्णवृन्तका" । ध. नि । मूलसारं ग्राह्यम् । मूल-त्वागित्येके । पक्वफलोपि ग्रहणीयः । गुणाः—"काश्मरी तुवरा तिक्ता वीर्योष्णा मधुरा गुरुः । दीपनी पाचनी मेध्या भेदिनी भ्र-मशोषाजित् । दोषतृष्णामशूलार्शोविषदाहज्वरापहा । तत्फलं बृंह-णं वृष्यं गुरु केश्यं रसायनम् । वातपित्ततृषारक्तक्षयमूत्रविबन्धनुत् । स्वादु पाके हिमं स्निग्धं तुवराम्लं विशुद्धिकृत् । हन्याद्दाहतृषावात-रक्तपित्तक्षतक्षयान्" । भा. प्र ॥

**काश्मर्यः** । सू. ६ etc. काश्मरी ॥

**काश्मीरजम्** । उ. ३७. काश्मीरदेशे जायते जन ड । कुंकुमम् ॥

**कासः** । सू. ६ etc. काशः ॥

**कासघ्नः** । चि. ३. etc. कासमर्दः ॥

**कासमर्दः** । सू. ६ etc. कासं मृद्नाति मृद्-अण् । पत्रशाकविशे-षः । N. O.—*Leguminoseae* । हिं.—कसौंदी, कासिंदा,

अगोय, चकौडी ; बं.—कालकासुन्द ; म.—कासिंदा, कासविंदा ; गु.—कासोंदरी, कसुवायि ; तै.—कासिंद, कसिविंद, गुरुपुताध्य ; क.—दोड्डुतगचे, कोलुतगासिगिड ; कासवदी ; त.—पोन्नाविरै, पेयाविरै ; सिं.—ऊरुतोर, रटतोर ; मल.—पोन्नावीरं പൊന്നാവീരം ; तु.—आनेतजंक् ; कों.—होड्डुतैक्किळो ; इं.—Negro coffee, Round podded cassia ; ल.—*Cassia occidentalis* नामानि—"कासमर्दो राजवृक्षः कासघ्नः पीतपुष्पकः । कासारी परिमर्दश्च कर्षकः कासमर्दकः" । स. नि । मूलादिकं ग्राह्यम् । गुणाः—"कासमर्ददलं रुच्यं वृष्यं कासविषास्रनुत । मधुरं कफवातघ्नं पाचनं कण्ठशोधनम् । विशेषतः कासहरं पित्तघ्नं ग्राहकं लघु" । भा. प्र । "कासमर्दः सुतिक्तःस्यान्मधुरः कफवातजित् । विशेषतः पित्तहरः पाचनः कण्ठशोधनः" । ध. नि ॥

**कासमर्दकः** । चि. ३. etc. **कासमर्दः** ।

**कासीसम्** । चि. १३. कं जलमश्नुते व्याप्नोति क+अश-णिनि तेषु मध्ये ईष्टे क । उपधातुविशेषः । "कासीसं विविधं प्रोक्तं सितं श्यामं च पीतकम् । पीतं च पुष्पकासीसं नगरीयो भवेन्मृदु । तैजिकं कालमेघाभं नीलं स्यान्मुक्तकालिकम । श्यामं पीतं भवेच्चान्यदुत्तमाधममध्यमं" इति तन्त्रान्तरे । धातुपुष्पभेदाद्द्विविधमित्येके । हिं.—हीराकसीस, कसीस, मांगफूल, कौशीश ; हरतुत्य ; उर्दु.—हिराकषीष ; बं—हिरेकस, हीराकस ; म.—हिराकस ; गु.—हीराकसी ; तै.—अन्नभेदि, तगरमु ; क.—कासीस, अन्नभेदि ; त.—अन्नपेति ; सिं.—कसिस् ; मल.—अन्नभेदि അന്നഭേദി, ईरकासु ; कों.—हिराकस ; पश्चा.—संग-इ-सब्ज ; काश्मी.—संग-इ-सब्ज ; मलाई.—मदुकल ; अ.—जाजे अखदर, जाजे असफर ; पा.—झंकुरमदनि, तुतिया सब्ज, जाके

सब्ज; फ्र.–Sulphate ferreux; जर्म.– Schwefelsaures Eisenoxydul; इं.–Green Vitriol, Green Copperas, Iron sulphate; ल.–*Ferri Sulphas* । see **पुष्पकासीसम्** । **नामगुणाः**—"कासीसं धातुकासीसं पांशुकासीसमित्यपि । तदेव किञ्चित् पीतं तु पुष्पकासीसमुच्यते । कासीसमुष्णमम्लञ्च तिक्तञ्च तुवरं तथा । वातश्लेष्महरं केश्यं नेत्रकण्डूविषप्रणुत् । मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्तितम्" । भा. प्र । शोधितं ग्राह्यम् । कासीसं सीसमिति शब्दसादृश्यभ्रमात् प्रमादाद्वा केरलेषु केचित् व्याख्यायन्ति ॥

**कासीसद्वयम्** । सू. १५. पांशुधातुसंज्ञं पुष्पकासीसं च । कासीसं भस्मसदृशं किंचिदम्लं लवणरसं, द्वितीयं पुष्पकासीसमीषत् पीतं तुवररसं तद्भेद एव इति डल्हणः ॥

**किंशुकः** । चि. १७ etc. किंचिच्छुक इव । शुकतुण्डाभपुष्पत्वात् । पलाशः ॥

**किक्किसम्** । शा. १. किक्विसमिति पाठः । रेखास्वरूपस्त्वक् सङ्कोचः । चर्मविदरणमिति चक्रपाणिदत्तः । ऊरुस्तनोदरे वलिविशेषा रेखाकारास्तत्काले प्रायो ये जायन्ते ते किक्विससंज्ञाः इत्यरुणदत्तः । कैश्चिच्छूकैरिव पूर्णता किक्विसानीति व्याख्यायि । कौंचके फलीके लग जानेसे जो कष्ट और खुजली होती है उसके समान होनेवाली पीडा । खाजकी अधिकतासे त्वचाका फटना ॥

**किणिही** । चि. २०. किणिनो व्रणान् हन्ति । अपामार्गः । गिरिकर्णिकेत्यरुणदत्तः ॥

**किणिही (सिता)** । उ. ५. अद्रिकर्णी । गिरिकर्णिकेतीन्दुः । श्वेतशणपुष्पीति कैरली । स्योनाकमूलं कटभी सिता चेति मुंबापुरमुद्रितसंग्रहपाठः ॥

**किणिही** । उ. ३५. कटभी । शणपुष्पीति केरलेष्वेके । कटभीति डल्हणः ॥

**किण्वम्** । सू. १७ etc. कणनम् । 'कण' शब्दे । **सुराबीजम्** । सुराकांजिकाद्यधःस्थितद्रव्यम् । **मल.**—मट्टु മട്ട്, कळ्क्कूरल्, अटि ; **इं.**—Yeast । "किण्वं बीजे च सीधुनः" इति मेदिनी । "किण्वं पापे सुराबीजे" इति विश्वः ॥

**किराततिक्तः** । चि. १. किरातदेशे उत्पत्तिस्थानत्वेनास्त्यस्य । **भूनिंबः** । N. O.—*Gentianaceæ* । **हिं.**—चिरायता ; **उर्दु.**—चिराइता ; **बं.**—चिरेता, चिरता, चिराता ; **म.**—किराईत ; **गु.**—करियातु ; **तै.**—निलवेमु, किरियात्त ; **क.**—चिर्यात, किरियात्तुगिड ; निलवेवु ; **त.**—चिरायत्तु, किरियात्तु, निलवे-म्पु ; **तु.**—किरियात्त् ; **मल.**—किर्यात्त കിരിയാത്ത, किरियात्त्, निलवेप्पु, निलक्काञ्ञिरं ; **सिं.**—बिमिकोहोंब, बिमिकोसंब ; **कों.**—जिरात्ते-कड्डि ; **पञ्जा.**—मिलाकिल ; **काश्मी.**—किरायिता ; **बर्मा.**—सेखगे ; **मलाई.**—चिरेता ; **पा.**—नेनिहाद ; **अ.**—कसबुज जारिरा ; **इं.**—Chiretta, Gentian, Creyat, Creat ; **ल.**—*Gentiana chirayita, Swertia chirata* । **नामानि**—"किराततिक्तः कैरातः कटुतिक्तः किरातकः । काण्डतिक्तोऽनार्यतिक्तो भूनिंबो रामसेनकः । किरातकोन्यो नैपालः सोर्धतिक्तो ज्वरान्तकः" । भा. प्र । सर्वांशो ग्रहणीयः । **गुणाः**—"किरातः सारको रूक्षः शीतलस्तिक्तको लघुः । सन्निपातज्वरश्वासकफपित्तास्रदाहनुत् । कासशोथतृषाकुष्ठज्वरव्रणक्रिमिप्रणुत्" भा. प्र । कासघ्नी नाम बृहतीविशेष इति केरलेषु केचित् ॥

**किराततिक्तकः** । चि. ८. किराततिक्तः ।

**किलाटः** । सू. ५. कूर्चिकापिण्डो नाम क्षीरविकारभेदः । "किला-

टं तु पयच्छदः" इति नरहरिः । हिं.—खोवा, मावा, खोआ; खरेटा इति लोके इति भावप्रकाशटीकायां; बं.—छेना; म.—निवळ, थरी, साई; मल.—तयिप्पाटा; इं.—Curd of milk. Coagulated milk। सूदास्तु किलाटीति । कीलाट इति शिवपुर-मुद्रितसंग्रहपाठः । तिलाट इति पठति वैजयन्ती । कूर्चिकायाः क्षीरशाकस्य वा पृथगुद्धृतो घनभागः किलाट इति हेमाद्रिः । कूर्चिकीभूतक्षीरस्य घनभागः किलाटः, यं लोकाः क्षीराशु (रांशु) मित्याहुरिति डल्हणः । अपक्वक्षीरकृतदध्नः घनभाग इत्येके । "किलाटो बहुतक्रेण स्वल्पक्षीरे कृतः स्मृतः" इति केचित् । "नष्टदुग्धस्य पक्वस्य पिण्डः प्रोक्तः किलाटकः" इति भावमिश्रः । "पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका । तक्रेण तक्रकूर्चा स्यात्तयोः पिण्डः किलाटकः" इत्यपरे । गुणाः—"गुरुः किलाटोऽनिलहा पुंस्त्वनिद्राप्रदः स्मृत" इति सुश्रुतः । "पीयूषं च किलाटश्च क्षीरशाकं तथैव च । तक्रपिण्ड इमे वृष्या बृंहणा बलवर्धनाः । गुरवः श्लेष्मला हृद्या वातपित्तविनाशनाः । दीप्ताग्नीनां विनिद्राणां विद्रवौ चाभिपूजिताः" । भा. प्र ॥

कीटः । उ. ७. वृश्चिकः । "नकुलोलूकमार्जारगृध्रकीटाहिकाकजैः" । षड्बिन्दुककीट इति शिवदीपिकाकारः ॥

कुकुन्दरः । शा. ४. नितंबस्थकूपकद्वयम् । Cavities of the loins। "कुकुन्दरौ समाचष्टे जनो जघनकूपकौ" इति हलायुधः । "कूपकौ तु नितंबस्थौ द्वयहीने कुकुन्दरे" इत्यमरः ॥

कुकूलः । सू. ६. तुषानलः । मल.—उमित्ती उमित्ती । Conflagration of husks, Fire of chaff । अपूपपचनपात्रविशेषो वा । श्वभ्रमिति हेमाद्रिः । Hole filled with stakes । "कुकूलं शंकुभिः कीर्णे श्वभ्रे ना तु तुषानले" इति वैजयन्ती । गोम-

कुद्दादिचूर्णसंताप इत्यरुणदत्तः । मृद्वग्निबाष्प इति पदार्थचन्द्रिका । बाष्पस्वेदः, क्षारपाक इत्यन्ये इतीन्दुः । गोमयाग्निरित्येव केचित् । श्वभ्राकारमुत्तानं मृन्मयपात्रमित्यपरे ॥

**कुक्कुटः** । सू. ६ etc. कुगुधारणेन कुटति । ताम्रचूडपक्षी । हिं.—मुर्गा; बं.—कुकड़ा, कुकुड़ा; म.—कोंबडा; तै.—कोडि, कुक; क.—कोळी; त.—कोळी; सिं.—कुकुळु; मल.—कोळि കോഴി; इं.—Cock, Fowl, ल.—*Gallus domesticus* । नामानि—"कुक्कुटः कृकवाकुः स्यात् कालज्ञश्चरणायुधः । ताम्रचूडस्तथा दक्षो प्रातर्नादी शिखण्डिकः" । भा. प्र । गुणाः—"कुक्कुटो बृंहणः स्निग्धो वीर्योष्णोऽनिलहृद्गुरुः । चक्षुष्यः शुक्रकफकृद्बल्यो वृष्यः कषायकः । आरण्यकुक्कुटः स्निग्धो बृंहणः श्लेष्मलो गुरुः । वातपित्तक्षयवमिविषमज्वरनाशनः" । भा. प्र ॥

**कुक्कुटाण्डम्** । सू. ७. कुक्कुट्याः अण्डम् । हिं.—मुरगेका अंडा; मल.—कोळिमुट्टा കോഴിമുട്ട; इं—Egg । "कुक्कुटाण्डं तु मधुरं बलकृद्वह्निदीपनम्" । रा. व ॥

**कुक्कुटाण्डकः** । सू. ६. व्रीहिभेदः । "कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते" इति भावमिश्रः । कुक्कुट्या अण्डानीव वर्णेन वर्तुलतया च तण्डुला यस्य सः कुक्कुटाण्डक इति डल्हणः । कुक्कुटाण्डकलावाख्य इत्यत्र कुक्कुटाण्डकपालाख्य इति पाठो दृश्यते ॥

**कुक्कुटी** । उ. ५. शाल्मली । स्फटिकरचितकुक्कुटाण्डसदृशकन्दा कुक्कुटीशरीरवत्कुसुमचित्रा वल्लीति डल्हणः । रसायनोक्तलक्षणेतीन्दुः । "कुक्कुटाण्डनिभैः कन्दैः किंचित्कटुकपिच्छिलैः । स्निग्धैर्मरकतश्यावैः खर्जूररसदशच्छदै"रित्युक्तमहौषधीभेदः । कुक्कुटेति सुश्रुतसंहितायामेकत्र पाठभेदो दृश्यते । कुक्कुटशिम्बीति डल्ह-

णः । शितिवारक इत्यरुणदत्तः । "स्वस्तिककुक्कुटौ" इति वैजयन्ती ॥

**कुक्कुभः** । सू. ६. कुक्कुशब्दं करोति कुक्कुभः, कुक् इत्यव्यक्तं शब्दं कौति इति वा । कक्कुभ इति पाठः । ताम्रचूडभेदः, वनकुक्कुटः । म.—वनकोंबडा ; मल.—कादट्टुकोयि കാട്ടുകോഴി ; इं.—Jungle fowl, Wild cock; ल.—*Gallus ferrugineus* । स्थूलकुक्कुट इति चक्रपाणिदत्तः । ककुभ इति केषांचन पाठः । रक्तवर्त्मकपदोऽस्य विशेषण एव । रक्तवर्त्मकस्थूलकुक्कुटादिदर्शनाच्छब्दस्यैकरूपतया च 'तर्की'(Turkey) इति व्यवह्रियमाणमयूराकारमहाकुक्कुट एवेति केचित् । कर्कर इति पठन्ति केरलेष्वेके ॥

**कुंकुमम्** । सू. ३ etc. कुक्यते आदीयते । कुं कौति इति वा । स्वनामख्यातगन्धद्रव्यम् । पुष्पकेशरमेव ग्राह्यम् । "पाण्डरैः केशरैस्त्यक्तं रक्तं कुंकुममुत्तमम् । नीलं द्विवर्णं काश्मीरं खरपाण्डरकेशरं" इति । "कुंकुमाभावतो दद्यात् कुसुंभकुसुमं नवं" इति भावमिश्रः । N. O.—*Irideæ* । हिं.—केसर, केशर ; जाफ्रान ; बं.—कुंकुम ; म.—केशर ; गु.—केसर ; तै.—कुंकुमपु, कुंकुमपुव्व ; क.—कुंकुम ; कों.—कुंकुमकेसर ; त.—कुंकुमं ; सिं.—कोकुं ; मल.—कुंकुमप्पूवु കുങ്കുമപ്പൂവ് ; पा.—करकीमास ; अ.—जाफरान ; झिफरान ; फ्र., and जर्म,—Safran ; इं—Saffron ; ल.—*Crocus Sativus* । "काश्मीरदेशजे क्षेत्रे कुंकुमं यद्भवेद्धि तत् । सूक्ष्मकेशरमारक्तं पद्मगन्धि तदुत्तमम् । बाह्लीकदेशसंजातं कुंकुमं पाण्डुरं मतम् । केतकीगन्धयुक्तं तन्मध्यमं सूक्ष्मकेशरम् । कुंकुमं पारसीके यन्मधुगन्धि तदीरितम् । ईषत्पाण्डुरवर्णं तदधमं स्थूलकेशरम्" । भा. प्र. । नामानि—"कुंकुमं रुधिरं रक्तमसृग्रक्तं च पीतकम् । काश्मीरं चाग्निशिखं बाह्लीकं संकोचं पिशुनं वरम्" । ध. नि. । गुणाः—

"कुंकुमं कटुकं स्निग्धं शिरोरुग्व्रणजन्तुजित् । तिक्तं वमिहरं वर्ण्यं व्यङ्गदोषत्रयापहम्" । भा. प्र ॥

**कुचन्दनम्** । चि. २ etc. कुत्सितं गन्धहीनत्वात् चन्दनम् । रक्तचन्दनम् । रक्तपित्तचिकित्सिते कुचन्दनमित्यत्र चन्दनमित्येव चरकपाठः ॥

**कुचेला** । सू. ६. कुत्सितं चेलमिव पत्रमस्याः । कुचैला कुवेला इति पाठौ दृश्येते । पाठा । कृष्णपाठेति हेमाद्रिः । "पाठिका स्थापनी चैव श्रेयसी विद्धकर्णिका । एकाष्ठीला कुचैला च दीपनी वरतिक्तका" । रा. नि ॥

**कुटजः** । सू. १५ etc. कुटे पर्वते जायते जन-ड । स्वनामप्रसिद्धवृक्षः । हिं.—कुडा, कूड, कोरैया, कोरेया, कुठेया; बं.—कुड़चीगाछ, करची; म —कुडा; गु.—कुडो, दुधला; तै.—काक कोडिसे, कोलमुक्कि, मनुपाल; कोडिशचेट्टु; क.—कोरसिगिनगिड; उत्.—कुडिया; त.—वेप्पाले, कुटचप्पाले; सिं.—कोळिन्दगस्; मल.—कुटकप्पाला കുടകപ്പാല; वेप्पाला; अ.—तिवाज, लिसन-एल-असफिर-एल-मुर; पा—अबन-इ-गुंगिषक-इ.तलक; तु.—त्रोल्दुमाह्लिगे; फ्र.—Ecoree de Codagapala; इं.—Kurchi, Conessi or Tellicherry bark, Oval-leaved rosebay; ल.—*Holarrhena Antidysenterica, Wrightia zeylanica* । स तु द्विविधः सितासितभेदेन । नामानि—"कुटजः कौटजः कौटो वत्सको गिरिमाल्लिका । कालिंगो माल्लिकापुष्प इन्द्रवृक्षोथ वृश्चकः" । ध. नि । गुणाः—"कुटजः कटुको रूक्षो दीपनस्तुवरो हिमः । अर्शोतिसारपित्तास्रकफतृष्णामकुष्ठनुत्" । भा. प्र । "कुटजः कटुतिक्तोष्णः कषायश्चातिसारजित् । तत्रासितोस्रपित्तघ्नस्त्वग्दोषार्शोनिकृन्तनः" ।

रा. नि । कुटजः स्त्रीपुरुषभेदेन द्विधा भवतीति पौराणिकाः । "बृहत्फलः श्वेतपुष्पः स्निग्धपत्रः पुमान् भवेत् । श्यामा चारुणपुष्पी स्त्री फलपर्णैस्तथाणुभि"रिति चरकसंहितायां । उभयोरपि समानगुणता ज्ञातव्या । मूलत्वग्बीजादिकं ग्राह्यम् ॥

**कुटजत्वक्फलम्** । चि. १०. कुटजमूलस्य वल्कलं कुटजफलञ्च । वत्सकत्वक्फलमिति चरकपाठः ॥

**कुटजफलम्** । चि. ५. इन्द्रयव । शुष्कं ग्राह्यम् ॥

**कुटजोद्भवः** । सू. १५. इन्द्रयवः । कुटजबीजमिति सुश्रुतपाठः ॥

**कुटन्नटः** । चि. १० etc. कुटन् वक्रीभवन् नटति स्फन्दते । **स्योनाकः** । कैवर्तमुस्तकमिति चक्रपाणिदत्तः ॥

**कुटन्नटम्** । उ. ३५. परिपेलवम् । "कुटन्नटं नतं कुष्ठ"मित्यत्र कुटन्नटस्थाने परिपेलवमिति पठति सुश्रुतः ॥

**कुटरणी** । सू. १५. कूटरणा कुठरुणा चेति पाठौ । कुठरणा इत्येव संग्रहे । **शुक्ला त्रिवृत्** । "रेचनी महती श्वासा माया कुठरुणात्र तु" इति वैजयन्ती । अरुणमूला त्रिवृदिति हेमाद्रिर्डल्हणमतमनुसरति । "त्रिभण्डी त्रिवृता चैव श्यामा कूटरणा तथा । सर्वानुभूतिः सुवहा शब्दैः पर्यायवाचकैः" इति चरकः । see **त्रिवृत्** ॥

**कुटिंजरः** । सू. ६. **वनवास्तुकः** । कुठिंजरकाठिंजराविति पाठौ । "लोणिकोक्ता बृहच्छोटी कुटिरस्तु कुटिंजरः" इति मदनपालः । **गुणाः**—"कुटिंजरः स्वादुपाकः क्षारो रूक्षश्च शीतलः । गुरुर्मलस्तंभकरो दोषोत्पादनकारकः" । वै. नि । ताम्रमूलकमित्यरुणदत्तः । "कोल्हसुआ" इति लोके इति डल्हणः । तुलसीभेद इति हाराणचन्द्रः ॥

**कुटिलम्** । उ. २४. कुटिं कौटिल्यं लाति । **तगरम्** ॥

**कुठेरः** । सू. ६. कुण्ठति कुठेरः । सितार्जको नाम पर्णासभेदः । कृष्णार्जकाख्य इति क्षीरस्वामी । "पर्णाशस्तत्र कृष्णे तु कठिञ्जरकुठेरकौ" इति दृश्यते । हेमाद्रिरपि कालमालेत्येव व्याख्यायति । अथापि, "कुठेरकस्तु वैकुण्ठः क्षुद्रपत्रार्जकः सितः । वटपत्रः कुठेरोन्यः पर्णासो बिल्वगन्धकः" इत्यभिधानो दृश्यते । "सितार्जकस्तु वैकुण्ठो वटपत्रः कुठेरक" इति नरहरिः । कालमालस्य भेद इति डल्हणः । श्वेततुलसीभेद इत्येव हाराणचन्द्रः । "कालमालककुठेरक" इत्यादिसुश्रुतवचनान्यप्यत्र संस्मरणीयानि तौ पृथग् पृथगिति । पत्रं ग्राह्यम् ॥

**कुण्डम्** । सू. १७. जलाधानपात्रविशेषः । "कुण्डं स्थाल्यां जलाधारविशेषे नलगर्तके" इति वैजयन्ती ॥

**कुतली** । कुन्तली ॥

**कुतिला** । कुन्तली । वनतिलक्षुप इत्येके ॥

**कुतुंबकः** । सू. ६. द्रोणपुष्पी । see **द्रोणः** ॥

**कुत्सितांबः** । सू. १५. कदंबः । कदंब इत्येव सुश्रुतपाठः ॥

**कुथा** । चि. १. चित्रकंबलः । A variegated blanket । "प्रवेण्यास्तरणं वर्णः परिस्तोमः कुथः कुथा" इति हलायुधः । परवतानि इति केरलेषु । see **कौचवम्** ॥

**कुन्तली** । सू. ६. कुन्तलिका इति सुश्रुतपाठः । पत्रं ग्राह्यम् । कुतली कुतिला चेति पाठौ । गौरवर्तुलावगुण्ठितफला चिरपोटिका इति प्रसिद्धा । N. O.—*Solanaceæ* । हिं.—पनसोखा, चिरपोटन, पटकोना ; म.—चिरपोटाणी ; गु.—पर्पोटी ; कों.—चिरिपुट्ल ; क.—बोण्डुळ, बुड्डे हण्णुगिड ; तु.—बोण्टोलि ; मल.—ञेट्टाञेट्टुङ्ङा ഞെട്ടാഞെട്ടങ്ങാ, ञेट्टाम्ञोटियन, मोट्टा-

म्पुळि; पा.—टेकाकनुज्; इं.—Winter cherry, Brazil cherry; ल.—*Physalis indica*, *P. Peruviana*। **नामगुणाः**—"चिरपोटा दीर्घपत्रा कुन्तली तिक्तका मता। चिरपोटा हिमा रूक्षा भेदिनी श्वासकासजित्"। म. पा। "स्वादुतिक्ता कुन्तलिका" इति सुश्रुतः। अन्यच्च—"पर्पोटी पानलेपाभ्यां रक्तविद्राविणी ध्रुवम्। तस्याः पक्वफलं पित्तश्लेष्मलं ज्वरकारि च" इति। सूक्ष्मतिलजातिरित्यरुणदत्तः। चुंचुसदृशा दीर्घपत्ना इति हेमाद्रिडल्हणौ। नीलाझिंटीति हाराणः॥

**कुन्तालः**। सू. ३०. **समूलनालः शुष्कतिलः**। तिलनाल इति सुश्रुतपाठः। एळ्ळिन् कोञ्चा എള്ളിൻകോഞ്ചാ इति केरलेषु॥

**कुन्दः**। सू. ३ etc. कुन्दयति कुन्दं। **स्वनामख्यातश्वेतपुष्पवृक्षः**। "कुन्दो माध्येऽस्त्री मुकुन्दभ्रमिनिध्यन्तरेषु ना" इति मेदिनी। N.O.—*Jasminaceae*। हिं.—कुन्द; बं—कुन्द; म.—कुन्द, कागडा; गु.—जेलर; तै.—कुन्तमु, गुजरि; क.—कस्तूरिमल्लिगे, बास्तिमल्लिगे, सुरगि; तु.—बोळ्दुमल्लिगे; कों.—कस्तूरिमोग्रे; सिं.—कोन्द; मल.—कुरुकुत्तिमुल्ल കുരുക്കുത്തിമുല്ല, कुरुणा; इं.—Common jasmine; ल.—*Jasminum pubescens*। **नामानि**—"कुन्दः सुमकरन्दश्च सदापुष्पो मनोहरः। अट्टहासो भृंगसुहृच्छुक्लः शाल्योदनोपमः"। ध. नि। **गुणाः**—"कुन्दः शीतोतिमधुरस्तुवरः सारको लघुः। पाचको दीपको हृद्यः कटुकस्तिक्तकः स्मृतः। पित्तरोगशिरोरोगविषशोथामनाशनः। रक्तदोषं च वातं च नाशयेदिति कीर्तितम्"। नि. र। "केशभावन" इति नरहरिः। पुष्पं ग्राह्यम्। निर्गन्धं श्वेतपुष्पमिति डल्हणः॥

**कुन्दुरकम्**। सू. २१ etc. **सल्लकीचोपो नाम गन्धद्रव्यविशेषः**।

N. O.—*Burseraceæ* । हिं.—कुंदरु, गंधविरोजा, विरजा; बं.—कुन्दुरुखोटी; म.—अवलकुंदर, साळईचा डीक; गु.—किन्दुरु, शेषगुंदर; तै.—कुन्दुरुमु, गुग्गुलु, गुग्गुलुमु; क.—गुग्गुळमर; त.—कुन्तुरुकं, मल.—कुन्तुरुकं കുന്തുരുക്കം, कुन्तिरिक्कं; कों.—विशेषधूपु, गुग्गुलु; पा.—कन्दुरुरूमी, खोटीमस्तकी; अ.—कुन्दुरेजकर; ल.—*Boswellia glabra* । कुन्दुरुकमिति चरकपाठः । नामानि—"कुन्दुरुः स्यात् कुन्दुरुकः शिखरी कुन्द्रगोपुरः । सुकुन्द्रस्तीक्ष्णगन्धश्च पालिन्दो भीषणो बली" । ध. नि । निर्यासो ग्राह्यः । गुणाः—"कुन्दुरुर्मधुरस्तिक्तस्तीक्ष्णस्त्वच्यः कटुर्हरेत् । ज्वरस्वेदग्रहालक्ष्मीमुखरोगकफानिलान्" । भा. प्र ॥

कुन्दुरुष्ककम् । चि. २१. कुन्दुरकम् ॥

कुमुदम् । सू. ६ etc. कौ भूमौ मोदते मुद्-क । कह्लारः । श्वेतोत्पलम् । कह्लारविशेष इत्येके ॥

कुंभः । सू. १५ etc. त्रिवृत् ॥

कुंभयोनिः । उ. १३. अगस्तिः । "सितपीतनीललोहितकुसुमविशेषाच्चतुर्विधोऽगस्ति"रिति नरहरिः । N. O.—*Leguminosæ* । हिं.—हथिया, अगस्तिय, बस्त, सादबस्त; बं.—वक; म.—हदगा, अगस्ता; गु.—अगथियो; तै.—अविसि, अनगा, अविसेचेट्टु; क.—अगचे, अगसेमर; तु.—अगसे; त.—अकत्ति, अचं; आत्तिकीरै; सिं.—कतुरुमुरुङ्गा; मल.—अकत्ति അകത്തി, अगस्ति; ल.—*Agati grandiflora, Sesbania grandiflora* । नामानि—"अगस्तिकः कुंभयोनिर्मुनिशाको मुनिद्रुमः" । स. नि । "अगस्त्यः शीघ्रपुष्पःस्यादगस्तिस्तु मुनिद्रुमः । व्रणारिर्दीर्घफलको वक्रपुष्पः सुरप्रियः" । रा.

नि । पुष्पपत्रादीनि ग्राह्याणि । **गुणा**.—"अगस्तिः पित्तकफाजिच्चातुर्थिकहरो हिमः । रूक्षो वातकरास्तिक्तः प्रतिश्यायनिवारणः । अगस्तिकुसुमं शीतं चातुर्थिकनिवारणम् । नक्तान्ध्यनाशनं तिक्तं कषायं कटुपाकि च । पीनसश्लेष्मपित्तघ्नं वातघ्नं मुनिभिर्मतम्" । भा. प्र । छत्राभिधाना द्रोणपुष्पीतीन्दुः ॥

**कुंभी** । सू. १७. पात्रविशेषः । ह्रस्वघटः । "पिठरः स्थाल्युखा कुंभि"रिति वैजयन्ती । बं.—हांडि ॥

**कुंभीकः** । उ. ८. दन्तीबीजमिति केरलेषु बह्वः । कुमुदतण्डुल इतीन्दुः । कठोरदेशे दाडिमाकारफला लता इति भावप्रकाशे । दाडिमाकारफला स्थलकुंभी इति डल्हणः । जलमारिषबीजेन केचित् । अपरे अजगन्धाबीजमिति । see **मानद्रुमः** ॥

**कुंभीरः** । सू. ६. कुंभिनं हस्तिनमपीरयति कुंभीरः । जलजन्तुविशेषः । हिं.—मार डालनेवाला जलका जीव ; बं.—हांगर ; म.—मगर ; सिं.—किंबुला ; मल.—मुतला മുതല ; इं.—Crocodile ; Long-nosed alligator इत्येके ; ल.—*Crocodilus Porosus* । महान् नक्रसदृश इति हेमाद्रिः । सूत्रस्थानषष्ठाध्याये कुंभीरनक्रौ पृथगिति निदर्शितावपि पर्यायेण च निघण्टुषु दृश्येते । "कुंभीरकूर्मनक्राश्च गोधामकरशङ्कवः । घण्टिकः शिशुमारश्चेत्यादयः पादिनः स्मृताः । भा. प्र । "नक्रे तु कुंभी कुंभीरो गोमुखश्च महामुखः" इति वैजयन्ती । **गुणाः**—"पादिनोपि च ये ते तु कोशस्थानां गुणैः समाः । कोशस्था मधुराः स्निग्धाः वातपित्तहरा हिमाः । बृंहणा बहुवर्चस्का वृष्याश्च बलवर्धनाः" । रा. नि । पित्ताहित इति सुश्रुतः ॥

**कुरंगः** । कौ रंगति । सू. ६ etc. महान् ताम्रवर्णो मृगविशेषः । हिं.—कखड़ ; सिं.—मदरत्मुवो ; केरलेषु 'कुराल्मान्' इत्येके ।

इं.—Big red deer । "कुरंगो हरिणो महान" इति वैजयन्ती । "न कृष्णो न च ताम्रश्च कुरङ्गः सोऽभिधीयते" इति सुश्रुतः। "कुरंग ईषत्ताम्रः स्यादेणतुल्याकृतिर्महान्" इति भावमिश्रः । चतुरङ्ग इति लोके प्रसिद्ध इति डल्हणः । स एव सुश्रुतज्वरप्रतिषेधाध्यायव्याख्यायां कुरंगश्चतुःशृङ्गः भेदुली इति लोके इत्युक्तवान् । चञ्चलगतिरिति चक्रपाणिदत्तः । **गुणाः**—"कुरंगो बृंहणो बल्यः शीतलः पित्तहृद्गुरुः । मधुरो वातहृद्ग्राही किञ्चित्कफकरः स्मृतः" भा. प्र ॥

**कुरण्टः** । सू. १५. **सुनिषण्णः** । कुरूट इति केरलीयपाठः । कुरण्टक इति सुश्रुतः । कुरुण्डक इति केचित् । अरुणवर्णा झिण्टीति भाष्यकारः ॥

**कुरण्टः** । उ. ११. कोरण्ट इति शिवपुरमुद्रितसंग्रहपाठः । **पीतपुष्पझिण्टी** । "कुरण्टकोऽत्र पीते स्या"दिति भावमिश्रः । N. O.—*Acanthaceæ* । हिं.– पीली कटसरैया ; बं.—पीतझिंटी । म.—पिंवळा कोरांटा ; गु.—पीळो कांटा अशेलियो ; तै.—पीतगोरंटे ; क.—पीतगोरंट ; मल.—मञ्ञकुरुञ्ञि മഞ്ഞക്കുറിഞ്ഞി । **नामानि**—"किंकिरातो कुरण्टश्च कनकः पीतपुष्पकः । पीताम्लानः सहचरः पीतसैरेयकश्च सः" इति । **गुणाः**—"पीतः कुरण्टकश्चोष्णस्तिक्तश्च तुवरः स्मृतः । अग्निदीप्तिकरो वातकफकण्डूहरः स्मृतः । शोथं रक्तविकारं च त्वग्दोषं चैव नाशयेत्" इति । सर्वांशो ग्राह्यः । इं.—Yellow barleria ॥

**कुरण्टकः** । चि. ११. **सुनिषण्णः** । कुरुण्टिका इति सुश्रुतपाठः । शरवालिकाभेद इति डल्हणः ।

**कुरण्टकः** । चि. १८. **पीतझिण्टी** । see **कुरण्टः** । म्लानक इति चक्रपाणिदत्तः ॥

**कुररः** । सू. ६ etc. कुरशब्दो कुरेति शब्दं राति वा । **प्रसहजातीयपक्षिविशेषः** । प्लवजातीयपक्षिविशेष इति वैद्यकशब्दसिन्धुः । "काको गृध्रउलूकश्च चिल्लश्च शशघातकः । चाषो भासश्च कुरर इत्याद्याः प्रसहाः स्मृताः" । रा. नि । हिं.—चील ; कुंज इत्येके; म.—कुलल अतिवेगवान् तांबूसवर्ण आणि श्वेतमस्तक असापक्षी ; त.—करुटपचि ; मल.—चेम्परुन्तु ചെമ്പരുന്ത്, कृष्णप्परुन्तु , गरुडन ; इं.—Brahmany kite , Bald eagle इत्येके ; ल.—*Haliastur indus* । अरुणः श्वेतमस्तको मत्स्यग्राहीति हेमाद्रिः । चिल्ह्याकारः नादोत्थापितमत्स्यः हस्तस्थमत्स्यग्राही इति चरकोपस्कारे । कुरया इति हाराणचन्द्रः । कुरल इति लोके इति डल्हणः । कुरांकुर इत्येके । टटेहरी इति चरकप्रसादनीकारः । केरलेषु विष्णुवाहनमिति कथ्यते । "उत्क्रोशः कुररो मत्स्यनाशनः" इति वैजयन्ती । see **प्रसहः** । **गुणाः**—"लघुर्बल्योऽग्निकृन्मेध्यः कुररो वातपित्तहा" । रा. नि ॥

**कुरुबकः** । सू. २६. कुत्सित ईषद्वालीनां अल्पमकरन्दत्वाद् रवोऽत्र । **रक्तसहचरः** । "तस्मिन् कुरवकोरुणे" इति वैजयन्ती । "रक्ते कुरवकः स्मृतः" इति भावमिश्रः" । N. O.—*Acanthaceæ* । हिं.—लालकटसरैया ; बं.—रक्तझिंटी ; म.—रक्तकोरांटा : गु.—रातो कांटा अशेलीयो ; तै.—अर्रा गोरंटे ; क.—केंपुगोरंटागिड ; मल.—चेंकुरुञ्ञि ചെങ്കുറിഞ്ഞി ; ल.—*Barleria cristata* । कुरवकस्य मुकुलमानने त्र्यश्रं भवतीतीन्दुः । **नामगुणाः**—"शोणी कुरवकनाम्नी कण्टकिनी शोणझिण्टिका चैव । उष्णः कटुः कुरवको वातामयशोफनाशनो ज्वरनुत् । आध्मानशूलकासश्वासार्तिप्रशमनो वर्ण्यः" । रा. नि ॥

**कुरुबाहुः** । सू. ६. पक्षिविशेषः । कुरबाहुक इति पाठः । रुरुबाहु-

रित्येव केरलपाठः । कुरुकुरु इति पाश्चात्ये । नीलग्रीवो रक्तशिखः श्वेतपक्ष इति हेमाद्रिः । कुरुरुक इति हाराणचन्द्रः । वाग्गुदपक्षी इति केरलेष्वेके ॥

**कुरुवकः** । कुरबकः ॥

**कुरुविन्दः** । सू. ६. कुधान्यविशेषः, कुरुक्षेत्रजव्रीहिभेदः । व्रीहिगुरुरिति डल्हणः । "कुराल् नेल्लु" इति केरलेष्वेके ॥

**कुरूटकः** । सू. ६. पत्रशाकविशेषः, सुनिषण्णः । कुरण्टकः, कुरुण्टकः कुरण्टिका कुरुण्टिका चेति पाठान्तराणि । शितिवारक इति हेमाद्रिः । स्थितिवारक इत्यरुणदत्तः । सितपाटक इति केचित् । अम्लानसदृशपत्रकुसुमा हरितपुष्पा चेति डल्हणः । उत्तरापथज इत्येके । पीतझिंटीत्यपरे ॥

**कुलकः** । सू. ६. कोलति संस्त्यायते कुलकः । कुत्सितं लक्यत आस्वाद्यते वा । **पटोलभेदः** । तिक्तपटोल इत्यपरे । पटोल इत्येके । वन्ध्यापटोल इति केरलेषु केचित् । कारवेल्लक इति चक्रपाणिदत्तः । करैलीकी जाति इति चरकप्रसादनीकारः । काकतिन्दुक इत्येवान्ये ॥

**कुलकः** । चि. ४. पटोलः ॥

**कुलत्थः** । सू. ६ etc. कुले तिष्ठति । **शिंबीधान्यविशेषः** । N. O.—*Leguminosæ* । हिं.—कुलथी, कुल्थी; बं.—कुलथीकलाय, कुलत्थकलाइ; म.—कुळिथ; गु.—कुलथी; कों.—कुलिथु; तै.—उलवलु; क.—हुराळि; त.—कोळ्ळु; तु.—कुडु; सिं.—कोल्लु; मल.—मुतिरा മുതിര, कोळ्ळु; दे.—हुलगे; पा.—किल्तत; अ.—हबुलकिलत; इं.—Horse gram; फ्र.—Dolic-a-deux fleurs; ल.—*Dolichos biflorus, D. uniflorus* । **नामानि**—"कुलित्थास्ताम्रवर्णाश्च कला-

वृत्तानिलापहा: । कर्षणा: पीतमुद्गाश्च अलिस्कन्धा: सुराष्ट्रका:" । ध. नि । **गुणा:**—"कुलत्थ: कटुक: पाके कषाय: पित्तरक्तकृत् । लघुर्विदाही वीर्योष्ण: श्वासकासकफानिलान् । हन्ति हिक्काऽश्मरीशुक्रदाहानाहान् सपीनसान् । स्वेदसंग्राहको मेदोज्वरक्रिमिहर: पर:" । भा. प्र । बीजं पुराणं ग्राह्यम् ॥

**कुलत्था** । उ. ३९. कुलत्थ इति संग्रहपाठ: । वनकुलत्थ इत्येके ॥

**कुलत्थिका** । चि. १३. वनकुलत्थ: । हिं.—चाक्षु, बनकुरथी, वनकुलथी; बं.—वनकुलथी; म.—रानकुळीथ; गु.—चमेड्य; क.—काड्हुलिग; मल.—काट्टुमुतिरा കാട്ടുമുതിര । मूलादिकं ग्राह्यम् । **नामानि**—"कुलत्थश्चक्रकश्चक: कुलाली वनजोपर: । अपरा दृक्प्रसादा च चक्षुष्या च कुलत्थिका" । म. पा । **गुणा:**—"वन्यो विशेषत: शीतो नेत्रामयविषापह:" । म. पा । "बलासहन्ता नयनामयघ्नो विशेषतो वन्यकुलत्थ उक्त:" । ध. नि । उत्तरस्थाने द्वात्रिंशाध्याये "श्यामाकुलत्थिकामूल"मित्यत्र कुलत्थिका द्वितीया त्रिवृदितीन्दु: ॥

**कुलहल:** । सू. १५. महामुण्डी । कुलाहल इति सुश्रुतपाठ: । मुण्डीति हेमाद्रि: । see **श्रावणी** । "महामुण्डी लोभनीया छिन्नग्रन्थिनिका स्मृता । भूकदंब: कुलहलो लंबशाल्क कदंबक:" । म. पा । कुकुरशुङ्गा इति प्राकृतैरुपदिश्यते इति भाष्यकार: । हिं.—बडीमुंडी, गोरखमुंडी; बं.—बडी थुलकुडी; म.—मोठीमुंडी, गोरखमुंडी; गु.—मोठी मुंडी, कलार; क.—हिरियबोंडथर; मल.—वलिय अटय्क्कामणियन् വലിയ അടയ്ക്കാമണിയൻ । **गुणा:**—महामुण्डी तु मधुरा तिक्ता चोष्णा रसायनी । रुच्या स्वर्या प्रमेहघ्नी वातनाशकरी मता । अन्ये गुणास्तु मुंडीवज्ज्ञेया वैद्यैश्च सूरिभि:" । नि. र । मूलं ग्राह्यम् ॥

**कुलिंगः** । सू. १५. अ. ग ; नक्तमाल इति सुश्रुतपाठः । तस्मात् करंज इत्येवात्र समीचीनः पाठः । कलिंग इत्येके । तदनुसृत्य व्याख्यातृभिर्बहुभिः कुटज इत्यवतारितः ॥

**कुलिंगः** । उ. ४०. के लिंगं चूडास्य । **वन्यचटकः** । वन्यो ग्राम्यचटकाकार इति डल्हणः । गृहचटक इत्येके । कुलिंगः कृष्णचटकः कलविङ्कापरपर्याय इति केचित् । त.–काट्टुकुरुवि, नेचुवु पट्ची ; मल.–काट्टुकुरुकिल् കാട്ടുകുരുകിൽ, कूरियाट्टा ; म.–सुगरण ; इं.–Weaver bird ; ल.–*Ploceus baya* । Fork-tailed shrike इति अविनाशचन्द्रः । "कुलिंगो मधुरः स्निग्धः कफशुक्रविवर्धनः" इति सुश्रुतः । **नामगुणाः**— "कुलिंगः कालकण्ठकः । कुलिंगः शीतलः स्निग्धः स्वादुशुक्रकफप्रदः" । इति भावमिश्रः ॥

**कुलिंगकः** । सू. ६. कुलिंगः ॥

**कुलित्थः** । चि. ३. कुलत्थः ॥

**कुलीरशृंगी** । चि. ४ etc. **कर्कटशृङ्गी** ॥

**कुल्माषः** । सू. ७ etc. कुल् अर्धस्विन्नो माषोस्मिन् । कुल्बन्धुर्माषोस्य वा । **अर्धस्विन्ना मुद्गादयः** । हिं.–घुघुनी, घुघुरी ; म.–घुगर्या ; सिं.—कोगु । "गोधूमाद्यास्तु कुल्माषाः अर्धस्विन्ना मताः क्वचित्" इति मदनपालः । Powdered barley, half boiled in warm water, and then made into cakes is called Kulmasha । यवपिष्टमुष्णोदकासिक्तमीषत्स्विन्नमपूपीकृतं कुल्माषमाहुरिति शिवदासः । नातिस्विन्नानि सस्यानीतीन्दुः । यवादयः स्विन्ना इत्येके । यवपिष्टमयो भक्ष्य इति डल्हणः । पारियात्रास्तु मुद्गान्मसूरानुत्सन्नसूदितान् कुल्माषानाहुः । महाकुष्ठचिकित्सितव्याख्यायामेकत्र "कुल्माषा यवपिष्टमया अम्लरसास्विन्नाः

शृंगाटादयः" इति डल्हणः । "अर्धस्विन्नास्तु गोधूमा अन्येपि चणकादयः । कुल्माषा इति कथ्यन्ते शब्दशास्त्रेषु पण्डितैः" । भा. प्र । "धान्यानि चैव गोधूमास्तथा च चणकादयः । हिंगुसैन्धवयुक्ताश्च जले ह्यर्धविपाचिताः । कुल्माषा इति कथ्यन्ते" । नि. र । "यस्य धान्यस्य कुल्माषास्तद्धान्यं हिंगुसैन्धवैः । युक्तं जलेन संपाच्यं यथा सम्यक् न पाचितम् । ते कुल्माषा गुणैर्धान्यसदृशाः परिकीर्तिता" । इति केचित् । गुणाः—कुल्माषा गुरवो रूक्षा वातला भिन्नवर्चसः" । भ. पा ॥

**कुशः** । चि. ८ etc. कौ शेते । दर्भः । "शरेक्षुकुशकाशाना"मित्यत्र इक्षुवालिकेति चरकपाठः । "कुशो रामसुते द्वीपे पापिष्ठे योक्त्रमत्तयो । कुशी फाले कुशो दर्भे कुशा वल्गा कुशं जले" इति मेदिनी ॥

**कुशद्वयम्** । सू. १५. दर्भद्वयम् स्थूलसूक्ष्मभेदेन । दर्भः कुशश्च ; कुशः ह्रस्वदर्भ इति डल्हणः ॥

**कुशमुत्तोली** । क. १. कुशतृणकृतपात्रविशेषः , कुशविरचितः पुटकः । कुशमूढ इति सुश्रुतपाठः । हिं.—कुशाकी डलिया ; मल.—दर्भक्कूटा । जालवद्बहुरन्ध्रक एव मुत्तोलीति केचित् ॥

**कुशा** । सू. २८ etc. भग्नव्रणबन्धनोपयुक्तं वंशादिकं द्रव्यम् । वेणुदलं , वंशादिकम्बिका । हिं.—खपाची ; म.—कपचा ; सिं.—कीर ; पतुरा ; मल.—मुळवारि മുളവാരി, तैतल् , आळि , अलकु , पुळुक्का ; इं.— Splint , a thin piece of wood to hold a broken bone when set । न तु दर्भेति चन्द्रनन्दनः । पुल्लिंगेन केचित् । कुशी इति केषांचन पाठः । "कुशी भग्नास्थिबन्धःस्या"दिति वैजयन्ती । कुश्यमिति पठन्त्यन्ये । कुशा नाम सामगानां स्तोत्रगाने तालव्यञ्जनाय ग्राह्य औडुंबरशंकुस्तत्साम्यात् कुशाशब्दोत्र तदाकारे भग्नसंश्लेषणे

फलके प्रवर्तत इति निश्चीयते इति भाष्यकारः । शकल इति पाठ्य-कारः ॥

**कुशाह्वयः** । उ. २७. वंशादिकंबिका । see कुशा । "मधूकोदुंब-राश्वत्थपलाशककुभत्वचः । वंशसर्जवटानां वा कुशार्थमुपसंहरे"दिति सुश्रुतः ।

**कुष्ठम्** । सू. १५ etc. कुष्णाति रोगं देहं वा कुष-कथन् । कौ तिष्ठतीति वा । स्वनामख्यातमध्यमगन्धभेषजाविशेषः । "कुष्ठं रोगे पुष्करेऽस्त्री" इति मेदिनी । "मृगशृङ्गाकृतिं कुष्ठं कीटदोषविवर्जितम्" इति । N. O.—*Zingiberaceae* । हिं.—कूठ ; उर्दु.—कुसत , कोष्ठं ; बं.—कुड , पाचक ; म.—कोष्ठ ; गु.— कुठ , उपलेट ; तै.—चङ्गलकोष्ठं , चेङ्गलवकोष्ठं ; क.—कोष्ठं , कोठ ; त.—कोष्ठं ; सिं.—उपुल्कोल , कोट्टं ; मल.—कोट्टं കൊട്ടം ; काश्मी.—पातालपद्मिनी ; पा.—कोतह ; अ.— कुस्तबेहेरी ; फ्र.—Costus elegant ; ज.—Practige Kostwurz ; इं.—Costus ; ल.—*Saussurea Lappa* , *Aplotaxis auriculata* । नामानि—"कुष्ठं रोगो गदो व्याधिरुत्पलं पाकलं रुजः । वाप्यं वानीरजं रामं कौबेरं पारिभद्रकम्" । ध. नि । मूलं ग्राह्यम् । "कुष्ठमुष्णं कटु स्वादु शुक्रलं तिक्तकं लघु । हन्ति वातास्रवीसर्पकासकुष्ठमरुत्कफान् । भा. प्र ॥

**कुसुंभः** । सू. ५ etc. कुस्यति । 'कुस संश्लेषणे । स्वनामख्यातवृक्षः । N. O.—*Compositae* । हिं.—कर्ड , कुसूम , कसूम , कुसुं ; बं.—कुसुमफूल ; म.—कर्डई ; गु.—कुसुंबो ; तै.—कुसुंबा , लत्तुक , लक , वंगारमु ; क.—कुसुबे , कुसुबि , कुशिबिगिड ; त.—चेन्तुरुकु , मत्तिरुकं चेटि ; चेन्तूरकं ; सिं.—बनुप् ; मल.—कुयुम्पु കയുമ്പു , कुयुम्पप्पू , चेन्तूरकं ; अ.—अखरीज अबूल अस्फर ,

झुरतुम ; पा.—गुलेमास्कर, खसकदाना ; फ्र.—Cartheme, faux safran ; ज.—Farber safflor ; इं.—Safflower, Parrot seed, Bastard saffr n ; ल.—*Carthamus tinctorius* । नामानि—"कुसुंभं पावकं पीतमलक्तं वस्त्ररञ्जनम् । तद्बीजं कीलता लट्वा शुद्धा पद्मोत्तरं तथा" । ध. नि । पुराणं बीजं ग्राह्यम् । गुणाः—"कुसुंभो वातलो रूक्षो विदाही कटुकः स्मृतः । मूत्रकृच्छ्रं कफं रक्तपित्तं चैव विनाशयेत् । कुसुंभपुष्पं सुस्वादु त्रिदोषघ्नं च भेदकम् । रूक्षमुष्णं पित्तलं च केशरञ्जनकारकम् । कफनाशकरं चैव लघु प्रोक्तं मनीषिभिः" । वै. नि । स त्रिविधः महाह्रस्ववनकुसुंभभेदात् ॥

**कुसुंभजम्** । सू. ५. कुसुंबबीजतैलम् । हिं.—कुसुंभेका तेल ; बं.—कुसुमबीजेर तेल ; मल.—कुयुम्पेण्णा കയുമ്പെണ്ണാ । गुणाः—"कुसुंभतैलमुष्णन्तु विपाके कटुकं गुरु । विदाहकं विशेषेण सर्वदोषप्रकोपनम्" । अ. सं ॥

**कुस्तुंबरी** । चि. १. धान्यकम् ॥

**कुस्तुंबरु** । उ. ३२. कुत्सितं तुंबति कुस्तुंबरु, तुबि तुबि अदने । धान्यकम् । आर्द्रधान्यकमिति केचित् । "कुस्तुंबरु न विद्येत यत्र तत्र च धान्यकं" इति दृश्यते ॥

**कूर्चिका** । सू. ५. कूर्चति, कूर्च विकारे । क्षीरविकारः । विग्रथितं तक्रम् । विनष्टं तक्रं घनावयवमिति डल्हणः । दधितक्रकृता किलाटिकेत्यरुणदत्तः । दध्ना तक्रेण वा सह पाकात् पृथग्भूतं घनद्रवभागं क्षीरं कूर्चिकेति हेमाद्रिः । दधिया छाछके बनाये हुए घनपिण्डको कूर्चिका कहते हैं । "पक्वं दध्ना समं क्षीरं विज्ञेया दधिकूर्चिका । तक्रेण तक्रकूर्चीका तयोः पिण्डः किलाटकः" । म. पा । कूर्चीकेति संग्रहपाठः । "क्षीरमुष्णीकृतं तक्रयुक्तं स्यात् कूर्चिकाह्वय"मित्येके ।

स च पाकाद्विना क्षीरशाकः । हिं.—फटादूध ; बं.—क्षीरसा ; म. विरजण ; मल.—पालक्कट्टा പാൽക്കട്ട , कट्टत्तयिर् ; इं.—Inspissated milk । "ग्राहिणी वातला रूक्षा दुर्जरा तक्रकूर्चिका" इति सुश्रुतः । "किलाटः कूर्चिका चेति क्षीरस्य विकृती उभे" इति हलायुधः । see **किलाटः** ॥

**कूर्परः** । सू. २७. भुजमध्यभागः । मल.—कैमुट्टु ; इं.—Elbow । "कफोणिः कूर्परः स्मृतः" इति हलायुधः ॥

**कूर्मः** । सू. ६. कुरति , कुमूर्वति वा । कच्छपः । स तु नानाविधो वर्तुलदीर्घमहदादिभेदेन । हिं.—कच्छुआ ; बं.—काछिम ; म.—कांसव ; क.—आवे ; त.—आमै ; सिं.—इदिबुवोय ; मल.—आमा ആമ ; इं.—Tortoise ; ल.—*Emys orbicularis* । **नामानि**—"कच्छपः कमठः कूर्मो गूढांगो धरणीधरः । कच्छेष्टः पल्वलावासो वृत्तः कठिनपृष्ठकः" । ध. नि । **मांसगुणाः**—"कच्छपो मधुरः स्वादुः शुक्रवृद्धिकरो मतः । वातश्लेष्मप्रजननो बृंहणो रूक्ष एव च" । अत्रि. सं । "कच्छपो बलदो वातपित्तनुत पुंस्त्वकारकः" । भा. प्र । "बल्यो वातहरो वृष्यश्चक्षुष्यो बलवर्धनः । मेधास्मृतिकरः पथ्यः शोषघ्नः कूर्म उच्यते" इति चरकः ॥

**कूष्माण्डः** । सू. ६ etc. कुत्सित ऊष्म अण्डेषु बीजेषु यस्य । **स्वनामप्रसिद्धफलशाकलता** । N. O.—*Cucurbitaceae* । हिं.—पेठा , कुम्हडा , कुंभडा , कोहडा , कोहला ; बं.—कुमडागाछ , साचि कुमुडा ; म.—कोहळा , कोहोळा ; गु.—दारकोहोला , भुरुंकोलुं , पदकोलुं ; कों.—कुवाळे ; तै.—बूदिगुम्मडि , गुम्मडि , पुह्लाह ; क.—बिळेकुंबळ , बूदिकुंबळबाळ्लि ; तु.—करुकुंबुड ; दखा.—पेथा ; उत्.—कखाडु , पानीकखारु ; त.—कलियाणपूचुणि , पराङ्किकायि ; सिं.—अलुपुसुल् ; मल.—

कुम्पळं കുമ്പളം ; इं.—White gourd, Pumpkin ; ल.—*Beninkasa cerifera, Cucurbita pepo* ; पा.—रूमाकुदु ; अ.—महदेवा । **नामानि**—"कूष्माण्डकी पुष्यलता फलवल्ली च वल्लिका । गुडयोगफला पीतपुष्पिका च महाफला" । स. नि । फलं ग्राह्यम् । **गुणाः**—"कूष्माण्डं बृंहणं वृष्यं गुरु पित्तास्रवातनुत् । बालं पित्तापहं शीतं मध्यमं कफकारकम् । वृद्धं नातिहिमं स्वादु सक्षारं दीपनं लघु । वस्तिशुद्धिकरं चेतोरोगहृत् सर्वदोषजित्" । भा. प्र । "मूत्राघातहरं प्रमेहशमनं कृच्छ्राश्मरीछेदनं विण्मूत्रग्लपनं तृषार्तिशमनं जीर्णांगपुष्टिप्रदम् । वृष्यं स्वादुतरं स्वरोचकहरं बल्यं च पित्तापहम् कूष्माण्डं प्रवरं वदन्ति भिषजो वल्लीफलानां पुनः" । रा. नि ॥

**कृकलासः** । नि. ५. कृकं कण्ठं लासयति अण् । **सरटः** । हिं.—गिरगिट , गिरगट , किरला ; किर्काट इत्येके ; बं.—गिरगिटि , काँकलास ; म.—सरड , शरट ; त.—ओणान ; सिं.—कटुस्सा ; मल.—ओन्तु ; इं.—Blood-sucker or Garden-lizard ; ल.—*Calotes versicolor* । **नामानि**—"सरटः कृकलासः स्यात् प्रतिसूर्यशयानकः" इति हलायुधः ॥

**कृकवाकुः** । चि. ८. कृकेण शिरोग्रीवेण वक्ति । **कुक्कुटः** । "कृकवाकुर्मयूरेपि सरटे चरणायुधे" इति विश्वः ॥

**कृकाटिका** । शा. ३ etc. **घाटा** ॥

**कृतः** । सू. १७. **स्नेहादिभिः संस्कृतो यूषः** । धान्यकपिप्पल्यादिसुसंस्कृत इत्येके । शुण्ठीलवणादिसंस्कृतमित्यरुणदत्तः । see **अकृतः** । Prepared soup is that in which occur oil or ghee, salt, and also spices of every kind । "व्योषाज्यसैंधवैः सिद्धः स यूषः कृतसंज्ञकः । एतैर्हीनोऽकृतो यूषः क्रमात् कान्ते गुरुर्लघुः" इति ॥

श्रः। पुराणं ग्राह्यम्। "कृष्णव्रीहिर्वरस्तेषां कषायानुरसो लघुः। तस्मादल्पान्तरगुणाः क्रमशो व्रीहयोऽपरे" इति सुश्रुतः। see व्रीहिः॥

**कृष्णसर्पः**। चि. १ etc. दर्वीकरसर्पविशेषः। हिं.—काले सांप; बं.—केउटा साप; मल.—करिमूर्क्कन् കരിമൂർക്കൻ; ल.—*Cobra di capello*॥

**कृष्णसर्षपः**। उ. ३. राजिका नाम कृष्णवर्णसर्षपः। हिं.—लाई, कालीराई; बं.—कालसरिषा; म.—काळीमोहरी; गु.—काळीराई; क.—करेसासुवे; मल.—करिङ्कडुकु കരിങ്കടുക; इं—Black mustard। नामगुणाः—"राजक्षवकः कृष्णा तीक्ष्णफला राजराजिका राज्ञी। सा कृष्णसर्षपाख्या विज्ञेया राजसर्षपाख्या च। राजसर्षपकास्तिक्तः कटूष्णो वातशूलनुत्। पित्तदाहप्रदो गुल्मकण्डूकुष्ठव्रणापहः" । रा. नि॥

**कृष्णा**। सू. १० etc. कर्षति कृष्णा, श्यामलत्वाद्वा। पिप्पली। वाजीकरणाधिकारे "कृष्णाधात्रीफलरजःस्वरसेन सुभावितं" इत्यत्र "एवमामलकं चूर्णं स्वरसेनैव भावितं" इत्येव सुश्रुतपाठः। "कृष्णा स्याद्द्रौपदीनीलीकणाद्राक्षासु योषिति" इति मेदिनी॥

**कृष्णाहिः**। शा. १ etc. कृष्णसर्पः॥

**केंबुकः**। सू. ६ etc. के शिरसि अमयति रुजति। कन्दशाकविशेषः। केबुककेमुकाविति पाठौ। N. O.—*Cruciferæ*। हिं.—केमुआं, फुलकोबी; केउंआ; बं.—केउंगाछ; म.—कोबी; गु.—कोबी; तै.—कोसुगुद्दे; क.—कोसुगुड्डे; त.—मुट्टैकोस्, कोविप्पू; मल.—मुट्टक्कूस् മുട്ടക്കൂസ്, मुट्टगोस्; तिङ्ङ्ळूरि; इं.—Cabbage; ल.—*Brassica olerecea*। नामानि—"केंबुकः केमुकः केंबुः सुपत्रा दलमालि-

नी । केलूटः स्वल्पविटपः स्वादुकन्दश्च पोलिनी" । बृ. नि. र । **गुणाः**—केमुकं कटुकं पाके तिक्तं ग्राहि हिमं लघु । दीपनं पाचनं हृद्यं कफपित्तज्वरापहम् । कुष्ठकासप्रमेहास्रनाशनं वातलं कटु" । भा. प्र । कन्दादिकं ग्राह्यम् । मूत्राघातचिकित्सिते "कटुकैलाकरञ्जं" चेत्यत्र "केंबुकैलाकरञ्ज"मित्यवश्यं पठनीयं चरकमतानुसारिणा ॥

**केलूटम्** । सू. ६. केंबुकः । केलुट इति पाठः । जलोदुंबर इति हेमाद्रिः । हिस्मकसंज्ञमुदुंबरभेद इत्यरुणदत्तः ॥

**केशी** । उ. ६ etc. **मांसी** । भूतकेशीति चक्रपाणिदत्तः । शतावरी महाशतावरी वेत्येके । see **पूतनाकेशी** ॥

**केसरः** । उ. ३५. केसराः सन्त्यस्य । "केसरं हिंगुनि क्लीबं किंजल्के न स्त्रियां पुमान् । सिंहच्छटायां पुंनागे बकुले नागकेसरे" इति मेदिनी । **बकुलवृक्षः** । N. O.—*Sabotaceae* । **हिं.**—मौलसिरी, मौलसरी; **बं.**—बकुलगाछ; **म.**—बकुळ, बकुळी, रंजनसाल; **गु.**—बोलसिरी; **उत्.**—बउडकुडि; **तै.**—पोगड, वकुळ, पामडा; **क.**—बकुळ, रेंजे, पगडेमर; **त.**—वकुळं, मकिळमरं; **तु.**—रेंजिमर; **कों.**—बोवळिरूकु; **बर्मा.**—खया; **सिं.**—मुहुनमल्; **मल.**—इलञ्जि ഇലഞ്ഞി, इरञ्जि, मकिरमरं; **पोर्टु.**—Pomme d' Adami; **फ्र.**—Mimusope Elengi; **ज.**—Affengesict; **इं.**—Mimusops; **ल.**—*Mimusops Elengi* । **नामानि**—"बकुलस्तु सीधुगन्धः स्त्रीमुखमधुदोहलश्च मधुपुष्पः । सुरभिर्भ्रमरानन्दः स्थिरकुसुमः केसरश्च शारदिकः" । रा. नि । पुष्पं ग्राह्यम् । **गुणाः**—"बकुलस्तुवरोऽनुष्णः कटुपाकरसो गुरुः । कफपित्तविषश्वित्रक्रिमिदन्तगदापहः" । भा. प्र । "बकुलाभावतो देयं कह्लारोत्पलपङ्कजं" इति भावमिश्रः ॥

**केसरम्** । सू. ६ etc. नागकेसरम् । "सकेसरं चतुर्जातम्" । अमृतप्राशयोगे केसरपदस्थाने हेममित्येव चरकपाठः ॥

**कैडर्यः** । उ. १. स्वनामप्रसिद्धो निंबविशेषः । कट्फल इति भाष्यकारः N. O.—*Rutaceae; Aurantiaceae* इत्येके । हिं.—कृष्णानिंब, मीठानीम, बरसंग, करैयपक; बं.—घोडानिमविशेषः, कार्याफली; म.—कढ्यानिंब; गु.—मीठोलींबडो; तै.—करिवेप्पमु; क.—करिवेवु; त.—करुवेप्पिलै; सिं.—करबेंबिय, करापिंच; मल.—करिवेप्पु കറിവേപ്പ്; कों—करबेवु; इं.—Curry-leaf tree; ल.—*Bergera Koenigii, murraya koenigii* । नामानि—"कैडर्यः कालशाकश्च सुरभिः कृष्णनिंबकः । श्रीपर्णिका कुमुदिका कट्फलः सुरभिच्छदः" । स. नि । अन्यच्च—"कैडर्योऽन्यो महानिंबो रामणो रमणस्तथा। गिरिनिंबो महारिष्टः शुक्रशालः कफाह्वयः" । रा. नि । त्वग्पत्रादिकं ग्राह्यम् । गुणाः—"कैडर्यः कटुकस्तिक्तः कषायः शीतलो लघुः । सन्तापशोषकुष्ठास्रक्रिमिभूतविषापहः" । रा. नि ॥

**कोकिलः** । सू. ६. कोकते चित्तं गृह्णाति । पिकः । हिं.—कोयल; बं.—पिक, कोकिल; म.—कोकिळा; त.—कुयिल्; सिं.—कोवुला; मल.—कुयिल् കുയില്; इं.—Cuckoo, Koel; ल.—*Cuculus micropterus, Eudynamis honorata* । नामानि—"कोकिलः परपुष्टश्च कृष्णः परभृतोऽसितः । वसन्तदूतस्ताम्राक्षो गन्धर्वो वनभूषणः" । ध. नि । गुणाः—"कोकिलो बृंहणः प्रोक्तो मधुरो बलवर्धनः । कफघ्नो मधुरो ग्राही चक्षुष्यः कफकासजित्" । ध. नि । "कोकिलो दीपनो ग्राही चक्षुष्यः क्षयकासजित्" । म. पा । "कोकिलः श्लेष्मलो ज्ञेयः पित्तसंशमनो मतः" । अत्रि. सं ॥

**कोकिलाक्षकः** । चि. २२. कोकिलस्याक्षीव रक्तमक्षि पुष्पं यस्य । इक्षुरः ॥

**कोठः** । नि. २. क्षुद्रमण्डलरोगविशेषः । हिं—चप्पड । भाल्लुकीये —"वरटीदष्टसङ्काशः कण्डूमान् लोहितोऽस्रकफपित्तात् । क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः" इति ॥

**कोद्रवः** । सू. ६ etc. कौति । 'कु शब्दे' । द्रवति । 'द्रु गतौ' । केन वायुना द्रवति वा । धान्यविशेषः । हिं.—कोदों, कोदव; बं.—कोदोंधान, गोम; म.—हरीक; गु.—कोदरो; तै.—आलुवालु; क.—हारकं; त.—वरकु; सिं.—अमु, हमुय; मल.—वरकु വരക; अ.—कोदु; इं.—Common millet; ल.—*Paspalum scrobiculatum* । नामगुणाः—"कोद्रवः कोरदूषः स्यादुद्दालो वनकोद्रवः । कोद्रवो वातलो ग्राही हिमः पित्तकफापहः । उद्दालस्तु भवेदुष्णो ग्राही वातकरो भृशम्" । भा. प्र । "स च देशविशेषेण नानाभेदः प्रकीर्तितः" इति नरहरिः । पुराणं धान्यं ग्राह्यम् ॥

**कोपना** । चि. २१. रक्तकरवीरः । हिं.—लाल कनेर; बं.—लालकरवी; म.—तांबडी कणेर; गु.—राती कणेर; क.—केगणालिंगे; त.—चेव्वलरि; मल.—चुवन्न कणवीरं ചുവന്ന കണവീരം; इं.—Red oleander । श्रीवेष्टक इति पाठ्यकारः ॥

**कोरण्टः** । उ. २४. पीतपुष्पझिण्टी । see **कुरण्टः** ॥

**कोरदूषः** । सू. ६ etc. कोरं रुधिरं दूषयति । **कोद्रवः** ॥

**कोलः** । सू. ६ etc. बदरी । मध्यप्रमाणो बदर इत्येके ॥

**कोलः** । शा. ६. पीनत्वात्, कुल संस्त्याने । वराहः । "कोलो भेलक उत्संगेऽङ्कपाल्यां चित्रके किरौ । कोलं च बदरे कोला पिप्पल्यां चव्यभेषजे" इति हैमः ॥

**कोलमज्जा** । सू. २२. बदरीबीजस्य मज्जा । हिं.—बेरीके गुठली-
की मींग ; मल.—लन्तक्कुरुप्परिप्पु ലന്തക്കുരുപ്പരിപ്പ് ॥

**कोलास्थि** । सू. २१ etc. कोलमज्जा ॥

**कोलास्थिमज्जा** । चि. ७. कोलमज्जा ॥

**कोली** । सू. १५. कुल संस्थाने । बदरी । बदरीति सुश्रुतपाठः ॥

**कोविदारः** । चि. ९. कुं भूमिं विदृणाति । पीतकुसुमः काञ्चनारः । "कोविदारकलिकातिकोमला तक्रसिद्धतिलतैलपाचिता । हिंगुवासकटुवासवासिता वेसवारलुलितातिलोभदा" इति पाकशास्त्रे । कोविदारः शरदि पुष्पति । "काञ्चनारः काञ्चनकः पाकारी रक्तपुष्पकः । कोविदारोस्य भेदःस्या"दिति मदनपालः । कोविदारः काञ्चनारः कर्बुदारश्चेति स त्रिविधः पीतरक्तश्वेतभेदेन । N. O.—*Leguminosae* । हिं.—पीला कचनार ; बं.—पीतकांचन ; म.—कोरळ ; गु.—कांचनार ; तै.—देवकांचनमु ; क.—मंदार, शेयाड्ल, कञ्चिवाळदमर ; त.—मन्तारै ; सिं.—कोबोलील ; मल.—मञ्ञमन्तारं മഞ്ഞമന്താരം, मलयकत्ति इति केचित् । इं.—Purple Bauhinia ; ल.—*Bauhinia variegata* । **नामानि**—"कोविदारः काञ्चनारः कुद्दालः कनकारकः । कान्तपुष्पश्च करकः कान्तारो यमलच्छदः । पीतपुष्पः सुवर्णारो गिरिजः काञ्चनारकः । युग्मपत्रो महापुष्पः स्याच्चतुर्दशधाभिधः" । रा. नि । **गुणाः**—"कोविदारो दीपनः स्यात् कषायो व्रणरोपणः । संग्राही सारकः स्वादुः पर्णशाकेषु चोत्तमः । मूत्रकृच्छ्रं त्रिदोषं च शोषं दाहं कफं तथा । वातं हरेत् पुष्पगुणा रक्तकाञ्चनपुष्पवत्" । वै. नि । "काञ्चनारो हिमो ग्राही तुवरः श्लेष्मपित्तनुत् । कृमिकुष्ठगुदभ्रंशगण्डमालाव्रणापहः । कोविदारोपि तद्वत्स्यात्तयोः पुष्पं लघु स्मृतम् । रूक्षं

संग्राहि पित्तास्रप्रदरक्षयकासनुत्" । भा. प्र । त्वगादिकं ग्राह्यम् ॥

**कोशवल्यौ** । सू. १५. कोशातकीद्वयम् । कटुकोशातकी राजकोशातकी च । धामार्गवो राजकोशातकी चेत्यरुणदत्तः । धामार्गवकृतवेधनाविति सुश्रुतपाठः ॥

**कोशातकः** । उ. १८. कोशातकी ॥

**कोशातकम्** । सू. ६ etc. कोशातकीफलम् । काली तोरईका शाक । पटोलमिति पदार्थचन्द्रिका । दधित्थमितीन्दुः ॥

**कोशातकी** । सू. ३० etc. कोशमतति । 'अत सातत्यगमने' । वनेषु वृक्षादीनामुपरि प्रतानबहुला पीतकुसुमकृष्णबीजा काचित् तिक्तरसप्रधाना लताविशेषः । N. O.—*Cucurbitaceæ* । हिं.—कडवी तोरई, काली तोरई, जंगली तोरई; बं.—झिंगा; म.—कडूदोडकी ; गु.—कडवी घीसोडी ; तै.—चेन्दुबीर, बेरिवीर, चेतिबीर ; क.—कहिहीरे ; कों.—कडुघोसलि ; त.—पेय्पीर्कु, पेप्पीर्क्कं; सिं.—तित्तवेटकोलु ; मल.—काट्टुपीच्चि കാട്ടുപീച്ചി, आट्टङ्ङा, पुट्टल्पीरं; इं.—Bitter Luffa ; ल.—*Luffa Amara* । नामानि—"कोशातकी कृतछिद्रा जालिनी कृतवेधनी । क्ष्वेडा सुतिक्ता घण्टाली मृदंगफलिका मता" । ध. नि । गुणाः—"क्ष्वेडस्तिक्तः कटुस्तीक्ष्णो प्रगाढश्च प्रशस्यते । कुष्ठपाण्ड्वामयप्लीहशोफगुल्मगरादिषु" । ध. नि । घुसुण्डीति लोके इति डल्हणः । वल्लीफलादिकं ग्राह्यम् ॥

**कोशातकीचतुष्कम्** । सू. ३०. क्ष्वेडो धामार्गवः पटोली देवदाली चेति हेमाद्रिः । कोशातकी घोषकः ; सा च फलपुष्पभेदाच्चतुर्विधा बृहत्फला अल्पफला पीतपुष्पा श्वेतपुष्पा इतीति डल्हणः । कोशातकी धामार्गवः महाकोशातकी देवदाली चेति केरलेषु ॥

**कौचवः** । सू. ३. चित्रकंबलः । कुथा । कुथक इति चरकपाठः । गर्म और भारी वस्त्र इति चरकप्रसादनी । रांकववस्त्रभेद इत्यरुणदत्तः । तवरक इत्यन्ये । कौचैव इति केषांचन पाठः । हस्तिपृष्ठस्थकंबल इत्येके । Painted blanket इत्यविनाशचन्द्रः ॥

**कौटजः** । चि. १०. इन्द्रयवः ॥

**कौटजं बीजम्** । चि. ८. इन्द्रयवः ॥

**कौन्ती** । सू. २१. कुन्तिषु देशेषु भवा । हरेणु । see **रेणुकः** ॥

**कौलत्थः** । सू. ६ etc. कुलत्थयूषः । कुलथीका यूष । "कुलत्थयूषो मधुरः कषायो भवेत् स वातस्य कफस्य हन्ता । महाश्मरीवायुजगेहहन्ता सन्दीपनी मेदविशोषणश्च" इति ॥

**कौशाम्रः** । चि. १३. कोशाम्रकोशाम्लाविति पाठौ । **वनाम्रवृक्षविशेषः, क्षुद्राम्रः** । बहुकीटमाम्रफलमिति हाराणचन्द्रः । **हिं.**—कोशंभ, छोटा आम, कोशाम; **बं.**—केओडा, केवड़ाफल; **म.**—कोशिंब, लाल रान आंबा; **गु.**—कोशम, हलकीजातनों आंबो; **क.**—जूरिमाचु; **त.**—काद्दुमामरं; **मल.**—कोम्मावु കോമ്മാവു, काट्टुमावु, कुरुट्टुमावु; **ल.**—*Magnifera sylvantuca* । **नामानि**—"कोशाम्रश्च घनस्कन्धो वनाम्रो जतुपादपः । क्षुद्राम्रश्चेति रक्ताम्रो लाक्षावृक्षः सुरक्तकः" । रा. नि । फलं ग्राह्यम् । **गुणाः**—"कोशाम्रः कुष्ठशोथास्रपित्तव्रणकफापहः । तत्फलं ग्राहि वातघ्नमम्लोष्णं गुरु पित्तलम् । पक्वन्तु दीपनं रुच्यं लघूष्णं कफवातनुत्" । भा. प्र ॥

**कौशेयम्** । सू. ३. कोशादुत्थितम् । **कोषकारकीटतन्तुमयप्रतिच्छदविशेषः** । पट्टवस्त्रीयतूलिका । रेशमी वस्त्रोंके गद्दे इति शिवदीपिका । यन्त्रसरमिति लोके इत्येके । कृमिकोशोत्थमिति

पदार्थचन्द्रिका । "कौशेयं कृमिकोशोत्थे" इति वैजयन्ती । Silken bedsheet or quilt । मल.—पट्टुविरि പട്ടുവിരി, पट्टुकोतटि ॥

**कौसुंभम्** । सू. ६. कुसुंभस्य पत्रम् । "कुसुंभपत्रं मधुरं नेत्र्यमुष्णं कटु स्मृतम् । अग्निदीप्तिकरं चातिरुच्यं रूक्षं गुरु स्मृतम् । सरं पित्तकरं चाम्लं गुदरोगकरं मतम् । कफविण्मूत्रमदानां नाशकं परमं मतम्" । वै. नि ॥

**क्रकरः** । सू. ६. क्रेति करोति वाशते । पक्षिविशेषः । हिं.–करेटू, कुवार, कयार; बं.–करकटियापक्षी ; म.–करढोंक ; सिं.–केरवकुन् । इरट्टवालन्किळि इति केरळेष्वेके ; ल.–*Perdix sylvatica* । कयारकरवारा इति भाषेत्येके । कुचशब्दकारी पीतः कृष्णगलः कृष्णचञ्चुचरणो रक्तपृष्ठ इति हेमाद्रिः । लावान्तकः कपिञ्जलात् स्थूल इति डल्हणः । गुणाः–"वातपित्तहरा वृष्या मेधाग्निबलवर्धनाः । लघवः क्रकरा हृद्यास्तथा चैवोपचक्रकाः" इति सुश्रुतः । कुकर इति चरकप्रसादनी । "कृकणक्रकरौ समौ" इत्यमरः ॥

**क्रमुकः** । सू. १५ etc. क्रामति क्रमुकः । पूगवृक्षः । N. O.—*Palmaceæ* हिं.–सुपारी ; बं–शुपारी ; म.—पोफळीचेझाड, सुपारी ; गु.–सोपारी ; तै.–क्रमुकमु ; क.–अडिकेमर ; कों.–फोंपळ ; तु.–कंगु ; त.–कमुकु ; पाक्कुमरं ; सिं.–पुवक् ; मल.–अटय्क्कामरं അടയ്ക്കാമരം, कवुङ्ङु ; इं.–Areca or Betel-nut palm ; ल.—*Areca catechu* । नामानि—"पूगस्तु पूगवृक्षश्च क्रमुको दीर्घपादपः । वल्कतरुर्दृढवल्कश्चिक्कणश्च मुनिह्वयः" । रा. नि । फलपुष्पादिकं ग्राह्यम । गुणाः—"पूगं गुरु हिमं रूक्षं कषायं कफपित्तजित् । मोहनं दीपनं रुच्यमास्यवैरस्यनाशनम् । आर्द्रं तद्गुर्वभिष्यन्दि वह्निदृष्टिहरं स्मृतम् । स्विन्नं दोषत्रयच्छेदि

दृढमध्यं तदुत्तमम्" । भा. प्र । अपिच—"आमं पूगं कषायं मुखमलशमनं कण्ठशुद्धिं विधत्ते रक्तामश्लेष्मपित्तप्रशमनमुदराध्मानहारं सरं च । शुष्कं कण्ठामयघ्नं रुचिकरमुदितं पाचनं रेचनं स्यात्तत्पर्णेनायुतं चेज्झटिति वितनुते पाण्डुवातं च शोषम्" । रा. नि । असनतिनिशादिगणे वृक्षरोध्र इत्यन्ये, साराधिकारादिति डल्हणः । श्यामादिगणव्याख्यायां पट्टिकारोध्र इत्यरुणदत्तः । रोध्र इति पदार्थचन्द्रिका । पूगफलमित्येव डल्हणः । हेमाद्रिरपि पूगमित्येव व्याख्यायति । "क्रमुकस्तु पुमान् भद्रमुस्तके ब्रह्मदारुणि । फले कार्पासिकायाश्च पट्टिकालोध्रपूगयोः" इति मेदिनी ॥

**क्रोष्टुकः** । नि. १५. क्रोशति । क्रोष्टूक इति पाठः । **जंबुकः** । स्थूलसृगाल इत्यरुणदत्तः ॥

**क्रौञ्चः** । सू. ६ etc. क्रुञ्च + स्वार्थे अण् । **प्लवजातीयबकपक्षी** । "क्रौञ्चो द्वीपप्रभेदे स्यात् पक्षिपर्वतभेदयोः" इति मेदिनी । बकभेद इति भाष्यकारः । कुरंज (कोंचि) इति लोके इति डल्हणः । हंकूह इति प्रसिद्धः पक्षी इति जगद्धरः वेणीव्याख्यायाम् । कुंज इति भावप्रकाशहिन्दीव्याख्याता । करांगुळ इति रामाश्रमी । ढेक इत्येके । **बं.**—कोंचबक ; **त.**—अन्रिल् पट्चि ; **सिं.**—कोसलिहिणिय ; **मल.**—अण्टन्कोक्कु ഞാണ്ടൻകൊക്ക, अन्नल्पक्षि ; **इं.**— Curlew ; **ल.**—*Ardea jaculator* । **नामानि**—"क्रौञ्चकः क्रोंचवी दीर्घरवः स्याद्रात्रिजागरः" । ध. नि । **गुणाः**—"क्रौञ्चो वृष्योतिरुचिकृदश्मरीं हन्ति नित्यशः । शोषमूर्च्छाहरो बल्यो हन्ति कासमरोचकं" इत्यत्रिसंहितायाम् । शर्करारोगचिकित्सिते "क्रौञ्चोष्ट्रासभास्थीनि"त्यत्र क्रौञ्चास्थिशब्दस्य रक्तकमलबीजमिति समर्थयति शिवदीपिकाकारः ॥

**क्रौञ्चादनम्** । सू. ६. क्रौञ्चानामदनं भक्ष्यम् । **जलकन्दविशेषः** । **हिं.**—घघोल इत्येके । Arumorinense । ह्रस्वजलमुस्तेत्येके ।

कमलकन्दमिति केचित् । काश्मीरेषु केबुकमन्यत्र कनाविकामितीन्दुः । चिञ्चोटकम् रक्तकसेरुकम् वेति चरकोपस्कारे । घेंचुलिका इति चक्रपाणिदत्तः ॥

**क्लोमन्** । पिपासास्थानम् । "तिलकं क्लोम उच्यते" इति हलायुधः। "अधस्तु दक्षिणे भागे हृदयात् क्लोम तिष्ठति । जलवाहिशिरामूलं तृष्णाछादनकृन्मतं" इति भावमिश्रः ॥

**क्षवकः** । सू. ६५. etc. **पर्णासभेदः** स्वनामख्यातक्षुपविशेषः । N. O.—*Compositæ* । हिं.—नकछिक्कनी, नाकछिकनी; बं.—हाँचुटी, हेंचेता, छिकनी; म.—भूतांकुश, नाकशिङ्कणी; गु.—नाकछीकणी; क.—भूतांकुश; त.—पेय्यरुट्टि; मल.—तुम्मि തുമ്മി, चेरुप्पटि; अ.—उफरककुदुश, अफकुर; पा.—वेख गाडजवां; इं.—Sneezwort; ल.—*Centipeda orbicularis* । **नामानि**—"क्षुवकः क्षुरकस्तीक्ष्णः क्रूरो भूतांकुशो क्षवः। राजोद्वेजनसंज्ञश्च भूतद्रावी ग्रहाह्वयः" । रा. नि । पत्रादिकं ग्राह्यम । **गुणाः**— "छिक्कनी कटुका रुच्या तीक्ष्णोष्णा वह्निपित्तकृत् । वातरक्तहरी कुष्ठक्रिमिवातकफापहा" । भा. प्र । "भूतांकुशस्तीव्रगन्धः कषायोष्णः कटुस्तथा । भूतग्रहादिदोषघ्नः कफवातनिकृन्तनः" । रा. नि । क्षवथुकारः फणिज्झकाकारः 'चिह्नारिकाय' इति पारियात्रे प्रसिद्धः छिंकनीति लोके इति सुरसादिगणव्याख्यायां डल्हणः । क्षुवकारकः क्षुपभेदः हाँचिया इति विज्ञायते इति हाराणचन्द्रः । द्रोणपुष्पीभेद इत्येके । कृष्णसर्षप इति केचित् । रक्तसर्षप इत्यपरे ॥

**क्षारः** । सू. १०. **स्वर्जिकः** ॥

**क्षारः** । सू. १४. etc. **यवक्षारः** ॥

**क्षारद्वयम्** । चि. ३ etc. स्वर्जिको यवक्षारश्च । "स्वर्जिका यावशूकश्च क्षारद्वयमुदाहृतं" इति शार्ङ्गधरः ॥

**क्षारपंकं** । सू. ३०. क्षीरपका ॥

**क्षारयुगम्** । क्षारद्वयम् ॥

**क्षारोदकम्** । चि. ११. मुष्ककक्षारजलम् । "पाटलीयावशूकाभ्यां पारिभद्रात्तिलादपि । क्षारोदकेन मतिमान् त्वगेलोषणसंयुतं" इत्यत्रारुणदत्तादयो व्याख्यातारः प्रस्खलन्ति । "पाटल्यादीनां क्षारोदकेन सह त्वगेलोषणचूर्णं पिबेत्, पाटल्यादिक्षारोदकगुडकृतान् लेहान् वा लिह्यात् । कार्तिककुण्डस्तु "त्वगेलोषणचूर्णक" मित्यत्र त्वगेलोषणसंयुतमिति पठति । तत्र पाटल्यादितिलान्तानां द्रव्याणां यच्चूर्णं तत्क्षारोदकेन मुष्ककक्षारोदकेन पिबेत, तत्कृतान्, वा पृथक् पृथक् त्वगेलोषणसंयुतान् लेहान् गुडमिश्रितान् लिह्यादिति व्याख्यायति । तथा च विश्वामित्रः—"पाटल्याः पारिभद्राद्वा तिलाद्वापि यवाग्रजात् । कणैलात्वग्युतं चूर्णं मुष्ककक्षारवारिणा । पिबेद्गुडेन मिश्रं वा लिह्याल्लेहान् पृथक् पृथक्"—इति । 'मतिमान्' इत्यत्र 'मदिरा' इति केचित् पठन्ति, तथा 'गुडेन मिश्रं वा' इत्यत्र 'गुडोपदंशं वा' इति च पठन्ति । तच्च पाठद्वयमनार्षम् । क्षारोदकविधिर्यथा—क्षारात् षड्गुणं जलं दत्वा वस्त्रेण दोलायन्त्रं विधाय तदधःपात्रं पातयित्वा चतुर्थावशिष्टे स्रावयित्वा तज्जलं ग्राह्यम् । "पानीयो यस्तु गुल्मादौ तद्धारानेकविंशतिं । भावयेत् षड्गुणे तोये केचिदाहुश्चतुर्गुणे" इति ॥

**क्षीरम्** । सू. ३ etc. घस्यते (अद्यते) क्षीरम् । दुग्धम् । हिं.—दूध; बं.–दुध; म.–दूध; गु.–दूध; तै.–पालु; क.–हालु; त.–पाल्; सिं.–किरि; मल–पाल् പാൽ; अ.–हलिब, जुवन; पा.—पेर, शीरे; इं.—Milk; ल.—*Lactus, Mulgere*। नामानि—"क्षीरं दुग्धि पयः स्तन्यं दुग्धं स्यादमृतं तथा । पीयूषं जीवनं चात्म जीवनीयं समं मतम्" । स. नि । गुणाः—"दुग्धं

सुमधुरं स्निग्धं वातपित्तहरं सरम् । सद्यः शुक्रकरं शीतं सात्म्यं सर्वशरीरिणाम् । जीवनं बृंहणं बल्यं सेव्यं वाजीकरं परम् । वयः-स्थापनमायुष्यं सन्धिकारि रसायनम् । विरेकवान्तिवस्तीनां सेव्यमोजोविवर्धनम् । जीर्णज्वरे मनोरोगे शोषमूर्छाभ्रमेषु च । ग्रहण्यां पाण्डुरोगे च दाहे तृषि हृदामये । शूलोदावर्तगुल्मेषु वस्ति-रोगे गुदांकुरे । रक्तपित्तेऽतिसारे च योनिरोगे श्रमे क्लमे । गर्भस्रा-वे च सततं हितं मुनिवरैः स्मृतम् । बालवृद्धक्षतक्षीणाः क्षुद्व्यवाय-कृशाश्च ये । तेभ्यः सदातिशायितं हितमेतदुदाहृतम्" । भा. प्र । **समयविशेषे दुग्धसेवनगुणाः**—"वृष्यं बृंहणमग्निवर्धनकरं पूर्वा-ह्णपीतं पयो मध्याह्ने बलदायकं कफकरं कृच्छ्रस्य विछेदकम् । बा-ल्ये वह्निकरं ततो बलकरं वीर्यप्रदं वार्धके रात्रौ क्षीरमनेकदोषशम-नं सेव्यं ततः सर्वदा" । अन्यच्च—"क्षीरं मुहूर्तत्रितयोषितं यदत-प्तमेतद्विकृतिं प्रयाति । षष्ठे तु दोषं कुरुते तदूर्ध्वं विषोपमं स्यादुषि-तं दशानां" इति । अपि च—"पयःपानं न कुर्वीत विशेषात् कृमिदो-षता । मुहूर्तपञ्चकादूर्ध्वं क्षीरं भवति वैकृतम् । तदेव द्विगुणे काले विषवद्धन्ति मानवम्" इति । "गव्यं पूर्वाह्णकाले स्यादपराह्णे तु माहि-षम् । क्षीरं सशर्करं पथ्यं यद्वा सात्म्ये च सर्वदा" । "पित्तघ्नं शृ-तशीतलं कफहरं पक्वं तदुष्णं भवेच्छीतं यत्तु न पाचितं तदखिलं विष्टंभदोषप्रदम् । धारोष्णं त्वमृतं पयः श्रमहरं निद्राकरं कान्तिदं वृष्यं बृंहणमग्निवर्धनमतिस्वादु त्रिदोषापहम्" । **क्षीरवर्जनस्था-नम्**—"क्षीरं न भुञ्जीत कदाप्यतप्तं तप्तं न चैतल्लवणेन सार्धम् । पिष्टान्नसन्धानकमाषमुद्गकोशातकीकन्दफलादिकैश्च" । **तथा च**—"मत्स्यमांसगुडमुद्गमूलकैः कुष्ठमावहति सेवितं पयः । शाक-जांबवरसैस्तु सेवितं मारयत्यबुधमाशु सर्पवत्" । **निन्दितं दुग्धम्**—"विवर्णं विरसं चाम्लं दुर्गन्धं ग्रथितं पयः । वर्जयेदम्ललवणयुक्तं बुद्ध्यादिहृद्यतः" इति । **क्षीरपाकविधिः**—"द्रव्यादष्टगुणं क्षीरं

क्षीरात्तोयं चतुर्गुणम् । क्षीरावशेषः कर्तव्यः क्षीरपाके त्वयं विधिः" इति वंगसेनसंहितायाम् । "चतुर्थभागं सलिलं निधाय यत्नाद्यदावर्तितमुत्तमं तत् । सर्वामयघ्नं बलपुष्टिकारि वीर्यप्रदं क्षीरमतिप्रशस्तं" इति केचित् । "गवादीनां वर्णभेदाद् गुणा दुग्धादिके पृथक् । कैश्चिदुक्तो विशेषाश्च विशेषो देशभेदतः" । तथा उक्तं च—"देशेषु देशेषु च तेषु तेषु तृणांबुनी यादृशदोषयुक्ते । तत्सेवनादेव गवादिकानां गुणादि दुग्धादिषु तादृशं मतम्" । रा. नि । "क्षीराभावे भवेत् मौद्गो यूषो मासूर एव वा" इति केचित् ॥

**क्षीरकाकोली** । चि. ३ etc. हिमालयप्रान्तप्रसिद्धः कन्दविशेषः । हिं.—क्षीरकाकोली ; म.—श्वेतकाकोळी , दूधकाउली ; क.—हालुगहवत्तिगे ; त.—वेळ्ळै इराळि ; सिं.—किरिकवेलु ; इं.—Ceylon cow-plant ; ल.—*Gymnema lactiferum* इत्येके । see **काकोली** । **नामानि**—"द्वितीया क्षीरकाकोली क्षीरशुक्ला पयस्विनी । वयस्था क्षीरमधुरा वीरा क्षीरविषाणिका" । ध. नि । कन्दो ग्राह्यः । **गुणाः**—"काकोलीयुगलं शीतं शुक्रलं मधुरं गुरु । बृंहणं वातदाहास्रपित्तशोषज्वरापहम्" । भा. प्र । अभावे अश्वगन्धा शतावरी वा ग्राह्या ॥

**क्षीरपका** । सू. ३०. क्षीरबकमिति केरलपाठः । **गौरखडी नाम धवलमृत्तिका** । क्षीरपंकं क्षीरपाकं क्षारपंकं चेति पाठान्तराणि । क्षीरपाक इति सुश्रुतः । जलशुक्तिरिति डल्हणः । मल—इत्तिळ् । भाष्यकारोपि शुक्तिकेत्येव व्याख्यायति । क्षीरवर्णं क्षीरपश्चिमकापरपर्यायमिति पदार्थचन्द्रिका । क्षारपंकं प्रलेपकं खटिकासंज्ञमित्यरुणदत्तः । पाट्टिकेति हेमाद्रिः । सफेद खडिया इति शिवदीपिका । हिं.—खरिया मट्टी; बं.—शिरगोला, चाखडि; म.—दुधीमाती, शिरगोळा ; गु.—खडी ; क.—रंगवालिय हरेळ ; त.—चीमै

ळुण्णाम्पु ; सिं.—रटहुणु ; मल.—चोक्कु ചോക്ക; इं.-Chalk ; फ्र.—Craie ; ज.—Kreide ॥

क्षीरघृतम् । चि. ६. क्षीरसर्पिः ॥

क्षीरद्रुमः । चि. ९. क्षीरिवृक्षः ॥

क्षीरपादपः । उ. ३. क्षीरिवृक्षः ॥

क्षीरपेया । सू. १६. etc. क्षैरेयी ॥

क्षीरमोरटः । चि. ८. मोरटः ॥

क्षीरशुक्ला । सू. १० etc. क्षीरेण शुक्ला । क्षीरविदारी नाम महाकन्दशाकविशेषः । N. O.—*Convolvulaceæ* । हिं.—दूधविदारी ; बं.—श्वेतभूंईकुमडा ; म.—पांडरीभुयकोहळी ; श्वेतभुईकोहोळा ; सिं.—किरिबदु ; मल.—पाल्मुतुक्कु പാൽമുതുക്ക ; see विदारी । नामानि—“अन्या क्षीरविदारी स्यादिक्षुगन्धेक्षुवल्ल्यपि । क्षीरवल्ली क्षीरकन्दा क्षीरशुक्ला पयस्विनी” । ध. नि । कन्दो ग्राह्यः । सूत्रदशमाध्याये मधुरगणव्याख्यायां तवक्षीरीति पदार्थचन्द्रिका । शारीरे बलातैलयोगे क्षीरशुक्ला क्षीरकाकोलीति व्याख्यायतीन्दुः । तत्रापरक्षीरकाकोलीपदप्रयोगोऽप्यस्ति ॥

क्षीरसन्तानम् । क. १. क्षीरसरः । see सन्तानिका ॥

क्षीरसरः । चि. ३. सन्तानिका ॥

क्षीरसर्पिः । चि. ५. क्षीरमथनात् समुद्भूतनवनीतोत्थितं घृतं, दुग्धोत्थनवनीतम् । दूधसे निकाला हुआ घी, दूधका घी । गुणाः—“घृतं दुग्धभवं ग्राहि शीतलं नेत्ररोगहृत् । निहंति पित्तदाहास्रमदमूर्छाभ्रमानिलान्” । भा. प्र ॥

क्षीरिणी । सू. १०. दुग्धिका । स्वर्णक्षीरीत्येके । N. O.—*Eup-*

*horbiaceæ* । हिं.—दुद्धी, दूधिया; बं.—दुधि, दुध्या, क्षीरुई; म.—दुधी; गु.—दुधेली; कों.—दुधुर्ली, दुधनी; तै.—बिदरि, पिळपालचेट्टु; क.—मरिजवणीगे, अछेगिड; त.—अम्मामन्पच्चरिचि, चिरुपालै; मल.—किणिकिणिप्पाला കിണികിണിപ്പാല, निलप्पाला; इं.–Australian asthma-weed, snake-weed and Cat's hair; ल.–*Euphorbia Pilulifera, E. Hirta*; पा.—निशाशत । नामगुणाः—"दुग्धिका स्वादुपर्णी स्यात् क्षीरा विक्षीरिणी तथा । दुग्धिकोष्णा गुरू रूक्षा वातला गर्भकारिणी । स्वादुक्षीरा कटुस्तिक्ता सृष्टमूत्रा मलापहा । स्वादुर्विष्टंभिनी वृष्या कफकुष्ठक्रिमिप्रणुत्" । भा. प्र । क्षीरिण्यौ क्षीरिण्य इत्यत्र पाठौ । क्षीरिण्यौ क्षीरकाकोली दुग्धिका चेति हेमाद्रिः । क्षीरिण्यः वटाश्वत्थोदुंबरप्लक्षादय इति ॥

क्षीरिणी । चि. ९. दुग्धालाबुः । see अलाबुः । "क्षीरिणी दुग्धबीजा च दन्तबीजा पयस्विनी । महावल्ली ह्यलाबुश्च" इति नरहरिः ॥

क्षीरिणी । चि. २२. श्वेतसारिबा । see शारिबा ॥

क्षीरितोयम् । चि. १३. क्षीरिवृक्षाणां क्वाथः ॥

क्षीरित्वगंकुरम् । सू. २७. क्षीरिवृक्षाणां त्वगंकुराणि च ।'

क्षीरिद्रुमः । चि. ९ etc. क्षीरिवृक्षः ॥

क्षीरिन् । सू. २९ etc. क्षीरिवृक्षः । "क्षीरिभूर्जार्जुनकदंबजैः" ॥

क्षीरिपादपः । क्षीरिवृक्षः ॥

क्षीरिवृक्षः । चि. ५ etc. यः शस्त्रादिक्षतः क्षीरं स्रवति । क्षीरप्रधानवृक्षवर्गः । वटाश्वत्थोदुंबरप्लक्षादयः । Milk tree । मल.—नाल्पाल्मरम् നാൽപാൽമരം । उक्तंहि—"न्यग्रोधोदुंबराश्व-

स्थपारीषप्लक्षपादपाः । पञ्चैते क्षीरिणो वृक्षास्तेषां त्वक्पञ्चवल्कलम्" । गुणाः—"क्षीरिवृक्षा हिमा वर्ण्या योनिरोगव्रणापहाः । रूक्षाः कषाया मेदोघ्ना विसर्पामयनाशनाः । शोफपित्तकफास्रघ्नाः स्तन्या भग्नास्थियोजकाः" । भा. प्र । फलगुणाः—"क्षीरवृक्षफलं तेषां गुरु विष्टंभि शीतलम् । कषायं मधुरं साम्लं नातिमारुतकोपनं" इति सुश्रुतः ॥

क्षीरी । चि ५. वंशलोचना । see त्वक्क्षीरी । "त्वगेलापिप्पलीक्षीरी" । "सितोपलां तुगाक्षीरीं पिप्पलीं बहुलां त्वच"मित्येवात्र चरकपाठः ॥

क्षीरोद्भवम् । चि. ९. क्षीरसर्पिः ॥

क्षुद्रः । उ. २. मुद्ग इति संग्रहपाठः समंगादिघृतयोगे ॥

क्षुद्रबृहती । चि. ८. कण्टकारी ॥

क्षुद्रवार्ताकी । उ. २४. बृहती ॥

क्षुद्रसहा । उ. २. मुद्गपर्णी । पृश्निपर्णीति कैरली ॥

क्षुद्रा । उ २२. क्षुणत्ति क्षुद्रा, क्षुद्रवार्ताक्येकदेशो वा । कण्टकारी । क्षुद्रा व्यंगानटीकण्टकारिकासरघासु च । चांगेरीवेश्ययोर्हिंस्रामक्षिकामात्रयोरपि" इति मेदिनी ॥

क्षुमा । चि. २२. अतसी ॥

क्षुरकः । चि. १५. क्षौति, क्षूयते, वा । इक्षुरः ॥

क्षैरेयः । सू. ७. etc. क्षीरसंस्कृतमन्नम् । परमान्नम् । "मन्थानुपानः क्षैरेयः" इत्यत्र "पायसो मन्थानुपानो विरुद्धः" इत्येव चरकपाठः ॥

क्षैरेयी । चि. ३ etc. क्षीरपेया, दुग्धसिद्धा यवागूः । दूध मिलाकर बनायी हुई पेया । मल.—पालक्कञ्ञि പാൽക്കഞ്ഞി । कल्प-

स्थाने "क्षीरं तत् पिप्पलीशृतम् । क्षैरेयीं वा" इत्यत्र क्षीरयवागू रित्येव चरकपाठः । "क्षैरेयी परमान्नं स्यात् पायसं क्षीरतण्डुलै" रिति मदनपालः ॥

**क्षौद्रम्** । सू. ३ etc. मधु ॥

**क्षौद्रसाह्वया** । उ. ३५. अद्रिकर्णी । "शेलुः शिरीषः किणिही हरिद्रे क्षौद्रसाह्वया" इत्यत्र "शिरीषः किणिही शेलुर्गिर्याह्वा रजनीद्वयम्" इति सुश्रुतपाठः । गिर्याह्वा श्वेतस्यन्द इति डल्हणः । क्षौद्रसाह्वया वटमाक्षिकमिति केचित् । मूर्वेति पाठ्यकारः ॥

**क्षौमम्** । सू. २९ etc. स्थूलदुकूलम् । उत्तम रेशम । अतसीवल्कलकृतवस्त्रमित्येके । अतसीसूत्रैः शणसूत्रैर्वा व्यूतं वस्त्रमिति केचित् ॥

**क्षौमजमषी** । सू. २९. दग्धपट्टवस्त्रमषी, दग्धवस्त्रभस्म । रेसमकी राख ।

**क्षौममषी** । सू. २७. क्षौमजमषी ॥

**क्ष्वेडः** । क. १ कोशातकी । "क्ष्वेडः कोशातकी चोक्त"मिति चरकसंहितायाम् ॥

---

# ख ।

**खड्गः** । उ. १. खडति भिनत्ति । गण्डको नाम पशुविशेषः । "खड्गो गण्डकशृङ्गासिबुद्धभेदेषु गण्डके" इति विश्वमेदिन्यौ । हिं.—गेंडा, गैंडा, गंडा; बं.—गण्डार, गाण्डार; म.—गेंडा; क.—खड्गमृग; त.—काण्टामिरुकं; सिं.—कंगवेणुन्हा; मल.—कण्टामृगं കണ്ടാമൃഗം, वाळ्मान्, कट्टुंतोलन्; इं.—Rhinoceros, Unicorn; ल.—*Rhinoceros indicus* । नामानि—"खड्गः खड्गमृगः क्रोडी मुखशृङ्गो मुखेबली । गण्ड-

को वज्रचर्मा च खड्गी वाध्रीणसश्च सः" । रा. नि । मांसगुणाः—कफघ्नं खड्गिपिशितं कषायमनिलापहम् । पित्र्यं पवित्रमायुष्यं बद्धमूत्रं विरूक्षणम्" । सु. सू. ४६ । "जीवत्खड्गादिशृंगोत्थान् सदा बालः शुभान् मणीन्" इत्यत्र "मणयश्च धारणीयाः कुमारस्य खड्गरुरुगवयवृषभाणां जीवतामेव दक्षिणेभ्यो विषाणेभ्यस्त्वग्राणि गृहीतानि स्यु"रिति चरकपाठः । जतूकर्णोपि "रुरुखड्गादीनां जीवतां दक्षिणशृङ्गाग्राणि निकृत्तानि धारये"दित्युक्तवान् ॥

**खण्डः** । सू. ५ etc. इक्षुविकारविशेषः । "खण्डं तु विमलं श्रेष्ठं चन्द्रकान्तसमप्रभं" इति भावमिश्रः । हिं.—मिश्री; खाण्ड; बं.—मिचरी, खाँड; म.—खडीसाखर; गु.—खडीसाकर, खाण्ड; तै.—पाञ्चदारा, फाटिकेपां; क.—कलुसकरी, मालखण्ड; त.—कर्कण्टु; सिं.—गल्कण्डु, सूकिरि; मल.—कल्कण्टं കൽക്കണ്ടം; पा.—नवात; अ.—सक्करे अत्रीयद; इं.—Sugarcandy । नामानि—खण्डं खण्डगुडं चेति मत्स्यण्डी खण्डशर्करा" । स. नि । अकलुषं ग्राह्यम् । गुणाः—"वातपित्तहरं शीतं स्निग्धं बल्यं सुखप्रियम् । चक्षुष्यं श्लेष्मकृच्चोक्तं खण्डं वृष्यतमं मतम्" । अत्रि. सं । "वान्तिहरः परः" इति च भावप्रकाशे ॥

**खण्डखाद्यः** । सू. ७. लड्डुकादि, मधुरापूपः । शर्कराप्रचुरं द्रव्यमिति हेमाद्रिः । "भक्ष्यान् सिताढ्यान्" इति संग्रहपाठः । "भक्ष्याः सशर्कराः" इति सुश्रुतेन पठितः । "भक्ष्याश्च गौडिकाः" इत्येव केषांचन पाठः । उत्तम मिठाई । मल.—मधुरपलहारम् മധുരപലഹാരം । Sweet meats । खण्डश्च खाद्यश्चेति पदद्वयमिति भास्करव्याख्या ॥

**खण्डसिता** । उ. ३९. खण्डः । "विमलखण्डसिता मधुभि"रित्यत्र

"विमलया सितया मधुने"त्येव वृद्धवाग्भटपाठः । यद्यपि, "मत्स्यण्डिकाखण्डसिताः क्रमेण गुणवत्तमाः" इत्यत्र पदत्रयमित्यवश्यमवगन्तव्यम् ॥

**खदिरः ।** सू. २ etc. खदति खदिरः, खद स्थैर्ये । स्वनामख्यातवृक्षः । N. O.—*Leguminosæ* । हिं.–खैर; उर्दु.–खैरे; बं.–खयेरगाछ; म.—खैर; उत्.—खैर; गु.—खेर; तै.—चण्डचेट्टु, पोदलिमानु, काचु; द्खा.—खेर; कों.—कातु, खैरु; क.—कग्गालि, काच्चु, तरे; तु.—काच्; त—करुंकालि, वोदळं; सिं.—किहिरिय; मल.—करिङ्ङालि കരിങ്ങാലി; इं—Brown barked Acacia; Black Catechu; ल.—*Acacia Catechu* । नामानि—"खदिरो रक्तसारश्च गायत्री दन्तधावनः । कण्टकी बालपत्रश्च जिह्वशल्यः क्षतक्षमः" । ध. नि । काष्ठसारनिर्यासादिकं ग्राह्यम् । गुणाः—"खदिरः शीतलो दन्त्यः कण्डूकासारुचिप्रणुत् । तिक्तः कषायो मेदोघ्नः क्रिमिमेहज्वरव्रणान् । श्वित्रशोथामपित्तास्रपाण्डुकुष्ठकफान् हरेत्" । भा. प्र ॥

**खदिरसारः** उ. २२. खदिरनिर्यासः । हिं.—खैरसार, कत्था; बं.–खयेर; म.–कात; गु.–काथो; क.–काथ; त.–काचुकट्टि; सिं.–किहिरिहर; मल.–कात्तु കാത്ത; ई–Catechu । नामानि–"खादिरः खदिरोद्भूतस्तत्सारो रंगदः स्मृतः । ज्ञेयः खदिरसारश्च तथा रंगः षडाह्वयः" रा. नि । गुणाः—"कटुकः खादिरः सारस्तिक्तोष्णः कफवातहृत । व्रणकण्ठामयघ्नश्च रुचिकृद्दीपनः परः" । रा. नि ॥

**खदिरसारः ।** उ. ४०. खदिरवृक्षस्य गर्भदारु ॥

**खद्योतः ।** उ. १२. खे द्योतते । 'द्युत दीप्तौ' । ज्योतिरिंगणो नाम कीटविशेषः । "लाक्षारुधिरवर्णाभः श्वेतबिन्दुविचित्रितः । क्षुद्रको

ह्यग्निसंकाशो भ्राजते निशि चाग्निवत् । कीटः खद्योत इत्युक्तो दष्टस्तेनापि दह्यते" इत्यलंबायनः । नामानि—"प्रभाकीटस्तु खद्योतः खज्योतिरुपसूर्यकः । रा. नि । बं.—जोनाकेपोका ; हिं.—पटबिजना ; त.-मिन्मिनिप्पूच्चि ; मल.—मिन्नांमिनुङ्ङु മിന്നാംമിനുങ്ങ് । Firefly । "खद्योतो द्योतिरिंगणः" इति हलायुधः ॥

**खपुरः** । सू. १५. ए. ग ; कुन्दुरकम् । कुन्दुरुकमित्येव सुश्रुतपाठः॥

**खपुरः** । सू. २०. **निर्यासः** । मोचरसादिरिति हेमाद्रिः । हिं.—गोंद, मसूढा ; म.—गोंद ; त.—कोन्दु ; सिं.—मेलियम, लाट्टुव ; मल.—पशा പശ, गोन्तु, मरकरा । Gum, resin । "निर्यासः खपुरो लशः" इति वैजयन्ती ॥

**खरः** । सू. ५ etc. खं शब्दं राति खरः । खं मुखबिलमतिशयेनास्य इति वा । **गर्दभः** ॥

**खरबुसः** । सू. १५. **जंबीरः** । खरपुष्पेति सुश्रुतः पठति । फणिज्झकभेद इति डल्हणः । वनबर्बरिकाभेद इति हाराणचन्द्रः । अपामार्ग इति केरलेष्वेके ॥

**खर्जूरम्** । सू. ६ etc. खर्ज व्यथने । **खर्जूरीफलम्** । खर्जूरी मधु-भू-पिण्ड राजखर्जूरीभेदेन चतुर्धा भवति । त्रिधेत्येके । "खर्जूरी गोस्तनाकारा परद्वीपादिहागता । जायते पश्चिमे देशे सा छोहारेति कीर्त्यते" । भा. प्र । N. O.—*Palmæ* । हिं.—खजूर, छुहारा ; बं.—खजूर, खेजूर ; छोहार ; म.—खजूर ; गु.—खजूरी, छुवारी, खारेक ; ते.—ईत्ता ; क.—ईचलमरं, गिज्जिर-हन्नु ; त.-पेरीच्चु ; सिं.- रटइन्दि ; मल.—ईत्तप्पळं ഈത്തപ്പഴം ; पा.—तमररुतब ; अ.—खुर्मातर, खुर्मा खुश्क ; फ्र.—Palmier dattier ; ज.—Dattelpalme ; इं.—Edible date ; ल.—*Phoenix dactylifera* । नामानि—"खर्जूरी तु खरस्कन्धा दु-

ष्प्रधर्षा दुरारुहा । निःश्रेणी चैव कषाया च यवनेष्टा हरिप्रिया" । रा. नि । गुणाः—"खर्जूरीत्रितयं शीतं मधुरं रसपाकयोः । स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु । तर्पणं रक्तपित्तघ्नं पुष्टिविष्टंभशुक्रदम् । कोष्ठमारुतहृद्बल्यं वान्तिवातकफापहम् । ज्वरातिसारक्षुत्तृष्णाकासश्वासनिवारकम् । मदमूर्छामरुत्पित्तमद्योद्भूतगदान्तकृत् । महतीभ्यां गुणैरल्पा स्वल्पखर्जूरिका स्मृता । खर्जूरीतरुतोयं तु मदपित्तकरं भवेत् । वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत्" । भा. प्र । खर्जूरं द्विविधं वृक्षविटपभेदेन, त्रिविधमित्यपरे, त्रैविध्यं च वृक्षखर्जूरं द्विविधमिति कृत्वा तत्र पारसीकेषु देशेषु महत्प्रमाणं स्वादुभिन्नं पिण्डखर्जूरमित्यतो हेतोरिति डल्हणः । पक्वफलं ग्राह्यम् ॥

**खलः** । चि. ६. फलयूषः । फलैः कृतः व्यञ्जनविशेषः । see कांबलिकः । मुकुटीति केरलेष्वेके । खड इत्येव चरकसुश्रुतयोः पाठः । रागकर्पूर इति ख्यात इति रक्तपित्तनिदानव्याख्यायां चक्रपाणिदत्तः । खडो द्विविधः—सतक्रशमीधान्य एकः, सतक्रशाकश्चापरः । तत्राद्यः—"सशमीधान्यान् सस्नेहान् साम्लान् सांग्राहिकान् खडान्" इत्युक्तलक्षणः । सतक्रशाकस्तु—"तक्रं कपित्थचांगेरीमरिचाजाजिचित्रकैः । सुपक्वः खडयूषोयं" इति शिवदासः । कपित्थदाडिमतक्रशाकादिसंस्कृताः "काचिला" इति प्रसिद्धा इति डल्हणः । "फलमूलैर्घनादानं व्यजनं पाकतो घनं । लेहवत्खल" इत्यन्ये । दधिदाडिममाषशाकस्नेहयुक्तं व्यञ्जनं खड इति जेज्जटः । "तिलं सुलुञ्चितं कृत्वा पिष्टं क्षीरे व्यहोषितम् । पटे पूतं पचेद्धीमानार्द्रकोत्थापिते ततः । मरिचाजाजिसामुद्रैर्युक्तस्तिलखडो भवे" दिति नलः । see **रसः** ॥

**खलकः** । चि. ९. खलः ॥

**खल्ली** । सू. १७. हस्तपादावमोटनरूपतीव्ररुजान्वितवातव्याधि-

विशेषः । "विश्वभी गृध्रसी चोक्ता खल्ली तीव्ररुजान्विता" इति संग्रहे ॥

**खाण्डवः** । सू. ३ etc. पानकविशेषः । see **रागः** । षाडवः खाण्डवश्चेति पाठौ । "स्पष्टाम्लमधुरोऽस्पष्टकषायलवणोषणः । अतिक्तः खाण्डवः कोलकपित्थाद्युपबृंहितः" इति सुश्रुतटीकायाम् ॥

**खार्जूरम्** । सू. ५. **खर्जूरीफलरसेन कृतं मद्यम्** । खजूरकी शराब । Spirit distilled from dates । अकलुषं ग्राह्यम् । **गुणाः**— "मार्द्वीकाल्पान्तरं किंचित् खार्जूरं वातकोपनम् । तदेव विशदं रुच्यं कफघ्नं कर्शनं लघु । कषायमधुरं हृद्यं सुगन्धीन्द्रियबोधनं" इति सुश्रुतः ॥



## ग ।

**गंगांबु** । सू. ५. आकाशगंगाजलं , अन्तरीक्षजलविशेषः । आकाशसे गिरा हुआ जल । The water that falls from the sky । "यदा स्यादाश्विने मासि सूर्यः स्वातिविशाखयोः । तदांबु जलदैर्मुक्तं गांगमुक्तं मनीषिभि"रिति । **अन्यच्च**—"गांगमाश्वयुजे मासि प्रायो वर्षति वासवः । सामुद्रिकं वा विमलं पथ्यं तत्र पतज्जलम्" ॥

**गजः** । सू. ५ etc. गजति । 'गज मदने' । हस्ती , **स्वनामख्यातो विलंबितजातीयकूलचरपशुविशेषः** । हिं.—हाथी ; म.—हत्ती ; तै.—येनुगु ; क.—आना ; त.—यानै ; सिं.— अलिया ; मल.—आना ആന ; इं.—Elephant ; ल.—*Elephas asiaticus* । **नामानि**—"हस्ती द्विपो गजो नाग इभोऽथ द्विरदः करी । वारणः कुञ्जरो दन्ती मातङ्गः षष्टिहायनः । कुंभी स्तंबेरमः पद्मी सिन्धुरश्च मतंगजः । करेणुः करिणी प्रोक्ता कलभः करि-

शावकः" । ध. नि । तस्य चतस्रो जातयः; यथा—"भद्रो मन्द्रो मृगो मिश्रश्चतस्रो गजजातयः" इति हेमचन्द्रः । "भद्रो मन्द्रो मृगश्चेति विज्ञेयास्त्रिविधा गजाः। वनप्रचारसारूप्यसत्वभेदोपलक्षिताः । स बालः कलभो ज्ञेयो दुर्दान्तो व्याल उच्यते । प्रभिन्नो गर्जितो भ्रान्तो मत्तो मदकलश्च सः"। रा. नि । **मांसगुणाः**—हस्तिक्रव्यं गुरु स्निग्धं वातलं श्लेष्मकारकम् । बहुपुष्टिप्रदं चैव दुर्जरं मन्दवह्निदं" । रा. नि । "विरूक्षणो लेखनश्च वीर्योष्णः पित्तदूषणः । स्वाद्वम्ललवणस्तेषां गजः श्लेष्मानिलापहः" । सु. सू. ४६ । **दुग्धगुणाः**—"मधुरं हस्तिनीक्षीरं वृष्यं गुरु कषायकम् । स्निग्धं स्थैर्यकरं शीतं चक्षुष्यं बलवर्धनम्"। रा. नि। **दधिगुणाः**—"हस्तिनीदधि कषायलघूष्णं पक्तिशूलशमनं रुचिप्रदम् । दीप्तिदं खलु बलासगदघ्नं वीर्यवर्धनबलप्रदमुक्तम्" । रा. नि। **तक्रगुणाः**—"हस्तिन्यास्तु स्मृतं तक्रमग्निमान्द्यकरं गुरु । उष्णं च तुवरं तेजोवर्धकं कफवातहम्" इति । **नवनीतगुणाः**—"हस्तिन्या नवनीतं तु तुवरं दीपनं लघु । तिक्तं मलस्तंभकरं कृमिपित्तकफापहम्" । नि. र । **घृतगुणाः**—"कषायं बद्धविण्मूत्रं तिक्तमग्निकरं लघु । हन्ति कारेणवं सर्पिः कफकुष्ठविषक्रिमीन्" । सु. सू. ४५ । **मूत्रगुणाः**—"सतिक्तं लवणं भेदि वातघ्नं पित्तकोपनम् । तीक्ष्णं क्षारे किलासे च नागं मूत्रं प्रयोजयेत्" । सु. सू. ४५ । "हस्तिमूत्रं तु तिक्तोष्णं लवणं वातभूतनुत् । तिक्तं कषायं शूलघ्नं हिक्काश्वासहरं परम्" । रा. नि । "गजमूत्रप्रलेपश्च कण्डूदद्रुविसर्पनुत्" । अग्नि. सं ॥

**गजकणा** । चि. ८. **गजपिप्पली** । हस्तिपिप्पलीति चरकपाठः ॥

**गजकृष्णा** । उ. २२. **गजपिप्पली** । "तत्फलं श्रेयसी हस्तिमागधा गजपिप्पली । गजकृष्णा करिकणेभकणा द्विपपिप्पली" । ध. नि । गजादिनामा इति सुश्रुतपाठः ॥

**गजचिर्भटः** । चि. १४. इन्द्रवारुणी ॥

**गजदन्तिका** । उ. ३६. गजमृत्तिकेति मुंबापुरमुद्रितसंग्रहपाठः । वल्मीकमृत्तिका । गजकर्णिकेति शिवपुरमुद्रितसंग्रहपाठः । गजवृन्तिकेति केरलीयानां प्राचीनपाठः । नगवृत्तिकेति सुश्रुतः । गजकर्णिका कुमारी सल्लकी वेतीन्दुः । शल्लकीति डल्हणः । सुश्रुतचिकित्सितविंशतितमाध्याये "नगवृत्तिकवर्षाभूबिल्वमूलै"रित्यत्र "नगवृत्तिकः जिंगिनी गुडमञ्जनिकेति लोके, वृश्चिकालीत्यन्ये इति च डल्हणः । नगवृत्तिकं शैलजं अन्ये तु पार्वतीयां पुनर्नवां ग्राहयितुं नगवृत्तिकेत्युपात्तमित्याहुरिति हाराणचन्द्रः । डल्हणः पुनरपि सुश्रुतमूषिककल्पस्थाने "त्रिवृद्गोऽयमृतावक्रसर्पगन्धाः समृत्तिकाः" इत्यादिपद्यार्धव्याख्यायां "समृत्तिकाः सकृष्णमृत्तिकाः, 'अहिमृत्तिका' इति केचित् पठन्ति, अत्राहिमृत्तिका वल्मीकमृत्तिका; 'अगवृत्तिका' इति जेज्जटाचार्यः पठति, तत्रागवृत्तिका शल्लकीति च व्याख्यायति । नागमृत्तिकेति संग्रहशारीरचतुर्थाध्याये दृश्यते । नागवृन्तिकेतीन्दुः । सल्लकीत्यर्थः । केचित्तु नगमृत्तिकेति पठन्ति, तत्रायमर्थः—शोभनगन्धवती पर्वतस्य मृत्तिका, पर्वतमृत्तिकायाः सामान्यतो विषहरत्वात् । दन्तीति केचित् । महेन्द्रवारुणीत्येके । गजपिप्पलीति पाठ्यकारः ॥

**गजपिप्पली** । उ. ३. बृहत्वाद् गजयोग्या वा । स्वनामख्यातवृक्षविशेषः । हिं.— गजपीपल, गजपीपर, बडी पिपली; बं.— गजपीपुल; म.—गजपिंपळी; थोर पिंपळी; गु.—गजपीपर, मीरबेलीला, मोठो पीपर; तै.—पेद्दपिप्पलु, एनुगपिप्पलु; क.—गजहिप्पलि; त.—यानैत्तिप्पिलि, अत्तित्तिप्पिलि; सिं.— एत्वगपुल्, गजातिप्पिलि; मल.—वलिय तिप्पलि വലിയ തി പ്പലി, अत्तित्तिप्पलि; पञ्जा.—पोरिया बेल; इं.—Elephant Pepper; ल.—*Scindapsus officinalis, Pothos officina-*

*lis* । नामानि—"चविकायाः फलं प्राज्ञैः कथिता गजपिप्पली । कपिवल्ली कोलवल्ली श्रेयसी वशिरश्च सा" । भा. प्र । फलं ग्राह्यम् । गुणाः—"गजकृष्णा कटुर्वातश्लेष्महृद्वह्निवर्धिनी । उष्णा निहन्त्यतिसारं श्वासकण्ठामयाक्रिमीन्" । भा. प्र ॥

**गजलिंडः** । चि. २०. गजमलः । हिं.—हाथीकी लीद; मल.—आनप्पिण्टम् । गजलेण्ड इति सुश्रुतपाठः । गजगण्डीरक इति डल्हणः । नदीपिप्पलिकेत्यन्ये । लेण्डं लण्डं पुरीषमित्यनर्थान्तरमिति भाष्यकारः ॥

**गजाधिपः** । शा. ३. गजः । गजः इत्येव सुश्रुतपाठः ॥

**गजाह्वा** । उ. ५. गजपिप्पली ॥

**गजोपकुल्या** । चि. २१. गजपिप्पली ॥

**गण्डीरः** । सू. १५. व. ग; स्नुही । सुश्रुतप्रोक्तपिप्पल्यादिरेव वत्सकादिगणः । तत्र 'हस्तिपिप्पलीहरेणुके' इति पदद्वयस्थाने वाग्भटे 'गण्डीराजाजीपशुगन्धा' इति पदत्रयं भाति ॥

**गण्डूपदः** । सू. २५ etc. गण्डवो ग्रन्थयः पदान्यस्य गण्डूपदः । किंचुलुको नाम सर्पाकारभूमिलता । वृष्टिशमनानन्तरमेव दीर्घाकृतयः कीटविशेषाः गण्डूपदाः भूमिलतापरपर्याया इति चन्द्रनन्दनः । हिं.—केंचुवा, गडोए; बं.—केँचो; म.—गांडवळ, काडूं; क.—ऎांगूल्; त.—नांकूळ्; मण्णुण्णिप्पाम्पुः; सिं.—गेण्डाविलुय; मल—पूयिनागं പൂയിനാഗം; निलत्तिरा, मण्णिरा, नाञ्चकूल्; इं.—Earthworm; ल.—*Lumbricus* । नामानि—"गण्डूपदः किञ्चुलुको भूलता तत्प्रिया शिली" इति वैजयन्ती ॥

**गतशोकः** । सू. १५. अशोकः ॥

**गदम्** । उ. ५. कुष्ठम् । "कौबेरं भास्वरं कुष्ठं पारिभाव्यं गदाह्वयम्" इति मेदिनी ॥

**गदा** । उ. ३२. पाटली । कुष्ठमित्येके ॥

**गन्धः** । सू. २१. एलादिगणः । "गंधाश्च कुष्ठतगराः" इत्यत्र "तत्रैलादिना कुष्ठतगरवर्ज्येन" इत्येव सुश्रुतपाठः। **तथा च निमिः**– "धूमो हि वक्रकुष्ठाभ्यां विलालयति शक्तितः । मस्तिष्कं ताद्धि विष्यण्णं नाशाय प्रतिपद्यते" इति । "गन्धाश्चागुरुपत्राद्या" इत्येवात्र चरकः पठति । अगुरुपत्राद्याः गन्धाश्चरकचिकित्सिते वक्ष्यमाणागुरुकुष्ठतगरपत्रादीन्येव ॥

**गन्धः** । चि. १९. गन्धपाषाणः ॥

**गन्धनः** । सू. ६. सुगन्धिव्रीहिभेदः । गन्धल इति पाठः । षष्टिभेद इत्येके । । नरुंपाण्टि इति भास्करव्याख्या । Gandhana is a fragrant variety. Probably, it is what in Bengal is known under the name Samati or Manibhoga or Randhanipagla इत्यविनाशचन्द्रः ॥

**गन्धपलाशम्** । चि. १४. तेजपत्रम् । see **तमालपत्रम्** । गन्धपत्रमितीन्दुः । चन्दनवृक्षपल्लव इति केचन केरलीयवैद्याः ॥

**गन्धपलाशकः** । चि. १० etc. तेजपत्रम् । see **तमालपत्रम्** । पलाश इत्येव चरकसंग्रहयोः पाठः । शटीति शिवदीपिकाकारः । अग्निमन्थ इति पाठ्यकारः ॥

**गन्धपाषाणः** । उ. १३. गन्धयुक्तः पाषाणः । **गन्धको नाम खनिजोऽपधातुविशेषः** । स च रक्तपीतश्वेतकृष्णत्वाच्चतुर्विधः । "चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः । रक्तो हेमक्रियासूक्तः पीतश्चैतौ रसायने । व्रणादिलेपने श्वेतः कृष्णः श्रेष्ठः सुदुर्लभः" । भा. प्र । शोधितं ग्राह्यम् । **तच्छुद्धिः**–"लोहपात्रे विनिक्षि-

च्य घृतमग्नौ प्रतापयेत् । तप्ते घृते तत्समानं क्षिपेद्गन्धकजं रजः । विद्रुतं गन्धकं दृष्ट्वा तनुवस्त्रे विनिक्षिपेत । यथा वस्त्राद्विनिःसृत्य दुग्धमध्येऽखिलं पतेत् । एवं स गन्धकः शुद्धः सर्वकर्मोचितो भवेत्" । भा. प्र । एवं त्रिफलाजलभृंगराजस्वरसादौ निक्षिपेदिति मतान्तरम् । हिं.—गन्धक ; बं.—गन्धक ; म.—गन्धक गु.—गन्धक ; द्‌रवा , काश्मी , पञ्चा , कों.—गन्धक ; तै.—गन्धकमु ; क.—गन्धक ; त.—केन्ति , केन्तकं ; सिं.—गेन्दकं ; मल.—गन्धकं ഗന്ധകം ; पा.—गोगिर्द ; अ.—किब्रिक ; उर्दु.—गन्धक ; बर्मा.—Kau , कौ ; मलायी.—बलिरंग ; इं.—Sulphur, Brimstone । नामानि—"गन्धको गन्धपाषाणो लेलीनो गन्धमादनः । पूतिगन्धो बलिवसा गन्धाश्मा धातुहा बली" । ध. नि । गुणाः—"गन्धकः कटुरुष्णश्च तीव्रगन्धोतिवह्निकृत् । विषघ्नः कुष्ठकण्डूतिखर्जूत्वग्दोषनाशनः" । रा. नि । शुद्धगन्धकगुणाः—"शुद्धगन्धो हरेद्रोगान् कुष्ठमृत्युज्वरादिकान् । अग्निकारी महानुष्णो वीर्यवृद्धिं करोति च" । इति । "अशोधितो गन्धक एष कुष्ठं करोति तापं विषमं शरीरे । शोषं च रूपं च बलं तथौजः शुक्रं निहन्त्येव करोति चास्रम्" । भा. प्र ॥

**गन्धर्वहस्तः** । चि. ११. गन्धर्वस्य मृगभेदस्य हस्तः पाद इव पत्रमस्य । गन्धर्वस्य भूतविशेषस्येव मृगविशेषस्येव वा हस्तोस्य गन्धर्वहस्तः पञ्चांगुलिपर्णत्वादिति क्षीरस्वामी । एरण्डः ॥

**गन्धोपलः** । चि. १९. गन्धकः । see **गन्धपाषाणः** । सौगन्धिकमिति चरकपाठः । तद्गन्धतृणं गन्धको वेति चक्रपाणिदत्तः ॥

**गर्दभः** । शा. ६. गर्दति गर्दभः , गर्द शब्दे । खरः । स्वनामख्यातपशुः । हिं.—गधा , गदहा ; बं.— गाधा ; म.—गाढव ; क.—कत्ते ; त.—कलुतै ; सिं.—कलुद ; मल.—कलुता കഴുത ;

इं.—Ass; ल.—*Equus asinus* । **नामानि**—"गर्दभो रासभो भारवाही दूरगमः खरः" । म पा । "गर्दभः शंकुकर्णश्च बालेयो रासभः खरः । भारवाहो भूरिगमो धूसरो रेणुभूषितः" । ध. नि । **मांसगुणाः**—"गर्दभप्रभवं मांसं किंचिद् गुरु बलप्रदम् । रुच्यं तु वन्यजं शैत्यं बहुवीर्यबलप्रदम्" । रा. नि । **दुग्धगुणाः**—"गर्दभ्यास्तु स्मृतं दुग्धं मधुरं बलकारकम् । रूक्षं चाम्लं दीपनं च बुद्धिमान्द्यहरं मतम् । पथ्यं रुचिप्रदं क्षारं कफवातविनाशनम् । बालरोगं च कासं च श्वासं चैव विनाशयेत्" । बृ. नि. र । **दधिगुणाः**—"गर्दभीदधि रूक्षोष्णं लघुदीपनपाचनम् । मधुराम्लरसं रुच्यं वातदोषविनाशनम्" । रा. नि । **तक्रगुणाः**—"गर्दभ्यास्तु स्मृतं तक्रं मधुरं दीपनं मतम् । रूक्षमम्लकरं चोष्णं वातनाशकरं मतम्" । बृ. नि. र । **नवनीतगुणाः**—"गर्दभीनवनीतं तु कषायं कफवातनुत् । बल्यं दीपनदं पाके लघूष्णं मूत्रदोषनुत्" । रा. नि । **घृतगुणाः**—"गर्दभ्यास्तु घृतं बल्यं बुद्धिदं वामकं मतम् । अग्निदीप्तिकरं चोष्णवीर्यं पाके लघु स्मृतम । कषायं ग्लानिदं प्रोक्तं मूत्रदोषकफापहम्" । बृ. नि. र । **मूत्रगुणाः**—"गरचेतोविकारघ्नं तीक्ष्णं ग्रहणिरोगनुत् । दीपनं गार्दभं मूत्रं क्रिमिवातकफापहम्" । ध. नि । "खरमूत्रं कटूष्णं च क्षारं तीक्ष्णं कफापहम् । महावातापहं भूतकम्पोन्मादहरं परम्" । रा. नि ॥

**गर्दभमणिः** । उ. ३६. धूम्रवर्णरत्नविशेष इतीन्दुः । गरमणिरिति मुद्रितचरकपाठः । पुकवर्णक्कल्लु इति केरलेषु ।.

**गर्भवेश्मन्** । सू. ३. अन्तर्गृहम् । Garbha griha is one into which no air is admitted either because there are no windows or because of the windows, if any, not being opened । उळ्ळकं ഉള്ളകം, मच्चु इति च केरलेषु । "अपवरकं गर्भगृहं" इति हलायुधः ॥

**गर्भाभः** । उ. १. **गर्भोदकम्** ॥

**गर्भाशयः** । शा. १ etc. **गर्भस्थानम्** । योनेरूर्ध्वमुखप्रतिबद्धः क्षुद्रकलशाकारो गर्भाशयः, स स्त्रिया एव । "गर्भाशयो नाम-अधोमुखक्षुद्रतुंबीफलाकारः कोषः स्थूलपेशीमयो योनेरूर्ध्वमुखे प्रतिबद्धः । तस्यायतनं स्वमुष्टिमात्रमगृहीतगर्भायाः, गृहीतगर्भायास्तु यथागर्भं" । Uterus । इति प्रत्यक्षशारीरात् । "पित्तपक्वाशयमध्ये गर्भाशयो यत्र गर्भस्तिष्ठति" (सु. शा. ५) इत्यत्र "वस्तिपक्वाशयमध्ये" इति पाठो भवितुमर्हति, शरीरे तथैव दर्शनादन्यथा प्रत्यक्षविरोधाच्च" इति कविराजगणनाथसेनः । "शंखनाभ्याकृतिर्योनिस्त्र्यावर्त्ता सा च कीर्त्तिता । तस्यास्तृतीये त्वावर्त्ते गर्भशय्या प्रकीर्त्तिता । यथा रोहितमत्स्यस्य मुखं भवति रूपतः । तत्संस्थाञ्च तथारूपां गर्भशय्यां विदुर्बुधाः" इति भावमिश्रः । "गर्भाशयो जरायुश्च गर्भाधारश्च स स्मृतः" इति नरहरिः । "भगस्याधः स्त्रिया वस्तिरूर्ध्वं गर्भाशयः स्थितः । गर्भाशयश्च वस्तिश्च महास्रोतसमाश्रितौ" इति वैतरणः ॥

**गर्भोदकम्** । शा. १. आसन्नप्रसवायाः गर्भाशयात् प्रस्रुतं जलम् । गर्भाशयसे जल । Liquor amnii । मुन्नीर् മുന്നീർ इति केरलेषु ॥

**गलन्ती** । सू. १७. गलति । 'गल अदने' । कुटिलनाडीयुतः करको नाम स्वल्पवारिधारावान् **पात्रविशेषः** । A kind of pot with a pipe at the middle side to pour the water ; Goglet । "स्वर्णाद्युत्तमलोहतस्तु करको मृत्संभवो वात्र तन्नालान्तन्तु कनिष्ठिकांगुलिपरीणाहोन्मितं रोगिणः" इति धाराकल्पे । 'गलन्ती' इत्यत्र वर्षणिकेति संग्रहपाठः । हिं.—गागर; 'करवती' इत्येके; बं.—झारा; म.—चंबू, गिंडी; मल.—किण्टि കിണ്ടി, करकम् । **नामानि**—"वर्धनी तु गलन्त्यालुः कर्करी करकोपि च" इति वैजयन्ती ॥

**गवयः** । सू. ६. गुवति, गवते वा । गलकंबलशून्यः गोसदृशो कूलचरपशुः । "गवयः स्याद्वनगव" इति वैजयन्ती । हिं.—वनगौ ; बं—गवय ; म.–गवा ; मल.–काट्टुकाळा കാട്ടുകാള, काट्टि; आर्यमान् इत्येके ; इं.—Jungle cow, Gayal ox; ल.—*Bos Gavocus* । नामानि —"वनगौर्गवयः प्रोक्तो बलभद्रो महागवः । गवयी वनधेनुः स्यात् सैव भिल्लगवी मता" । रा. नि । मांसगुणाः—"गवयस्य तु मांसं हि स्निग्धं मधुरकासजित् । विपाके मधुरं चापि व्यवायस्य तु वर्धनम्" । सु. सू. ४६ । "गजमांसगुणैस्तुल्यं गावयं मांसमुच्यते" इत्येके ॥

**गवाक्षी** । सू. १५ etc. गां भूमिमक्ष्णोति । इन्द्रवारुणी । श्वेतपुष्पेन्द्रवारुणीति डल्हणः । "गवाक्षी त्विन्द्रवारुण्यां गवाक्षो जालके कपौ" इति हैमः ॥

**गवांबु** । चि. १९. गोमूत्रम् ॥

**गवेधुकम्** । सू. ६ etc. गवे गवार्थं दीयते रक्ष्यतेसौ । देङ् रक्षणे । तृणधान्यविशेषः । काशसदृश इति केचित् । हिं.—गरहेडुआ ; बं.—गड़गड़े ; म.—कसरू ; गु.—थेगी ; त.—काट्टुकोतुमै ; मल.—काट्टुकोतम्पु കാട്ടുകോതമ്പ് इत्येके । गोधूमविशेष इति केचित्, तन्न । 'गलगोधूम' इति लोके, देशान्तरे तु 'गरल' इति लोके इति डल्हणः । मुन्यन्नविशेष इत्येके । गवेधुको घुलुंचः स ग्राम्यारण्यभेदेन द्विविध इति चक्रपाणिदत्तः । नामानि—"गवेधुका कर्षणी स्यात् गोजिह्वा कर्षिणी मता" । म. पा । पुराणं ग्राह्यम् । गुणाः–"गवेधुः कटुका स्वाद्वी कार्श्यकृत् कफनाशिनी" । भा. प्र ॥

**गवेधुका** । उ. ३६ see गवेधुकम् । नागबलेत्येके ॥

**गव्यम्** । सू. ५ etc. गोक्षीरम् । हिं.—गायका दूध, गौका

दूध; म.—गाईचें दूध ; क.—आकल हालु; त.—पचुविन् पाल; मल.—पशुविन्पाल् പശുവിൻപാൽ ; इं.—Cow's milk । see गौः ॥

**गांगम्** । सू. ५. गंगांबु ॥

**गांगेयी** । चि. १ etc. मुस्ता ॥

**गायत्री** । चि. ५ etc. गायतो त्रिप्रांस्त्रायतेऽवश्यं गायत्री । खदिरः । "गायत्री त्रिपदादेवीछन्दोभिद्खदिरेषु च" । इति मेदिनी ॥

**गार्दभास्थि** । उ. ११. गर्दभस्य अस्थि । गधेकी हड्डी ॥

**गालः** । चि. १ etc. मदनः । गालेति शिवपुरमुद्रितसंग्रहपाठः । मदनफलमितीन्दुः ॥

**गिरिः** । उ. २२. गैरिकम् ॥

**गिरिकदंबकः** । उ. २. धाराकदंबः । हिं.—कदमभेद, धूलिकदम, हल्दु ; बं.—केलिकदम ; म.—धाराकळंबु ; तै.—मोगुलुकडिमि ; क.—धारेयकडवु ; मल. – मलंकटम्पु മലംകടമ്പു ; ल.—*Nauclea cadamba, n. Cordifolia* । भूकदंब इतीन्दुः । नामानि—"धाराकदंबः प्रावृष्यः पुलकी भृंगवल्लभः । मेघागमप्रियो नीपः प्रावृषेण्यः कदंबकः" । रा. नि । गुणाः—"त्रिकदंबाः कटुवर्ण्या विषशोफहरा हिमाः । कषायास्तिक्तपित्तघ्ना वीर्यवृद्धिकराः पराः" । रा. नि । त्वग्पुष्पादिकं ग्राह्यम् ॥

**गिरिकर्णिका** । उ. ३६. गिरिर्बालमूषिकेव कर्णः पत्रं यस्याः । अद्रिकर्णी ॥

**गिरिजम्** । चि. १८ etc. गिरौ जायते । शिलाजतु ॥

**गिरिजन्मन्** । उ. ३९. शिलाजतु ॥

**गिरिजाह्वयम्** । उ. ३९. शिलाजतु ॥

**गिरिवर्तिका** । सू. ६. वर्तिकाभेदः । गिरिकाख्या इति हेमाद्रिः । गिरिवर्तक इति चरकपाठः । मल.—मलंकाटा മലംകാടാ । पार्वततित्तिरिपक्षी इत्येके । पर्वतस्थवर्तक इति चरकोपस्कारे ॥

**गिरिसंभवम्** । चि. २१. शिलाजतु ॥

**गुग्गुलुः** । सू. १४ etc गुजो व्याधेर्गुडति । 'गुड रक्षणे' । स्वनामख्यातनिर्यासरूपपण्यद्रव्यम् । तल्लक्षणं यथा—"वह्नौ ज्वलन्ति तपने विलयं प्रयान्ति क्लिद्यन्ति कोष्णसलिले पयसःसमानाः । ग्राह्याः शुभाः परिहरेच्चिरकालजातानंगारवर्णसमपूयविगन्धवर्णान" इति । "वरमहिषलोचनोदरसन्निभवर्णः" इति कैशोरकगुग्गुलुयोगे वंगसेनसंहितायाम् । "मरुत्भूमौ प्रजायन्ते प्रायशः पुरपादपाः । भानोर्मयूखैः संतप्ता ग्रीष्मे मुञ्चन्ति गुग्गुलुम् । जातरूपनिभं शुभ्रं पुष्परागनिभं क्वचित् । क्वचित् महिषसङ्काशं यक्षदैवतवल्लभम्" इति । संग्रहेप्युक्तं, "गन्धोत्कटः सदाहः स्निग्धद्रवपिच्छिलो विगतशल्यः । महिषाक्षः पुष्परागस्फटिकासितनीरजच्छायः । यः पद्मरागरागो यः कनकच्छेदपाटलो यो वा । जयतीन्द्रनीलममलं भग्नेप्यतिकान्तिमत्वेन" इति । N. O.—*Burseraceæ* । हिं.—गूगल, गूगर; उर्दु.—गुग्गुलु; बं.—गुग्गुल; मुकुल; म.—गुग्गुळ, गुगूळ; गु.—गुग्गल; तै.—गुग्गुलु, माहिषाक्षी, मैषाक्षी; क.—गुग्गुलु, इडवोल; त.—मैचाक्षि, कुङ्किलियं, कुक्कुलु; सिं.—गुगुल; मल.—गुल्गुलु ഗുല്ഗുലു; दखा.—गूगुल; पा.—वोएजहुदान; बैचहुन्दान; अ.—मोगल, अफालताना, मुष्कीले अर्जक; इं.—Bdellium, Gum gugul; ल.—*Balsamodendron mukul* । स त्रिविधः—साधारणगुग्गुलुः, कणगुग्गुलुः, भूमिजगुग्गुलुश्च । पञ्चभेदमिच्छन्ति भावमिश्रादयः । "महिषाक्षो महानीलः कुमुदः पद्म इत्यपि ।

हिरण्यः पञ्चमो ज्ञेयो गुग्गुलोः पञ्चजातयः । भृंगाञ्जनसवर्णस्तु महिषाक्षः इति स्मृतः । महानीलस्तु विज्ञेयः स्वनामसमलक्षणः । कुमुदः कुमुदाह्वः स्यात् पद्मो माणिक्यसन्निभः । हिरण्याक्षस्तु हेमाभः पञ्चानां लिंगमीरितम्" । भा. प्र । नामानि—"गुग्गुलः कालनिर्यासो जटायुः कौशिकः पुरः । नक्तंचरः शिवो दुर्गो महिषाक्षः पलंकषः" । ध. नि । अस्य शोधितनिर्यास एव ग्राह्यः । शुद्धिः—"क्वाथे हि दशमूलस्य चोष्णे प्रक्षिप्य गुग्गुलुम् । आलोड्य वस्त्रपूतं तं चण्डांशुपरिशोषितम् । घृताक्तं पिण्डितं कुर्याच्छुद्धिमायाति गुग्गुलुः" । अन्यच्च—"दुग्धे वा त्रिफलाक्वाथे दोलायन्त्रे विपाचितः । वाससा गालितो ग्राह्यः सर्वकर्मसु गुग्गुलुः" । अपिच, "निशानिंबदलक्वाथस्वेदितं गुग्गुलुं शुचिम् । घृतभ्रष्टं पुनः पिष्ट्वा सम्यग् योगेषु कल्पयेत्" । गुणाः—गुग्गुलुः कटुतिक्तोष्णः कफमारुतकासजित् । कृमिवातोदरप्लीहशोफार्शोघ्नो रसायनः" । रा. नि । गुग्गुलुर्विशदस्तिक्तो वीर्योष्णः पित्तलः सरः । कषायः कटुकः पाके कटुरूक्षो लघुः परः । भग्नसन्धानकृद्वृष्यः सूक्ष्मः स्वर्यो रसायनः । दीपनः पिच्छिलो बल्यः कफवातव्रणापचीः । मेदोमेहाश्मवातांश्च क्लेदकुष्ठाममारुतान् । पिडिकाग्रन्थिशोफार्शोगण्डमालाकृमीञ्जयेत् । माधुर्याच्छमयेद्वातं कषायत्वाच्च पित्तहा । तिक्तत्वात् कफजित्वेन गुग्गुलुः सर्वदोषहा । स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः । स्निग्धः काञ्चनसंकाशः पक्वजंबूफलोपमः । नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः । शुष्को दुर्गन्धकश्चैव त्यक्तप्रकृतिवर्णकः । पुराणः स तु विज्ञेयो गुग्गुलुर्वीर्यवर्जितः । अम्लं तीक्ष्णमजीर्णञ्च व्यवायं श्रममातपम् । मद्यं रोषं त्यजेत् सम्यगुणार्थी पुरसेवकः" भा. प्र ॥

**गुञ्जा** । नि. ७ etc. गुञ्जति शिञ्ज्याम् । 'गुजि अव्यक्ते शब्दे' । "गुंजा तु काकचिञ्चायाम् पटहे च कलध्वनौ" इति मेदिनी ।

उपविषजातीयमूलविषलता । N. O.—*Leguminosæ* । हिं.—घूंघुची ; घोंगची ; रत्तक , रत्ति , चोंटली , चिरमठी , चिरमिटी; बं.—कुंच ; म.—गुंज , गुंजि ; कों.—गुर्गुंजि ; गु.—चणोठी राती ; गुंचि ; तै.—गुरिगिंज , गुलिविंद ; क.—गुलगांजि , गुरुगुंजि , गुलगुंजि , गुलिगांजि ; तु.— गुरुगोंजि ; उत्.—रुञ ; पञ्जा.—मुलठी ; काश्मी.— शंगिर ; पा.—चश्मेखरूस् , चश्मी खुरोस , गुंचि ; अ.—हब्सुर्ख ; सिं.—ओलिन्द , हुनिन्द ; त.—कुन्रि , कुण्ड्रुमणि ; मल.—कुन्नि കുന്നി ; इं.—Wild Liquorice, Indian or Jamaica liquorice, Jequirity, Bead tree, Monk's bean ; ल.—*Abrus precatorius* । नामानि—"गुंजा चूडामणी रक्तफलिका काकणन्तिका । काकादनी काकचिञ्ची कृष्णला कृष्णरक्तिका" । स. नि । मूलादिकं ग्राह्यम् । गुञ्जा द्विधा श्वेतरक्तभेदात् । गुणाः—"गुञ्जाद्वयं तु केश्यं स्याद्वातपित्तज्वरापहम् । मुखशोषभ्रमश्वासतृष्णामदविनाशनम् । नेत्रामयहरं वृष्यं बल्यं कण्डूव्रणं हरेत् । कृमीन्द्रलुप्तकुष्ठानि रक्ता च धवलापि च" । भा. प्र । "गुञ्जा रूक्षा तथा तिक्ता वीर्योष्णा च प्रकीर्तिता । विषवैषम्यजन्तुघ्नी रोगग्रामभयापहा" । ध. नि ॥

गुञ्जाफलम् । चि. २२. गुञ्जायाः बीजम् । रत्तकोंके बीज । मल.—कुन्निक्कुरु കുന്നിക്കുരു ॥

गुडः । सू. ५ etc. गुडति । 'गुड वेष्टने' । इक्ष्वादिरसविकारः । "श्लेष्माणमाशु विनिहन्ति सदार्द्रकेण पित्तं निहन्ति च तदेव हरीतकीभिः । शुण्ठ्या समं हरति वातमशेषमित्थं दोषत्रयक्षयकराय नमो गुडाय" । हिं.—गुड ; बं.—गुड ; म.—गूळ ; गु.—गोड ; तै.—बेल्लमु ; क.—हेसरू; त.—वेल्लं ; सिं.—उक्सकुरु ; मल.—शर्करा ശർക്കര, वेल्लं; पा.—कन्देसिया ; अ.—कन्दे अस्वद ; इं.—Treacle, Mo-

lasses । "इक्षो रसो यः संपक्वो जायते लोष्टवद्दृढः । स गुडो गौडदेशे तु मत्स्यण्ड्येव गुडो मतः" इति भावमिश्रः । पुराणं नूतनं च ग्राह्यम् । नामानि—"गुडः स्यादिक्षुसारस्तु मधुरो रसपाकजः । शिशुप्रियः सितादिः स्याद्रसणो रसजः स्मृतः" । स. नि । गुणाः—"गुडो वृष्यो गुरुः स्निग्धो वातघ्नो मूत्रशोधनः । नातिपित्तहरो मेदः-कफक्रिमिबलप्रदः" । पुराणगुडस्य गुणाः—"गुडो जीर्णो लघुः पथ्योऽनभिष्यन्द्यग्निपुष्टिकृत् । पित्तघ्नो मधुरो वृष्यो वातघ्नोऽसृक्प्रसादनः" । नवीनगुडस्य गुणाः—"गुडो नवः कफश्वासकासक्रिमिकरोऽग्निकृत्" । भा. प्र । "पुरातनगुडाभावे रौद्रे यामचतुष्टयम् । संशोष्य नूतनं ग्राह्यं पुरातनगुडैषिणा" इति ॥

गुडमञ्जरी । उ. ४०. जिंगिणी ॥

गुडवारि । चि. ५. गुडांबु ॥

गुडवैकृतम् । चि. १०. गुडयुतखाद्यविशेषः । मिठाई आदि स्निग्ध और गुरुपदार्थ इति शिवदीपिका ॥

गुडा । चि. २०. वृत्तत्वात् । स्नुही । "गुडा स्नुह्यां च कथिता गुडिकायां च योषिति" इति मेदिनी ॥

गुडांबु । चि. ६. गुडकृतजलम् । "गुडयोगाद् गुडांबु स्याद् गुड-वर्णरसान्वितम्" । गुडका शरबत ॥

गुडूची । सू. १० etc. गुडति रक्षति गुडूची । स्वनामप्रसिद्धपत्र-शाकलता । N. O.—*Menispermaceæ* । हिं.—गिलोय, गुरच, गुलंचा ; उर्दु.—गुलबेल ; बं.—गुलंच ; म.—गुळवेलि, गरुडवेल, गरोळ ; गु.—गलो, गडो ; कान्यकुब्जी.—गुरुच्ची ; मुंबापुर्यां.—अंबरवेल, गिरोलि ; दखा.—गुलबेल ; पश्चा.—गिलो गुलंच ; काश्मी.- बेखगिलो ; बर्मा.—सिङ्गो मोने ; मलायी.—

पितुरालि ; गोवा.—अमृतवेल ; तै.—तिप्पतीगे , दूयुतीगे , ति-यातिज ; क.—अमृत , अमरद्वल्लि , उगनिबळ्ळि ; त.—चीन्तिल्, चिन्तिलक्कोटि ; सिं.—रसकिन्द , किन्द ; तु.—अमृतबूरु ; मल.—अमृतु അമൃത, चित्तमृतु , चिट्टमृतं ; पा.—गलोय ; अ.—गिलोइ ; इं.—Heart-leaved moonseed ; ल.—*Tinospora cordifolia, Cocculus cordifolius* । नामानि—“गुडूच्यमृतवल्ली च छिन्ना छिन्नरुहाऽमृता । छिन्नोद्भवाऽमृतलता धारा वत्सादनी स्मृता । सैवोक्ता सोमवल्ली च कुण्डली चक्रलक्षणा । प्रोक्ता नागकुमारी च छिन्नांगी ज्वरनाशिनी । जीवन्ती मधुपर्णी च तन्त्रिका देवनिर्मिता । वयस्था मण्डली सौम्या विशल्याऽमृतसंभवा” । ध. नि । वल्ली ग्राह्या । गुणाः—“गुडूची कटुका तिक्ता स्वादुपाका रसायनी । संग्राहिणी कषायोष्णा लघ्वी बल्याग्निदीपनी । दोषत्रयामतृड्दाहमेदःकासांश्च पाण्डुताम् । कामलाकुष्ठवातास्रज्वराक्रिमिवमीन्हरेत् । प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत्” । भा. प्र । अन्यच्च—“घृतेन वातं सगुडा विबन्धं पित्तं सिताढ्या मधुना कफं च । वातास्रमुग्रं रुबुतैलमिश्रा शुण्ठ्याऽऽमवातं शमयेत् गुडूची” । ध. नि ॥

**गुडोदकम्** । शा. १ etc. गुडांबु ॥

**गुडोपदंशः** । चि. ११. “पिबेद् गुडोपदंशान् वा लिह्यादेतान् पृथक्पृथ”गित्यत्र “पिबेद् गुडेन मिश्रं वा लिह्याल्लेहान् पृथक् पृथ”गित्येव संशुद्धः पाठः ॥

**गुडौदनम्** । चि. ५. गुडेन सह पचितमन्नम् । गुड़ मिलेहुए जलमें बनाया हुआ अन्न । मल.—शर्करच्चोर् ശർക്കരച്ചോറ് ॥

**गुण्ठः** । सू. १५ etc. तृणविशेषः । हिं.—गुण्ठतृण ; म.—विधारी लहा ; कोंचें ; क.—मूरेणगरु ; मल.—मुप्परप्पनपुल्लु

മുത്തങ്ങപ്പുല്ല്, पोट्टप्पुल्लु । अस्य कन्द एव कसेरुः । नामानि— "गुण्ठस्तु काण्डगुण्डः स्याद्दीर्घकाण्डस्त्रिकोणकः । छत्रगुच्छोसितपत्रश्च नीलपत्रस्त्रिधारकः" । रा. नि । गुणाः—"गुण्डास्तु मधुराः शीताः कफपित्तातिसारहाः । दाहरक्तहरास्तेषां मध्ये स्थूलतरोऽधिकः" । रा. नि । गुण्ड इति पाठः । चिकित्सितैकादशाध्याये पाषाणभेदादिघृतयोगे गुच्छ इति मुंबापुरमुद्रितसंग्रहपाठः । गुन्धुरित्येव शिवपुरमुद्रितसंग्रहे । कुब्जक इति सुश्रुतः । गुञ्जेति डल्हणहाराणचन्द्रौ । गुञ्जैव मुद्रणप्रमादाद् 'गुंठ' इति परिवर्तितः । पित्ताश्मरीभेदन 'कुशादि' घृतयोगे 'गुंठ' इत्यत्र गुन्द्रेत्येव सुश्रुतसंग्रहादिपाठः । नालमेव ग्राह्यम् ॥

**गुन्द्रा** । सू. १५ etc. गां जलं द्राति । 'द्रा गतौ' । **जलतृणभेदः** । see **एरकसक्तुः** । एरकेति हेमाद्रिः । दर्भभेद इत्येके । शर इत्यपरे । पद एरक इत्यरुणदत्तः । गुच्छपुष्पिकेति केचित् । गवेधुकेत्यन्ये । पादरकभेदो 'गोदर' इति लोके इति डल्हणः । निर्ग्रन्थितृणभेद इति भाष्यकारः । "गुन्द्रः पटेरको रच्छः शृङ्गवेराभमूलकः" इति भावमिश्रः । गुणाः—"गुन्द्रः कषायो मधुरः शिशिरः पित्तरक्तजित् । स्तन्यशुक्ररजोमूत्रशोधनो मूत्रकृच्छ्रहृत्" । भा. प्र ॥

**गुरुपञ्चमूलम्** । चि. २१. महत्पञ्चमूलम् ॥

**गुरु प्रावरणम्** । सू. २४. बहुभारिकं वस्त्रम् । see **प्रावारः** ॥

**गुहा** । सू. २१. गूहति रसम् । **पृश्निपर्णी** ॥

**गृञ्जनकः** । सू. ६ etc. गृञ्जति कुत्सितं शब्दयते । गृञ्ज्यते भक्ष्यत्वेन कथ्यते रोगेषु इति वा । **रसोनभेदः** । रक्तलशुनः । हिक्काचिकित्सिते गृञ्जनकशब्दस्य लोहितपलाण्डुरिति चक्रपाणिदत्तः । उक्तं च बाप्पचन्द्रेण—"गन्धाकृतिरसैस्तुल्यो गृञ्जनस्तु पलाण्डुना । सूक्ष्मनालाग्रपत्रत्वाद्भिद्यतेऽसौ पलाण्डुतः" इति । महौषधगृञ्जनादीनामाकृतिभेदेपि रसाद्यैक्याद्भेदं मन्यते इति क्षीरस्वा-

मी । हिं.—लाललहशन, लाल लहसुन ; म.—रक्तलसूण ; क.—केम्पिन बेळ्ळुळ्ळि ; बं.—लाल रसुन ; त.—ईरुळ्ळि, वेङ्कायं ; सिं.—रतुलुहुनु ; मल.—चुवन्नुळ्ळि ചുവന്നുള്ളി ; इं.—Red garlic । नामानि—"रसोनोन्यो महाकन्दो गृञ्जनो दीर्घपत्रकः । पृथुपत्रः स्थूलकन्दो यवनेष्टो बले हितः" । रा. नि । गृञ्जनकः स्वल्पनालपत्रः पलाण्डुरेवेति चरकसूत्रहरितवर्गव्याख्यायां चक्रपाणिदत्तः । "अन्यो रक्तो महाकन्दो गृञ्जनो दीर्घपत्रिकः" इति सरस्वतीनिघण्टुकारः । गुणाः—"गृञ्जनस्य मधुरं कटु कन्दं नालमप्युपदिशन्ति कषायम् । पत्रसञ्चयमुशन्ति च तिक्तं सूरयो लवणमस्थि वदन्ति" । रा. नि । अन्यच्च—"हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकृच्छ्रशोफान् । दुर्नामकुष्ठानलसादजन्तुकफामयान् हन्ति महारसोनः" । ध. नि । "लशुनस्य पलाण्डोर्वा मूलं गृञ्जनकस्य वा" इत्यादिचिकित्सितचतुर्थाध्यायवाक्यशकलमप्यत्रानुस्मरणीयम् ॥

**गृध्रः** । सू. ६ etc. गृध्यति मांसम् । गृधु अभिकांक्षायाम् । तरुणरविप्रकाशगलः मांसाशी महाप्रमाणो पक्षिविशेषः । हिं.—गिद्ध, गीध ; बं.—शकुनी ; म.—गिधाड ; क.—गिडिग ; त.—कलुकु ; सिं.—गिजुलिहिणि ; मल.—कलुकन् കഴുകൻ, कलु ; इं.—Vulture ; ल.—*Otogyps Calvus* । नामानि—"गृध्रस्तार्क्ष्यः शाल्मलीस्थः खगेन्द्रो भुजगान्तकः । वज्रतुण्डश्च दाक्षाय्यो गरुत्मान् दुष्टदर्शनः" । ध. नि । गुणाः—गृध्रस्य काकवन्मांसं विशेषान्नेत्ररोगाजित्" । म. पा । "गृध्रः खगान्तरे पुंसि वाच्यलिङ्गस्तु लुब्धके" इति मेदिनी ॥

**गृध्रनखी** । उ. ३५. बदरी । विरलेति पाठ्यकारः । कार्चोट्टि इति केरलेष्वेके । नक्कार्वळ्ळि इत्यपरे ॥

**गृष्टिः** । उ. ६ etc. सकृत् गर्भं गृह्णाति । **प्रथमप्रसूता गौः** । हिं.—पहलून ब्याई हुई गौ, एकवार सूई हुई गाय ; म.—एकदां व्यालेली गाय ; मल.—कटिङ्ङिल्लपशु ; इं.—Cow that has only one calf । see **बष्कयणी** । "गृष्टिः सकृत्प्रसूता स्यात्" इति हलायुधः । "अथ गृष्टिः सकृत्सूतगवीबदरयोः स्त्रियां" इति मेदिनी ॥

**गृहकपोतः** । उ. ३७. पारावतः ॥

**गृहधूमः** । चि. ८ etc. आगारधूमः । हिं.—घरकाधूम ; बं.—झूल ; म.—खरोसा, धुरकट ; त.—ओट्टरै ; सिं.—वियन्दुंबुलु ; मल.—इलट्टकरि ഇല്ലട്ടക്കരി, पुकयिरा, अट्टकरि ; इं.—House-smoke, soot । वातशोणितचिकित्सिते "गृहधूमो वचाकुष्ठ"मित्यत्र गौरधूम इत्येव मुद्रितचरकपाठः । "द्वे हरिद्रे वचाऽगारधूमकुष्ठशताह्विका" इति तत्रावश्यं पठनीयमित्यनुस्मारयामि ॥

**गैरिकम्** । सू. १० etc. गिरौ भवम् । **गिरिमृत्तिका नाम रक्तधातुविशेषः** । "गैरिकं द्विविधं प्रोक्तं पाषाणं स्वर्णगैरिकम् । पाषाणगैरिकं प्रोक्तं कठिनं ताम्रवर्णकम् । अत्यन्तशोणितं स्निग्धं मसृणं स्वर्णगैरिकं" इति तन्त्रान्तरे । हिं.—गेरू, हिरौंजी ; बं.—गिरिमाटी, गेरिमाटी ; म.—काव, गेरू ; गु.—गेरू ; क.—जाजु ; त.—कावि ; सिं.—खिवंगुरु ; गिरिमेटि ; मल.—काविमण्णु കാവിമണ്ണ് ; इं.—Ochre, china clay, Porcelain clay ; ल.—*Ochra, Kaolinum* । **नामानि**—"गैरिकं रक्तधातुः स्याद् गिरिधातुर्गवेधुकम् । धातुः सुरंगधातुश्च गिरिजं गिरिमृद्भवम्" । रा. नि । शोधितं ग्राह्यम् । **शुद्धिः**—"अम्लक्षारगवां मूत्रैर्गैरिकं विमलं धमेत् । क्रमाद्रक्तं च पीतं च सत्वं पतति शोधनात्" । **गुणाः**—"गैरिकं मधुरं शीतं कषायं व्रणरोपणम् ।

विस्फोटार्शोऽग्निदाहघ्नं वरं स्वर्णादिकं शुभम्" । रा. नि । "विशदो गैरिकः स्निग्धः कषायो मधुरो हिमः । चक्षुष्यो रक्तपित्तघ्नश्छर्दिहिध्माविषापहः" । ध. नि ॥

**गोकण्टकः** । सू. १५ etc. गोर्धेनो पृथिव्या वा कण्टकः । गोक्षुरः । "गोकण्टको गोक्षुरके क्षुपुटे च गवां खुरे" इति मेदिनी ॥

**गोकर्णः** । सू. ६. गोरिव कर्णावस्य । कूलचरमृगभेदः । गोकर्णसदृशकर्णो रासभाकार इति हेमाद्रिः । बृहन्मृग इति शिवदीपिका । गोमुखहरिणविशेष इति चक्रपाणिदत्तः । गोसदृशकर्णः 'गोन' इति प्रसिद्धः इति डल्हणः । अश्वतरविशेष इत्येके । विकटशृङ्ग इति मदनपालः । मल.—कलुतमान् കഴുതമാൻ । "परंपरस्तु गोकर्णः पोटरूपस्तु तत्समः" इति वैजयन्ती । गुणाः—"गोकर्णमांसं मधुरं स्निग्धं मृदु कफापहम् । विपाके मधुरं चापि रक्तपित्तविनाशनं" इति सुश्रुतः । "गोकर्णोऽश्वतरे सर्पे सारंगे प्रमथान्तरे" इति विश्वः ॥

**गोक्षुरः** । सू. १० etc. क्षुरति । 'क्षुर विलेखने' । गोर्गवां क्षुरकः । स्वनामख्यातः स्थलशृङ्गाटो नाम कण्टकक्षुपः । N. O.—*Zygophylleæ* । हिं.—गोखरू, गोखुरू; उर्दु.—गोखरू; बं.—गोक्षुरी, गोखरी, तोखरी; म.—सरांटे, गोखरूं; गु.—गोखरू; उत्.—गोखुरा, वेडिली सराटी; तै.—पल्लेरु; क.—नेग्गिलुमुळ्लु, नेरिगिलु; कों.—नेगल्मुळ्लु; तु.—नेगिल्मुळ्लु; त.—नेरिंचि, नेरुंचिल्, अच्चूरं; सिं.—गोकटु; मल.—ञेरिञ्ञिल् ഞെരിഞ്ഞിൽ; अ.—बजरूलीखस्क; पा.—तुख्मेखार; इं.—Small caltrops, tribulus; ल.—*Tribulus Terrestris* । नामानि—"गोक्षुरः क्षुरकोपि स्यात्त्रिकण्टः स्वादुकण्टकः । गोकण्टको गोक्षुरको वनशृङ्गाट इत्यपि । पलंकषा श्वदंष्ट्रा च तथा स्यादिक्षुगन्धिका" । भा. प्र । गुणाः—"गोक्षुरः

शीतलः स्वादुर्बलकृद्बस्तिशोधनः । मधुरो दीपनो वृष्यः पुष्टिदश्चाश्मरीहरः । प्रमेहश्वासकासार्शःकृच्छ्रहृद्रोगवातनुत्" । भा. प्र । मूलं बीजं च ग्राह्यम् । अभावे सर्वांशो ग्रहणीय इत्येके ॥

**गोक्षुरकः** । सू. ६ etc. गोक्षुरः ॥

**गोक्षुरुः** । उ. ४०. गोक्षुरः ॥

**गोजलम्** । चि. १७. गोमूत्रम् ॥

**गोजिह्वा** । सू. ६ etc. गोजिह्वाभपत्रा । स्वनामख्यातपत्रशाकक्षुपः । N. O.—*Compositae* । हिं.—गोभी, गोजिया; बं.—गोजिवा, दानाशाक, दाडीशाक, म.–भुईपथरी, पाथरी; गु.—भोपाथरी, गलजीभी; तै.—येद्दुनालुकचेट्टु, भरिलिकचेट्टु; क.—नेलमुच्चळ, नेलमुच्चिलु, यलुनालगे; कों.—मुसळकोम्पु; तु.–नेलमुच्चळ; त.–यानैच्चुवटि; सिं.–अलिअटि, गोदिव, मल.–आनयटि ആനയടി, आनच्चुवटि; पा.— कलमरूमी; ई.—Elephant's foot; फ्र.—Pied d' elephant ल.—*Elephantopus scaber* । कर्कशा दीर्घपत्रा गोजिभी इति लोके इति डल्हणः । नामगुणाः—"गोजिह्वा गोजिका गोभी दार्विका खरपर्णिनी । गोजिह्वा वातला शीता ग्राहिणी कफपित्तनुत् । हृद्या प्रमेहकासास्रव्रणज्वरहरी लघुः । कोमला तुवरा तिक्ता स्वादुपाकरसा स्मृता" । भा. प्र । मूलं ग्राह्यम् ॥

**गोदन्तः** । सू. ३८. etc. गवां दन्तः । गौका दांत । मल.–पशुविन्पल्लु പശുവിൻപല്ല് ॥

**गोधा** । सू. ६ etc. स्वनामख्यातजन्तुविशेषः । "गोधा तलनिहाकयोः" इति मेदिनी । हिं.–गोह, गोही; बं.–गोसाप्; म.–घोरपड; क.–उडु; त.–उडुंपु; सिं.–गोयि; मल.–उडुम्पु ഉടുമ്പ്; ई.–Iguana, Veranus; ल.–*Lacerta monitor* ।

नामानि—"गोधा घोरफडा पञ्चनखराजः स्मृतस्तथा । खरचर्मा तु गोधायां गौधेरः स महाविषः" । ध. नि । सा द्विधा जलजस्थलजभेदात् । **मांसगुणाः**—"गोधा विपाके मधुरा कषायकटुका स्मृता । वातपित्तप्रशमनी बृंहणी बलवर्धनी" इति चरकसुश्रुतौ । अन्यच्च—"रक्तपित्तहरा वृष्या स्निग्धा मधुरशीतला । श्वासकासहरा प्रोक्ता गोधा चार्शोहिता तथा" । अत्रि. सं ॥

**गोधूमः** । सू. ३ etc. गुध्यति, गुध्यते, वा । 'गुध परिवेष्टने' । स्वनामख्यातशूकधान्यः । N. O. - *Gramineæ* । हिं.—गेहूं, गेउन्; बं.—गम, गोहुम; म.—गहूं; गु.—घऊं; तै.—गोधुमलु, गोदुमु; क.—गोधि; कों.—गवु; तु.—गोदि; त.—कोतुमै; सिं.—तिरिंगु, गोदमु; मल.—कोतम्पं കോതമ്പ്, कोतम्पु; अ.—हिन्ता; पा.—गंदुम; इं.—Wheat; ल.—*Triticum Sativum, T. Vulgare* । नामानि—"गोधूमो बहुदुग्धः स्यादपूपो म्लेच्छभोजनः । यवनो निस्तुषः क्षीरी रसालः सुमनश्च सः" । रा. नि । पुराणं ग्राह्यम् । **गुणाः**—"गोधूमो मधुरः शीतो वातपित्तहरो गुरुः । कफशुक्रप्रदो बल्यः स्निग्धः सन्धानकृत् सरः । जीवनो बृंहणो वर्ण्यो व्रण्यो रुच्यः स्थिरत्वकृत्" । भा. प्र ॥

**गोनर्दः** । सू. ६. गां जलं नर्दयति । 'नर्द शब्दे' । श्वेतवर्णकंकविशेषः । घोडाकंक इति ख्यातः । "गोनर्दः पुष्कराह्वयः" इति वैजयन्ती । म.—गोनरपक्षिविशेष; मल.—वेण्नारा; Cattle Egret; ल.—*Bubulcus coromandus* ॥

**गोपकन्या** । चि. २. शारिबा ॥

**गोपतिः** । शा. ६. गवां पतिः । पुंवृषः । बं.—षांड; हिं.—सांड;

मल.—वित्तुकाळा വിത്തുകാള । Breeding bull "वृषाकेंन्द्रेषु गोपति"रिति वैजयन्ती । "षण्डो गोपतिरिट्वरः" इत्यमरः ॥

**गोपसुता । सू. १५. शारिवा ।** विदार्यादिगणे शारिवां कृष्णशारिवां च प्रोक्तमाचार्यसुश्रुतेन । तस्मादत्रापि तद्युग्ममवश्यं ग्राह्यमित्यनुस्मारयामि ॥

**गोपांगना । क. ४. शारिवा ॥**

**गोपी । सू. २०.** गोपायति । 'गुपू रक्षणे' । **शारिवा ॥**

**गोमत्स्यम् । शा. २.** पदद्वयमेव । मत्स्यगवयाविलेवात्र चरकपाठः ।

**गोमयः । उ. ११.** etc. **गवां पुरीषम् ।** गोशकृत् । हिं.—गोबर; बं.—गोवर; म.—शेण; सिं.—गोम; त.—पचुविन्चाणं; मल.—पशुविन्चाणं പശുവിൻചാണം, चाणकं; इं.—Cowdung । **नामानि**—"गोमयं गोपुरीषं स्याद् गोविष्ठा गोमलं च तत्" । रा. नि । "गोशकृद् गोमयो न स्त्री"रिति वैजयन्ती ॥

**गोमांसम् । सू. ६. गोभवमांसम् ।** हिं.—गौका माँस, गयका मांस; म.—गाईचें बैलाचें मांस; सिं.—हरकीमस्; मल.—पशुविन्मांसं പശുവിൻമാംസം, पच्चियरचि । Beef । see **गौः** ॥

**गोमायुः । उ. ३५.** गां विकृतां वाचं मिनोति मीनाति वा । **जंबुकः** ॥

**गोमूत्रम् । गवां मूत्रम् ।** गोरेव न तु वृषभस्य । हिं.—गायका पेशाब, गायका मूत; म.—गाईचें मूत; क.—आकलगोन्त; त.—पचुमूत्तिरं; मल.—पशुविन्मूत्रं പശുവിൻമൂത്രം; इं.—Cow's urine । "मूत्रं गोमूत्रमुच्यते" इति । गोजाविमहिषाणां तु स्त्रीणां मूत्रं प्रशस्यते" इति भावमिश्रः । see **गौः** ॥

**गोमेदकः** । नि. ९. पीतरत्नकम् । पुष्परागाभो मणिः । "गोमूत्राभं यन्मृदु स्निग्धमुग्धं शुद्धच्छायं गौरवं यश्च धत्ते । हेमारक्तं श्रीमतां योग्यमेतत् गोमेदाख्यं रत्नमाख्यान्ति सन्तः" इति तन्त्रान्तरे । "हिमालये वा सिन्धौ वा गोमेदमणिसंभवः" । हिं.—गोमेद, सुलैमानी पत्थर; म.—गोमेदमणी; त.—कोमेतकं; सिं.—नखमाणिक्यय; मल.—इळमञ्ञ ഇളമഞ്ഞ, मञ्ञकल्लु, गोमेदकं; इं.—Yellow gem, onyx, Sardonyx । "गोमेदः प्रियकृद्राहोः ईषत्पीतारुणप्रभः" इति शुक्रनीत्याम् । **नामानि**—"गोमेदकस्तु गोमेदो राहुरत्नं तमोमणिः । स्वर्भानवः षडाह्वोयं पिङ्गस्फाटिक इत्यपि" । **गुणाः**—"गोमेदकोम्ल उष्णश्च वातकोपविकारजित् । दीपनः पाचनश्चैव धृतोयं पापनाशनः" । **गोमेदपरीक्षा**–"पात्रे यत्र न्यस्ते पयः प्रयात्येव गोजलोज्ज्वलताम् । घर्षेप्यहीनकान्तिं गोमेदं तं बुधा विदुर्जात्यम् । अरंगं श्वेतकृष्णांगं रेखात्रासयुतं लघु । विच्छायं शर्करागारं गोमेदं विबुधस्त्यजेत्" । रा. नि । **मूल्यम्**—शुद्धस्य गोमेदमणेस्तु मूल्यं सुवर्णतो द्वैगुणमाहुरेके । अन्ये तथा विद्रुमतुल्यमूल्यं तथापरे चामरतुल्यमाहुः" । युक्तिकल्पतरुः । "यज्ञवाटे हता गावो दग्धाः कोपाग्निना तदा । तन्मेदसा मही छन्ना गोमेदः स ततोऽभवत्" । इति पुराणम् ॥

**गोरसः** । नि. १० etc. गोरसस्य दुग्धस्य विकारत्वादुपचारात् । तक्रम् । "उदश्वित् मथितं तक्रमरिष्टं गोरसं तथा । दण्डाहतं खण्डहारा कालशेयं च शब्दितम्" । स. नि । "विना गोरसः को रसो भोजनानां" इति ॥

**गोरोचना** । शा. ३ etc. गोभ्यो जाता रोचना हरिद्रा । गवां शुष्कं पित्तम् । गोमस्तकस्थशुष्कपित्तमिति साधवः । गोमूत्रनिर्मितमिति केचित् । नाभिप्रदेशभवेत्येके । उक्तं हि—"विशोषयेद्धस्ति-

गतं तु शुक्रं मूत्रं सपित्तं पवनः कफं वा । यदा तदाश्मर्युपजायते तु क्रमेण पित्तेष्विव रोचना गोः" इति चरकः । "सञ्जायतेश्मरी घोरा पित्तात् गोरिव रोचना" इति वाग्भटः । हिं.—गोरोचन, गौलोचन ; वं.—गोरोचना ; म.—गोरोचन ; तै.—गोरोचनमु; गु.—गोरोचन ; क.—गोरोचन ; त.—कोरोचिनै ; सिं.—गोरद, गोरोचन ; मल.—गोरोचनम् ഗോരോചനം ; पा.—गायरोहन ; अ.—हजरूलवक्लर , हजरतालबक्वर ; इं.—Bezoar, Gall-stone, Serpent stone । **नामानि**—"रोचना गोभवः स्निग्धा गव्यं गोरोचना स्मृता" । स. नि । **गुणाः**—"गोरोचना हिमा तिक्ता वश्या मंगलकान्तिदा । विषालक्ष्मीग्रहोन्मादगर्भस्रावक्षतास्रहृत्" । भा. प्र । **अन्यच्च**—"गोरोचना च शिशिरा विषदोषहन्त्री रुच्या च पाचनकरी कृमिकुष्ठहन्त्री । भूतग्रहोपशमनं कुरुते च पथ्या शृङ्गारमंगलकरी जनमोहिनी च" । रा. नि । अकृत्रिमा ग्राह्या ॥

**गोलोमी** । उ. ५. गोरिव लोमान्यस्याः । दूर्वा । श्वेतदूर्वेति हाराणचन्द्रः । "गोलोमी श्वेतदूर्वायां" इति मेदिनी । डल्हणमतमेवात्रांगीकृतः । गोलोमनिर्मितवस्त्रविशेष इति केरलेष्वेके । **उक्तं हि सरस्वतीनिघण्डौ**—"सहस्रवीर्या गोलोमी श्यामा दूर्वा च शाद्वला । भार्गवी मंगलानन्ता शिशिरा शतपर्विका" इति ॥

**गोवारि** । उ. ३६. गोमूत्रम् ॥

**गोवृषः** । शा. ३. वृषः । "ककुद्मी गोवृषो घोणः ककुद्मान् मदकोहलः" इति वैजयन्ती । see **गोपतिः** ॥

**गोवृषभः** । शा. ६. वृषः । see **गोपतिः** ॥

**गोशृङ्गम्** । उ. ३. गवां शृङ्गम् । गौके पुराने सींग ॥

**गोष्फणाबन्धः** । उ. २६. बन्धविशेषः । गोष्फणा कौपीनं कच्छोटकः इत्यर्थः ॥

**गोसलिलम्** । चि. १९. गोमूत्रम् ॥

**गौः** । सू. ६. etc. गच्छति । स्वनामख्यातपशुः । हिं.—गाय, गौ; म.—गाय; क.—आकल; त.–पचु; सिं.—देन, हरकी; मल.—पशु பசு, पै; इं.—Cow । **नामानि**—"सुरभिः सौरभेयी च माहेयी गौरुदाहृता" । भा. प्र । **मांसगुणाः**—"गव्यं केवलवातेषु पीनसे विषमज्वरे । शुष्ककासश्रमात्यग्निमांसक्षयहितञ्च तत्" इति चरकः । "श्वासकासप्रतिश्यायविषमज्वरनाशनम् । श्रमात्यग्निहितं गव्यं पवित्रमनिलापहं" इति सुश्रुतः । "गोमांसं तु गुरु स्निग्धं पित्तश्लेष्मविवर्द्धनम् । बृंहणं वातहृद्बल्यमपथ्यं पीनसप्रणुत्" । भा. प्र । **दुग्धगुणाः**—"गव्यं दुग्धं विशेषेण मधुरं रसपाकयोः । शीतलं स्तन्यकृत् स्निग्धं वातपित्तास्रनाशनम् । दोषधातुमलस्रोतःकिञ्चित्क्लेदकरं गुरु । जरासमस्तरोगाणां शान्तिकृत् सेविनां सदा । कृष्णाया गोर्भवेद्दुग्धं वातहारि गुणाधिकम् । पीताया हरते पित्तं तथा वातहरं भवेत् । श्लेष्मलं गुरु शुक्लाया रक्तचित्रा च वातहृत् । भा. प्र । "स्वल्पान्नभक्षणाज्जातं क्षीरं गुरु कफप्रदम् । तत्तु बल्यं परं वृष्यं स्वस्थानां गुणदायकम् । पलालतृणकार्पासबीजजातं गुणैर्हितम्" । "बालवत्सविवत्सानां गवां दुग्धं त्रिदोषकृत्" । भा. प्र । **दधिगुणाः**—"गव्यं दधि विशेषेण स्वाद्वम्लं च रुचिप्रदम् । पवित्रं दीपनं हृद्यं पुष्टिकृत् पवनापहम् । उक्तं दध्नामशेषाणां मध्ये गव्यं गुणाधिकम्" । भा. प्र । **तक्रगुणाः**—"गव्यं त्रिदोषशमनं पथ्ये श्रेष्ठं तदुच्यते । दीपनं रुचिकृन्मेध्यमर्शोदरविकारजित्" । **नवनीतगुणाः**—"नवनीतं हितं गव्यं वृष्यं वर्णबलाग्निकृत् । संग्राहि वातपित्तासृक्क्ष-

यार्शोऽर्दितकासहृत् । तद्धितं बालके वृद्धे विशेषादमृतं शिशोः" । **घृतगुणाः**—"गव्यं घृतं विशेषेण चक्षुष्यं वृष्यमग्निकृत् । स्वादुपाककरं शीतं वातपित्तकफापहम् । मेधालावण्यकान्त्योजस्तेजोवृद्धिकरं परम् । अलक्ष्मीपापरक्षोघ्नं वयसःस्थापकं गुरु । बल्यं पवित्रमायुष्यं सुमंगल्यं रसायनम् । सुगन्धं रोचनं चारु सर्वाज्येषु गुणाधिकं" । भा. प्र । **मूत्रगुणाः**—"गोमूत्रं कटु तिक्तोष्णं कफवातहरं लघु । पित्तकृद्दीपनं मेध्यं त्वग्दोषघ्नं मतिप्रदम्" । रा. नि । **अन्यच्च**—"गोमूत्रं कटु तीक्ष्णोष्णं क्षारं तिक्तकषायकम् । लघ्वग्निदीपनं मेध्यं पित्तकृत् कफवातहृत् । शूलगुल्मोदरानाहकण्ड्वाक्षिमुखरोगजित् । किलासगदवातामवस्तिरुक्कुष्ठनाशनम् । कासश्वासापहं शोथकामलापाण्डुरोगहृत् । कण्डूकिलासगदशूलमुखाक्षिरोगान् गुल्मातिसारमरुदामयमूत्ररोधान् । कासं सकुष्ठजठरक्रिमिपाण्डुरोगान् गोमूत्रमेकमपि पीतमपाकरोति । सर्वेष्वपि च मूत्रेषु गोमूत्रं गुणतोऽधिकम् । अतोऽविशेषात् कथने मूत्रं गोमूत्रमुच्यते" । भा. प्र । "गोमूत्रं कटु तीक्ष्णोष्णं सक्षारत्वान्न वातलम् । लघ्वग्निदीपनं मेध्यं पित्तलं कफवातजित् । शूलगुल्मोदरानाहविरेकास्थापनादिषु । मूत्रप्रयोगसाध्येषु गव्यं मूत्रं प्रयोजयेत्" । सु. सू. ४५ ॥

**गौडः** । सू. ३ etc. गुडस्य विकारः । गौडीति पाठः । "गौडी तु शिशिरे पानं" इति । **गुडेन कृतो मद्यविशेषः** । गुड़के योगसे बनायी हुई मद्य । Spirit distilled from treacle । गुडप्रकृतिकः शीधुरिति चक्रपाणिदत्तः । "धातकीगुडमुख्या या गौडी सा मदिरोच्यते" इति भावमिश्रः । **गुणाः**—"गौडी कषाया मधुराम्लशीता सन्दीपनी शूलमलापहन्त्री । हृद्या त्रिदोषं शमयत्यजीर्णं पाण्ड्वामयार्शःश्वसनं निहन्ति" । अत्रि. सं ॥

**गौडः** । चि. १७. गुडप्रधानः पिष्टविशेषः । गुड़की बनी वस्तु-येम् ॥

**गौडिकम्** । सू. १३ etc. मद्यविशेषः । गौडः ॥

**गौधेरः** । उ. ३६. गोधाया अपत्यम् । गोधासुतः । चन्दनगोहा इति ख्यातः इति रामाश्रमी । तदुत्पत्तिर्यथा—"कृष्णसर्पेण गोधायां भवेद्यस्तु चतुष्पदः । सर्पो गौधेरको नाम तेन दष्टो न जीवति" इति । "सर्पो गौधेरको नाम गोधाख्यः स्याच्चतुष्पदः । कृष्णसर्पेण तुल्यः स्यान्नाना स्युर्मिश्रजातयः" इति चरकः । नामानि—"गौधेरःस्यात्तु गौधेयो गौधेरो गोधिकासुतः" । रा. नि । प्रतिसूर्यकपिंगाभासबहुवर्णनिरूपमगोधेरकाश्चेति स पञ्चधा इति सुश्रुतः । "प्रतिसूर्यः पिंगभासो बहुलोमा महाशिराः । तथा निरूपमश्चेति पञ्च गौधेरकाः स्मृताः" इत्येके ॥

**गौरदण्डः** । शा. १. अपामार्गस्य विशेषणम् । सफेद डंडी ॥

**गौरसर्षपः** । सू. २२ etc. सिद्धार्थः ॥

**गौरामलकम्** । चि. ३. परिपक्वधात्रीफलम् । बं.—पाका आमलकी ; मल.—मूत्त नेल्लिक्का മൂത്ത നെല്ലിക്കാ । आर्द्रामलकमिति डल्हणचक्रपाणिदत्तौ । बडे आमले इति शिवदीपिका ॥

**ग्रन्थि** । चि. ३ etc. पिप्पलीमूलम् । रोध्रासवयोगे पिप्पलीमूलमित्येव संग्रहपाठः ॥

**ग्रन्थिकम्** । चि. ८. etc. पिप्पलीमूलम् ॥

**ग्रहणी** । शा. ३. Duodenum । "ग्रहणी नाम क्षुद्रान्त्रस्य आद्यभागो द्वादशांगुलमानः । तत्र पित्तकोषादागतं पाचकपित्तं, अग्न्याशयादागत आग्नेयरसश्च पृथक् स्रोतोद्वयेन सम्मिलितमुखेन प्रसिच्येते, अर्धपक्वस्य अन्नस्य सम्यग्विपाकाय" । प्र. शा । see पित्तधरा ॥

**ग्राम्यम्** । चि. १७. जनपदमध्यचारिप्राणिजं मांसम् । **ग्राम्यमांसम्** ॥

**ग्राम्यकुक्कुटः** । सू. ६. ग्रामे भवो ग्राम्यः कुक्कुटस्ताम्रचूडः । ग्राममें रहने वाला मुर्गा । "ग्राम्यकुक्कुटजं स्निग्धं वातहृद्दीपनं गुरु । रा. नि । see **कुक्कुटः** । "तद्वद्ग्राम्यो गुरुस्तु सः । वातरोगक्षयवमीविषमज्वरनाशनः" इति सुश्रुतः ॥

**ग्राम्यमांसम्** । नि. १३. चटककुक्कुटाजादीनां मांसम् । "ग्राम्याः स्युः कुक्कुटादयः" इति वैजयन्ती । "छागमेषवृषाश्वाश्वा ग्राम्याः प्रोक्ता महर्षिभिः" । भा. प्र । see **जांगलम्** । "अश्वाश्वतरगोखरोष्ट्रबस्तोरभ्रमेदःपुच्छकप्रभृतयो ग्राम्याः" इति सुश्रुतः ॥

**ग्राहः** । नि. ६. गृह्णाति ग्राहः । **कुंभीरो नाम जलजन्तुविशेषः** । "ग्राहस्तन्त्रस्तस्तुनागस्तन्द्रश्चामोघतन्तुका"विति वैजयन्ती । "दुर्गेंभासि यथामज्जद्ग्राजनं त्वरया बुधः । गृह्णीयात्तलमप्राप्तं तथा संन्यासपीडितं" इति निर्वचितमाचार्यचरकमप्यत्र कार्यगौरवेणार्थविशदतयालंकारहुङ्कारेण चातिशयितवान् वाग्भटः स्वसिद्धवाग्भटमतल्लिकया । यथा—"अगाधे ग्राहबहुले सलिलौघ इवातटे । संन्यासे विनिमज्जन्तं नरमाशु निवर्तयेत्" ॥



# घ ।

**घटिका** । चि. १४. अल्पो घटः । **पात्रविशेषः, लघुकुंभम्** । see **कुंभी** ॥

**घनः** । सू. १४ etc. **मुस्ता** ॥

**घर्मांबु** । चि. ३. उष्णजलम् । हिं.—गर्म जल । मल.—चुडुवे-ळ्ळम् । Hot water ॥

**घाटा** । उ. २३. घाटयति, घाट्यते, वा । 'घट संघाते' । **ग्रीवायाः पश्चात्भागः** । शिरकी पिछली सन्धि । बं.—घाड़ । मल.—पिटरि പിടരി, पिरटि । Nape or back of the neck । "घाटामवटुं कृकाटिकामाहु"रिति हलायुधः ॥

**घुणप्रिया** । सू. १५ etc. अतिविषा ॥

**घुणवल्लभा** । सू. ८ etc. अतिविषा ॥

**घुणेष्टा** । चि. १९. अतिविषा ॥

**घृतम्** । सू. ४ etc. घ्रियते । 'घृ सेके' । **नवनीतजपदार्थः** । "घृतमाज्यांबुदीप्तेषु" इति हेमचन्द्रः । उक्तं हि—"नवनीतं सितं सम्यक्शोधितं पीतवर्णकम् । एकस्मिन् निक्षिपेद्भाण्डे गव्यं तद्वासरोद्भवम् । चुल्यामारोपयेद्विद्वान् तपयेन्मृदुवह्निना । तदीषद्द्रव्यसंयुक्तं जालिन्या च विशोधयेत् । शोधितं तत् पचेत् सम्यगवघट्टनपूर्वकम् । बुद्बुदेषु विलीनेषु रक्तवर्णं प्रदापयेत् । सौरभ्यं निक्षिपेत्तत्र किञ्चिद्गोधूमचूर्णकम् । तदावलोक्य सूदस्तु तद् घृतं चावतारयेत्" इति पाकदर्पणे । हिं.—घी ; बं.—घि ; म.—तूप ; गु.—घी ; तै.—नेई ; क.—तुप्प ; त.—नेय् ; सिं.—गितेल् ; मल.—नै നെയ്, नेय्यु ; पा.—रागेने जर्द ; अ.—समन् ; इं.—Ghee, Clarified butter ; ल.—*Ghee* । Ghee is clarified butter, obtained by boiling fresh butter and removing the impurities which settle down । **नामानि**—"घृतमाज्यं हविः सर्पिः पवित्रं नवनीतजम् । अमृतं चाभिघारश्च जीवनीयं प्रकीर्तितम्" । ध. नि । **गुणाः**—"घृतं रसायनं स्वादु चक्षुष्यं वह्निदीपनम् । शीतवीर्यं विषालक्ष्मीपापपित्तानिलापहम् ।

अल्पाभिष्यन्दि कान्त्योजस्तेजोलावण्यबुद्धिकृत् । स्वरस्मृतिकरं मेध्यमायुष्यं बलकृद् गुरु । उदावर्तज्वरोन्मादशूलानाहव्रणान् हरेत् । स्निग्धं कफकरं रक्षोरक्तक्षयविसर्पनुत्" । भा. प्र । "आयुर्वृद्धिं वपुषि दृढतां सौकुमार्यं च कान्तिं बुद्धिं धत्ते स्मृतिबलकरं शीतविध्वंसनं च । पथ्यं बाल्ये वयसि तरुणे वार्धके चातिबल्यं नान्यत्किंचिज्जगति गुणदं सर्पिषः पथ्यमस्ति" । रा. नि । **पुराणघृतस्य गुणाः**—वर्षादूर्ध्वं भवेदाज्यं पुराणं तत्त्रिदोषनुत् । मूर्छाकुष्ठविषोन्मादापस्मारतिमिरापहम् । यथा यथाखिलं सर्पिः पुराणमधिकं भवेत् । तथा तथागुणैः स्वैः स्वैरधिकं तदुदाहृतम्" । भा. प्र । "उग्रगन्धं पुराणं स्याद्दशवर्षस्थितं घृतम् । लाक्षारसनिभं शीतं प्रपुराणमतःपरं" इति चरकः । "एकादशशतं चैव वत्सरानुषितं घृतम् । रक्षोघ्नं कुंभसर्पिः स्यात् परतस्तु महाघृतं" इति सुश्रुतः । **पक्वघृतम्**—"घृतमब्दात् परं पक्वं हीनवीर्यत्वमाप्नुयात्" इति भावमिश्रः । **नवनीतघृतविषयाः**—"योजयेन्नवमेवाज्यं भोजने तर्पणे श्रमे । बलक्षये पाण्डुरोगे कामलानेत्ररोगयोः । **घृतादानविषयाः**—"राजयक्ष्मणि बाले च वृद्धे श्लेष्मकृते गदे । रोगे सामे विषूच्यां च विबन्धे च मदात्यये । ज्वरे च दहने मन्दे न सर्पिर् बहुमन्यते" । भा. प्र ॥

**घृतमण्डः** । चि. ३. विलीनघृतस्य घनीभूत उपरितनोच्छो भागः । मल.—नेय्त्तेळि നെയ്ത്തെളി । **गुणाः**—"योनिश्रोत्राक्षिशिरसां शूलघ्नो मधुरः सरः । शस्यते घृतमण्डस्तु वस्तिनस्याक्षिपूरणे" ।

**घोण्टा** । सू. १५. घोणते । 'घुण भ्रमणे' । **वनबदरीविशेषः** । "घोण्टा तु बदरीपूगवृक्षयोरपि योषिति" इति मेदिनी । वन्यक्षुद्रबदरः । गोपघोण्टेति सुश्रुतपाठः । **तल्लक्षणं यथा**—"बदरीसदृशाकारो वृक्षः सूक्ष्मफलो भवेत् । अटव्यामेव सा घोण्टा गोपघोण्टेति

चोच्यते" । बं.—सेयाकुल; म.—चन्याबोर; गु.—गांगेर: क.—गोइथि, परपाळि : पश्चा.—झारबेरि; मल.—काट्टिलन्ता കാട്ടിലന്താ; ई.—Jungle-bor; ल.—*Zizyphus nummularia* । मूलादिकं ग्राह्यम् । क्षुद्रबदरीभेदः 'राखालकुल' इत्याख्यायते इति सुश्रुतार्थसन्दीपनभाष्यकारः । बदरीति हेमाद्रिः । ग्रामकोलिकेति चेत्परे । कर्कोटीति डल्हणः । पूगविशेष इत्यरुणदत्तः ॥

**घोण्टाफलम्** । उ. ३०. घुणति (घोणते) भ्रमति-अनया घोण्टा । **क्रमुकफलम्** । "स्यात् पूगफलमुद्वेगं स्रंसि घोण्टाफलं स्मृतम्" । ध. नि । बदरिकाफलमित्येव केचित् ॥

**घोषा** । उ. १३. etc. घुष्यते भ्रमरैरियम् । **शताह्वा** । "घोषया बिल्वमूलै"रित्यत्र "शताह्वा बिल्वमूलै"रिति संग्रहपाठः । "घोषाभयातुत्थकयष्टिरोध्रै"रित्यत्र "तुत्थव्योषाभयालोध्रयष्ट्याह्वैस्ताम्रसंस्थितै"रिति वृद्धवाग्भटः पठति ॥

---

# च ।

**चकोरः** । सू. ६. etc. चकते (ति) ज्योत्स्नया तृप्यति । **स्वनामख्यातपक्षिविशेषः** । रक्ताक्षो विषसूचक इति डल्हणः । **नामानि**— "चकोरस्तु चलचञ्चुरुत्पिबश्चन्द्रिकाप्रियः" इति वैजयन्ती । त.—निलामोक्कि । ई.—Greek Partridge । ल.—*Perdix rufu or Tetrao rufus* । **गुणाः**—"चटकं शीतलं रुच्यं वृष्यं कपिञ्जलामिषम् । तद्वच्चकोरजं मांसम् वृष्यञ्च बलपुष्टिदम्" । रा. नि ॥

**चक्रतैलम्** । उ. २६. etc. बहुकालतैलपीडनोपयोगिचक्रान् च-

कखलान् वा खण्डशः पाटितान्युक्त्या यत्तैलं गृह्यते तच्चक्रतैलम् । सद्यःपीडितलब्धमुक्तं तैलमित्येके । चक्रस्थं सद्यः पीडितमितीन्दुः । अन्ये पुनरणुतैलकल्पेन गृहीतमपक्वं तैलं चक्रतैलमाहुः । यथा—"तिलपरिपीडनोपकरणकाष्ठान्याहृत्यानल्पकालं तैलपरिपीतान्यणूनि खण्डशः कल्पयित्वाऽवक्षुद्य महति कटाहे पानीये आप्लाव्य क्वाथयेत्, ततः स्नेहमंबुपृष्ठाद्यदुदेति तत्सरकपाण्योरन्यतरेणादाय वातघ्नौषधप्रतीवापं च स्नेहपाककल्पेन विपचेत्, एतदणुतैलमुपदिशन्ति वातरोगेषु; अणुभ्यस्तैलद्रव्येभ्यो निष्पाद्यत इत्यणुतैलम्" इति सुश्रुतो वातव्याधिचिकित्सिते । कणयेण्णा इति केरलेषु ॥

**चक्रवाकः** । सू. ७. चक्रशब्देन उच्यते । **प्लवजातीयपक्षिविशेषः**। हिं.—चकवा; बं.—रामचका, चका; म.—चक्रवाक; मल.—चक्रवाकं; इं.—Ruddy goose, Brahmani duck or goose; ल.—*Anas casarca* । द्वन्द्वचरः निशावियोगी इति डल्हणः । **नामानि**—"चक्रवाकस्तु चक्राह्वश्चक्री चक्रथो रथी । रथांगनामा रथिकः कामी चक्रोथ चक्रवाक्" । ध. नि । **गुणाः**—"चक्रवाको महास्निग्धः शुक्रलो गुरुरेव च । बल्योऽथ रुचिकृद्वातहरो दोषविनाशनः" । ध. नि ॥

**चक्राह्वः** । सू. ६. चक्रवाकः ॥

**चंचुः** । सू. ६ etc. चुच्चुरिति पाठः । **नाडीचवत् जलजपत्रशाकः**। "चञ्चुस्त्रोट्यां स्त्रियां पुंसि गोनाडीके व्यडंबके" । हिं.—चंचु, चेबुना, चेचुक; बं.—चेचको; म.—चंचू; गु.—छुंछ; तै.—चिन्तचेट्टु; क.—चुंचु; मल.—नीर्च्चीरा നീർച്ചീര; इं.—Water cress इत्येके; ल.—*Carchorus Acutangularis* । चुच्चूनाडिकाकारपत्रः, 'चुचु' इति लोके इति डल्हणः । **नामगुणाः**—"चिञ्चा चञ्चुश्चञ्चुकी च दीर्घपत्रा सतिक्तका । च-

ञ्चुः शीता सरा रुच्या स्वाद्वी दोषत्रयापहा । धातुपुष्टिकरी बल्या मेध्या पिच्छिलका स्मृता" । भा. प्र । "चञ्चुबीजं कटूष्णं च गुल्मशूलोदरार्तिजित् । विषत्वग्दोषकण्डूलीकण्डूकुष्ठरुजापहम्" । रा. नि । "पिष्टं चंचुफल"मित्यत्र केचिदेरण्डकबीजमिति । "चंचुः पञ्चांगुलामण्डवर्धमानव्यडंवकाः" इत्यमरः ॥

**चटकः** । चटति भिनत्ति धान्यादिकम् । क्षुद्रपक्षिविशेषः । गृहकुलिङ्गः । हिं.—घरकाचिडा, चवुडैया ; बं.—चटईपक्षी, चटुइ ; म.—चिमणी, चिमणा ; क.—गुब्बी ; त.—कुरुवि ; सिं.—गेकुरुल्ला ; मल.—कुरुकिल् കുരുകില്, कुरिल्, ऊक्कुरिकिल्, कूरि, अरक्किळि ; इं.—House sparrow ; ल.—*Passer domesticus* । नामगुणाः—"चटकः कलविंकः स्या"दिति भावमिश्रः । "रक्तपित्तहरो वेश्मकुलिंगस्त्वतिशुक्रलः" इति सुश्रुतः । "चटका मधुराः स्निग्धा बलशुक्रविवर्धनाः । सन्निपातप्रशमनाः शमना मारुतस्य च" । च. सू. २७ । चटकस्तु देवकुलचटकः स्वल्पप्रमाणो वन्यः, वनचटकाकारः पीतमस्तको ग्राम्यचटकः कलविंक इति । स द्विविधः गृहारण्यभेदात् ॥

**चणकः** । नि. ७ etc. चण्यते । 'चण दाने' । शिंबीधान्यविशेषः । N. O.—*Leguminosæ* । हिं.—चने, चना, चणा, छोला ; चाणा ; बं.—छोलारगाछ, छोला, चोटाबुट, बुटकलाइ ; म.—हरबर, हरभरे, चणा ; पञ्जा.—नखुद ; गु.—चणा ; कों.—चणो ; तै.—सेनगलु, चणकमुलु ; मुंबापुर्याम्.—हरबरचणा ; क.—कडले ; तु.—कडले ; त.—कटलै ; सिं.—कडल, कोण्डकडल ; मल.—कटला കടല ; बर्मा.—कु-लो-पन ; पा.—नखूद ; चोला ; अ.—हुमस, हुमुग ; इत्तालिया.—Cece ; फ्र.—Poischi ; ज.—Zweigerbse ; इं.—Chi-

cken-Pea, Bengal gram; ल.—*Cicer Arientum, C. Arietinum* **नामानि**—"चणस्तु हरिमन्थः स्यात् सुगन्धः कृष्णकञ्चुकः बालभोज्यो वाजिभक्ष्यश्चणकः कञ्चुकी च सः"। रा. नि। पुराणं ग्राह्यम्। **गुणाः**—"चणकः शीतलो रूक्षः पित्तरक्तकफापहः। लघुः कषायो विष्टंभी वातलो ज्वरनाशनः। स चांगारेण सम्भृष्टस्तैलभृष्टश्च तद्गुणः। आर्द्रभृष्टो बलकरो रोचनश्च प्रकीर्तितः। शुष्कभृष्टोऽतिरूक्षश्च वातकुष्ठप्रकोपनः। स्विन्नः पित्तकफौ हन्यात् सूपः क्षोभकरो मतः। आर्द्रोतिकोमलो रुच्यः पित्तशुक्रहरो हिमः। कषायो वातलो ग्राही कफपित्तहरो लघुः"। भा. प्र। **शाकगुणाः**—"रुच्यं चणकशाकं स्याद्दुर्जरं कफवातकृत्। अम्लं विष्टंभजनकं पित्तनुद्दन्तशोथहृत्"। भा. प्र। **कृष्णचणकगुणाः**—"कृष्णस्तु चणकः शीतो मधुरश्च रसायनः। बलकृच्छ्वासकासघ्नः पित्तातीसारपित्तहा"। नि. र॥

**चण्डा**। सू. १५ etc. चण्डते। 'चडि कोपे'। **स्वनामख्यातगन्धद्रव्यम्**। ग्रन्थिपर्णम्। स्वनामख्यातेषत्कृष्णा चोरकभेदः अजमोदाकारा इति डल्हणः। कोपनेत्यरुणदत्तः। कामरूपेष्वतीव प्रसिद्धा। शंखपुष्पीभेद इत्येके। **ग्रन्थिपर्णलक्षणम्**—"ग्रन्थिकः पाण्डुरः किञ्चित् कनिष्ठः सर्वसम्मतः। उत्तमः कृष्णवर्णो यः स्थूलोतीव च निन्दितः"। हिं.—गठोना, गठिवन; गण्टिवण; बं.—गेठेना, गेंटेला; म.—गठोन्याचें झाड; गु.—तगरनी गांठ; क.—गठोना। **नामानि**—"ग्रन्थिपर्णं ग्रन्थिकं च काकपुच्छञ्च गुच्छकम्। नीलपुष्पं सुगन्धं च कथितं तैलपर्णकम्"। भा. प्र। **गुणाः**—ग्रन्थिपर्णं तिक्ततीक्ष्णं कटूष्णं दीपनं लघु। कफवातविषश्वासकण्डूदौर्गन्ध्यनाशनम्"। भा. प्र। "चण्डा धनहरीशंखपुष्प्योस्त्रिष्वतिकोपने। तीव्रेपि" इति मेदिनी॥

**चतुरंगुलः**। चि. १ etc. चतस्रोऽङ्गुल्यः प्रमाणमस्य पर्वणः। आरग्वधः॥

**चतुर्जातम्** । सू॰ ६. चातुर्जातकम् ॥

**चतुर्जातकम्** । see चातुर्जातकम् ॥

**चतुष्पथः** । सू॰ २ etc. चतुर्णां पथां संगमः । "चतुष्पथश्चतुर्मार्गसंगमेपि द्विजेपि च" इति विश्वप्रकाशः । चत्वारो मार्गाः यत्रैकीभवन्तीति पदार्थचन्द्रिका । "शृङ्गाटं तु चतुष्पथः" इति वैजयन्ती । हिं.—चौराहा; बं.—चौमाथा; इं.—Cross-way where four roads meet ॥

**चत्वरः** । सू॰ २ etc. प्रदेशविशेषः । नगराद् ग्रामाद् बहिर्निर्गत्य यो भवति यत्र नगरनिवासिनो ग्रामनिवासिनो वा स्वैरेणागत्य नानाविधाः कथास्तास्ताश्चिन्तयन्ति स चत्वर इति पदार्थचन्द्रिका । ग्रामाद् बहिर्यत्र ग्राम्याः सर्वे कथाः कुर्वन्ते यश्च त्रयाणां पथां संक्रमः स चत्वर इति हेमाद्रिः । "चत्वरं स्यात् पथां श्लेषे स्थण्डिलांगनयोरपि" इति हैमः । ग्रामाद् बहिरवताराश्रयमन्ये, ग्रामीणसमाजस्थानमित्यन्ये इति चेन्दुः । त्रिपथमिति केचित् । यागस्थलमित्यपरे । उत्तरपञ्चमाध्याये "दैत्यभूताय चत्वरे" इत्यत्र "चौकोर आंगण" इति शिवदीपिका । ॥

**चन्दनः** । सू॰ ३ etc. चन्द्यते ह्लाद्यतेनेन चन्दनम् । परमसुगन्धिकाष्ठः स्वनामख्यातवृक्षः । "स्वादे तिक्तं कषे पीतं मोदे रक्तं तनौ सितम् । ग्रन्थिकोटरसंयुक्तं चन्दनं श्रेष्ठमुच्यते" इति भावमिश्रः । अन्यच्च—"श्वेतचन्दनमत्यन्तं स्निग्धं गुरु सुगन्धि च । भवेत् यच्चन्दनं रक्तपीतसारं यदुत्तमम् । यत्पाण्डरमसारं च न भद्रं प्रवदन्ति तद्" । N. O.—*Santalaceæ* । हिं.—चंदन, सफेदचंदन; सन्दल; बं.—चंदन; म.—चंदन; गु.—सुखड; उ.—सन्दल; पञ्जा.—सन्दल; दखा.—सफेद सन्दल, कों.—श्रीगांद; काश्मी.—सफेद चन्दन; तै.—चन्दनमु,

गन्धपु-चेक्का; क.—श्रीगंधदमर, वेट्टपंचे गन्ध; त.—चन्तनं; मल.—चन्दनं ചന്ദനം; तु.—गंद, चंदन; सिं.—सन्दुन्; मलाई.—मिनियक् चन्दन; पा.—सन्दलसुफेद; अ.—सन्दले अबीयद; फ्रा.—Santal blanc; ज.—Weisser Santelbaum; ई.—Sandalwood tree; ल.—*Santalum Album*। "नाकारि पुष्पं खलु चन्दनेषु" इति पौराणिकाः। नामानि— "चन्दनं गन्धसारं च महार्हं श्वेतचन्दनम्। भद्रश्रीस्तु मलयजं गोशीर्षं तिलपर्णकम्"। ध. नि। काष्ठं ग्राह्यम्। पटोलादिगणे चन्दनस्थाने चन्दनं कुचन्दनं चेति पदद्वयं दृश्यते सुश्रुतसंहितायाम्। कुचन्दनं रक्तचन्दनमेव। स सप्तभेदः—श्रीखण्डशबरपीतपत्तंगरक्तचन्दनबर्बरहरिगन्धभेदेन। गुणाः—"चन्दनं शीतलं रूक्षं तिक्तमाह्लादनं लघु। श्रमशोषविषश्लेष्मतृष्णापित्तास्रदाहनुत्"। भा. प्र। "श्रीखण्डं कटुतिक्तशीतलगुणं स्वादे कषायं कियत्पित्तभ्रान्तिवमिज्वरक्रिमितृषासंतापशान्तिप्रदम्। वृष्यं वक्त्ररुजापहं प्रतनुते कान्तिं तनोर्देहिनां लिप्तं सुप्तमनोजसिन्धुरमदारंभादिसंरंभदम्"। रा. नि। "चन्दनानि समानानि रसतो वीर्यतस्तथा। भिद्यन्ते किन्तु गन्धेन तत्राद्यं गुणवत्तरम्"। रा. नि। "चूर्णलेहासवस्नेहाः साध्या धवलचन्दनैः" इति भावमिश्रः। श्वेतचन्दनभेदः—"चन्दनं द्विविधं प्रोक्तं वेट्टसुक्वाडिसंज्ञकम्। वेट्टं तु सार्द्रविच्छेदं स्वयं शुष्कं तु सुकाडि। मलयाद्रिसमीपस्थाः पर्वता वेट्टसंज्ञकाः। तज्जातं चन्दनं यत्तु वेट्टवाच्यं क्वचिन्मते"। गुणाः—"वेट्टचन्दनमतीव शीतलं दाहपित्तशमनं ज्वरापहम्। छर्दिमोहतृषिकुष्ठतैमिरोत्कासरक्तशमनं च तिक्तकम्। सुक्वाटिचन्दनं तिक्तं कृच्छ्रपित्तास्रदाहनुत्। शैत्यं सुगन्धदं चाऽऽर्द्रं शुष्कं लेपे तदन्यथा"। रा. नि। अभावे कर्पूरं ग्राह्यम्॥

**चन्दनद्वयम्।** चि. २. श्वेतचन्दनं रक्तचन्दनं च॥

**चन्दनयुगम्** । चन्दनद्वयम् ॥

**चन्द्रकः** । सू. ७ etc. चन्द्र इव कायति । जलक्षिप्ततैलविन्दुसदृशवर्णवृत्तरेखा । A Circle of the moon's shape formed by a drop of oil thrown into water ॥

**चन्द्रलेखा** । चि. ३. वाकुची ॥

**चन्द्रशकला** । चि. १९. वाकुची ॥

**चन्द्रिका** । सू. ६. वर्तुलाकृतिमत्स्यविशेषः । चन्द्रक इति सुश्रुतपाठः । हिं.-चंदा ; बं-चांदा माछ ; म.-चन्दक ; मल.—मुळ्ळन् ; മുള്ളൻ ; इं.—Plaice; a small white flat fish ; ल.—*Pleuronectes Platessa* । पार्श्वेषु कण्टकवलयितो वर्तुलो मत्स्य इति डल्हणः । "चलत्पूर्णिमाचन्द्रचञ्चलौ" इति त्रिकाण्डशेषः । गुणाः—"चन्द्रकस्त्वनभिष्यन्दी मधुरो बलवर्धनः" । रा. व ॥

**चपला** । चि. ४ etc. चपति चपला । पिप्पली । कल्पचतुर्थाध्याये "विश्वाजमोदचपला" इत्यत्र "कृष्णाह्वे"ति सुश्रुतपाठः । "चपला कमलाविद्युत्पुंश्चलीपिप्पलीषु च" इति मेदिनी ॥

**चपलामूलम्** । चि. ८. पिप्पलीमूलम् ॥

**चमरः** । सू. ६. चमति चमरः । महिषाकृतिर्मृगविशेषः । यस्य पुच्छेन चामराख्यं व्यजनं भवति । केशमृत्युर्गोसदृश इत्येके । हिं.—चमरपुच्छि गौ , चमरगई , चमरगाय , सुरेगाय ; बं.-चमरी ; म.—चवरीगाय , चवरी ; क.—हंहि ; त.—चवरिमान् ; सिं.—सेमरसुवोय ; मल.—चमरिमान् ; इं.—Tibet cow, Yak ; ल.—*Bos grunniens* । नामानि—"चमरो व्यजनो

वन्यो धेनुगो वालधिप्रियः । तस्य स्त्री चमरी प्रोक्ता दीर्घवाला गिरिप्रिया" । रा. नि । "चमरी नीलिनी प्रोक्ते"त्येके । **मांसगुणाः**—"तथा चमरमांसं तु स्निग्धं मधुरकासजित् । विपाके मधुरं चापि वातपित्तप्रणाशनम्" । सु. सू. ४६ ॥

**चर्मसाह्वा** । सू. १५. श्या. ग ; **सप्तला** । सप्तलेति सुश्रुतपाठः । ब्राह्मीत्येके ॥

**चर्मोद्दालः** । उ. १०. **चर्ममयो जालविशेषः** । "जालमानाय उद्दालस्तून्नतो मुकुलाकृति"रिति वैजयन्ती । **मल.**—तोल्वला തോൽവല । दृतिरिति केचित् ॥

**चविका** । सू. ६ etc. **स्वनामख्यातकटुकमूलम् , हस्तिपिप्पलीमूलम्** । "चव्या कोला च चविका चव्यं कुञ्जरपिप्पली" इति हट्टचन्द्रः । N. O.—*Piperaceæ* । **हिं.**—चव, चव्य, चवि ; **बं.**—चईगाछ ; **म.**—चवक ; गजपिंपळीचें मूळ ; **गु.**—चवक ; **तै.**—सेवासु ; **क.**—चव्य ; **त.**—चवियं, चेव्वियं ; **सिं.**—सिविय ; **मल.**—अत्तित्तिप्पलिवेरु അത്തിത്തിപ്പലിവേര് ; काट्टुमुळकुवेर् इति केचित् ; **ल.**—*Piper chaba, P. officinarum* । The fruit of this plant is the long-pepper of European Commerce and is imported into Culcutta via Singapore from Java and Sumatra । "चविकागजपिप्पल्यौ पिप्पलीमूलवत् स्मृतौ" इति । **नामानि**—"भवेच्चव्यं तु चविका कथिता सा तथोषणा । कणामूलगुणं चव्यं विशेषाद्गुदजापहम्" । भा. प्र । **गुणाः**—"चविकं कटुकं चोष्णं रुच्यं चाग्नेश्च दीपनम् । लघूक्तं च कृमिश्वासकासवातकफापहम् । ज्वरार्शःशूलशमनमृषिभिः परिकीर्तितम् । अन्ये गुणास्तु विज्ञेयाः पिप्पलीमूलवद्बुधैः" । नि. र । मूलं ग्राह्यं । त्वग्वा ग्राह्या ॥

**चव्यं** । चि. १ etc; चव्यते चव्यं च्यवते वा । चविका ॥

**चषकः** । चि. ७; चष्यतेनेन । 'चष भक्षणे' । मद्यपानपात्रं । हिं.—पियाला, कटोरा; म.—जांब, जाम; त.—कोप्पै; मल.—चुक्किरि, ചുക്കിരി; कुटिप्पात्रं इं.—Drinking vessel, goblet । "गल्वर्कश्चानुतर्षश्च चषकः सरकः स्मृतः" इति हलायुधः । "चषकं सीधु विज्ञेयं चषकं मद्यभाजनं" इति शाश्वतः ।

**चाक्रिकतैलं** । चि. १०. चक्रतैलम् ॥

**चांगेरी** । सू. ६ etc; चांगं शोभनदन्ततामीरयति । क्षुद्राम्लिका नामाम्ललोणिका । N. O.—*Geraniaceae* । हिं.—अम्लिलोना, अम्बिलोना, अम्बिली, आमरुल, चांगेरी, चूका, चौपतिया, अम्रूल्; बं.—आमरुलशाक; म.—चुका, आंबवती; कों.—तेल्तुप्पि; गु.—बहुखाटी लुणी, चुको; तै.— पुलिचिन्त, पुल्लचेञ्चलि; पुलिचिंतकु; क.—नीरुगोळि, पुळ्ळंपुरचे, पुळ्ळंपुणिसे, हुळिचिक्कनगिड, हुळिहुणिचेयगिड; तु.—पुळियारल्; त.—पुळियारै, पुळियक्कीरै; मल.—पुळियारल् പുളിയാരല്; सिं.—अम्बुलेम्बिलियां; पञ्चा.— सुरची, खटामिता; दखा.—उमबुडि; फ्र.—Oseille a trois feuilles ou dubois; जर्म.—Gehornter Saurklee; इं.—Indian sorrel; Yellow wood sorrel; ल.—*Oxalis corniculata* । नामानि.—"चांगेरी चुक्रिका दन्तशठांबष्ठाम्ललोणिका । अश्मन्तकस्तु शफरी पिसली चाम्लपत्रका" । भा. प्र । गुणाः—"चांगेरी दीपनी रुच्या रूक्षोष्णा कफवातनुत् । पित्तलाम्ला ग्रहण्यर्शःकुष्ठातीसारनाशिनी" । भा. प्र । सर्वांशो ग्राह्यः ॥

**चातुर्जातम्** । चि. ९. see चातुर्जातकम् ॥

**चातुर्जातकम्** । चि. ९. समभागत्वगेलापत्रकेसरम् । "त्वगेला-पत्रकैस्तुल्यैस्त्रिगन्धि च त्रिजातकम् । नागकेसरसंयुक्तं चातुर्जातकमुच्यते" । **गुणाः**—"स्वरभेदश्वासकासमुखदोषविनाशनम् । वृष्यं बल्यं च योगार्हं चातुर्जातं रसायनम्" । रा. नि ॥

**चामरम्** । शा. ६. चमरस्य विकारः तत्पुच्छनिर्मितत्वात् । **चमरीलोमव्यजनम्, चमरपुच्छकृतव्यजनम्** । **हिं.**—चमर, चमरी । **मल.**—वेण्चामरम् വെൺചാമരം । Chowrie; Flybrush of a yaktail । **नामानि**—"चामरं रोमगुच्छं च केशरं चावचूलकं" इति त्रिकाण्डशेषः । "चामरं तु प्रकीर्णकं" इति हलायुधः । "वालव्यजनमौजस्यं मक्षिकादीन् व्यपोहति" इति ॥

**चामीकरम्** । उ. १. चमीकरे आकरभेदे भवम् । चमीकरकृतस्वरावाकरौ । **कनकम्** । "जांबूनदं हिरण्यं कनकमहारजतकाञ्चनानि स्युः । कार्तस्वरचामीकरकर्बुरतपनीयनामानि" इति हलायुधः ॥

**चारटी** । उ. ६. etc. चरति चारटी । **पद्मा** । ब्राह्मीति केचित् । लघुनीलीति दत्तरामः । "असिता क्षीतनी नीलकेशी चारटिका मता" । रा. नि । कुंभ इति चक्रपाणिदत्तः । सर्पविषप्रतिषेधाध्याये "चारटीनाकुलीभ्यां" इत्यत्र गुंजेतीन्दुः । चोरटीति वृन्दपाठः ॥

**चारु** । उ. ३०. **कुंकुमम्** ॥

**चारुष्कः** । सू. ६. **क्षुद्रमृगविशेषः** । "चारुकस्तु किशोराभः" इति वैजयन्ती । **म.**—चितळ इत्येके; **मल.**—कुतिरक्कुट्टिमान् കുതിരക്കുട്ടിമാൻ; तोल्कोम्पन् इति भास्करव्याख्या । Deer resembling a foal । चारुकचारुष्करावितिपाठौ । चारुष्कः चारुशरीरः स्वल्पतनुर्मृगभेद एवेति डल्हणः । सुरुचिरः क्षुद्रमृगविशेष इति हाराणचन्द्रः ॥

**चाषः** । सू. ६ etc. चषति चाषः । 'चष भक्षणे' । चास इति पाठः । "इक्षुपाक्षिभिदोश्चासः" इति रभसः । **किकीदिविर्नाम नीलवर्णो पक्षिविशेषः** । "किकीदिविस्मृतश्चाष" इति हलायुधः । हिं.—नीलकण्ठ ; म.—तासपक्षी , मणिकण्ठ ; सिं.—तलगिरिति ; मल.—पोम्मा ൦പൊമ്മ; इं.—Blue jay ; ल.—*Garrulus* । डाकु इति भावप्रकाशहिन्दीव्याख्याता । कनकवायस इति ख्यात इति चक्रपाणिदत्तः । स्वर्णचूड इति लोके ख्यात इति चरकोपस्कारकारः नीलमेहव्याख्यायाम् । उक्तं हि—"किकीदिविः स्वर्णचूडश्चाषो राजविहंगमः" इति वैजयन्ती । नीलपक्षः टाक्षणा इति राढदेशे ख्यात इति शिवदासः । इन्द्रनीलमणिसदृशपक्षः शस्तदर्शनः करटाशन इति लोके प्रसिद्ध इति डल्हणः । "चाषः किकीदिविः प्रोक्तो नीलांगः पुण्यदर्शनः" इति नरहरिः । स्वर्णचातक इति हाराणचन्द्रः ॥

**चित्रकः** । सू. ६ etc. चेतति चित् चितो जन्तूंस्त्रायते चित्रकः, नानारूपो वा । **स्वनामख्यातक्षुपः** । "चित्रकाभावतो दन्ती क्षारः शिखरिजोथवा" इति भावमिश्रः । स द्विधा शुक्लारुणभेदेनेति बहवः । रक्त एव प्रशस्तः । "यथास्वं चित्रकः पुष्पैर्ज्ञेयः पीतासितासितैः । यथोत्तरं स गुणवान् विधिना च रसायनम् । त्वग्दोषिणां मेहिनां च तथैवोदररोगिणां । कृष्णं हितं विजानीयात् च्छित्रिणां च विशेषतः । गृहण्यर्शोविकारघ्नमतीसारविनाशनम् । वयसः स्थापनं मेध्यं श्वेतपुष्पं विनिर्दिशेत् । मेधाभिवर्धनश्चैव जाठराग्निप्रदीपनः । तेजोवर्णकरश्चैव कफहा पीतचित्रकः" इति नावनीतके । सितासितारुणकुसुमभेदेन त्रिधेति केचित् । शुद्धिः—"आर्द्रचित्रकमूलं संक्षुण्णं चूर्णजलप्लुतम् । यावन्नो याति वैवर्ण्यं तद्योगेषु प्रशस्यते" इति केरलीयाः । N. O.—*Plumbagineæ* । हिं.—लालचीता, चिता ; उर्दु.—चित्रक ;

बं.—चिता, चिते; म.—चित्रक; गु.—चित्रो; कों.—तांबडे चित्रमूल; तै.—येर्रा चित्रमूलमु; क.—केंपु चित्रमूल; तु.—केंपु चित्रमूल; दखा.—रक्तो चिता; काश्मी.—शित्रपुञ; उत्.—रकतचिता; त.—चित्तिरमूलं, चेङ्कोटुवेलि; सिं.—रतुनिटुल्; बर्मा.—किन्-खेन्नि; मलायी.—चित्रकमेराह; मल.—कोटुवेलि കൊടുവേലി, चेत्तिक्कोटुवेलि, चेङ्कोटुवेलि; पा.—शीत्र, बेखवरंदा; अ.—शितरज्ञ; फ्र.—Dentilaire rose; ज.—Rosenrothe Bleiwurz; इं.—Rose-coloured Leadwort, Plumbago; ल.—*Plumbago Rosea*। नामानि—"चित्रकोऽग्निश्च शार्दूलश्चित्रः पाली कटुः शिखी। कृशानुर्दहनो व्यालो ज्योतिष्कः पालकस्तथा। अनलो दारुणो वह्निः पावकः शबलस्तथा। पाठी द्वीपी च चित्रांगो ज्ञेयः शूरश्च विंशतिः"। रा. नि। गुणाः—"चित्रकः कटुकः पाके वह्निकृत् पाचनो लघुः। रूक्षोष्णो ग्रहणीकुष्ठशोथार्शःकृमिकासनुत्। वातश्लेष्महरो ग्राही वातार्शःश्लेष्मपित्तहृत्"। भा. प्र। मूलं ग्राह्यम्॥

**चित्रा**। सू. १५. द्रवन्ती। कटुपटोलाफलमिति हेमाद्रिः। द्रवन्तीति पदार्थचन्द्रिका। मूषिकपर्णीत्यरुणदत्तः। चित्राण्डिका पटोलफलाकारफला आरण्यकचण्डका इत्यर्थ इति डल्हणः। विचित्रफला महेन्द्रवारुणीत्यर्थेन हाराणचन्द्रः॥

**चित्रा**। उ. २६. एरण्डः। दन्तीत्यन्ये। "क्षीरं वा शर्कराचित्रालाक्षागोक्षुरकैः शृतम्"॥

**चित्रातैलम्**। उ. २६. एरण्डतैलम्। see एरण्डम्। दन्तीतैलमिति शिवदीपिकाकारः। तद्धि विसम्मतमेव डल्हणादीनाम्। गोरक्षकर्कटीबीजोत्थतैलमित्येके॥

**चिपिटिका** । उ. २५. चर्मचेली । व्रणे शुष्का सूक्ष्मा श्वेता या उच्चटति त्वक् सा चर्मचेली कथ्यते । "स्थिराश्चिपिटिकावन्तः" इत्यत्र अन्ये तु "अपिटिकावन्त" इति पठन्ति ॥

**चिरिबिल्वः** । सू. ६ etc. चिरं बिलति । 'बिल भेदने' । करंजविशेषः । चिरबिल्व इति पाठः । हिं.—करंजभेद ; बं.—नाटाकरंज ; म.—घाणेरा करंज ; गु.—चरेल कणझे ; क.—हिरिय हुलिगिलु ; गुड्डरेंजि , बीगदमर ; मल.—आविल् ആവില് । सिं—.सिरिल , कुणुकरन्द । तु.—राहुबीज ; गुड्डरेंजि , बीगदमर ; कों.—नावळि ; ल—*Elæocarpus serratus* । लताकरंज इत्येके । मूलत्वग्पत्रादिकं ग्राह्यम् । नामानि—"प्रकीर्यः पूतिकरजः पूतिकः कलिमारकः । पूती चाह्वः करञ्जोऽन्यः प्रतीति चिरबिल्वकः" । स. नि । see करंजः and पूतीकरंजः । करंज एवेति बहवः ॥

**चिर्भिटः** । चि. ९. चिरेण भटति । गोरक्षकर्कटी । N. O.—*Cucurbitaceæ* । हिं.—चिर्भिट , कचरिया ; गुरुभीडुं ; सेंधफूट इत्येके ; चीभड़ इति शिवदीपिका ; भुकुर इति केचित् ; बं.—काकुड , गोमुक ; म.—चिबूड ; गु.—चिभडुं ; तै.—पुडमकायि , बुररंगपण्डु ; क.—हिरिमेक्के , दोड्डमेक्के , अडिकेबाळे , पक्केकायि , हाल्मेक्कि बळ्ळि ; तु.—अडुकवारे ; कों.—पेण्टारे ; त.—तुम्मट्टिक्काय् ; मल.—चेंकुम्मट्टि ചെങ്കുമ്മട്ടി , वेळुत्त वेळ्ळरि इति केचित् ; पा.—खयार ; इं.—Wild melon, Pubescent Cucumber ; ल.—*Cucumis Pubescens* । C. Trigonus इत्येके । नामगुणाः—"चिर्भिटं धेनुदुग्धं च तथा गोरक्षकर्कटी । चिर्भिटं मधुरं रूक्षं गुरु पित्तकफापहम् । अनुष्णं ग्राहि विष्टंभि पक्वमुष्णं च पित्तलम्" । भा. प्र । अन्यच्च—"बाल्ये तिक्ता चि-

र्भिटा किञ्चिदम्ला गौल्योपेता दीपनी सा च पाके । शुष्का रूक्षा श्लेष्मवातारुचिघ्नी जाड्यघ्नी सा रोचनी दीपनी च" । रा. नि । राजसुषवीत्येके। कर्कटीति चक्रपाणिदत्तः । चिर्भटं डंगरं मालवेषु प्रसिद्धमतिप्रसिद्धं जालन्धरादिष्विल्यपरे । मध्यमफलं ग्राह्यम् ॥

**चिलिचिमः** । सू. ६. चीयते मीयते च चिलिचिमः । प्रायः कर्दमसञ्चारी मत्स्यविशेषः । बं.–वेले गुड़ गुड़िया ; मल.–कोञ्चन् കൊഞ്ചൻ, कोञ्चु ; इं.–Prawn, Lobster; cray fish ; ल –*Astacus, Homarus* । नामानि–"नलश्चिलिचिमश्चीलिचिमश्चिलिचिमिस्तथा । चिलिचीमश्च सर्वेमी नलमीन उदाहृताः" इति धारानाथः। स पुनः शकली लोहितनयनः सर्वतो लोहितराजी रोहिताकारः प्रायो भूमौ चरतीति चरकसुश्रुतावात्रेयमनुसरतः । महाशकली मत्स्यो रोहितभेद इति चक्रपाणिदत्तः । अनूपदेशे नान्दिनिरीत्युच्यते इति शिवदासः । "नलमीनश्चिलिचिमः" इति हलायुधमदनपालावमरसिंहश्च । केचिदेवं व्याख्यायान्ति—नलमीनो रोहितभेदः, पामरेषु 'मिडक्व' इति प्रसिद्धः, 'मण्डि' इति अन्ये, तीरभुक्तौ तु जनास्तं अल्लपिल्लमाहुः । तलमीनसंज्ञक इत्येके । स्थलमीन इति केचित् ॥

**चिलिचीमः** । सू. ६ ; चिलिचिमः ।

**चिलीचिमः** । सू. ७ ; चिलिचिमः ।

**चिल्ली** । सू. ६ ; पत्रशाकविशेषः, लघुपत्रगौरवास्तुकः । "चिल्ली वास्तूकवज्ज्ञेया" इति सुश्रुतः । "लघुपत्रा तु या चिल्ली सा वास्तुकसमा मता" इति वाग्भटः । क्षेत्रवास्तुक इति डल्हणः । रक्तवास्तुक इत्येके । पृथुपत्रं यवशाकं कुमामसंज्ञमित्यरुणदत्तः । अन्ये तु यवशाकान्तरमाहुः । हिं.—बडा बथुआ,

चिलारी ; बं.—वेतो शाक ; म.—चिखिल ; गु.—चील ; ची-ली ; क.—विलीप चिल्लीके ; पा.—सरमक ; त.—कीरै ; सिं.—कुर; मल.—चीरा ; ഛീ० कीरा ; इं.—Purple goose foot ; ल.—*Aripolisis* । नामानि—"पलाशलोहिता चिल्ली वास्तुका चिल्लिका च सा । मृदुपत्री क्षारदला चीरपत्री तु वास्तुकी" रा. नि. । गुणाः—"चिल्ली वास्तुकतुल्या च सक्षारा श्लेष्मपित्तनुत् । प्रमेहमूत्रकृच्छ्रघ्नी पथ्या च रुचिकारिणी" । रा. नि. । सा त्रिधा श्वेतरक्तशुनकभेदेन । पत्रं ग्राह्यं ।

**चीनः** । सू. ६ ; कंगुतुल्यव्रीहिधान्यविशेषः । षष्टिकाद्धीनगुणः । कंगुभेद इत्येके । "चीनाकः कंगुभेदोऽस्ति स ज्ञेयः कंगुवद्गुणैः । भा. प्र ।

**चीनाकः** । सू. ६ ; चित्रकूटदेशजकर्कटी । हिं.—चीनाककडी ; बं.—चीना काँकुड़ ; म.—डरकांकडी ; क.—पडवडसौत्ते ; मल.—चीनवेळ्ळरि । नामगुणाः—"चीनाककर्कटिका ज्ञेया बीजकर्कटिका तथा । सुदीर्घा राजिलफला बाणैः कुलककर्कटी । चीनाककर्कटिका रुच्या शिशिरा पित्तनाशिनी । मधुरा तृप्तिदा हृद्या दाहशोषापहारिणी" । रा. नि. । मध्यमफलं ग्राह्यं ।

**चुक्रं** । सू. १० etc., चक्यतेनेन । 'चक तृप्तौ प्रतिघाते च' । अम्लकाञ्चिकविशेषः । "विनष्टमम्लतां यातं मद्यं वा मधुरद्रवैः । विनष्टं सासितो यस्तु तच्चुक्रमभिधीयते" इति भावमिश्रः । हीं.—चूक , सिरका ; म.—चुका ; त.—पुळिनीर् ; मल.—मिन्नाविरि , चोरुका , चुत्तप्पुळि । Vinegar । तल्लक्षणं यथा—"यन्मस्त्वादि शुचौ भाण्डे सगुडक्षौद्रकाञ्जिकं । धान्यराशौ त्रिरात्रस्थं शुक्तं चुक्रं तदुच्यते । ध. नि. । " गुडमाक्षिकधान्याम्ल-

मस्त्वंबुद्विगुणं क्रमात् । संशन्ति चुक्रसिध्यर्थं किञ्चित्त्रि—मधुकान्वितं" । तोडनानन्दः । सुसन्धितं ग्राह्यं । नामानि—"शुक्तं सहस्रवेधं च रसाम्लं चुक्रमेव च । मुक्तसारं तथा चोक्तं दहनं नीलकारकं । विविधाभिमतं चण्डं भेदनं चाम्लमेव च" । ध. नि. । गुणाः—"चुक्रं तिक्ताम्लकं स्वादु कफपित्तविनाशनं । नासिकागदुर्गन्धशिरोरोगहरं परं" । ध. नि. । "रक्तपित्तकरं शुक्तं सद्योभुक्तविपाचनं । जरणं भेदनं पाण्डुकृमिरोगहरं लघु । तीक्ष्णोष्णं मूत्रलं हृद्यं कफघ्नं कटुपाकि च । तद्वत्तदाश्रितं सर्वं रोचनं तु विशेषतः । ध. नि. । "चुक्रमत्यम्लमुष्णञ्च दीपनं पाचनं परं । शूलगुल्मविबन्धामवातश्लेष्महरं सरं । वमितृष्णास्यवैरस्यहृत्पीडावह्निमान्द्यहृत्" । भा. प्र. ।

**चुक्रिका** । चि. ७ ; **तिंत्तिडीका** । चांगेरीति चक्रपाणिदत्तः ।

**चुक्रीका** । चि. ७ ; चुक्यते व्यथतेस्याः । **चांगेरी** । "कोलदाडिमवृक्षाम्लचुक्रीकाचुक्रिकारसः" इत्यत्र चुक्रीका तिंत्तिडीका अम्लवेतसो वेत्येके ।

**चुंचुः** । चि. ९ ; चंचुः ।

**चुलूकः** । चि. २१ ; चुलुकी **चुलूकी** चेति पाठौ । शिशुमाराकारो मत्स्यभेदः, सागरवराहः । चिरुकी इति चरकप्रसादनी । म.—गादा, गड्याळमासा ; मल.—कटलेटि, कटल्पन्नि ; सिं.—मुदुऊरोय ; इं.—Porpoise, Dolphin ; ल.—*Phocaena Delphinus* । बुलूक इति केषांचन पाठः । see **चुलूकी** ।

**चुलूकी** । सू. ६ ; **चुलूकः** । बुलूकी इति दाक्षिणात्यपाठः । "बौलूकी सौकरी पाकहंसजा कक्कुटोद्भवा" इत्यत्र बौलूकीस्थाने औलूकी इत्येव मुम्बापुरमुद्रितसंग्रहपाठः । "आसिप्लवो बुलू-

की स्त्री''रिति वैजयन्ती। चुल्लकीति पठन्त्यन्ये । ''उलूपी शिशुकः समा'' विश्वमर : । शिशुमारप्रतिकृतिरित्यत्र क्षीरस्वामी । उ विस्मयजनकं रूपमस्यास्तीत्युलूपी ॥

**चूचुकं** । मू. २५ etc **स्त्रीकुचाग्रं** । मल.—मुलक्कण्णु മുല-ക്കണ്ണ് । Nipple। ''उक्ताः कुचमुखचूचुकवृन्तानि शिखा च तुल्यानि'' इति हलायुधः । चूचुकं नाम दुग्धवाहिस्रोतसां मुखसंघातमयं स्नायुसूत्रभूयिष्ठं स्तनशिखरं । तदावरणी च त्वक् स्वभावतस्ताम्रवर्णा श्यामा भवति । विशेषेण कृष्ण मण्डलोपलक्षितश्च तद् गर्भिण्याः । तत्स्फुटनाच्च बहुधा संभवति स्तनविद्रधिः प्रसूतानां इति प्रत्यक्षशारीरम् ॥

**चूतः** । मू. ३ etc. च्योतति रसं चूतः । चूष्यते स्म । 'चूष पाने' । आम्रः ॥

**चूतरसः** । चि. ७. **मधुकलिताम्रकुसुमः** । सहकार इतीन्दुः ॥

**चूर्णाह्वः** । नि. ७. जूर्णाह्व इति शुद्धः पाठः ।

**चेतकी** । उ. ३०. चेत्यतेनया स्रोतःशुद्धिश्चेतकी । अभया ॥

**चैत्यः** । मू. २ etc. चित्याया इदं चैत्यं देवकुलमहावृक्षोध्वगाश्रय इति क्षीरस्वामी । **ग्रामप्रधानतरुः** । बुद्धालय इत्येके । विशिष्टदेवताधिष्ठितः **ग्रामप्रधानतरुरिति चरकोपस्कारे** । Sacred tree । In almost every Hindu village there is an ancient tree, generally a banian, or an Aswattha, round whose foot is raised a platform upon which stone images are kept of some of the deities of the Hindu Pantheon । Such trees are regarded sacred. What is said here is that the shadow cast by the summit of such a tree should never be crossed । **श्मशानवृक्ष** इति डल्हणः । दैवत्तुंकावु इति भास्करव्याख्या । ''चैत्यमायतने

बुद्धाबिंबोद्देशकवृक्षयोः" इति त्रिकाण्डशेषः । "विदुरायतनं चैत्यं चैत्यमुद्देशपादपः" इति शाश्वतः ॥

**चैत्यान्तः** । सू. २. चैत्यसमीपम् ॥

**चैलवेणिका** । सू. २२. सुदीर्घवस्त्रवर्तिः । कपडेकी पट्टी । वस्त्रपट्टिकेतीन्दुः ॥

**चोचम्** । सू. ३ etc. अग्निचोदकम् । त्वक् । सुश्रुतसंहितायामेलादिगणे त्वक् च चोचमिति पदद्वयं दृश्यते । त्वक्वरांगं 'गुडतज' इति लोके ; चोचः त्वग्भेदो वानवासिका त्वक् चेति डल्हणः । त्वक् दारुचीनी , चोचं बहलत्वग्वरांगं चेति भाष्यकारः । गन्धवाला इति कलिकापरिमलकारः ॥

**चोचम्** । सू. ८, सू. १०. नारिकेलम् । पनसं वेति हेमाद्रिः ॥

**चोचदलम्** । सू. ३. तमालपत्रम् । नारिकेलशकलमित्यरुणदत्तादयः ॥

**चोरकः** । चि. १ etc. स्वनामख्यातगन्धद्रव्यविशेषः । चौरक इति पाठः । एलादिगणव्याख्यायां ग्रन्थिपर्णकभेदो ग्रन्थिपर्णाकार एवेति डल्हणः । ग्रन्थिपर्ण एवेति हेमाद्रिररुणदत्तश्च । हिं.—भटेउर ; बं.—चोरक , चौरा ; म.—भटोरा ; गु.—भंटीउर ; क.—भटोरा । नामानि—"चोरकः शङ्कितश्चण्डो दुष्पत्रः क्षेमको रिपुः । गणहासः कोपनकः कितवः फलचोरकः" । ध. नि । गुणाः—"चोरको मधुरस्तिक्तः कटुः पाके कटुर्लघुः । तीक्ष्णो हृद्यो हिमो हन्ति कुष्ठकण्डूकफानिलान् । रक्षोऽश्रीस्वेदमेदोऽस्रज्वरगन्धविषव्रणान्" इति । अन्यच्च—"चोरकस्तीव्रगन्धोष्णस्तिक्तो वातकफापहः । नासामुखरुजाजीर्णक्रिमिदोषविनाशनः" । रा. नि ॥

**चौरकः** । सू. १५. चोरकः ॥



# छ ।

**छगणः** । उ. १६. गोमयः ॥

**छगलः** । चि. १. अजः ॥

**छगली** । उ. ९. अजस्त्री । हिं.—बकरी । Ewe ॥

**छत्रः** । उ. ३७. शिलीन्ध्रः । N. O.—*Fungi* । हिं.—सांपकी छत्री, कुकरमुत्ता, छतोना ; बं.—छातोना : छातिया ; म.—आळंबे, अळंबी, भुजफोड ; गु.—संस्वेदजशाको ; सिं.—हतु, हत्त ; मल.—कूण् കൂൺ ; इं.—Mushroom; Touchwood ; ल.—*Agaricus Albus* । **नामानि**—"उक्तं संस्वेदजं शाकं भूमिच्छत्रं शिलींध्रकम् । क्षितिगोमयकाष्ठेषु वृक्षादिषु तदुद्भवेत्" । **गुणाः**—"सर्वे संस्वेदजाः शीता दोषलाः पिच्छिलाश्च ते । गुरवश्छर्द्यतीसारज्वरश्लेष्मामयप्रदाः । श्वेतशुभ्रस्थलीकाष्ठवंशगोमयसंभवाः । नातिदोषकरास्ते स्युः शेषास्तेभ्यो विगर्हिताः" । भा. प्र । सर्वांशो ग्राह्यः ॥

**छत्रा** । **सू.** २९ etc. **द्रोणपुष्पी** । see **द्रोणा** । "छत्राणी छत्रको द्रोणा" इति मदनपालः । शतपुष्पेत्यरुणदत्तप्रभृतयो व्याख्यातारः । धान्यकमितीन्दुरुत्तरषष्ठाध्यायव्याख्यायाम् । "छत्रातिछत्रके विद्यात् रक्षोघ्ने कंदसंभवे । जरामृत्युविनाशिन्यौ श्वेतकापोतिसंस्थिते" इति सुश्रुतचिकित्सितत्रिंशत्तमाध्याये च दृश्यते ॥

**छागः** । शा. ६ etc. छयति रोगान् । **अजः** ॥

**छागम्** । चि. २ etc. **अजाक्षीरम्** ॥

**छागकर्णः** । सू. १५. अजस्य कर्ण इव पर्णं यस्य । **सर्जः** । महासर्ज इति चक्रपाणिदत्तः ॥

**छागक्षीरम्** । चि. ३. अजाक्षीरम् ॥

**छागमांसम्** । चि. ३. अजमांसम् । see **आजम्** ॥

**छागरसः** । क. ४. अजमांसोत्थक्वाथः । बकरेका मांसरस ॥

**छागलः** । चि. ८. अजः ॥

**छिन्नरुहा** । चि. २१. etc. छिन्नापि रोहते । **गुडूची** ॥

**छिन्नरोहा** । सू. १५. **गुडूची** ॥

**छिन्नोद्भवा** । चि. १. छिन्नाप्युद्भवते । **गुडूची** ॥

**छुछुन्दुरः** । उ. ३८. छु छु इत्यव्यक्तं रणाति । **गन्धमूषको नाम मूषिकाभेदः** । "चुचुन्दरी तु गन्धाखु" रिति वैजयन्ती । हिं.—छछूंदर, छुछुन्दर; बं.—छुछु; छुँचा; म.—चिचुन्दरी; त.—मूञ्चूरु; मल.—चुरप्पनेलि ഇരപ്പനെലി, नचेलि; इं.—Musk rat; ल.—*Crocidura cærulea* । चुच्छुन्दुरुरिति पाठः । जात्या दीर्घमुखो मूषिक इतीन्दुः । **तल्लक्षणं यथा**—"दीर्घतुण्डनखी ज्ञेया मूषिकान्या चुचुन्दरी" । ध. नि । **नामानि**—चुच्छुन्दरी राजपुत्री प्रोक्तान्या प्रतिमूषिका । सुगन्धिमूषिका गन्धा शुण्डिनी शुण्डिमूषिका" । रा. नि ॥

---

# ज ।

**जटा** । उ. ५ etc. जटाः सन्त्यस्याः । **मांसी** । उन्मादप्रतिषेधाध्याये "व्योषं हिंगुजटा" मित्येकपदेन हिंगुपत्रीत्यर्थेन व्याख्यातमिन्दुना ॥

**जटिला** । सू. २९ etc. जटास्त्यस्याः । **मांसी** । महापैशाचिकघृतयोगे शतावरी वेति केचित् । "जटिला पिप्पलीमांस्योर्जटायुक्ते तु वाच्यवत्" इति मेदिनी । see **महापुरुषदन्ता** ॥

**जतु** । उ. ३९. जायते जतु । लाक्षा ॥

**जतुका** । उ. ६, उ. १८. कृष्णपिंगलत्वात् । लाक्षाखण्डाकृतिः कीटविशेषः । **हिं.**—झींगुर, तिलचट्टा, गादुर इत्येके; **बं.**—तेलापोका, आरसुला; चामचिके इति चमगीदड इति वा इत्येके; **म.**—झुरळ, वागुरडा; **सिं.**—केरपोत्ता; **मल.**—पाट्टा പാറ്റ, कूरा; **इं.**—Cockroach; **ल.**—*Stylopyga orientalis* । जतूका जन्तूका चेति पाठौ । **नामानि**—"तैलपास्तु परोष्णी स्याज्जतुकाऽजिनपत्रिका" । रा. नि । चर्मचटीति केचित् ॥

**जतूका** । **जतुका** ॥

**जतूमुखः** । **सू.** ६. जतुमुख इति पाठः । **रक्तमुखव्रीहिधान्यभेदः** । **लक्षणं यथा**—"लाक्षावर्णं मुखं यस्य ज्ञेयो जतुमुखस्तु सः" । भा. प्र । जतु लाक्षा तदाकृति मुखं यस्यासौ जतुमुख इति डल्हणः । अयं व्रीहेर् हीनगुणः ॥

**जन्तुघ्नम्** । **चि.** ३ etc. जन्तून् कृमीन् हन्ति । **विडंगम्** ॥

**जन्तूका** । **जतुका** ॥

**जंबीरः** । **सू.** ६. जम्यते जंबीरः । "जंबीरः प्रस्थपुष्पे स्यात्तथा दन्तशठद्रुमे" इति मेदिनी । **खरपत्रको नाम फणिज्जकतुलसीभेदः** । **हिं.**—जंबीरी, सफेद्वनतुलसी; **म.**—श्वेतमरवा; **पा.**—तुख्म-इ-रिहाना; **अ.**—हबक्; **फ्र.**—Basilic couvant de poils; **मल.**—वेलुत्त कर्पूरत्तुळसि വെളുത്ത കർപ്പൂരത്തുളസി, वेण्कञ्नकं; **इं.**—Green basil; **ल.**—*Ocimum pilosum* । पत्रं ग्राह्यम् । जंबीरः हरितशाकं उत्तरापथे जातं जंबीरगन्धि किंचिदम्लं पर्णासभेद इति केचिदिति चरकोपस्कारे । "जंबीरो गन्धबहुल" इति नरहरिः । "अल्पपत्रस्तु जंबीरः" इति वैजयन्ती ॥

**जंबुकः** । सू. ६ etc. जमति जंबुकः सर्वभक्षत्वात् । **शृगालः** । हिं.—गीदड़, सियार, स्यार ; बं.—शृगाल, शेयाल ; म.—कोल्हा ; तै.—जंबूकमु ; क.—नरी ; त.—नरि ; सिं.—नरिया ; हिवला ; मल.—कुरुक्कन् കുറുക്കൻ, ओरिक्कुरुक्कन्, नरि, ऊळन्, इं.—Jackal ; ल.—*Canis aureus* । **नामानि**—"शृगालो जंबुकः फेरुर्गोमायुः फेरवः शिवः" । भ. पा । **मांसगुणाः**—"शृगालो बलदो वृष्यः सर्ववातक्षयापहः" । भ. पा । **अन्यच्च**—"मधुरा मधुराः पाके त्रिदोषशमनाः शिवाः । लघवो बद्धविण्मूत्राः शीताश्चैताः प्रकीर्तिताः" । च. सू. २७ ॥

**जंबूः** । सू. ३० etc. जमति । 'जमु अदने' । **स्वनामख्यातमहातरुः** । N. O.—*Myrtaceae* । हिं.—जामुन ; जामन ; बं.—जाम, कालजाम ; म.—जांबूळ ; गु.—जांबू, जांबुडु ; कों.—जांबुल, जांब ; दखा.—सित्तळचिनि ; तै.—नेरेडु ; क.—नेरळु, नायिनेरेळे, नीरलेमर ; तु.—नेरोल् ; त.—नावल्, नार्क ; सिं.—मादं ; मल.—ञावल् ഞാവൽ ; इं.—Jamoon, Jambul, Black plum ; ल.—*Eugenia jambolana* । **नामानि**—"जंबूस्तु सुरभिपत्रा नीलफला श्यामला महास्कन्धा । राजार्हा राजफला शुकप्रिया मेघमोदिनी नवाह्वा" । रा. नि । पक्वफलत्वगादिकं ग्राह्यम् । **गुणाः**—"जंबूवृक्षस्तु तुवरो ग्राही मधुरपाचकः । मलस्तंभकरो रूक्षो रुचिकृत् पित्तदाहहा । अम्लः कण्ठ्यः कृमिश्वासशोषातीसारकासहा । रक्तदोषं कफं चैव व्रणं चैव विनाशयेत् । फलं च तुवरं चाम्लं मधुरं शीतलं मतम् । रुच्यं रूक्षं ग्राहकं च लेखनं कण्ठदूषकम् । मलस्तंभकरं वातकारकं कफपित्तनुत् । आध्मानकारकं प्रोक्तं पूर्ववैद्यैर्मनीषिभिः । तन्मज्जा मधुरा ग्राही विशेषान्मधुमेहहा । तदंकुरा हिमा

रूक्षा ग्राहकाध्मानकारका:" । सा राजजंबूकाकजंबूभूमिजंबूभेदेन त्रिधा ॥

**जंबूद्वयम्** । सू. १५. एका राजजंबूः बृहत्फला, द्वितीया काकजंबूः स्वल्पफला इति डल्हणः । महाजंबूः राजजंबूश्चेति केचित् । मल.—ञावलुं ञारयुं ഞാവലും ഞാറയും ॥

**जंब्वस्थि** । उ. २२. जांबवास्थि ॥

**जयन्ती** । चि. १९. जयति रोगान् अन्यान्यौषधानि वा । तिक्तशाकौषधिक्षुपविशेषः । हिं—जैत ; बं.—जन्ती, धन्चे ; म.—शेंवरी ; टाहाकळ इत्येके ; तै.—सीसंगिचेट्टु ; क.—तोगरसे ; त.—पीनारिचंकु, चंकुंकुप्पि ; तळुताळै इति केचित् ; मल.—पुयमुञ्ञ പുഴമുഞ്ഞ, चंकुंकुप्पि, मूट्टकोऌि, पुञ्चा ; सिं.—तिटिंग ; ल.—*Sesbania aculeatia* । नामानि—"जयन्ती तु बलामोटा हरिता च जया तथा । विजया सूक्ष्ममूला च विक्रान्ता चापराजिता" । रा. नि । गुणाः—"ज्ञेया जयन्ती गलगण्डहारी तिक्ता कटूष्णानिलनाशनी च । भूतापहा कण्ठविशोधनी च कृष्णा तु सा तत्र रसायनी स्यात्" । रा. नि । त्वग्दलादिकं ग्राह्यम् । "वैजयन्त्यां तु तर्कारी नादेयी च जयन्त्यपि" इति वैजयन्ती ॥

**जया** । उ. ६. जयतीति जया । जयन्ती । अग्निमन्थ इत्येके ॥

**जयाद्वयम्** । सू. १५. अग्निमन्थो जयन्ती च । तर्कारी हरीतकी चेत्यरुणदत्तः । तर्कारीद्वयमिति हेमाद्रिः । तर्कारी अग्निमन्थश्चेति सुश्रुतपाठः । अरण्यग्निमन्थाविति चिकित्साकलिकायाम् ॥

**जरायुः** । शा. १. जरामेति । गर्भावरणचर्म । अपरा । मरुकुट्टि इति केरलेषु । "या तु चर्माकृतिः सूक्ष्मा जरायुः सा निगद्यते"

इति तन्त्रान्तरम् । तस्य स्थानम्—"गुदमूत्राशयान्तःस्थो जरायुर्गर्भमन्दिरम् । जरायुपार्श्वे नाड्यौ द्वे डिंबनाड्यौ प्रकीर्तिते" इत्यत्रिसंहितायाम् । Placenta ॥

**जलम्** । सू. १५, ए. ग etc. **वालकम्** । वालकमित्येव सुश्रुतपाठः । एलादिगणे चन्दनमित्येव चिकित्साकलिकायाम् । "जलं गोकलले नीरे ह्रीबेरेप्यन्यवज्जडे" इति मेदिनी ॥

**जलजन्मा** । सू. २६ etc. **जलौका** ॥

**जलजा** । चि. ८. **जलौका** ॥

**जलदः** । सू. ३ etc. **मुस्ता** ॥

**जलदांबु** । सू. ३. **मुस्ताभिरुत्क्वथितं जलम्** । नागरमोथेसे सिद्धकिया जल ॥

**जलशूकः** । उ. १८. जलान्तर्वर्ती रोमयुक्तः सविषः प्राणी । काञ्चिप्पोत्तु കാഞ്ഞിപ്പൊത്ത് इति कैरली । इं.—Jelly fish ; Itching polyp इत्येके ; ल.—*Aurelia aurita* । जलचारी कृष्णकीट इति लक्ष्मणटिप्पणकः । जलशूको जलसंस्थस्तृणसक्तो जन्तुविरचितः शूकसंघातवान् 'निवासान्दुक' इत्यन्ये । जलनीलिकेति डल्हणः । शैवालमित्यरुणहाराणचन्द्रौ । "शैवालं शैवलं प्रोक्तं जलशूकं च नीलिका" इति हलायुधः ॥

**जलार्द्रः** । सू. ३. जलेनार्द्रा । **वस्त्रकृतो जलक्लिन्नो व्यजनविशेषः** । पानीयक्तार्द्रशाटिकेत्यरुणदत्तः । जलेनार्द्रीकृतं व्यजनमित्येके ॥

**जलूका** । उ. ६. जलमोको यस्याः । **जलौका** । उन्मादप्रतिषेधाध्याये "शृगालशल्यकोलूकजलूकावृषभस्तजै"रित्यत्र "शृगालशल्यकोलूकमार्जारवृकबस्तजै"रित्यवश्यं पठितव्यं चरकमतानुसा-

सारिणा । जतुका इत्येव शिवपुरमुद्रितसंग्रहपाठः ॥

**जलोद्भवः** । उ. १३. जले उद्भवति । **शंखः** ॥

**जलौका** । **सू.** २६ etc. जलमोकः स्थानं यस्याः । **रक्तपायिनी** । "नृपाणां सुकुमाराणां नारीणां बालवृद्धयोः । दुर्बलानां व्याधिजुषां रक्तस्राव्ये जलौकसः । योजयेद्रुधिरस्रावे स्यादुपायो मृदुः सुखं" इति तन्त्रान्तरे । **हिं.**—जोंक ; **बं.**—जोंक ; **म.**—जळू ; **गु.**—जलो ; **तै.**—अट्टलु, जलगलु ; **क.**—जिगनि ; **त.**—अट्टै ; **सिं.**—कुडुल्ला ; **मल.**—अट्टा ; **अ.**—अलक् ; **पा.**—झलोका ; **पञ्जा.**—जोंक ; **काश्मी.**—ड्रिक ; **बर्मा.**—हिमयौ ; मेयियोन ; **इं.**—Leech ; **ल.**—*Hirudo medicinalis* । **गुणाः**—"शीताधिवासा मधुरा जलौका वारिसंभवा । तस्मात् पित्तोपसृष्टे तु हिता सा त्ववसेचने" । सु. सू. १३ । **तया रक्तमोक्षणविधिर्यथा**—"अथ जलौकोवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा, विरूक्ष्य चास्य तमवकाशं मृद्गोमयचूर्णैर्यद्यरुजः स्यात् । गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये मुहूर्तस्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राहयेत् । श्लक्ष्णशुक्लार्द्रपिचुप्रोतावच्छन्नां कृत्वा मुखमपावृणुयात्; अगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्याच्छस्त्रपदानि वा कुर्वीत ; यद्येवमपि न गृह्णीयात्तदाऽन्यां ग्राहयेत् । यदा च निविशतेऽश्वखुरवदाननं कृत्वोन्नम्य च स्कन्धं तथा जानीयाद्गृह्णातीति ; गृह्णन्तीं चार्द्रवस्त्रावच्छन्नां धारयेत् सेचयेच्च" । सु. सू. १३ । सा द्वादशविधा । अलगर्दा, इन्द्रायुधा, गोचन्दना, कर्बुरा, सामुद्रिका, कृष्णा, एताः षट् सविषाः । कपिला, पिंगला, शंकुमुखी, मूषिका, पुण्डरीकमुखी, सावरिका, एताः षट् निर्विषाः । **जलौकाशोधनविधिर्यथा**—"चिरन्तनजलौकायां ताम्रपात्रेण रक्षयेत् । चतुर्मासं निशाचूर्णं जलाष्टपलके क्षि-

पेत् । तस्मिन् क्षिपेत् जलौकां तां स्वयं लाला परित्यजेत् । मुक्त-लाला जलौका या सा योग्या रक्तमोक्षणे" । **अनुपयोज्यजलौका-लक्षणं यथा**,—"रोमपृष्ठा च कपिला नातिस्थूला न दुर्बला । वर्जनीया प्रयत्नेन भिषजा कीर्तिमिच्छता" । **अन्यच्च**—"स्थूलम-ध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः । अग्राह्यिण्योल्पपायिन्यः सविषाश्च न पूजिताः" । सु. सू. १३ । **नामानि**—"जलूका तु जलौका स्याद्रक्तपा रक्तपायिनी । रक्तसंदोहिका तीक्ष्णा वमनी जलजीवनी" । रा. नि ॥

**जांगलः** । सू. १. निर्जलदेशः, मरुप्रायवातलदेशः । "आकाश-शुभ्र उच्चश्च स्वल्पपानीयपादपः । शमीकरीरबिल्वार्कपीलुकर्कन्धु-संकुलः । हरिणैणर्क्षपृषतगोकर्णखरसंकुलः । सुस्वादुफलवान् देशो वातलो जांगलः स्मृतः" । भ. प्र । "मरुप्रायस्तु यो देशः स चोक्तो जांगलाभिधः" । रा. नि ॥

**जांगलम्** । सू. ३ etc. जांगलदेशोद्भूतहरिणादिस्थलचरमृगपक्षि-णां मांसम् । **जांगलजीवोंके मांस** । Among animals living and moving on land those that live in the wilderness are called Jangala । **सोष्टविधः यथा**—"जंघाला मांसवर्गेत्र बिलस्थाश्च गुहाशयाः । तथा पर्णमृगा ज्ञेया विष्किरा प्रतुदा अपि । प्रसहा अथ च ग्राम्या अष्टौ जांगलजातयः" । **जंघालाः**—"हरिणैणकुरंगाश्च पृषतन्यंकुशंबराः । राजीवोपि च मुण्डी चेत्या-द्या जंघालसंज्ञकाः" । जंघालः अतिवेगवान् । "जंघालाः प्रायशः सर्वे पित्तश्लेष्महराः स्मृताः । किञ्चिद्वातकराश्चापि लघवो बलव-र्धनाः" । **बिलस्थाः**—"गोधाशशभुजंगाखुशल्लक्याद्या बिलेश-याः" । "बिलेशया वातहरा मधुरा रसपाकयोः । बृंहणा बद्धवि-ण्मूत्रा वीर्योष्णाश्च प्रकीर्तिताः" । **गुहाशयाः**—"सिंहव्याघ्रवृका ऋक्षतरक्षुद्वीपिनस्तथा । बभ्रुजंबुकमार्जारा इत्याद्याः स्युर्गुहाशयाः" ।

"गुहाशया वातहरा गुरूष्णा मधुराश्च ते । स्निग्धा बल्या हिता नित्यं नेत्रगुह्यविकारिणां" । पर्णमृगाः–"वनौका वृक्षमार्जार-वृक्षमर्कटिकादयः । एते पर्णमृगाः प्रोक्ताः सुश्रुताद्यैर्महर्षिभिः" । "स्मृताः पर्णमृगा वृष्याश्चक्षुष्याः शोषिणे हिताः । श्वासार्शःकास-शमनाः सृष्टमूत्रपुरीषकाः" । विष्किराः—"वर्तका लाववर्तीर-कपिञ्जलकतित्तिराः । कुलिङ्गकुक्कुटाद्याश्च विष्किराः समुदाहृताः" । "विष्किरा मधुराः शीताः कषायाः कटुपाकिनः । बल्या वृष्यास्त्रि-दोषघ्नाः पथ्यास्ते लघवः स्मृताः" । प्रतुदाः—"हारीतो धवलः पाण्डुश्चित्रपक्षो बृहच्छुकः । पारावतः खञ्जरीटः पिकाद्याः प्रतुदाः स्मृताः" । "प्रतुदा मधुराः पित्तकफघ्नास्तुवरा हिमाः । लघवो ब-द्धवर्चस्काः किञ्चिद्वातकराः स्मृताः" । प्रसहाः—"काको गृध्र उलूकश्च चिल्लश्च शशघातकः । चाषो भासश्च कुरर इत्याद्याः प्र-सहाः स्मृताः" । "प्रसहाः खलु वीर्योष्णास्तन्मांसं भक्षयन्ति ये । ते शोषभस्मकोन्मादशुक्रक्षीणा भवन्ति हि" । ग्राम्याः–"छागमेषवृ-षाश्वाश्वा ग्राम्याः प्रोक्ता महर्षिभिः" । "ग्राम्या वातहराः सर्वे दीपनाः कफपित्तलाः । मधुरा रसपाकाभ्यां बृंहणा बलवर्धनाः" । रा. नि ॥

**जांगलरसः** । चि. १२ etc. **जांगलप्रदेशसञ्चारिणां मृगपक्षिणां मांसरसः** ॥

**जांगलशूल्यम्** । सू. ३. जांगलजीविनां शूलसंस्कृतं मांसम् । भटित्रम् । शूलपर भुना जंगली जीवोंका मांस ॥

**जातिका** । चि. २१. "जातिकाकट्फलांबुभि"रित्यत्र "जाती-कटुफलांबुभि"रित्येव चरकसंग्रहयोः पाठः ॥

**जातिकोशकम्** । चि. २१. जातिपत्रिका । "जातिजोंक"मिति पठन्ति केचित् ॥

**जातिपत्रिका** । उ. २२. जातीफलत्वक् । उक्तं हि—"जातीफलस्य त्वक् प्रोक्ता जातीपत्री भिषग्वरैः" । हिं.—जावित्री; उर्दु.—जौत्री ; बं.—जैत्री, जयत्री ; म.—जायपत्री, पत्री ; गु.—जावंत्री ; तै.—जापत्री, जायेपत्रि, जाजिपत्रि; क.—जापत्रि, जायपत्रि, जाजिपत्रि, जाइपत्रि; त.—चातिपत्तिरि ; सिं.—वसावासि ; मल.—जातिपत्रि ജാതിപത്രി, पञ्जा.—जौतरि ; काश्मी.—जोव्त्री ; मुंबापुर्यां.—जवंत्रि ; बर्मा.—झदि-फु-अपोएन्; मलायी.—बुंगा-पला ; अ.—बांसवासा, बझाबझा ; पा.—जवत्री, बझाबझा ; फ्र.—Macis ; इं.—Mace ; ल.—*Myristica fragrans* । नामानि—"जातिपत्री जातिकोशः सुमनःपत्रिकापि सा । मालतीपत्रिका पञ्चनाम्नी सौमनसायिनी" । रा. नि । गुणाः—"जातीपत्री लघुः स्वादुः कटूष्णा रुचिवर्णकृत् । कफकासवमिश्वासतृष्णाक्रिमिविषापहा" । भा. प्र । "जातिपत्री कटुस्तिक्ता सुरभिः कफनाशिनी । वक्त्रवैशद्यजननी जाड्यदोषनिकृन्तनी" । रा. नि । नूतनं ग्राह्यम् । "जातीपुष्पं न यत्रास्ति लवंगं तत्र दीयते" इति भावमिश्रः ॥

**जातिमुकुलः** । उ. ११. जातीमुकुलः । मालत्याः ईषद्विकासितकलिका । हिं.—चमेलीकी कलियें; मल.—पिच्चकमोट्टु പിച്ചകമൊട്ടു ॥

**जाती** । चि. १ etc. जायतेऽनया प्रीतिः। स्वनामख्यातपुष्पवृक्षः। "जातिः स्त्री गोत्रजन्मनोः । अश्मन्तिकामलकयोश्च सामान्यछन्दसोरपि । जातीफले च मालत्यां" इति मेदिनी । N. O.—*Oleaceae* । हिं.—चमेली, चँबेली, जाई ; बं.—चामेली, चामिली; म.—जाई, चमेली ; गु.—चमेली ; मुंबापुर्यां.—चंबेली ; तै.—जाईपुष्पालु, क.—जाजिमल्लिगे, आनेमल्लिगे ;

कों.—जायूचेमोग्रे ; संजुई ; तु.—जाजिपू ; त.—पिच्चि ; सिं.—दूसमन्, समन्पिच्च; मल.—पिच्चि പിച്ചി, पिच्चकम्; पा.—यासमम ; इं.—Spanish jasmine ; ल.–*Jasminum grandiflorum* । नामानि—"जाती मनोज्ञा सुमना राजपुत्री प्रियंवदा । मालती हृद्यगन्धा च चेतिका तैलभाविनी" । ध. नि । "सा पीता स्वर्णजातिका" इति भावमिश्रः । गुणाः—"जातीयुगं तिक्तमुष्णं तुवरं लघु दोषजित् । शिरोक्षिमुखदन्तार्तिविषकुष्ठानिलास्रजित्" । भा. प्र । मुखरोगप्रतिषेधाध्याये "धावनं जातिमदनखदिरस्वादुकण्टकै"रित्यत्र 'जाति'स्थाने दन्तीति संग्रहपाठः । "धावने जातिमदनस्वादुकण्टकखादिरं" इत्येव सुश्रुतपाठः ॥

**जातीकुसुमम्** । चि. १. मालतीपुष्पम् । चमेलीके फूल । मल.—पिच्चकप्पूवु പിച്ചകപ്പൂവു ॥

**जातीफलम्** । उ. २१. स्वनामख्यातसुगन्धिफलम् । "जातीफलं सशब्दञ्च स्निग्धं गुरु च शस्यते । लघुकं शब्दहीनञ्च रूक्षांगमतिनिन्दितं" । N. O.—*Myristicaceae* । हिं.—जायफल , जायिफल ; बं.—जायफल ; म.—जायफळ ; गु.—जायफल ; कों.—जायिफल ; तै.—जाजिकाय ; क.—जाजीकायी ; जाईफल ; त.—चातिक्कायि ; सिं.—सादिका ; तु.–जाजिकायि ; दखा.—जायफल ; पश्चा.—जायिफल ; काश्मी.—झाफल ; बर्मा.—झादि-फु ; मलायी.—बुष्-पला ; पा.—जीभावुत्रा ; अ.—जोज उतलीब ; उर्दु.—जायिफल ; मल.—जातिक्का ജാതിക്കാ ; फ्र.—Muscadier; Musque ; ज.—Achter Muscatnussbaum ; इं.–Nutmeg ; ल.—*Myristica officinalis* । नामानि—"जातीफलं जातिकोषं धावनं मालतीफलम् । सुमनं जातिका जती जननी चेति कथ्यते" । स. नि । गुणाः—"जातीफलं रसे तिक्तं तीक्ष्णोष्णं रोचनं लघु । कटुकं

दीपनं ग्राहि स्वर्यं श्लेष्मानिलापहम् । निहन्ति मुखवैरस्यं मलदौर्गन्ध्यकृष्णताः । कृमिकासवमिश्वासशोषपीनसहृद्रुजः" । भा. प्र । नूतनं पक्वफलं ग्राह्यम् ॥

**जातीमुकुलः** । उ. ११. see **जातिमुकुलः** ॥

**जातीरसः** । सू. १५ etc. **रक्तबोलः** । एलादिगणव्याख्यायां रसो गन्धरसः बोल इति लोके इति डल्हणः । N. O.—*Burseraceae* । हिं.—बोल, हीराबोल ; बं.—गन्धरस, बोल ; हिराबोल ; म.—रक्त्या बोळ ; गु.—हिराबोल ; मुंबापुर्याम्.—बेनूमा बोल ; दखा.—बोल ; तै.—बालिंत्रोपोलं ; क.—बोल ; त.—इरत्तपोळं , वेळ्ळैप्पोळं ; मल.-नरुंपशा നറുംപശ, पञ्चमप्पलुक्का , मीरा ; मुरु ; अ.—मुर ; पा.—मुरसाफ ; ई.—Myrrh ; ल.—*Balsamodendron myrrha* । **नामानि**—"बोलं गन्धरसं पिण्डं निर्लोहं बर्बरं रसम् । गोपकं नालिकं पौरं रसं गन्धरसं विदुः" । ध. नि । **गुणाः**—"बोलं रक्तहरं शीतं मेध्यं दीपनपाचनम् । मधुरं कटुतिक्तञ्च दाहस्वेदत्रिदोषजित् । ज्वरापस्मारकुष्ठघ्नं गर्भाशयविशुद्धिकृत्" । भा. प्र । जातीफलगन्धरसाविति केरलेष्वेके । जात्याः स्वरस इतीन्दुः । कुष्ठचिकित्सिते 'रसेन जात्याः' इति चरकपाठः । तत्र आमलकयाः इति चक्रपाणिदत्तः । "धात्र्याः वा रसैर्लीलीतकीं वरां" इति वातशोणितचिकित्सितेपि दृश्यते ॥

**जांबवम्** । सू. ६. **जंबूवृक्षस्य फलम्** । हिं.—जामुनका फल । बं.—जामफल ; मल.—ञावल्प्पळम् ഞാവൽപ്പഴം । "अत्यर्थं वातलं ग्राहि जांबवं कफपित्तजित्" इति सुश्रुतः ।

**जांबवास्थि** । उ. ३२. **जंबूफलस्य बीजम्** । हिं.—जामुनकी गुठली ॥

**जांबवोष्ठम्** । सू. २९. जंबूफलवदोष्ठो यस्य तज्जांबवोष्ठं नाम यन्त्रविशेषः । जंबूफलसदृशमुखाग्रा कृष्णपाषाणरचिता वर्तिरिति डल्हणः । कुटतलयाणि इति केरलेष्वेके । काच्चुकोल् കാച്ചുകോല് इति केचित् । मात्रेयपरे । हिं.—जमूर ॥

**जालम्** । शा. ३. जालकं वा । शरीरस्थनिरन्तरजालाकाररन्ध्रनिकरपरिकलितपदार्थविशेषः । "जालानि तु सिरास्नायुमांसास्थ्नामुद्भवन्ति हि । तानि चत्वारि चत्वारि सर्वाण्येव च षोडश" । भा. प्र । अन्यच्च—"सिरास्नाय्वस्थिपिशितैश्चत्वारि मणिबन्धने । एकत्रैकत्र गुल्फे च जालान्येवं तु षोडश" इति । Capilaries । "जालकानि पुनः सूक्ष्मानुसूक्ष्मसिराधमनीजालनिर्म्मितानि स्रोतांसि सर्वत्र शरीरे द्रुमपत्रप्रतानवत् प्रततानि । तानि क्रमशो विभज्यमानानां धमनीनां सूक्ष्मतमशाखाभिः सूक्ष्मतमशिराजालमिलिताभिरारचितानि रक्तधरकलामयानि । तेभ्यः कणशः स्यन्दमानः शोणितस्य कियन्मात्रस्तन्वच्छभागो लसीकाख्यः सर्वमपि शरीरमाप्याययति । अवशिष्टञ्च जालकेषु शोणितं क्रमेण शरीरप्रचारान्मलिनीभूतं सूक्ष्मैः सिरामार्गैः स्थूलस्थूलतरसिरासु प्रविशति हृदयाभिमुखप्रसरणाय" । इति प्रत्यक्षशारीरात् ॥

**जालिनी** । उ. ३०. **कोशातकी** । तस्याः पक्वफलकोषे हि जालवत्त्वम् ॥

**जाहकः** । शा. ६. घोंघः । **वनमार्जारविशेषः** । शिवपुरमुद्रितसंग्रहग्रन्थे 'जाविक' इति पाठः । म.—कॅसाळ मांजर ; मल.—कोक्कान् കോക്കാൻ, काट्टुमाक्कान्, काट्टुपूच्चा, पोक्कान्; इं.—Wild cat, Pole-cat, Lynx cartetal । **नामानि**—"जाहको गात्रसंकोची मण्डली बहुरूपकः । कामरूपी विरूपी च येलुवासः प्रकीर्तितः" । रा. नि । "जाहको गात्रसंकोची

मण्डली नखरायुधः" इति वैजयन्ती । "दीप्ताक्षजाहका"विति त्रिकाण्डशेषे । कृष्णकृकलास इत्येके । "जाहको घोंघमार्जार-खट्वाकारुण्डिकासु च" इति मेदिनी ॥

**जिंगिणी । सू. १५. गुडमञ्जरी** । झिंझिणीति प्राचीनकेरलपाठः । गुलदुणि इति लोके , पूर्वदेशे स्वनामप्रसिद्धा इति डल्हणः । N. O.—*Anacardiaceae* । हिं.—जिंगिनी, जिंगनिया , जिंगन, काश्मल ; बं.—जिओल ; म.—मोई , मुया : गु.—मवेडी , मोलेडु ; शेमबट ; कों.—मुया ; दखा.—बेशाराम ; मुंबापु-यांमु.—शिमृपटि ; तै.—ओड्डिमानु ; क.— उडिमर , सिंटिमर , औरीथ ; त.– ओतियमरं ; मल.—करशु കരശു, कलशं , ओति , उति , करा ; ल.—*Odina Wodier* । **नामानि**— "जिंगिणी झिंझिणी झेया मोदकी गुडमञ्जरी । पार्वतेया सुनिर्घोषा तथा मदनमञ्जरी" । ध. नि । **गुणाः**—"जिंगिणी मधुरा सोष्णा कषाया योनिशोधिनी । कटुका व्रणहृद्रोगवातातीसारहृत् पटुः" । भा. प्र । त्वगादिकं ग्राह्यम् । कृष्णशाल्मलीत्यरुणदत्तः । मोदकीति हेमाद्रिः । शणपुष्पीति केरलेष्वेके ॥

**जिनः । चि. १९.** जयति संसारं जि-नक् । **श्रीबुद्धः** । वाग्भटः सौगत इत्यवगन्तुमनेकशो तद्ग्रन्थादेव सुखसाध्यः सहृदयानाम् । स तु विशेषतो नेतरधर्मद्वेषी । स तत्र तत्र स्वसन्दर्भमुररीकृत्य बुद्धागमप्रतिपादनमप्यत्र सुसूक्ष्मतया कृतवान् । "जिनजिनसुत-ताराभास्करराधनानी"त्यत्र "शिवशिवसुतताराभास्करराधनानी" ति केषांचन पाठः । संग्रहेपि "जिनजिनसुत" इत्येव पाठः । "मार-जिदद्वयवादी समंतभद्रो जिनश्च सिद्धार्थः" इति हलायुधः ॥

**जिनसुतः । चि. १९. सुगतशिष्यः** । जिनसुता अवलोकितेशादय इतीन्दुः ॥

**जीमूतः । चि. ८. कोशातकी** ॥

**जीमूतः** । क. १ etc. ह्लादकत्वात् । **देवदाली** । पीतघोषक इत्येके । "जीमूतोऽद्रौ भृतिकरे देवताडे पयोधरे" इति मेदिनी ।

**जीमूतकः** । क. १. देवदाली ॥

**जीरकः** । सू. १५ etc. जीर्यतेऽनेनान्नम् । **स्वनामख्यातक्षुपः** ।
N. O.—*Umbelliferae* ; हिं.—जीरा : उ.—झीरा ; बं.—जीरा ; म.—जिरें ; गु.—जीरूं ; कों.-जीरे ; तै.-जीलकर्रा ; क.—जीरिगे ; तु.—जीर्दरि ; त.—चीरकं ; सिं.—दुरु ; मल.—जीरकं ஜீரகம் ; पा.—झिरा ; अ.—कमुन् ; फ्र —Anisacre; Cumin officinal ; जर्मन्.—Venedischer Kummel ; इं.—Cumin seed ; ल.—*Cuminum cyminum* ।
**नामानि**—"जीरको जरणो जीरो जीर्णो दीप्यश्च दीपकः । अजाजिको वह्निशिखो मागधश्च नवाह्वयः" । रा. नि । बीजं ग्राह्यम् ।
**गुणाः**—"जीरकात्रितयं रूक्षं कटूष्णं दीपनं लघु । संग्राहि पित्तलं मेध्यं गर्भाशयविशुद्धिकृत् । ज्वरघ्नं पाचनं वृष्यं बल्यं रुच्यं कफापहम् । चक्षुष्यं पवनाध्मानगुल्मच्छर्द्यतिसारहृत्" । भा. प्र । "जीरकः कटुरुष्णश्च वातहृद्दीपनः परः । गुल्माध्मानातिसारघ्नो ग्रहणीकृमिहृत्परः" । रा. नि ॥

**जीर्णपिण्याकः** । उ. २४. अनवः पिण्याकः । पुरानी तिलखल ॥

**जीवकः** । सू. ६ etc. जीवयति जीवकः, जीवतीति वा दीर्घायुष्ट्वात् । **अष्टवर्गान्तर्गतस्वनामख्यातहस्वक्षुपः** । "जीवकर्षभकौ श्वेतौ हिमाद्रिशिखरोद्भवौ । रसोनकन्दवत्कन्दौ निःसारौ सूक्ष्मपत्रकौ । जीवकः कूर्चकाकार ऋषभो वृषशृङ्गवत्" । भा. प्र । कन्दो ग्राह्यः । It is a plant growing on the summits of the Himalayas, having a bulbous root like garlic and having leaves that are round and long । "जीवन्तीस-

हृशैः पत्रैर्जीवको गुल्मकः स्मृतः। कण्टी क्षीरी तथानूपे भवतीत्यब्रवीन्मुनिः" इति कैयदेवः। तै.—वेगिसपुचेट्टु ; त.—तिरुनीट्टुप्पालै ; ल.—*Pentaptera Tomentosa* । जीवको मधुररसः ह्रस्वविटपः कूर्चशीर्षक इत्याढमल्लः । एतदभावे गुडूची ग्राह्या । मतान्तरे विदारीमूलम् । जीवकस्थाने रक्तवह्मनं इति केचित् । नामानि—"जीवकः शृङ्गकः क्ष्वेडो दीर्घायुः कूर्चशीर्षकः । ह्रस्वांगो मधुरः स्वादुः प्राणदश्चिरजीव्यपि" । ध. नि । गुणाः—"जीवको मधुरः शीतो रक्तपित्तानिलार्तिजित् । क्षयदाहज्वरान् हन्ति शुक्रश्लेष्मविवर्धनः । रा. नि । "जीवकः प्राणके पीतसारक्षपणयोरपि । कूर्चशीर्षे च पुंसि स्याद्राजीवे जीविका मता । त्रिषु सेविनि वृद्ध्याशीर्जीविनोराहितुण्डिके" इति मेदिनी ॥

जीवकर्षभकौ । चि. ३. कन्दविशेषौ । जीवक ऋषभश्च । "जीवकर्षभकाभावे गुडूची च विदारिका" । विदारीस्थाने केचिद्वंशलोचनेति । "जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ । मधुरौ पित्तदाहास्रकार्श्यवातक्षयापहौ" । भा. प्र ॥

जीवकर्षभौ । see जीवकर्षभकौ ॥

जीवंजीवः । सू. ७. जीवान् जीवयति दर्शनेन तृप्तिकरत्वात् क । विषदर्शनमृत्युः पक्षिविशेषः । "कुरिच" इति लोके इति डल्हणः । एकोदरो द्विशिराः इति हेमाद्रिः । चकोर इत्येके । चकोरस्तु विष्किरजातीयः, प्रतुद एव जीवंजीवः । कोकिलभेद इति केचित् । वट्टचावल् इति केरलेष्वेके ॥

जीवंजीवकः । सू. ६. etc ; जीवंजीवः ।

जीवनपञ्चमूलं । सू. ६ ; शतावरी काकोली जीवन्ती जीवकर्षभकौ च । "अभीरुवीराजीवन्तीजीवकर्षभकैः स्मृतं । जीवनाख्यं च चक्षुष्यं वृष्यं पित्तानिलापहं" । ध. नि. ।

**जीवनसंज्ञ:** । सू. १५. जीवनीयगण: ।

**जीवनसर्पि:** । चि. ७. जीवनीयगणासिद्धं घृतम् ॥

**जीवनह्रस्वसंज्ञे** । सू. १५. जीवनपञ्चमूलं ह्रस्वपञ्चमूलं च ॥

**जीवनाख्यं** । सू. ६. जीवनपञ्चमूलम् ॥

**जीवनीय:** । चि. ३. जीवनीयगण: ॥

**जीवनीयगण:** । चि. ३. जीवन्त्यादिगण: । स च जीवन्ती काकोली क्षीरकाकोली मेदा महामेदा मुद्गपर्णी माषपर्णी जीवक: ऋषभक: मधुकश्चेति । "अष्टवर्गश्च पर्णिन्यौ जीवन्ती मधुकं तथा । जीवनीयगण: प्रोक्तो जीवनश्च पुनस्तत:" इत्येके । **नामगुणा:**— "नाम्ना मधुर इत्युक्तो जीवनीयो रसायन: । जीवनो जीवनीयश्च स्वादुर्मधुरकस्तथा । शुक्रदोषहरो बल्यो मूत्रदोषापहारक:" । ध. नि । "जीवनीयगण: प्रोक्त: शुक्रकृद् बृंहणो हिम: । गुरुर्गर्भप्रद: स्तन्य: कफकृत् पित्तरक्तहृत् । तृष्णां शोषं ज्वरं दाहं रक्तपित्तं व्यपोहति" । भा. प्र. ॥

**जीवनीयाख्य:** सू. १५. जीवनीयगण: ॥

**जीवनीयौषध:** । सू. ११. जीवनीयगण: ॥

**जीवन्त:** । सू. ६. मालवदेशप्रसिद्धो जीवशाक: । रक्तनालो मार्ष: । हिं.—जीवशाक ; बं.—खोषरा ; म.—जीवशाक ; सिं.—रतुतंबला मल.—चेञ्चीरा । ചെഞ്ചീരാ । **नामानि**— "जीवन्तो रक्तनालश्च ताम्रपत्र: सनालक: । शाकवीरस्तु मधुरो जीवशाकश्च मोचक:" । **गुणा:**—"जीवशाक: सुमधुरो बृंहणो वस्तिशोधन: । दीपन: पाचनो बल्यो वृष्य: पित्तापहारक: । रा.

नि. । रक्तवास्तुक इति च सरस्वतीनिघण्टौ । जीवक इति सुश्रुतपाठः ॥

**जीवन्ती** । मू. ६ etc. जीवति । 'जीव प्राणधारणे' । **स्वनामख्यातशाकलताविशेषः** । शर्करावन्मधुरपुष्पा व्रततिरिति भावप्रकाशटीकायाम् । हिं.—जीवन्ती, जैनी ; बं.—जीवई, जीन्ती. म.—हरणवेल ; गु.—राडारुडी, मीठीखरखोडी ; दोडी इत्येके ; क.—किरुहाले, होणहाले ; त.—पेयिमुन्नै ; सिं.—मुरुवामुल् ; मल.—अटवातियन् അടപതിയൻ, अटपतियन् ; ल.—*celtis orientalis* l *caelogyne ovalis* इत्येके । स्वर्णवर्णमूलजालादिका इति हेमाद्रिः । शुष्कयावनालवर्णा लतौषधी पार्वतीयेति डल्हणः । लतार्कफलाकारसक्षीरफला इत्यन्यत्रापि डल्हणः । स एव, जीवन्ती पटोलसमानपत्रा कन्दवती पश्चिमदेशे प्रसिद्धा लाटदेशे स्थूलवल्ली इति श्वासप्रतिषेधाध्यायव्याख्यायाम् । जीवन्ती उत्तरापथे महाकन्दा कर्कोटिकासदृशपत्रा, लाटविषये तु मूलिनी महाप्रताना इति डल्हण एवातीसारप्रतिषेधाध्यायव्याख्यायाम् । पद्मकादिगणव्याख्यायां वन्दाभेद इति हाराणचन्द्रः । जीवन्ती स्वनामख्याता सुवर्णवर्णाभा इति चरकसूत्रचतुर्थाध्यायव्याख्यायां चक्रपाणिदत्तः । स एव, जीवन्ती सुवर्णनाला स्वनामप्रसिद्धेत्यणुतैलयोगव्याख्यायाम् । **नामानि**—"जीवन्ती जीवनीया च जीवनी जीववर्धनी । मांगल्यनामधेया च शाकश्रेष्ठा यशस्करी" । ध. नि । मूलं पत्रादिकं च ग्राह्यम् । **गुणाः**—"जीवन्ती शीतला स्वादुः स्निग्धा दोषत्रयापहा । रसायनी बलकरी चक्षुष्या ग्राहिणी लघुः" । भा. प्र । "जीवन्ती मधुरा शीता रक्तपित्तानिलापहा । क्षयदाहज्वरान् हन्ति कफवीर्यविवर्धिनी । एवमेव बृहत्पूर्वा रसवीर्यबलान्विता । भूतविद्रावणी ज्ञेया वेगाद्रसनियामिका" । रा. नि । सा बहुविधा । ह्रस्वदीर्घस्वर्णवर्णभेदेन त्रिधेति

केचित् । "जीवन्ती जीवनीशम्योर्गुडूचीवन्दयोरपि" इति मेदिनी ॥

**जूर्णः** । सू. १४. तृणधान्यविशेषः । यावनालः । N. O.—*Gramineae* । हिं.—पनेरा, जुआर, ज्वार, मका; बं.—जनार, जोयार; देधान इत्येके; उलुखड़ इत्यपरे; भुटो; म.—जोंधळे, ज्वारी, जोनळें; गु.—जारय, जुवार; तै.—जोन्नलु; क.–जोलदहेसरु, जोल; कों–जोलु; तु.–जोळा; त.–चोळं, चोन्नल्; सिं.—इरिगु; मल.—चोळं ചോളം; पा.—जुरेमका; अ.—हंतारुमिया, खंदरूस; इं.—Great millet, or cholum, Indian millet, Indian corn; ल.—*Sorghum vulgare* । नामानि–"यावनालो देवधान्यं जूर्णाह्वो जूनलो नलः" । म. पा । "यावनालो यवनालः शिखरी वृत्ततण्डुलः । दीर्घनालो दीर्घशरः क्षेत्रेक्षुश्चेक्षुपत्रकः" । रा. नि । गुणाः—"यावनालो हिमः स्वादुर्लोहितः श्लेष्मपित्तजित् । अवृष्यस्तुवरो रूक्षः क्लेदकृत् कथितो लघुः" । भा. प्र । तस्य भेदाः—"ललिता क्रोष्टुपुच्छा च श्रीखण्डी च सुगन्धिका । कृष्णा भाद्रपदी चान्या श्वेता मंडा च जूर्णिका । रक्तिका कुब्जिकाद्याश्च बह्व्यो जूर्णाह्वजातयः" । पुराणं धान्यं ग्राह्यम् ॥

**जूर्णाह्वः** । नि. ७. जूर्णः ॥

**जोंगकः** । सू. १५ etc. अगुरुः । कृष्णागुर्वित्येके । उक्तं हि—"अन्यं कालागुरु प्रोक्तं जोंगकं विश्वरूपकम्" । स. नि । च्यवनप्राशयोगे अगर्विति चरकपाठः । "गन्धकाष्ठं तु जोंगकं" इति त्रिकाण्डशेषः ॥

**ज्योतिः** । चि. ८. चित्रकः ॥

**ज्योतिष्मती** । सू. २१ etc. अग्न्याभत्वात् । स्वनामख्यातल-

ता । N. O.—*Sapindaceae* । हिं.—मालकांगनी , कानफटा ; बं.—लताफटकी ; म.—मालकांगोणी , मालकांगणी , कानफुटि , शिवजल ; गु.—मालकांकणी , करोदिओ ; दखा.—शिबजुब ; तै.—बुड्डकाकर , उप्परिन्त , उझनतीगे , नेलगुलिसे-तेण्टा ; वेक्कुडितेगे ; क.—कनाकैया , एरुंबळ्ळि , एरुवबळ्ळि , अग्निबळ्ळि , बेक्किनतोड्डिनबाळ्ळि ; बुड्डकाकरतीगे ; कौगु ; तु.—उरुण्टेवूरु ; त.—मुटकोत्तान् , तिरकमूलकं ; वालुळवै ; सिं.—दूदु , वरा अरिचि ; मल.—उयिञ्ञा ഉഴിഞ്ഞ , पालुरुवं ; चेरुप्पुञ्ञा इति केरलेष्वेके ; बर्मा.—मल्मै ; फ्रं.—Poi-de-cocur ; जर्मन्.—Gemeiner herzsamen; ई.—Balloon vine or winter-cherry ; heart's pea ; heart seed ; ल.—*Cardiospermum helicacabum* । नामानि—"ज्योतिष्मती तु कटभी सुवर्णलतिकेति च । ज्योतिष्कायाग्निभासा चालवणोक्ता च दुर्जरा" । ध. नि । गुणाः—"ज्योतिष्मती कटुस्तिक्ता सरा कफसमीरजित् । अत्युष्णा वामनी तीक्ष्णा वह्निबुद्धिस्मृतिप्रदा" । भा. प्र । वर्तुलपक्वरक्तफला पीततैला काकमर्दनिका इति लोके प्रसिद्धा इति डल्हणः । अस्याः मूलं ग्राह्यम् । अभावे सर्वांशो ग्रहणीयः । ज्योतिष्मतीभेद एव तेजोवती ॥



## झ ।

**झरसी** । see **सरसी** ॥

**झषः** । उ. ५. "गोधानकुलमार्जारझषपित्तप्रपेषितान्" इत्यत्र "झष"स्थाने "ऋष्य" इत्येव सुश्रुतसंग्रहयोः पाठः । शिवपुरमुद्रितसंग्रहग्रन्थे 'शश' इति दृश्यते । झष इति चेन्मकर एव । "मकरो मत्स्यराड् झषः" इति वैजयन्ती । डल्हणोपि तन्नेच्छति । यथा—

"अन्ये ऋष्यस्थाने मत्स्येति पठन्ति ; तन्न , आद्यपुस्तके ऋष्यस्य पाठो दृश्यते न मत्स्यस्य । नस्यादिषु पित्तपिष्टेन कथं सेकः कर्तुं पार्येत इत्यतः किञ्चित्तोयमालोडनार्थं देयम् । अत एव योगतत्त्वविदित्युक्तम् । अन्ये तु 'नस्याभ्यञ्जनयोगेषु' इति पठन्ति , अभ्यञ्जनमत्राञ्जनमभिप्रेतं नस्यसाहचर्यादिति च व्याख्यानयन्ति" इति ॥

झुंझः । सू. ६. चुंचुरिति पाठः समीचीनः । कस्तुरिति केरलपाठः । लताकस्तूरिकेति पाठ्यकारः । झुंझुरुक इत्यरुणदत्तः । "जीवन्तझुंझ्वेडगज" इत्यत्र "जीवन्तिकश्चुंचुपर्णीप्रपुन्नाडकुबेरक" मित्येव संग्रहपाठः । चुचुपर्णकेति चरकपाठः ॥

---

# ट ।

टिंटुकः । चि. १५. स्योनाकः ॥

टुंटुकः । सू. ६. टुंट्विति शिंबिभिः कायति । स्योनाकः ॥

---

# ड ।

डिण्डिशः । see तिण्डिशः ॥

डिंभम् । शा. ३. अन्त्रसंभवोऽवयवविशेषः । "डिंभं स्याद्रक्तमांसस्य प्रसादाद्दंबसंभवः" ॥

---

# त ।

तक्रम् । सू. ५ etc. तञ्चति द्रुतं गच्छति तक्रम् । गोरसम् । "समुद्धृतघृतं तक्रमर्धोद्धृतघृतं च यत् । अनुद्धृतघृतं तक्रमित्येवं त्रिविधं स्मृतं" । ध. नि । चरकोपि—"रूक्षमर्धोद्धृतस्नेहं यतश्चा-

नुद्धृतं घृतम् । तक्रं दोषाग्निबलवत्त्रिविधं तत् प्रयोजये"दित्यूचिवान् । "समुद्धृतघृतं तक्रं पथ्यं लघु विशेषतः । स्तोकोद्धृतघृतं तस्माद् गुरु वृष्यं कफापहम्। अनुद्धृतघृतं सान्द्रं गुरु पुष्टिकफप्रदम्"। भा. प्र। तक्रं पञ्चविधमिति भावमिश्रः। **तल्लक्षणं यथा**— "घोलं तु मथितं तक्रमुदश्विच्छच्छिकापि च। ससरं निर्जलं घोलं मथितं त्वसरोदकम् । तक्रं पादजलं प्रोक्तमुदश्वित्त्वर्धवारिकम् । छच्छिका सारहीना स्यात् स्वच्छा प्रचुरवारिका। घोलं तु शर्करायुक्तं गुणैर्ज्ञेयं रसालवत्" इति । मथितं 'महुवा' इति लोके । छच्छिका छाछ इति लोके। "पादोदकं भवेत्तक्रमर्धाम्भोन्ये बभाषिरे" इति मदनपालः । "मन्थनादिपृथग्भूतस्नेहमर्धोदकं च यत् । नातिसान्द्रद्रवं तक्रं स्वाद्वम्लं तुवरं रसे। यत्तु सस्नेहमजलं मथितं घोलमुच्यते" । सु. सू. ४५। "दध्नः ससारकस्यात्र तक्रं कट्टरमिष्यते" इति तन्त्रान्तरे । हिं.—छांछ, छाछ, मट्ठा; बं.—घोल; म.—ताक; गु.—छाश, घोलवु; तै.—मज्जिगे, चल्ल; क.—मज्जिगे; त.—मोरु; सिं.—मोहोरु, मोरु; मल.—मोर् ೞ೦೦ ; पा.—मस्त, मठा; अ.—हमीज; इं.—Buttermilk। **नामानि**—"उदश्विन्मथितं तक्रमरिष्टं गोरसं तथा । दण्डाहतं खण्डहारा कालशेयं च शब्दितम्"। स. नि। **गुणाः**— "तक्रं ग्राहि कषायाम्लं स्वादुपाकरसं लघु। वीर्योष्णं दीपनं वृष्यं प्रीणनं वातनाशनम्। ग्रहण्यादिमतां पथ्यं भवेत् संग्राहि लाघवात्। किञ्च स्वादुविपाकित्वान्न च पित्तप्रकोपणम्। अम्लोष्णं दीपनं वृष्यं प्रीणनं वातनाशनम्। कषायोष्णविकाशित्वाद्रौक्ष्याच्चापि कफापहम्। न तक्रसेवी व्यथते कदाचिन्न तक्रदग्धाः प्रभवन्ति रोगाः । यथा सुराणाममृतं सुखाय तथा नराणां भुवि तक्रमाहुः" । भा. प्र । "शीतकालेऽग्निमान्द्ये च कफोत्थेष्वामयेषु च । मार्गावरोधे दुष्टे च वायौ तक्रं प्रशस्यते" । सु. सू. ४५। **तक्रनिषेधः**—"नैव त-

क्रं क्षते दद्यान्नोष्णकाले न दुर्बले । न मूर्छाभ्रमदाहेषु न रोगे रक्तपैत्तिके" । सु. सू. ४५ । तक्रविशिष्टगुणाः—"यान्युक्तानि दधीन्यष्टौ तद्गुणं तक्रमादिशेत्" । भा. प्र । पक्वापक्वतक्रगुणाः—"तक्रमामं कफं कोष्ठे हन्ति कण्ठे करोति च । पीनसश्वासकासादौ पक्वमेव प्रयुज्यते" । भा. प्र । "अम्लेन वातं मधुरेण पित्तं कफं कषायेण निहन्ति सद्यः । यथा सुराणाममृतं हिताय तथा नराणामिह तक्रमाहुः" । रा. नि ॥

**तगरम्** । सू. १० etc. **स्वनामख्यातौषधिविशेषः** । N. O.—*Valerianeæ* । **हिं.**—तगर, वालतगर; **बं.**—टगर, तगर, तगरपादुका; **पञ्जा.**—मुश्क-इ-वालि; **काश्मी.**—छालगुडि; **म.**—तगर; **गु.**—तगर; **ने.**—चम्मा; **तै.**—नन्दिवर्धनचेट्टु, गन्धितगरपुचेट्टु; **उत्.**—पाणिफलरा; **क.**—नन्दिवट्टलु, तगर; **सिं.**—तुवरला; **मल.**—तकरं ൗകൂൾ; **अ.**—अशारून; **कों.**—अनन्त; **इं.**—Indian Valerian, Valeriana Hardwick; **ल.**—*Valeriana Wallichii, V. Hardwickii* । **नामानि**—"तगरं कुटिलं वक्रं दीनं जिह्मं नतं शठम् । कालानुसार्यमनृजु कुञ्चितं नहुषं नृपम्" । ध. नि । **गुणाः**—"तगरं शीतलं पथ्यं तिक्तं मधु लघु स्मृतम् । स्निग्धं पाके च कटुकं तुवरं विषनाशकम् । नेत्रमस्तकरोगं च रक्तदोषं त्रिदोषकम् । भूतोन्मादमपस्मारं भूतबाधां च नाशयेत्" । नि. र । **मूलं ग्राह्यम्** । "तगरस्याप्यभावे तु कुष्ठं दद्याद् भिषग्वरः" । भा. प्र ॥

**तण्डुलम्** । सू. २२. **निस्तुषधान्यः, धान्यादिसारः** । N. O.—*Gramineæ* । **हिं.**—चावल, चाउल; **बं.**—चाउल; चाल; **म.**—तांदूळ; **गु.**—चोखा; **पञ्जा.**—चावल; **तै.**—बीय्यं, बिययमु, बीयमु; **क.**—अक्कि; **तु.**—अरि; **त.**—अरिचि;

सिं.—हाल्, साल्; कों.—तांदुल्; मल.—अरि അരി;
पा.—बिरंज; अ.—उरज, अरुझ; दखा.—चओयल,
चावल; काश्मी.—तोमुल; बर्मा.—चान; मलायी.—ब्रास;
इं.—Rice; ल.—*Oryza Sativa* । नामानि—"दसकोऽक्ष-
तमित्युक्तं तण्डुलञ्च परिव्ययम्" । स. नि । "सस्यं क्षेत्रगतं प्रोक्तं
सतुषं धान्यमुच्यते । निस्तुषस्तण्डुलः प्रोक्तः स्विन्नमन्नमुदाहृतम्" ।
इति । गुणाः—"तण्डुलो मेहजन्तुघ्नः स नवस्त्वतिदुर्जरः" इति
भावमिश्रः ॥

**तण्डुलतोयम्** । चि. ८. तण्डुलोदकम् ॥

**तण्डुलवारि** । चि. १०. तण्डुलोदकम् ॥

**तण्डुलांबु** । चि. ८. etc. तण्डुलोदकम् ॥

**तण्डुलीयः** । सू. ६. ताडयति दोषांस्तण्डुलीयस्तण्डुलाय हितमिति
वा, लघुतण्डुलाभबीजो वा । स्वनामख्यातपत्रशाकक्षुपः ।
N. O.—*Amaranthaceæ* । हिं.—चौलाई, अल्पमरुसा, च-
वड़ाइ; बं.–नटेशाक, कांटा नटिया, क्षुद्रनटे, चांपानटे; म.—
तांदुळजा; गु.—तांदलजानी भाजी; तै.—चिरिकूर, मोलाकुरा;
क.–किरुकुशाले, कीरकसाले, मुळ्ळुहरिवेसोप्पु, मुळ्ळुदंटु; त.–
मुळ्ळुकीरै; दखा.—कांटेमाट; सिं.—कटुकुर, वलुतंबळा;
मल.—मुळ्ळन्चीरा മുള്ളൻചീര, चेरुचीरा; पा.—सफेदम-
र्ज; अ.—बुकलेयमानीया; इं.—Prickly Amaranth; ल.–
*Amaranthus spinosus* । अल्पमारिषः थानकुनि इति लोके
इति चरकोपस्कारे । 'नव्याशाक' इति प्रसिद्ध इति भाष्यकारः ।
नामानि—"तण्डुलीयो मेघनादः काण्डेरस्तण्डुलेरकः । भण्डीर-
स्तण्डुलीबीजो विषघ्नश्चाल्पमारिषः" । गुणाः—"तण्डुलीयो लघुः

शीतो रूक्षः पित्तकफास्रजित् । सृष्टमूत्रमलो रुच्यो दीपनो विषहारकः" । भा. प्र । पत्रमूलादिकं ग्राह्यम ॥

**तण्डुलीयकः** । सू. ७ etc. तण्डुलीयः ॥

**तण्डुलोदकम्** । चि. ९ etc. प्रक्षालिततण्डुलजलम् । हिं.—चावलोंके पानी ; बं—चेलुनिर जल ; मल.—अरिक्काटिवेळ्ळ अरिक्काडिवेळ्ळं ; सिं.—साल्दोवुनुदिय ; Thandulodaka is water in which unboiled rice has been steeped । तस्य विधिः—"जलमष्टगुणं दत्वा पलं कण्डिततण्डुलात् । भावयित्वा ततो देयं तण्डुलोदककर्मणि" । शीतकषायमानेन वा तण्डुलोदककल्पना इति केचित् । चतुर्गुणजलेन क्षाल्यमित्येके । नामानि—"तण्डुलक्षालितं श्रेष्ठोदकं तण्डुलवारि च" । स. नि । गुणाः—"संग्राहि तण्डुलांबु स्यात् कषायं मधुरं लघु । विषदाहतृषाछर्दिपित्ततापविनाशनम्" ॥

**तन्दुलीयः** । चि. २. तण्डुलीयः ॥

**तन्दुलीयकः** । उ. ३७. तण्डुलीयः ॥

**तन्मूलम्** । चि. १३. पिप्पलीमूलम् ॥

**तपनीयः** । सू. ६. शालिधान्यविशेषः ॥

**तपनीयम्** । उ. १. तप्यतेऽनेन । 'तप संतापे' । कनकम् ॥

**तमालपत्रम्** । चि. १ etc. ताम्यति तमालः । तेजपत्रम् । N. O.—*Laurineae* । हिं.—तेजपात, तज ; उ.—तेजपल ; बं.—तेजपात ; म.—तमालपत्र, सम्भारपान ; गु.—तमालपत्र ; तै.—आकुपत्री ; क.—लवंगपत्रि, तमालपत्र, दाल्चीनिमर ; त.—करुवैयिलै ; इलवङ्कप्पात्तिरि ; सिं.—कमल्पत्, कोङ्कनूकोला ; मल.—करुवायिला കറുവയില , इलवङ्गत्तिन्निला ;

बर्मा.—शिकेयाबो ; कों.—टिके ; तु.—इजिन्द्मर ; पा.—सादरसु, सझज-इ-हिन्दी ; अ.—साजिज , तरनेझि ; द्खा.—तेजपात ; इं.—Leaf of cinnamon tree ; ल.—*Cinnamomum iners* । पत्रमेव ग्राह्यम् । नामानि—"तमालपत्रं पत्रं स्यात् पलाशं छदनं दलम् । रामं तापसजं वासो गोपनं वस्रमंशुकम्" । ध. नि । गुणाः—"पत्रकं मधुरं किञ्चित्तीक्ष्णोष्णं पिच्छिलं लघु । निहन्ति कफवातार्शोहृल्लासारुचिपीनसान्" । भा. प्र । परिलेहिकाचिकित्सिते "तमालपत्रमरिचमदनै"रित्यत्र "सनिंबपत्रमरिचमदनै"रित्यवश्यं पठनीयं सुश्रुतमतानुसारिणा । नेत्ररोगाधिकारेषु तमालपत्रस्थाने करंजपत्रमेव केरलीयभिषग्वरेष्वेके गृह्णन्ति ॥

तरक्षुः । सू. ६. तरं मार्गं गतिं वा क्षिणोति रुणाद्धि । प्रसहजातीयमृगादनव्याघ्रः तरच्छ इति ख्यातः । हिं.—तरखू, तिरखू ; तरख , लकडबग्घा ; हुंडार इति केचित् ; 'तेंदुआ वाघ' इत्यन्ये । बं.—नेकडिया वाघ ; म.—तरस ; सिं.—बलुदिविया ; त.—कलुतैप्पुलि ; चिरुत्तै इत्येके ; मल.—कलुतप्पुलि കഴുതപ്പുലി, चिरुपुलि , नाय्क्कोट्टन् ; कट्टुपुलि इत्येके ; इं.—Hyena ; ल.—*Hyaena striata* । जरख इति लोके इति डल्हणः । नामानि—"तरक्षुस्तु मृगाजीवस्तालित्सकमृगादनौ" इति वैजयन्ती । गुणाः—"शार्दूलसिंहशरभर्क्षतरक्षुमुख्या येन्यान् प्रसह्य विनिहत्य हि वर्तयन्ते । ते कीर्तिताः प्रसहनाः पललं तदीयमर्शःप्रमेहजठरामयजाड्यहारि" ॥

तरुणबिल्वम् । चि. १४. बालबिल्वम् ॥

तरुणसुरा । चि. ८ etc. प्रकृत्या संजातमधुरप्रायो मद्यविशेषः । अल्लिकक्कु इति केरलेषु ॥

**तरुणास्थि** । शा. ४ etc. घ्राणकर्णाक्षिगुदेषु कोमलास्थि । Cartrilage ॥

**तर्कारी** । सू. ६ etc. तर्कमियर्ति तर्कारी केतुत्वात् । **अग्निमन्थः** । "बिल्वकाश्मर्यतर्कारीपाटलाटुंटुकैर्महत्" ॥

**तर्पणम्** । चि. १ etc. **सक्तुकृतपेया** । मल.—मलर्क्कञ्ञि മലക്കഞ്ഞി ॥

**तर्पणम्** । चि. २, चि. ४. **तोयप्लुतसक्तवः** । सक्तुनालोडितं जलम् । "खदिका तु गुडाद्याढ्यलाजसक्तुषु तर्पणं" इति वैजयन्ती ॥

**तलः** । सू. १५. **तालः** । ताल इत्येव सुश्रुतपाठः । "तृणराजे तलस्तालो महापत्रः फलेरुहः" इति वैजयन्ती ॥

**तवक्षीरी** । चि. ३ etc. **त्वक्क्षीरी** । तुगाक्षीरीत्यरुणदत्तः । रसायनाधिकारे "मधुकेन तवक्षीर्या" इत्यत्र 'तुगाक्षीरी'त्येव चरकपाठः । तवक्षीरीं केचिदन्यदिति वदन्ति । "अन्या पलाशगन्धा च तवक्षीरी प्रकीर्तिता" । ध. नि । **तोषाक्षीर** ॥

**तापसवृक्षः** । सू. १५. **तापसानां वृक्षः** । तापसोपयुक्तस्तरुः । तत्तैलादिना तापसानां सर्वकर्मनिर्वाहात् । **इंगुदी** । **पुत्रंजीवक** इत्यन्ये ॥

**ताप्यम्** । चि. १६ etc. माक्षिकधातुरिति चरकसंग्रहयोः पाठः । **स्वर्णमाक्षिकम्** । **परीक्षा यथा**—"अंगे सुवर्णसंकाशो मनाक्कृष्णछविर्बहिः । बृहद्वर्ण इति ख्यातो माक्षिकः श्रेष्ठ उच्यते" । "किञ्चित् सुवर्णसाहित्यात् स्वर्णमाक्षिकमीरितम् । उपधातुः सुवर्णस्य किञ्चित् स्वर्णगुणान्वितम् । तथा च काञ्चनाभावे दीयते स्वर्णमाक्षिकम् । किन्तु तस्यानुकल्पत्वात् किञ्चिदूनगुणास्ततः" ।

"न केवलं स्वर्णगुणा वर्तन्ते स्वर्णमाक्षिके । द्रव्यान्तरस्य संसर्गात् सन्त्यन्येपि गुणा यतः" । भा. प्र । हिं.—सोनामाखी ; बं.—स्वर्णमाक्षिक ; म.—सोनामुखी , दगडी ; गु.—सोनामखी ; तै.—स्वर्णमाखी ; क.—धातुमाक्षिक ; त.—पोन्निमिळै ; सिं.—मेडिदू ; मल.—माक्कीरक्कल्लु മാക്കിറക്കല്ലു ; अ.—मुर्कशी शाजहबी ; इं.—Yellow pyrites, Iron pyrites ; ल.—*Ferri Sulphuretum* । "माक्षिको द्विविधो हेममाक्षिकस्तारमाक्षिकः । तत्राद्यं माक्षिकं कान्यकुब्जोत्थं स्वर्णसन्निभम् । तपतीतीरसंभूतं पञ्चवर्णसुवर्णवत्" । इति रसरत्नसमुच्चयः । **नामानि**—"ताप्यं तापिजमावन्त्यं माक्षिकं मधुमाक्षिकम् । तापीसमुद्भवं धातु मधुधातु विनिर्दिशेत्" । रा. नि । **गुणाः**—"माक्षिकं मधुरं तिक्तं स्वर्यं वृष्यं रसायनम् । चक्षुष्यं वस्तिरुक्कुष्ठं पाण्डुमेहविषोदरम् । अर्शः शोफं क्षयं कण्डूं त्रिदोषञ्च नियच्छति" । भा. प्र । शोधितमारितं ग्राह्यम् । **शोधनविधिः**—"माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च । मातुलुंगद्रवैर्वाथ जंबीरस्य द्रवैः पचेत् । चालयेल्लौहजे पात्रे यावत् पात्रं सुलोहितम् । भवेत्ततस्तु संशुद्धिः स्वर्णमाक्षिकमृच्छति" । भा. प्र । "माक्षिकस्याप्यभावे तु प्रदद्यात् स्वर्णगैरिकं" इति भावमिश्रः ॥

**ताप्यधातु** । उ. १३. ताप्यं , **स्वर्णमाक्षिकम्** । वट्टमाक्षिकमितीन्दुः ॥

**तामरसम्** । **सू. २२.** तामरे जले सति सस-ड । **कमलम्** । "अथ तामरसं पद्मे ताम्रकाञ्चनयोरपि" इति मेदिनी ॥

**तामलकी** । चि. १. etc. ताम्यति तामलकी । **भूम्यामलकी** । N. O.—*Euphorbiaceae* । हिं.—भूँई आमला, भूमि आंवरा, भूमि आंवला ; भूआमला , जराम्ला ; बं.—भूँई आमला; म.—

भुय आंवळी, भुई आवळा ; गु.—भों आंवळी ; तै.—नेल उसरिक ; क.—किरुनेल्लिगिड, नेलनेल्लि, आरुनेल्लि ; कों.—भूंयावाळि ; तु.—नेलनेल्लि ; त.—कीळ्कायिनेल्लि, कीळानेल्लि, निलनेल्लि, चिमुट्टि ; सिं.—बिंनेल्लि, पिटवक्का ; मल.—कीळानेल्लि കീഴാർനെല്ലി ; फ्र.—Phyllanthe niruri ; Herbe due chagrin ; जर्मन्.—Weisse Blatt-blume ; ल.—*Phyllanthus Niruri, P. Urinaria* । नामानि—"तामलक्यजटा ताली तमाली तु तमालिनी । वितुन्नभूता तमकं भूधात्री भ्वामलक्यपि" । ध. नि । सर्वांशो ग्राह्यः । गुणाः—'भूधात्री तु कषायाम्ला पित्तमेहविनाशनी । शिशिरा मूत्ररोगार्तिशमनी दाहनाशिनी" । रा. नि । अन्यच्च—"भूधात्री वातकृत्तिक्ता कषाया मधुरा हिमा । पिपासाकासपित्तास्रकफकण्डूक्षतापहा" । भा. प्र ॥

**ताम्रम्** । सू. ७ etc. ताम्यति, तम्यते वा । 'तमु काङ्क्षायाम्' । स्वनामख्यातधातुः । ताम्रलक्षणम्—"जपाकुसुमसंकाशं स्निग्धं मृदु घनक्षमम् । लौहनागोज्झितं ताम्रं मारणाय प्रशस्यते" । भा. प्र । तद्द्विधा—"म्लेच्छं नैपालकम् चेति द्विविधं ताम्रमीरितम् । नेपालादन्यखन्युत्थं म्लेच्छमित्यभिधीयते" । ताम्रदोषा अष्टौ—"भ्रमो मूर्च्छा विदाहश्च उत्क्लेदः शोषवान्तयः । अरुचिश्चित्तसन्ताप एते दोषा विषोपमाः" । हिं.—तांबा ; बं.—तामा ; म.—तांबें ; गु.—त्रांबो ; कों.—तांबे ; आसां.—ताम ; बर्मा.—क्यानि ; तै.—रागि ; क.—ताम्र ; त.—तांपरं, चेम्पु ; सिं.—तंब ; मल.—चेम्पु ചെമ്പ്, ताम्रं ; पा.—मिस ; अ.—नुहास ; नेहास्स ; फ्र.—Cuivre ; जर्मन्.—Kupfer ; इं.—Copper ; ल.—*Cuprum* । नामानि—"ताम्रं वरिष्टं मिहिरं शुल्वं म्लेच्छमुखं तथा । ताम्रकं रक्तलोहं

च रविनामकमुच्यते" । स. नि । शोधितमारितं ग्राह्यम् । गुणाः— "ताम्रं कषायं मधुरं सतिक्तमम्लश्च पाके कटु सारकं च । पित्तापहम् श्लेष्महरं च शीतं तद्रोपणं स्याल्लघु लेखनं च । पाण्डूदरार्शोज्वरकुष्ठकासश्वासक्षयान् पीनसमम्लपित्तम् । शोथं कृमीन् शूलमपाकरोति प्राहुर्बुधा बृंहणमल्पमेतत् । एको दोषो विषे ताम्रे त्वसम्यङ्मारितेष्टः ते । दाहः स्वेदोऽरुचिर्मूर्च्छा क्लेदो रेको वमिर्भ्रमः" । भा. प्र । शोधनविधिः—"पत्तलीकृतपत्राणि ताम्रस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च काञ्जिके । गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं ताम्रस्य पत्राणां विशुद्धिः संप्रजायते । न विषं विषमित्याहुस्ताम्रन्तु विषमुच्यते" । भा. प्र ॥

**ताम्रचूडः** । सू. ४ etc. ताम्रा चूडा यस्य । कुक्कुटः । "ताम्रचूडसुरा" इत्यत्र "मदिराश्चरणायुधाः" इत्येव चरकपाठः ॥

**ताम्ररजः** । सू. ७. ताम्रभस्म ॥

**ताम्रवल्ली** । शा. २ etc. चित्रकूटप्रसिद्धा लतेति बहवः । मंजिष्ठेति केचित् । रामतरुणीतीन्दुडल्हणारुणप्रभृतयः । चम्प्रवळ्ळीति केरलेष्वेके ॥

**तारकम्** । उ. १३. रजतम् ॥

**तार्क्ष्यः** । शा. ३. तार्क्षस्यापत्यम् । गृध्रः । "तुरंगगरुडौ तार्क्ष्यौ" इति शाश्वतः ॥

**तार्क्ष्यम्** । चि. ८. etc. रसाञ्जनम् । रसाञ्जनमित्येव चरकसंग्रहयोः पाठः ॥

**तार्क्ष्यजम्** । चि. १९ etc. रसाञ्जनम् ॥

**तार्क्ष्यशैलम्** । सू. १५ etc. तार्क्ष्यशैले भवम् । रसाञ्जनम् ॥

**ताल:** । सू. ३ etc. तलति प्रतितिष्ठति बहुमूलत्वात्ताल: । **स्वनामप्रसिद्धवृक्ष:** । N. O.—*Palmaceae* । हिं.—ताड , तारि ; बं.—ताल ; म.—ताड , तलत्माड , खरताल ; गु.—ताड ; कों.—तळ्त्तमाड्डो ; तै.—ताट्टि , तालि ; क.—ताळिमर , करताळे , पनि ; त.—पनैमरं , पनै , ताळि , करुम्बुरं ; तु.—तारि , ओलेमर ; सिं.—तल् ; मल.—करिम्पना കരിമ്പന , पना ; उर्दु.—ताड़ ; इं.—Palmyra palm, Brab tree, Toddy tree ; ल.—*Borassus flabelliformis* । **नामानि**—"तालस्तलो दीर्घतरुस्तृणराजश्चलच्छद: । गुड: स्वादुफलो लेख्यच्छदश्च जलजो मत: । स. नि । पक्वफलं ग्राह्यम् । **गुणा:**—"पक्वं तालफलं पित्तरक्तश्लेष्मविवर्धनम् । दुर्जरं बहुमूत्रञ्च तन्द्राभिष्यन्दशुक्रदम् । तालमज्जा तु तरुण: किञ्चिन्मदकरो लघु: । श्लेष्मलो वातपित्तघ्न: सस्नेहो मधुर: सर: । तालजं तरुणं तोयमतीव मदकृन्मतम् । अम्लीभूतं तदा तु स्यात् पित्तकृद्वातदोषहृत्" । भा. प्र । "फलं स्वादुरसं पाके तालजं गुरुपित्तजित् । तद्बीजं स्वादु पाके तु मूलं स्याद्रक्तपित्तजित्" । ध. नि ॥

**तालम्** । चि. १९. तालयति , तल्यते वा । 'तल प्रतिष्ठायाम्' । **हरितालम्** । "पटुतालविश्वै"रित्यत्र "हरितालविश्वै"रित्येव संग्रहपाठ: । मुंबापुरमुद्रितसंग्रहग्रन्थेषु "हरितालत्रिलवै"रिति दृश्यते । "ताल: कालक्रियामाने हस्तमानद्रुमेद्रयो: । करास्फोटे करतले हरिताले त्सरावपि" इति हैम: ॥

**तालपत्रा** । उ. १८. **मुशली** । "मुसली तालपत्री स्यात् खलिनी तालमूलिका" इति मदनपाल: । मूषिकपर्णीति डल्हण: ॥

**तालपत्रिका** । चि. ११. तालस्य पत्रमिव पत्रमस्या: । **मुशली** । मिश्रेयेति केचित् । तालमूलिकेति सुश्रुतपाठ: ॥

**तालपत्री** । सू. ३०. **मुशली** । मुसलीति डल्हणः । तालवृक्षस्य बालपल्लव इति केरलेष्वेके ॥

**तालपर्णी** । चि. १७. तालस्य पर्णमिव पर्णमस्याः । **मुशली** । तालीतीन्दुः । मिश्रेयेति केचित् ॥

**तालफलम्** । सू. ६. **तालवृक्षस्य फलम्** । ताडका फल । मल.—पनन्तेङ्ङा പനംതേങ്ങ ॥

**तालमस्तकम्** । चि. ३ etc. **तालवृक्षस्य शिरोमज्जा** । शाखापुच्छ इत्येके । महामायूरघृतयोगे "तालखर्जूरमुस्तकै"रित्यत्र मुद्रितचरकपाठोपि तद्वदेवापि "तालखर्जूरमस्तकै"रित्यवश्यं पठितव्यम् । see **नारिकेलः** ॥

**तालवृन्तम्** । सू. ३ etc. ताले करतले वृन्तं बन्धनमस्य । तालस्येव वृन्तमस्य वा । **तालपत्रमयो व्यजनविशेषः** । हिं.—ताडके पंखा ; बं.—पाका ; म.—ताडाचा पंखा ; त.—विचिरि ; सिं.—पवनूपत ; मल.—विशरि വിശറി ; आलवट्टमित्येके ; इं.—Fan । "व्यजनं तालवृन्तं स्या"दिति वैजयन्ती । "तालवृन्तभवो वातस्त्रिदोषशमनो लघुः" राज. व ॥

**तालसस्यम्** । चि. ३. **तालवृक्षस्य कोमलं फलम्** । तालके कोमलफल । "वृक्षादीनां फलं सस्य"मित्यमरः । मस्तकमज्जेति केचित् । तालास्थिमज्जेत्यपरे । "तालसस्यन्तु मधुरं मूत्रलं वातपित्तजित्" इति मदनपालः । "तालसस्यं स्वादु हिमं स्निग्धं बल्यं च बृंहणं" इत्येके ॥

**तालीसम्** । शा. १ etc. **तालीसपत्रम्** ॥

**तालीसपत्रम्** । चि. ५ etc. तालीशं तालीवद्रोगनाशकम् पत्रं यस्य । **भूम्यामलकीसदृशं स्वनामख्यातपण्यद्रव्यम्** । N. O.—

*Coniferæ* । Bixineæ इत्येके । हिं.—तालीसपत्र ; उ.—तालीसपत्री , सरुनब ; बं.—तालीसपत्र ; म.—लघुतालीसपत्र ; गु.—तालीसपत्र ; तै.—तालीशपत्री ; क.—तालिसपत्रे , गोराजि , चरिचालि , चंचलिमर ; द्रवा.—पनिअल ; तु.—कोरजि ; त.—तालिचपत्तिरि ; सिं.—तलिस्पतु ; मुंबापुर्याम्.—बारामि ; मल.—ताळीसपत्रं താളീസപത്രം ; पा.—जरनब ; अ.—तालीसफर ; इं.—Himalayan Silver fir ; ल.—*Abies Webbiana, Flacourtia cataphracta; Taxus baccata* इत्येके । "The dried leaves used by Kavirajas under the name of talisapatra, were identified at the herbarium of the Royal Botanic Garden to be the leaves of Pinus Webbiana. They are single, spirally arranged all round the branchlets, flat, narrow, linear, one to three inches long, one line broad, narrowed into a short terete petiole, under side with two longitudinal furrows on either side of the raised midrib, upper side shining. The Sanskrit term talisapatra has been hitherto translated by most writers on Botany and Materia Medica, as Flacourtia cataphracta. The error originated probably in Wilson's Sanskrit-English dictionary and has since been repeated by subsequent writers."—Uday Chand Dutt । **नामानि**—"तालीसकं तु तालीसं पत्रं तालीसपत्रकम् । नीलमामलकीपत्रं पत्राढ्यं च शुकोदरम्" । ध. नि । पत्रं ग्राह्यम् । **गुणाः**—"तालीसपत्रं मधुरं तिक्तं चोष्णं लघु स्मृतम् । तीक्ष्णं स्वर्यं च हृद्यं च अग्निदीप्तिकरं मतम् । श्वासं कासं कफं वातं क्षयगुल्मारुचीस्तथा । रक्तदोषं वमिं चाममग्निमान्द्यं च नाशयेत् । मुखरोगं च पित्तं च नाशयेदिति कीर्तितम्" । नि. र । अभावे कण्टकारीजटा ग्राह्या । "तालीसपत्रकाभावे स्वर्णताली प्रशस्यते" इति भावमिश्रः ॥

**तिक्तः** । उ. २. किराततिक्तः ॥

**तिक्तकः** । चि. १०. **किराततिक्तः** । उदरचिकित्सिते "कटुकां तिक्तकं वचा"मित्यत्र तिक्तकस्थाने तिल्वक इत्येव चरकपाठः ॥

**तिक्तकरोहिणी** । उ. २२. **कटुका** ॥

**तिक्तरोहिणी** । चि. १०. तिक्ता सती रोहति । **कटुका** । "भूनिंबं रोहिणीं तिक्तां" इत्यत्र तिक्तरोहिणीत्येकपदमेव । रोहिणी हरीतकी, तिक्ता कटुका चेति शिवदीपिकाकारः । तिक्ता पाठेत्येके । हपुषाद्यचूर्णयोगे "रोहिणीं तिक्तां" इत्यत्र कटुकरोहिणीत्येकपदमेव चरकसंहितायाम् ॥

**तिक्ता** । चि. १ etc. **कटुका** । पिप्पल्यादिघृतयोगे "कटुरोहिणी"त्येव चरकसुश्रुतसंग्रहेषु पाठः । भूनिंब इति केचित् । "अथवा माद्रीतिक्ताद्यनामयान्" इत्यत्र समंगेति कैरली ॥

**तिक्ता** । चि. १०, चि. १५. see **तिक्तरोहिणी** ॥

**तिक्तोत्तमः** । क. १. **पटोलः** । पटोल इत्येव संग्रहपाठः । निंब इत्यरुणदत्तः ।

**तिण्डिशः** । सू. ६. डिण्डिश इति पाठः । निन्दिश इति शिवपुरमुद्रितसंग्रहपाठः । **फलशाकविशेषः** । हिं.—ढेंढस, खेखसा; बं.– घेरसा; म.—ढेंढसे, भेंढशी; गु.—कंटोला; तै.—अगोरकर; फ्र.—Trichosanthes lacinie; जर्मन्.—Handtheilige haarblume; ल.—*Trichosanthes Lacinissa* । टिण्डे इति शिवदीपिका । भेण्डेति केचित् । शशाण्डुलीत्यपरे । नामगुणाः—"डिण्डिशो रोमशफलो मुनिनिर्मित इत्यपि । डिण्डिशो रुचिकृद्भेदी पित्तश्लेष्मापहः स्मृतः । शीतलो वातकृद्रूक्षो मूत्रलश्चाश्मरीहरः" । भा. प्र । बलंफलं ग्राह्यम् ॥

तिन्तिडीकः । चि. ९. वृक्षाम्लः ॥

तिन्तिडीका । चि. ५ etc. तिम्यति । 'तिम आर्द्रीभावे' । "तिन्तिडी त्वम्लिका चिञ्चा तिन्तिडीका कपिप्रिया" इति वाचस्पतिः । स्वनामख्याताम्लफलवृक्षः । तिन्तिडीका इति पाठः । N. O.—*Leguminosæ* । हिं.—इमली, अमली; बं.—तेंतुल; पञ्जा.—इमली; काश्मी.—तमर-इ-हिन्द; दखा.—अमली; म.—चिंच, इमली; गु.—आंबली; तै.—चिंतचेट्टु; कों.—चींच, चिञ्चेरूक्कु; क.—हुणिसे, हुळिमर; लुनिसे; त.—पुळिमयरं; तु.—पुनूकेमर; सिं.—सिनिंबला; मळ.—कोल्पुळि കോൽപുളി, पुळिमरं; बर्मा.—मागि; मलायी.—अस्सांजवा; पा.—अंबला; अ.—तमर-इ-हिन्द, तमरी हदी; फ्र.—Tamarinier; जर्मन्.—Tamarindi; इं.—Tamarind tree; ल.—*Tamarindus Indica* । नामानि—"अम्लिका चुक्रिका चुक्रा चाम्ला शुक्ताथ शुक्तिका । अम्लीका चिञ्चिका चिञ्चा तिन्तिडीका सुतिन्तिडी" । ध. नि । फलं ग्राह्यम् । गुणाः—"अम्लिकायाः फलं त्वाममत्यम्लं लघु पित्तकृत् । पक्वं तु मधुराम्लं स्याद्भेदि विष्टंभवातजित् । पक्वचिञ्चाफलरसो मधुराम्लो रुचिप्रदः । शोफपाककरो लेपाद्व्रणदोषविनाशनः । चिञ्चापत्रं च शोफघ्नं रक्तदोषव्यथापहम् । तस्य शुष्कत्वचाक्षारं शूलमन्दाग्निनाशनम्" । रा. नि । अन्यच्च—"अम्लिकाऽमा गुरुर्वातहरा पित्तकफास्रजित् । पक्वा तद्वत्सरा रुच्या वह्निवस्तिविशुद्धिकृत् । शुष्का हृद्या श्रमभ्रान्तितृष्णाक्लमहरा लघुः" । भ. प्र । "चिञ्चा तु नूतना वातकफस्य करिणी मता । सा वार्षिकी वातपित्तनाशिनी परिकीर्तिता" । अष्टांगलवणयोगे तिन्तिडीकास्थाने वृक्षाम्लमित्येव चरकपाठः ॥

**तित्तिरिः** । सू. ६ etc. तित्तिर इति पाठः । तित्तिशब्दं राति तित्तिरिः । **पक्षिविशेषः, कृष्णतित्तिरिः** । गौरकृष्णभेदेन तित्तिरिर्द्विविधः । तयोः कृष्णः तित्तिरिरिति । गौरः प्रशस्तः कपिञ्जल इति कथ्यते । "तित्तिरिः कृष्णवर्णः स्याच्चित्रोऽन्यो गौरतित्तिरिः" । भा. प्र । वर्तको वर्तीराद्ल्पः, तत्सदृशा वर्तिका, ततोऽप्यल्पा तित्तिरिरिति हेमाद्रिः । हिं.—तीतर ; बं.—तितोर, तितिर, तीतल ; म.—तित्तिरपक्षी ; तै.—तोतुकपिट्ट ; त.—चिच्चिलवु ; सिं.—तितुवट्टुवा, वलिकुकुला ; मल.—तित्तित्तान् തിത്തിത്താൻ, इत्तित्तान्, तित्तिरिप्पुळ्ळु ; ई.—Lapwing ; ल.—*Sarcogrammus* । Francoline Partridge इत्यविनाशचन्द्रः । नामानि—"तित्तिरिस्तु खरक्वाण" इति वैजयन्ती । "तित्तिरिश्चित्रपक्षः स्यात् कृष्णो गौरः कपिञ्जलः" इति मदनपालः । गुणाः—"तित्तिरिर्बलदो ग्राही हिक्कादोषत्रयापहः । श्वासकासज्वरहरस्तस्माद्गौरोऽधिको गुणैः" । भा. प्र । "तित्तिरिः सर्वदोषघ्नो ग्राही वर्णप्रसादनः । रक्तपित्तहरः शीतो लघुश्चापि कपिञ्जलः । कफोत्थेषु च रोगेषु मन्दवाते च शस्यते । हिक्काश्वासानिलहरो विशेषाद्गौरतित्तिरिः" । सु. सू. ४६ । "तृतीयतित्तिरोऽन्योऽपि सामान्यगुणलक्षणैः । स वातलोऽतिबलकृद्घनः किञ्चिद्रसायनः" । अत्रि. सं । "तित्तिरिस्तु जयेच्छीघ्रं त्रीन् दोषाननिलोल्बणान्" इति चरकः ॥

**तिनिशः** । सू. १५ etc. अतिक्रान्तो निशास्तिनिशः, चिरकालित्वात् । **स्वनामख्यातवृक्षः** । N. O.—*Leguminosæ* । हिं.—तिनिस, तिरिच्छ, सन्दन ; बं.—जारुलगाछ ; म.—तिवस, स्यन्दन ; गु.—हर्म्मो, मिणोहरमो ; तै.—नेम्मिचेट्टु, तेल्लमोतुक्क ; क.—नेमि, बेट्टद्दोन्नेमर, करि-मुतल, स्यन्दन ; सिं.—कोबु ; मल.—तोट्टुकारा തൊട്ടുകാര, काट्टुपुन्ना ; ल.—

*Ougeinia dalbergioides, Dalbergia Oojeinensis* । स्यन्दन इति महाराष्ट्रे कर्णाटे अनूपदेशे च प्रसिद्धः । सादण इति लोके प्रसिद्ध इति डल्हणः । **नामानि**—"तिनिशः स्यन्दनो नेमी रथद्रुर्वञ्जुलस्तथा" भा. प्र । **गुणाः**—"तिनिशः श्लेष्मपित्तास्रमेदःकुष्ठप्रमेहजित् । तुवरः च्छिन्नदाहघ्नो व्रणपाण्डुकृमिप्रणुत्" । भा. प्र । त्वग् ग्राह्या ॥

**तिन्दुकः** । चि. १२ etc. तिम्यति तिन्दुकः । तिम आर्द्रत्वे । **स्वनामप्रसिद्धवृक्षः** । N. O.—*Ebenaceae* । **हिं.**—तेंदू, तेंद, माकड़तेंद, गाव्, तेंदू, आबनूस ; **बं.**—गाब ; तेंद ; **म**—टेंभुर्णी, टेंभुरणी, आयन, टेंबरूयणि, तिमर ; **गु.**—टिंबरवो ; तेमरू ; **तै.**—तुमिकिचेट्टु, तिंदुकि, तुमिल् ; **क.**—बंदद्मर, बंथ, हिरेबंथ, तुमकी, ओळ्ळे तूप्रमर, टुंबरु ; **कों.**—बंद्रारूक्कु ; **तु.**—बंदद्मर ; **त.**—तुंपि, तुंपिलिक्कायि, पनिचैकायि ; **मल.**—पनिच्चिमरं പനിച്ചിമരം ; **सिं.**—तिंबिरि ; **पा.**—अवनुसुझाड ; **फ.**—Plaque-miner visqueux ; **ई.**—Gaub tree, Wild mangosteen, Indian Persimon : **ल.**—*Diospyros Embroypteris* । **नामानि**—"तिन्दुको नीलसारश्च कालस्कन्धोऽतिमुक्तकः स्फूर्जकः स्फूर्जनस्तुष्टः स्यन्दनो रामणो रवः" । ध. नि । **गुणाः**—"अम्लोष्णं लघु संग्राहि स्निग्धं पित्ताग्निवर्धनम् । आमं कषायं संग्राहि तिन्दुकं वातकोपनम् । विपाके गुरु संपक्वं मधुरं कफपित्तजित्" । **सु. सू.** ४६ । "स्यादामं तिन्दुकं ग्राहि वातलं शीतलं लघु । पक्वं पित्तप्रमेहास्रश्लेष्मघ्नं मधुरं गुरु" । भा. प्र ॥

**तिमिंगिलः** । सू. ६. तिमिं गिरति । **सागरजस्तिमिभक्षको महान् मत्स्यविशेषः** । **ई.**–Whale ; **ल.**–*Balænoptara Sibbaldi* । **मल.**—कटलाना കടലാന । तिमिः महत्तमो मत्स्यः । "बृहन्मी-

नोऽब्धिजास्तिमिः" इति रत्नमाला । तिमिंगिलस्ततोतिमहत्तमः । "अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिंगिलः । तिमिंगिलगिलोप्यस्ति तद्गिलोप्यस्ति लक्ष्मण" । इति रामायणम् । "तिमिशत्रुस्तिमिंगिलः" इति वैजयन्ती ॥

तिलः । सू. ६ etc. तिलति । तिल स्नेहने । स्वनामख्यातक्षुपः । N. O.—*Pedalineae* । हिं.—तिल ; बं.—तिल ; म.—तीळ ; गु.—तल ; कों.—तीलु ; पञ्जा.—तिल ; काश्मी.—तिल ; तै.—नुव्वुलु ; क.—ऊरुएळ्ळुगिड ; तु.—ऊरु एण्णे ; त.—एळ्ळु , नूवु ; सिं.—तल ; मल.—एळ्ळु എള്ള് , कारेळ्ळु ; दखा.—बारिकतिल ; पा.—कुञ्जद ; अ.—सिमसिम ; फ्र.—Sesame ; जर्मन्.—Sesom ; इं.—Gingely oil Plant, Teelseed Plant, Sesame, Til Plant ; ल.—*Sesamum Indicum* । नामानि—"तिलस्तु होमधान्यं स्यात् पवित्रः पितृतर्पणः । पापघ्नः पूतधान्यश्च जर्तिलस्तु वनोद्भवः" । ध. नि । पुराणं बीजं ग्राह्यम् । गुणाः—"तिलः कृष्णः सितो रक्तः स वन्योल्पतिलः स्मृतः । तिलो रसे कटुस्तिक्तो मधुरस्तुवरो गुरुः । विपाके कटुकः स्वादुः स्निग्धोष्णः कफपित्तनुत् । बल्यः केश्यो हिमस्पर्शस्त्वच्यः स्तन्यो व्रणे हितः । दन्त्योल्पमूत्रकृद्ग्राही वातघ्नोऽग्निमतिप्रदः । कृष्णः श्रेष्ठतमस्तेषु शुक्लो मध्यमः सितः । अन्ये हीनतराः प्रोक्तास्तज्ज्ञै रक्तादयस्तिलाः" । भा. प्र । "कृष्णः पथ्यस्तस्तमनु शुक्लस्तमनु चारुण" इति वृद्धवाग्भटः ॥

तिलकः । उ. ३८. भालविभूषणसंज्ञो वृक्षविशेषः । हिं.—तिलकपुष्प ; म.—तिळवा , तिलकवृक्ष ; गु.—तिलक ; क.—तिलकपुष्प । मरुवक इति शिवदीपिका । मायिलेळ्ळु इति केरलेष्वेके । Adenanthera Pavonina इति केचित् । नामानि—"तिलकः पूर्णकः श्रीमान् क्षुरकश्छत्रपुष्पकः । मुखमण्डनको रेची पुण्ड्रश्चित्रो

विशेषकः" । ध. नि । गुणाः—"तिलकः कटुकः पाके रसे चोष्णो रसायनः । कफकुष्ठक्रिमीन् बस्तिमुखदन्तगदान् हरेत्" । भा. प्र । "तिलको मधुरः स्निग्धो वातपित्तकफापहः । बलपुष्टिकरो हृद्यो लघुर्मेदोविवर्धनः" । रा. नि । "तिलकः क्षुरकः श्रीमान् रक्तबीजश्च रोहिणी" इति सरस्वतीनिघण्डौ । सिं.—मदटिय ; मल.—मञ्चाटि മഞ്ചാടി ॥

**तिलकल्कः** । सू. ७ etc. कुट्टिततिलकृतपिष्टकः पललाख्यः । हिं.—तिलकुटा ; म.—तिलकूट ; मल.—एळ्ळुण्टा എള്ളുണ്ട इं.—Pounded sesamum seeds । सस्नेहस्तिलकल्क इत्येके । नामानि—"पललं तु समाख्यातं सैक्षवं तिलपिष्टकं" । भा. प्र । अन्यच्च—"पललं तिलकल्कं स्यात्तिलचूर्णं च पिष्टकम्" । रा. नि । गुणाः—"पललं मलकृद्वृष्यं वातघ्नं कफपित्तकृत् । बृंहणं च गुरु स्निग्धं मूत्राधिक्यनिवर्तकम्" । भा. प्र । तिलपिण्याकमित्येके ॥

**तिलकुन्तालः** । सू. १०. तिलकाण्डः । तिलनाल इति सुश्रुतपाठः । हिं.—तिलखंडे ; मल.—एळ्ळिन्कोञ्चा എള്ളിൻ കോഞ്ചാ ॥

**तिलचूर्णम्** । सू. १६. तिलकल्कः ॥

**तिलतैलम्** । चि. १५ etc. तिलभवतैलम् । "सर्वेषां तैलजातानां तिलतैलं विशिष्यते । बलार्थे स्नेहने च" इति चरकः । "सर्वेभ्यस्त्विह तैलेभ्यस्तिलतैलं विशिष्यते । निष्पत्तेस्तद्गुणत्वाच्च तैलत्वमितरेष्वपि" इति सुश्रुतः । हिं.—तिल-का-तेल ; उर्दु.—मीटातले ; बं.—तिलेरतेल ; पञ्जा.—तिलकातेल ; म.—चोखेंता तेल ; तै.—मनचि-नुने ; क.—एळ्ळेण्ण ; त.—नल्लेण्णै ; मल.—एळ्ळेण्णा എള്ളെണ്ണ, नल्लेण्णा ; सिं.—तलतेल ;

बर्मा.—नहुसि ; मलायी.—मिनिअक् बिजन ; इं.—Gingeli oil, Sesame oil ; ल.—*Oleum sesami* । नामानि—"तैलं स्नेहोत्तमं प्रोक्तं तिलजं तिलसंभवम् । अभ्यञ्जनं म्रक्षणं च तत्र मर्दनकं स्मृतम्" । ध. नि । गुणाः—"तिलतैलमलंकरोति कैश्यं मधुरं तिक्तकषायमुष्णतीक्ष्णम् । बलकृत् कफवातजन्तुखर्जूव्रणकण्डूतिहरं च कान्तिदायि" । रा. नि ॥

**तिलपर्णिका** । सू. ६. तिलस्येव पर्णान्यस्याः । सुवर्चला । हुलहुलिका इति चक्रपाणिदत्तः । कोलार्थेनैके । श्रीहस्तिनीत्यपरे । सुनिषण्णकभेद इति केचित् । रक्तचन्दनमिति हाराणचन्द्रः । लिंगिनीति केरलेष्वेके । बदरक इति हेमाद्रिः । चक्रमर्दार्थेन समर्थयति गंगाधरश्चरकटीकायाम् ॥

**तिलपिण्याकम्** । सू. ६ etc. उद्धृततैलतिलपिण्डः । हिं.—तिलोंकीखल ; बं.—तिलेरखइल ; म.—तिळांची पेंड ; मल.—एळ्ळिन्‌पिण्णाक्कु എള്ളിൻപിണ്ണാക്ക് । Sesame oil-cake । नामानि—"तिलकुट्टं तु पिण्याकं तथा तिलखलिः स्मृता । पिण्याको लेखनो रूक्षो विष्टंभी दृष्टिदूषणः" । भा. प्र ॥

**तिलपिष्टम्** । नि. ८ etc. तिलकल्कः ॥

**तिलपुष्पफलम्** । उ. २५. तिलस्य पुष्पाणि फलानि च । तिलपुष्पं मदनफलं चेति केचिदितीन्दुः ॥

**तिलविकृतिः** । सू. ६. तिलकल्कः । मधुपिण्डकादिरिति हेमाद्रिः ॥

**तिलान्नम्** । चि. १७. ओदनविशेषः । तिलमिश्रित ओदनो यत्र । कृशरादिकम् । "कृशरस्तु तिलौदनं" इति । नवान्नमित्येव चरकपाठः । "दधि सलवणं पिच्छिल"मित्यत्र "दधि तिलकृतं विज्जल"मित्येव चरकः । पिच्छिलमित्यत्र निर्जलमिति केचित् ॥

**तिल्वकः** । सू. १५ etc. तिलति स्निह्यत्यंगमनेन तिल्वः । रोध्रः । "तिल्वकस्तु मतो रोध्र" इति चरकसंहितायाम् । स्वल्परोध्र इति केचित् । रोध्रकारो बृहत्पत्रो रक्तत्वको वैरेचनिक इति श्यामादिगणव्याख्यायाम् डल्हणः । कम्मट्टि इति केरलेष्वेके ॥

**तीक्ष्णम्** । चि. ५ etc. तेजयति । 'तिज निशाने' । मरिचम् ॥

**तीक्ष्णकः** । शा. १. मरिचम् । सिद्धार्थ इति केचित् ॥

**तीक्ष्णमद्यम्** । तीव्रमदमद्यम् ॥

**तीक्ष्णमूलम्** । चि. ६. त्रिवृच्छ्यामादिमूलम् ॥

**तीक्ष्णमूलविषम्** । उ. ३६. वत्सनाभादि ॥

**तीक्ष्णलो(लौ)हम्** । चि. १२. कृष्णायसम् । see **काललोहम्** । "शस्त्रस्तीक्ष्णमयःसारस्तीक्ष्णलोहमुदाहृतम्" । स. नि ॥

**तीक्ष्णवृक्षः** । सू. १५. श्या. ग; पीलुः ।

**तुगा** । सू. १५ etc. **त्वक्क्षीरी** ॥

**तुगाक्षीरी** । सू. १० etc. **त्वक्क्षीरी** ॥

**तुत्थम्** । चि. १०. तुत्थयति, तुत्थ्यते, वा । 'तुत्थ आवरणे' । ताम्रस्योपधातुः **स्वनामख्यातपण्यद्रव्यम्** । "तुत्थं ताम्रोपधातुर्हि किञ्चित्ताम्रेण तद्भवेत् । किञ्चित्ताम्रगुणं तस्माद्वक्ष्यमाणं गुणं च तद्" । भा. प्र । हिं.—नीलाथोथा, नीलतूतिया; बं.—निल्तूतिया; तूतिया; म.—मोरचूक, मोरचूत; उ.—मुहुरतुत्थ; पा.—दूदिया; अ.—तूतिया अकजर; गु.—मोरथुथु; तै.—मयिल्तुत्तमु, मेलतुतु; क.—मयिल्तुत्त, मयूरतुत्थ; दखा.—मोरतुत्त; त.—तुरिचि, मयिल्तुत्तं; सिं.—रिदीतुतु, पल्मानिक्कन्; मल.—तुरिशु തുരിശു, मयिल्तुत्तु; पञ्जा.—

नीलथोथा ; बर्मा.—दौथा ; इं.—Verdigris, Blue vitriol Copper sulphate, Sulphate of copper, Blue stone; ल.—*Cuprea sulphas* । नामानि—"तुत्थं वितुन्नकं चापि शिखिग्रीवं मयूरकम्" । भा. प्र । गुणाः—"तुत्थकं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् । विषाश्मकुष्ठकण्डूघ्नं तद्गुणं खर्परं मतम्" । भा. प्र । शोधनविधिः—विष्ठया मर्दयेत्तुत्थं मार्जारककपोतयोः । दशांशं टंकणं दत्वा पचेल्लघुपुटे ततः । पुटं दध्ना पुटं क्षौद्रैर्देयं तुत्थविशुद्धये" । भा. प्र । अन्यच्च—"गन्धकेन पचेत्तुत्थं तुत्थार्धेनार्धयामकम् । वान्तिभ्रान्ती यदा न स्तः तदा शुद्धिं विनिर्दिशेत्" । इति सारकौमुदी । भूतरावघृतयोगव्याख्यायां कर्परिकातुत्थमित्यरुणदत्तः ॥

तुत्थम् । उ. १३. कर्परीतुत्थम् । see तुत्थकम् ॥

तुत्थकम् । सू. १५ etc. कर्परीतुत्थम् । हिं.—खपरिया ; कलखपरो ; बं.—खापर ; म.—कलखापरी ; गु.—खापरियो ; तै.—खर्प्परं ; क.—खर्परी ; त.—तुत्तं ; सिं.—तुत्तं ; मल.—तुत्तु துத்து, पाल्तुत्तं ; पा.—संगबसरी ; अ.—तूतिया किरमानी ; मुंबापुर्याम्.—संग-इ-बसरी ; इं.—Calamine, Carbonate of zinc; Sulphate of zinc, Black jack ; ल.—*Zinci carbonas, Zinci sulphidum* । नामानि—"द्वितीयं खर्परीतुत्थं खर्परी रसकं तथा । चक्षुष्यममृतोत्पन्नं तुत्थं खर्परिका तु षट्" । ध. नि । शोधितं ग्राह्यम् । शोधनविधिः—"नरमूत्रे च गोमूत्रे सप्ताहं रसकं पचेत् । दोलायन्त्रेण शुद्धः स्यात्ततः कार्येषु योजयेत्" । भा. प्र । गुणाः—"खर्परं कटुकं क्षारं कषायं वामकं लघु । लेखनं भेदनं शीतं चक्षुष्यं कफपित्तहृत् । विषाश्मकुष्ठकण्डूनां नाशनं परमं मतम्" ।

भा. प्र । ऊषकादिगणे कर्परिकातुत्थं 'खपरिया' इति लोके, अन्ये मयूरग्रीवमाहुरिति डल्हणः ॥

**तुत्थकम्** । चि. ८. मयूरग्रीवं, ताम्रोपधातुः । see **तुत्थम्** ॥

**तुन्नसेवनी** । उ. २६. सेवनीविशेषः । शिरःकटीकपालसन्धिदेशः । Sutures । "तुन्नसेवन्यो नाम परस्परपीडनैर्दन्तुरधारादिभिर्निर्मिताः कपालान्तरालाः सन्धयः । ते शिरःकपालेषु दृश्याः, कटिकपालेषु च प्राग्यौवनात्" । इति प्रत्यक्षशारीरात् ॥

**तुंबम्** । सू. ६. अलावुफलम् । हिं.—घीया, तुंबा; मल.—चुरक्का ചുരയ്ക്ക । "अलाबूस्तुंबकः प्रोक्तः" इति चन्द्रनिघण्डौ ॥

**तुंबरुः** । चि. ८. तुंबुरुः ॥

**तुंबी** । शा. १ etc. तुबि अर्दने । कटुकालाबुः । कटुकालाबुरिति सुश्रुतसंग्रहयोः पाठः ॥

**तुंबुरुः** । चि. ? १ etc. फलवृक्षविशेषः । N. O.—*Rutaceae* । हिं.—तुंबरू, तेजबल; बं.—तेजबलेर गाछ, नेपालिधने; म.—चिरफळ, तेन्दु; गु.—तुंबरुफल; क.—तुंबरु; मल.—तुम्पूणल् തുമ്പൂണൽ, तुम्पूणि; ल.—*Zanthoxylum Alatum* । "कुस्तुंबुरुसमाकृत्या तुंबुरूणि वदन्ति च" इति । एतदभावे धान्यकम् ग्राह्यम् । **नामानि**—"तुंबुरुः सौरभः सौरो वनजः सानुजो द्विजः । तीक्ष्णवल्कस्तीक्ष्णफलस्तीक्ष्णपत्रो महामुनिः" । ध. नि । पक्वफलं ग्राह्यम् । **गुणाः**—"तुंबुरु प्रथितं तिक्तं कटु पाकेपि तत् कटु । रूक्षोष्णं दीपनं तीक्ष्णं रुच्यं लघु विदाहि च । वातश्लेष्माक्षिकर्णौष्ठशिरोरुग्गुरुताकृमीन् । कुष्ठशूलारुचिश्वासप्लीहकृच्छ्राणि नाशयेत्" । भा. प्र । एतत्फलमेव प्रियंगुपुष्पमिति केरलेष्वेके ॥

**तुरुष्कः** । सू. १५ etc. यवनदेशजः । सिह्लारको नाम निर्यासविशेषः । N. O.—*Hamamelideae* । हिं.—शिलारस ; बं.—शिलारस ; म.—शिळारस ; गु.—शिलारस, शैलारस ; तै.—शिलारस ; क.—शिलारस, पिण्डतैल ; त.—चिलारचं, नरियरिचिप्पाल् ; मल.—निर्यासु നിര്യാസു, नरिवातं, अरबिक्कुन्तुरुकं ; पा.—सरारस, असालि, लुभानि, मेयिह्-सिला ; अ.—आसारेकमिया, निथाससायिला, मियासयेलह् ; फ्र.—Styrax liquide ; इं.—Liquid Storax, Liquid amber, Rose malloes ; ल.—*Liquidamber orientalis* । **नामगुणाः**—सिह्लकस्तु तुरुष्कः स्याद्यतो यवनदेशजः । कपितैलञ्च संख्यातस्तथा च कपिनामकः । सिह्लकः कटुकः स्वादुः स्निग्धोष्णः शुक्रकान्तिकृत् । वृष्यः कण्ठ्यः स्वेदकुष्ठज्वरदाहग्रहापहः" । भा. प्र । अन्यच्च—"तुरुष्कः कटुतिक्तोष्णः स्निग्धो वातवलासजित् । स्वादुश्च कटुकः पाके सुरभिर्देवताप्रियः" । ध. नि । निर्यासो ग्राह्यः ॥

**तुवरकः** । उ. ३९. तवति हिनस्ति रोगान् । तुबर इति पाठः । पश्चिमार्णवतीरजः वृक्षविशेषः । N. O.—*Bixineae or Pangiaceae* । हिं.—चौलमोगरा, चालमुगरा ; उ.—जंगलीबदम, चालमुगरा ; म.—कडुकव्वता, कोव्वती ; तै.—नीरुट्ठ, नीरादि ; क.—गरुडफल, सर्वोलु ; त.—नीरट्टि, नेरटि ; तु.—सूरंटे ; कों.—गरुडफल ; सिं.—मकुलु ; मल.—मरोट्टि മരോട്ടി, मरवट्टि, नीरट्टि ; इं.—Marothi tree, Jangli almond ; ल.—*Hydnocarpus Inebrians, H. Pentandra* ; पा.—चौलमूगरा । "पत्रैस्तु केशराकारैः कलायसदृशैः फलैः । वृक्षास्तुवरनामानः पश्चिमार्णवतीरजाः" । फलशब्दोत्र बीजार्थ एव । मदनपालेना-

प्युक्तमस्ति–"कालायनफलैः पत्रैः केशरामैः समुद्रजैः । वृक्षस्तुवरको ज्ञेयो भल्लातकसमो गुणैः" इति। तुवरक एव कुष्ठवैरीति केचित्। नामगुणाः–"कुष्ठवैरी शैलरोही महागदमहीरुहः । वैवस्वतद्रुमः स स्याद्बलकृच्च रसायनः । पामाविचर्चिकाकण्डूसिध्मदद्रुविपादिकाः । हन्त्यामवातं वातामं कुष्ठानि च विशेषतः" । अत्रिः । फलबीजं तत्तैलं च ग्रहणीयम् ॥

तुवरास्थि । चि. १९ तुवरकबीजम् । हिं.–चौलमोगराकी गुठली । मल.–मरोट्टिक्कुरु മരോട്ടിക്കുരു । Marothy seed ॥

तुवरिका । उ. ३२. आढकी ॥

तुवरी । सू. २९. आढकी ॥

तुषः । उ. ५. तण्डुलकणाचितत्वक् । हिं.—तुस, छिलका; बं.—तुष; म.—टरफल, तूस, साल; त.—उमि; सिं.—लेल; मल.—उमि ഉമി । Husk । "धान्यानां तु तुषस्त्वचि" इति वैजयन्ती । विभीतकत्वगित्येके । "धान्यत्वचि तुषः पुंसि विभीतकतरावपि" इति मेदिनी ॥

तुषांबु । चि. १४. सतुषयवकाञ्चिकम् । "तुषोदकं यवैरामैः सतुषैः शकलीकृतैः" इति भावमिश्रः । "तुषांबु तुषसंहित"मिति वैजयन्ती । हिं.—यवोंकीकांजी; म.—जवांचे कोंड्या चें पाणी; मल.—उमिक्काटि ഉമിക്കാടി, यवक्काटि; इं.—Gruel made of barley husk । नामानि—"यवाम्लजं यवोत्थं च तुषोत्थं तु तुषोदकम्" । रा. नि । गुणाः—"तुषांबु दीपनं हृद्यं पाण्डुकृमिगदापहम् । तीक्ष्णोष्णं पाचनं पित्तरक्तकृद्बस्तिशूलनुत्" । भा. प्र ॥

तुषोदकम् चि. ८. तुषांबु ॥

**तूदः** । सू. ६. तुद्यते । 'तुद व्यथने । स्वनामख्यातकाष्ठविशेषः । N. O.—*Urticaceae* । हिं.–शहतूत , सहतूत ; बं.–तूत , तूद ; म.–शहातूत ; गु.–शेतूत , तूतरी ; मुंबापुर्याम्.–तुला अम्बोर ; दखा.–तूतरी ; पा.–तूत ; तै.–कंबलिचेट्टु ; त.–मलुकट्टैचेटि ; कंपिळिप्पूच ; क.—रेशमिकंबलिगिड , हिप्पलबेरालि ; मल.—काट्टमारत्ति കാട്ടമാരത്തി , कम्पिळिमरं ; इं.—Mulberry , White mulberry ; ल.—*Morus alba, m. Indica* । औत्त-रापथिकफलमिति चक्रपाणिदत्तः । नामानि—"तूतः स्थूलश्च पूगश्च क्रमुको ब्रह्मदारु च" । भा. प्र । गुणाः—"तूतं पक्वं गुरु स्वादु हिमं पित्तानिलापहम् । तदेवामं गुरु सरमम्लोष्णं रक्तपित्तकृत्" । भा. प्र । आमपक्वफलानि ग्राह्याणि ॥

**तूर्णकः** । सू. ६. शालिधान्यविशेषः । तर्णक इति पाठः । आजव इति काश्मीरेषु । चूर्णक इति चरकोपस्कारपाठः । स कलमाद्धीन-गुणः स्वादुपाकरसत्वादियुक्तः । पुराणं ग्राह्यम् ॥

**तूलम्** । सू. २९. शाल्मलीफलोद्भवादिलम् । कार्पासम् । तूल-सन्तानमित्येकपदमित्यरुणदत्तः । बं.—तुला ; मल.—പഞ്ഞി വാണി ; इं.—Cotton ॥

**तृणधान्यम्** । सू. ६ etc. तृणानीव धान्यानि । अकृष्टोत्पन्नत्वात् । तुच्छधान्यं , अत एव सुश्रुतेन कुधान्यमित्युक्तम् । Corn growing wild । कंगुकोद्रवादि । "तृणधान्यं तु नीवारः श्यामाकः श्यामको भवेत्" । इति हलायुधः । "कोरदूषकश्यामाकनीवा-रशान्तनुवरकोद्दालकप्रियंगुमधूलिकानान्दीमुखीकुरुविन्दगवेधुकस-रवरुकतोद(य)पर्णीमुकुन्दकवेणुयवप्रभृतयः कुधान्यविशेषाः" । सु. सू. ४६ । गुणाः—"उष्णाः कषायमधुरा रूक्षाः कटुविपाकिनः । श्लेष्मघ्ना बद्धनिस्यन्दा वातपित्तप्रकोपणाः" इति सुश्रुतः ।

"वातात्मकं तु शिशिरं तृणधान्यमाहु"रिति नृसिंहः। "क्षुद्रधान्यमनुष्णं स्यात् कषायं लघु लेखनम्। मधुरं कटुकं पाके रूक्षं च क्लेदशोषकम्। वातकृद् बद्धविट्कं च पित्तरक्तकफापहम्"। भा. प्र। "क्षुद्रधान्यं कुधान्यं च तृणधान्यमिति स्मृतं" इति भावमिश्रः॥

**तृणपञ्चमूलम्** । सू. ६. etc. कुशकाशेक्षुशरदर्भाः । शरेक्षुदर्भकाशशालय इति चरकः। "तृणाख्यं पित्तजिद्दर्भकाशेक्षुशरशालिभिरिति" वाग्भटः। अत्र "कुशकाशनलदर्भकाण्डेक्षुका इति तृणसंज्ञक" इति सुश्रुतः। "कुशः काशः शरो दर्भ इक्षुश्चेति तृणोद्भवम्। पित्तकृच्छ्रहरं पञ्चमूलम् वस्तिविशोधनं" इति भावमिश्रः। "तृणादिपञ्चमूलं तु पित्तज्वरतृषापहम् । रक्तदोषाम्लपित्तं च स्त्रीरोगं रक्तपित्तकम् । प्रमेहं नाशयेदेतदिति सुज्ञैर्निरूपितं" इति नृसिंहः॥

**तृणपञ्चमूली** । क. ४. तृणपञ्चमूलम्॥

**तृणाख्यम्** । सू. ६. तृणपञ्चमूलम्॥

**तृवृत्** । चि. २ etc. त्रिवृत्॥

**तृवृता** । चि. २ etc. त्रिवृत्॥

**तेजिनी** । शा. २ etc. तेजोवती॥

**तेजोवती** । चि. ४. महाज्योतिष्मतीलता। हिं.—बड़ीमालकांगनी, तेजबल, उभिजिनि; बं.—बड़ लताफट्की, तेजबल; म.—तेजबल; गु.—तेजबल; दखा.—जलधरी। नामानि—"तेजोवती बहुरसा कनकप्रभाऽन्या तीक्ष्णा सुवर्णनकुली लवणाग्निदीप्ता। तेजस्विनी सुरलताग्निफलाग्निगर्भा स्यात् कंगुणी तदनु शैलसुता सुतैला"। रा. नि। गुणाः—"तेजोवती कटूष्णा च तिक्ता चाग्निप्रदीपनी। पाचका रुचिदा कण्ठ्या कफवातविनाशि-

नी। कण्ठशुद्धिकरी पित्तकासश्वासविषापहा। हिक्काग्निमान्द्यमर्शांसि मुखरोगस्य नाशिनी"। नि. र। इं.—Toothache tree; ल.—*Zanthoxylum Hostile*। फलमूलादिकं ग्राह्यम्। चविकेति चक्रपाणिदत्तः॥

**तैलम्**। सू. ३ etc. तिलादिसंभूतस्नेहः। "तिलादिस्निग्धवस्तूनां स्नेहस्तैलमुदाहृतं" इति भावमिश्रः। "स्नेहे तिलानां तैलं स्यादन्येषां नामपूर्वक"मिति वैजयन्ती। हिं.—तेल; बं.—तेल; म.—तेल; गु.—तेल; तै.—नुने; क.—यण्णी; पा.—रोगन; त.—एण्णै; सिं.—तेल; मल.—एण्णा എണ്ണ; इं.—Oil; ल.—*Oleum*। गुणाः—"तैलं स्वयोनिगुणकृद्वाग्भटेनाखिलं मतम्। अतः शेषस्य तैलस्य गुणा ज्ञेयाः स्वयोनिवत्"। भा. प्र। "घृतमब्दात् परं पक्वं हीनवीर्यत्वमाप्नुयात्। तैलं पक्वमपक्वं च चिरस्थायि गुणादिकम्"। भा. प्र॥

**तोयदः**। चि. १२ etc. तोयं ददाति। मुस्ता। "तोयदो मुस्तके मेघे पुमानाज्ये नपुंसकम्"। कफमेहाधिकारे मुस्तेत्येव चरकपाठः॥

**तोयराशिफेनः**। उ. ९. समुद्रफेनः॥

**तौवरः**। सू. १६ etc. तुवरकबीजाज्जातं तैलम्। तुवरस्यायं विकारः स्नेहस्तौवरः। मल.—मरोट्टि एण्णा മരോട്ടി എണ്ണ; Marothy oil॥

**तौवरम्**। चि. १९. तुवरास्थि॥

**त्रपु**। सू. २९. अग्निं दृष्ट्वा त्रपते लज्जते इव लज्जया द्रवीभवति वा। वङ्गम्॥

**त्रपुसः**। सू. ६. फलशाकविशेषः। N. O.—*Cucurbitaceae*। हिं.—खीरा, बालमखीरा, खीरे; बं.—शँशा, शसा, क्षीरा-

शशा ; म.—तौशी कांकडी , तौस , तवसें , खिरा ; गु.—तांस्ली ; तै.—दोसेकाय ; क.—मुळ्ळुसौत्ते बळ्ळि ; सौत्तेकायि ; कों.—तौसे ; त.—मुळ्ळुवेळ्ळरि ; तु.—तेकरे ; सिं.—तियंबरा ; मल.—मुळ्ळन्वेळ्ळरि മുള്ളൻവെള്ളരി ; पा.—शियारखुर्द ; अ.—बझ्रुला ; इं.—Common cucumber ; ल.—*Cucumis Sativus* । **नामानि**—"त्रपुसी पीतपुष्पी कण्टालुस्त्रपुसकर्कटी । बहुफला कोशफला सा तुन्दिलफला मुनिः" । रा. नि । **गुणाः**—"त्रपुसं लघु नीलञ्च नवं तृट्क्लमदाहजित् । स्वादु पित्तापहं शीतं रक्तपित्तहरं परम् । तत् पक्वमम्लमुष्णं स्यात् पित्तलं कफवातनुत् । तद्बीजं मूत्रलं शीतं रूक्षं पित्तास्रकृच्छ्रजित्" । भा. प्र । मध्यमफलं ग्राह्यम् ॥

**त्रपुसः** । सू. १५. **महेन्द्रवारुणी** । तिक्तत्रपुसं वेद्यमिति सर्वांगसुन्दरा । कटुवालुकमिति हेमाद्रिः । see **इन्द्रवारुणी** ॥

**तायन्तिका** । क. ४. **त्रायमाणा** ॥

**तायन्ती** । सू. १० etc. **त्रायमाणा** ॥

**त्रायमाणा** । चि. १. etc. त्रायते । 'त्रैङ् पालने' । **हिमवत्प्रसिद्धः स्वनामख्यातमहाक्षुपः** । N. O.—*Ranunculaceæ* । हिं.—त्रायमाण , पिलिजरि , गुड़बिशानि ; वनप्सा इति वंगसेनसंहितायाः भाषानुवादकः । बं.—बलाडुमुर , वनभादुलिया ; म.—त्रायमाण ; गु.—त्राहिमान ; क.—त्रायमाणा ; त.—कळर्चि ; कम्पन्तिराय् इत्येके ; सिं.—तेमनल ; इं.—Gold thread ; मुंबापुर्याम्.—मामिरना ; पा.—अस्प्रका ; ल.—*Thalictrum Foliolosum* । **नामगुणाः**—"बलभद्रा त्रायमाणा त्रायन्ती गिरिसानुजा । त्रायन्ती तुवरा तिक्ता सरा पित्तकफापहा । ज्वरहृद्रोगगुल्मार्शोभ्रमशूलविषप्रणुत्" । भा. प्र । उदुंबरभेद इत्येके ।

ब्राह्मीति केचित् । "त्रायन्ती सातला ब्राह्मी भूरिफेना च सप्तला । सोमचर्मकषा मेधाजननी गन्धमूलिका" । स. नि । सर्वांशो ग्राह्यः ॥

**त्रिकम्** । सू. १२ etc. **कटिप्रान्तभागः** । "स्फिगस्थ्नोः पृष्ठवंशास्थ्नोर्यः सन्धिस्तत् त्रिकं मतम्" । भा. प्र । त्रिकं नाम पृष्ठवंशस्याधरो भागो यत्र सन्धीयेते श्रोणिफलके उभयतः । केचित्तु बाहुग्रीवास्थित्रयसंघातं त्रिकमाहुः । तदसत्, त्रिकशब्दः पृष्ठवंशाधार एव रूढत्वात् इति हेमाद्रिः ॥

**त्रिकटु** । चि. ३ etc. **त्रयाणां कटुरसाणां समाहारः** । हिं.—त्रिकुटा ; मल.—मुकटु മുക്കടു । The aggregate of three spices, viz. black and long pepper and dry ginger । शुण्ठी मरिचं पिप्पली च । **नामगुणाः**—"विश्वोपकुल्यामरिचं त्रयं त्रिकटु कथ्यते । कटुत्रिकं तु त्रिकटु त्र्यूषणं व्योष उच्यते । त्र्यूषणं दीपनं हन्ति श्वासकासत्वगामयान् । गुल्ममेहकफस्थौल्यमेदःश्लीपदपीनसान्" । भा. प्र ॥

**त्रिकटुकम्** । सू. ६ etc. **त्रिकटु** ॥

**त्रिकण्टकः** । चि. ३ etc. त्रयः कण्टाः कण्टका अस्य । **गोक्षुरः** ॥

**त्रिकण्टका** । चि. ११. **गोक्षुरः** ॥

**त्रिजातम्** । चि. २. **मिलिततुल्यत्वगेलापत्राणि** । **नामगुणाः**—"त्वगेलापत्रकैस्तुल्यैस्त्रिसुगन्धि त्रिजातकम् । नागकेशरसंयुक्तं चातुर्जातकमुच्यते । तद्द्वयं रोचनं रूक्षं तीक्ष्णोष्णं मुखगन्धहृत् । लघु पित्ताग्निकृद्वर्ण्यं कफवातविषापहम्" । भा. प्र ॥

**त्रिजातकम्** । सू. ६ etc. **त्रिजातम्** ॥

**त्रिपटु** । चि. ८. **लवणत्रयम्** ॥

**त्रिपादी** । सू. १५. **हंसपादी** ॥

**त्रिफला** । सू. ६ etc. **त्रयाणां फलानां समाहारः** । पथ्याधात्रीविभीतकानि । हरड , आंवला , बहेडा । **मल.**—कटुक नेल्लिक तान्निक കടുക്ക നെല്ലിക്ക താന്നിക്ക । Three myrobalans, fruit-triad, three-fold fruits । **त्रिफलालक्षणनामगुणाः**—"पथ्याविभीतधात्रीणां फलैः स्यात्त्रिफला समैः । फलत्रिकञ्च त्रिफला सा वरा च प्रकीर्तिता । त्रिफला कफपित्तघ्नी मेहकुष्ठहरा सरा । चक्षुष्या दीपनी रुच्या विषमज्वरनाशिनी" । भा. प्र । **अन्यच्च**—"वरोत्तमा त्रिफलिका त्रिफला च फलत्रयम् । श्रेष्ठा च त्रिफला प्रोक्ता पथ्याधात्र्यक्षजं फलम्" । स. नि ॥

**त्रिभण्डी** । चि. १५. त्रीन् वातादिदोषान् भण्डति । **त्रिवृत्** ॥

**त्रिलवणम्** । चि. ६ etc. **लवणत्रयम्** ॥

**त्रिवृत्** । चि. १ etc. त्रीन् अवयवान् वृणोति वृभिरवयवैर्वृता वा । **स्वनामख्यातलता** । N. O.—*Convolvulaceae* । **हिं.**—निसोथ , निशोत , पिथोरी , नकपतर , तरवद ; **उ.**—तुरुबुद ; **बं.**—तेओडी , तेउडी ; **कों.**—तिगडे ; **म**—निशोत्तर , फुटकुरी , तियड , तेड ; **गु.**—नसोत्तर ; **तै.**—तेल्लतेगड , एरत्तेगड ; **क.**—तिगडेबळ्ळि , आलुतेगुडु , देवदंति , बिळे नागदन्ति ; **तु.**—तिगडि ; **त**—चिवतै , कुत्रकण्टि ; **सिं.**—तिरिस्सव लु ; **मल.**—त्रिकोल्पकोन्ना ത്രികോൽപ്പക്കൊന്ന ; **पा.**—निसोथ , तुरबुद ; **अ.**—तुरबन्द ; **फ्र.**—Turbith Vegetal ; **जर्मन्.**—Turpeth-Trichterwinde ; **इं.**—Turpeth root, Indian Jalap ; **ल.**—*Ipomoea Turpethum* । **नामानि**—"सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् । त्रिभण्डी रेचनी श्यामा पालिन्दी च सुषेणिका" । स. नि । **गुणाः**—"श्वेता त्रिवृद्रेचनी स्यात् स्वादुरुष्णा समीरहृत् । रूक्षा पित्तज्वरश्लेष्मपित्तशो-

थोदरापहा" । भा. प्र ; रक्तमूला त्रिवृदिति श्यामादिगणव्याख्यायां डल्हणः । त्रिवृतायाः खलु द्विविधं मूलमरुणं श्यामं चेति संग्रहे । चरकसंहितायामपि , "मूलं तु द्विविधं तस्याः श्यामं चारुणमेव च । तयोर्मुख्यतरं विद्धि मूलं यदरुणप्रभं" इति । अथापि , सितासितारुणमूलकुसुमभेदेन त्रिवृता त्रिविधा भवतीति बहवः । तासु श्वेतैव प्रशस्ता । मूलत्वग्ग्राह्या । "नृपादिसुकुमाराणां कृशानां भेषजद्विषाम् । त्रिवृता परमा शस्ता हिता सुखविरेचनी" इति नवनावनीतके ॥

**त्रिवृता** । सू. १५ etc. त्रिभिर्व्रियते त्रिभिर्वर्ध्यते छाद्यते वा त्रिवृता त्रिवृत्, त्रिपुटत्वाद्वा इति क्षीरस्वामी । **त्रिवृत्** ॥

**त्रिहिमम्** । सू. १५. **चन्दनत्रयम्** । श्वेतचन्दनं रक्तचन्दनं पीतचन्दनं चेति । पीतचन्दनस्थाने केचिद्दारुहरिद्रामेव पठन्ति । चन्दनं कुचन्दनं कालीयकं चेति सुश्रुतपाठः । कुचन्दनं रक्तचन्दनम् । कालीयकं 'कालीया' इति प्रसिद्धं कृष्णचन्दनमिति भाष्यकारः । मलयाद्रिचन्दनमिति प्रसिद्धमिति डल्हणः ॥

**त्रुटिः** । सू. २० etc. त्रुट्यति त्रुटिः, सूक्ष्मत्वाद्वा । **एला** । "त्रुटिः स्त्री संशये स्वल्पे सूक्ष्मैलाकालमानयोः" इति मेदिनी । अणुतैलयोगे 'त्रुटिं रेणुक'मित्यत्र 'एलाद्वय'मित्येव संग्रहपाठः । बलैलाद्वयमिति च केषुचित् ग्रन्थेषु दृश्यते ॥

**त्रुटी** । सू. १५. **एला** । द्राविडीति सुश्रुतपाठः ॥

**त्रुट्यौ** । सू. १५. भद्रैला सूक्ष्मैला च ॥

**त्र्यूषणम्** । चि. १ etc. त्रयाणामूषणानां समाहारः । **त्रिकटु** ॥

**त्वक्** । सू. ६ etc. त्वगिव पत्रमस्य इति रामाश्रमी । वृक्षशकलत्वादिति क्षीरस्वामी । "त्वक् स्त्री चर्मणि वल्के च गुडत्वचि विशे-

षत्ः" इति मेदिनी । गुडत्वक् नाम गन्धद्रव्यम् । N. O.—*Lauraceae* । हिं.—दालचीनी , दालचिन ; उर्दु.—दालचीनि ; बं.—दारुचिनि , दालचिनि ; म.—दालचिनी ; गु.—दालचीनी , पातलीतज , तेज ; पञ्जा.—दालचिन ; काश्मी.—दालचिन ; तै.—लवङ्गपट्ट , डालचीनी , सनलिंगु ; क.—दालचिनि , लवङ्गचक्के , लवङ्गपट्टे ; तु.—इजिन् ; कों.—दालचिनि , टिक्के ; त.—इलवङ्कप्पट्टै , करुवाप्पट्टै ; सिं.—कुरुन्दुपोतु ; मल.—करुवा കറുവ , इलवङ्गत्तोल् , वळना ; पा.—सैला-मग्यह् ; दारुचीनी ; अ.—दरसिनि , सालीखा ; दखा.—कयुअलामि ; मुंबापुर्याम्.—कलफाह् ; चैना.—युह् , जुह् , केवै ; मलायी.—कुलित-मनिस ; बर्मा.—तिबोतिकयोबो ; ग्रीक्.—Kinnamomon ; फ्र.—Cannelle ; जर्मन्.—Zimmt ; इं.—Cinnamon ; ल.—*Cinnamomum zeylanicum* ; *C. Cassia* ; *Laurus cassia* । नामानि—"त्वचं वरांगं भृंगं त्वक्चोचं शकलमुत्कटम् । सैंहलं लाटपर्णं च मुखशोध्यं वनप्रियम्" । ध. नि । त्वग्ग्राह्यम् । गुणाः—"त्वचं लघूष्णं कटुकं स्वादु तिक्तञ्च रूक्षकम् । पित्तलं कफवातघ्नं कण्डूत्वामारुचिनाशनम् । हृद्वस्तिरोगवातार्शःकृमिपीनसशुक्रहृत्" । भा. प्र ॥

**त्वक्क्षीरम्** । चि. ३ · वंशरोचना । see त्वक्क्षीरी ॥

**त्वक्क्षीरी** । चि. ३ etc. त्वचो वंशात् क्षीरमस्याः । वंशकर्पूरम् । वंशपर्वमध्यजातनीलाभधवलपदार्थः । हिं.—वंशलोचन , तवशीर ; उ.—तबषीर ; बं.—बांशकावर , वंशलोचन ; म.—वंशलोचन ; गु.—वांसकपूर ; तै.—वंशलोचनमु , वेदुरुप्पु ; क.—बिदुरुप्पु ; वंशरोचना ; त.—मूङ्गिलुप्पु ; सिं.—हुणकुल् , उनकपुरु ; मल.—मुळंकर्पूरं മുളംകർപ്പൂരം ; अभावे "कू-

वनूर्" इति केरलेषु । पा—तवाशीर ; अ.— तवाशीर ; इं.— Bamboo manna, Silicious concretion । **नामानि**— "स्याद्वंशरोचना वांशी तुगाक्षीरी तुगा शुभा । त्वक्क्षीरी वंशजा शुभ्रा वंशक्षीरी च वैणवी । वंशक्षीरी स्मृता वंश्या यवजा यवसंभवा । गोधूमसंभवा चान्या षष्टितण्डुलजोद्भवा" । ध. नि । "तवक्षीरं पयःक्षीरं यवजं गवयोद्भवम् । अन्यद्गोधूमजं चान्यत् षष्टिकातण्डुलोद्भवम् । अन्यच्च तालसंभूतं तालक्षीरादिनामकम् । वनगोक्षीरजं श्रेष्ठमभावेन्यदुदीरितम्" । रा. नि । शोधितं ग्राह्यम् । **गुणाः**—"वंशजा बृंहणी वृष्या बल्या स्वाद्वी च शीतला । तृष्णाकासज्वरश्वासक्षयपित्तास्रकामलाः । हरेत् कुष्ठं व्रणं पाण्डुं कषाया वातकृच्छ्रजित्" । भा. प्र ॥

---

# द ।

**दंष्ट्री** । सू. २. दंष्ट्रास्त्यस्य । तीक्ष्णदंष्ट्रावन्तो सर्पसूकरादिजन्तवः ॥

**दकलावणिकः** । चि. १. उदकलवणाभ्यां संस्कृतः । **मांसरसविशेषः** । "अल्पमांसादयः स्वच्छा दकलावणिकाः स्मृताः" इति वृद्धवाग्भटः । "नातिमांसास्तनुरसा दकलावणिकाः स्मृताः" इति केचिदाहुरित्यरुणदत्तः । "अल्पमांसपटुस्नेहा दकलावणिकाः स्मृताः" इत्यन्ये । "लवणोदकसंसिद्धमुदलावणिकं मतं" इति हलायुधः । The thin decoction of meat prepared with brine । स्वल्पेन मांसेन शुण्ठ्यादिभिः स्वल्पैः स्वच्छाये क्रियन्ते ते दकलावणिकाः बोध्याः । एवं यूषे यत्र धान्यमलं खलादौ वा मूलादीन्यल्पानि तस्यापि दकलावणिकत्वं बोध्यमिति पौराणिकाः । लवणोदकमिति केचित् ॥

**दक्षः** । सू. ७ etc. दक्षते । दक्ष वृद्धौ शीघ्रार्थे च । "दक्षः प्रजा-

पतौ रुद्रवृषभे कुक्कुटे पटौ । द्रुमे दक्षा तु मेदिन्यां" इति विश्वः । कुक्कुटः ।

**दण्डाहतम्** । सू. १४. मन्थदण्डेनाहतम् । **तक्रम्** । तक्रमित्येव चरकपाठः ॥

**दधि** । सू. ३ etc. **दुग्धविकारः** । सस्नेहं गव्यम् । "शृतात् क्षीरात्तु यज्जातं गुणवद्दधि तत् स्मृतं" इति सुश्रुतः । "तक्रजन्म पयोहेतुर्नवनीतोद्भवं दधि" इति नृसिंहः । हिं.—दही ; बं.—दई ; म.—दहीं ; क.—मोसर ; तै.—पेरुगु ; गु.—दही ; त.—तयिर् ; सिं.—दीकिरि ; मल.—तैर् ൧൧൦൦ , तयिर् ; पा.—जुगरत् , देग ; अ.—जुगरात ; कों.—दही ; इं.—Curds, Curdled milk । Curdled milk is prepared by adding some acid, lime juice or rennet or a little curdled milk as a ferment to milk previously boiled. In the course of 12 hours the whole of the milk thus acted upon is changed into a more or less thick, acidulous, jelly-like mass । ससरं ग्राह्यम् । **गुणाः**—"दध्युष्णं दीपनं स्निग्धं कषायानुरसं गुरु । पाकेऽम्लं श्वासपित्तास्रशोथमेदःकफप्रदम् । मूत्रकृच्छ्रे प्रतिश्याये शीतगे विषमज्वरे । अतीसारेऽरुचौ कार्श्ये शस्यते बलशुक्रकृत्" । भा. प्र । **दधिभेदाः**—"आदौ मन्दं ततः स्वादु स्वाद्वम्लञ्च ततः परम् । अम्लं चतुर्थमत्यम्लं पञ्चमं दधि पञ्चधा" । भा. प्र । "स्वाद्वम्लमत्यम्लकमन्दजातं तथा शृतक्षीरभवं सरञ्च । असारमेवं दधि सप्तधाऽस्मिन् वर्गे स्मृता मस्तुगुणास्तथैव" इति सुश्रुतः । "दधीन्युक्तानि यानीह गव्यादीनि पृथक् पृथक् । विज्ञेयमेवं सर्वेषु गव्यमेव गुणोत्तरम्" । सु. सू. ४५ । "ज्वरासृक्पित्तवीसर्पकुष्ठपाण्ड्वामयभ्रमान् । प्राप्नुयात् कामलां चोग्रां विधिं हित्वा दधिप्रियः" इति चरकः । **दधिभक्षणनिषिद्धता**—"न नक्तं दधि

भुञ्जीत न चाप्यघृतशर्करम् । नामुद्गयूषं नाक्षौद्रं नोष्णमामलकैर्विना" । रा. व ॥

**दधि** । उ. ५. श्रीवासकः । "दधिक्षीरघृताह्वः स्या"दित्यमरः ॥

**दधिकूर्चीका** । सू. ८. दध्ना सह पाकात् पृथग्भूतं घनद्रवभागं क्षीरम् । "दध्ना सह च यत् पक्वं क्षीरं सा दधिकूर्चिका । तक्रेण पक्वं यत् क्षीरं सा भवेत्तक्रकूर्चिका" । भा. प्र । अत्र दधि दुग्धं समं भाव्यम् । **गुणाः**—"वातघ्नी ग्राहिणी रूक्षा दुर्जरा दधिकूर्चिका" । रा. व । see । **कूर्चिका** ॥

**दधित्थमध्यम्** । चि. ३. दध्नि तिष्ठति दधित्थो दधिफलत्वात् । दविवर्णो द्रवस्तिष्ठत्यस्मिन् इति राघाश्रयी । **बालकपित्थफलमज्जा** ॥

**दधिमण्डः** । चि. १५. दधिजलं, **मस्तु** । "तक्राल्लघुतरो मण्डः कूर्चिकाद्दधितक्रजः" इति सुश्रुतः । "दधिश्च दधिमस्तुश्च दाधिमण्डश्च मस्तु च" । स. नि । । Water floating on curd । तक्रमित्येके ॥

**दधिमस्तु** । चि. ३. **मस्तु** ॥

**दधिसरः** । चि. ८ etc. **दध्यग्रभागः** । दध्न उपरितनो भागः स्नेहबहुलः 'तर' इति प्रसिद्ध इति डल्हणः । "दध्नस्तूपरि यो भागो घनः स्नेहसमन्वितः । स लोके सर इत्युक्तो दध्नो मण्डस्तु मस्त्विति" भा. प्र । "सरोऽग्रद्रवसंहति"रिति वैजयन्ती । **हिं.**—दहीकी मलाई । **मल.**—तयिप्पाटा തയിർപ്പാട ; **इं.**—Barm of curds; thin upper part of curds । **गुणाः**—"सरः स्वादुर्गुरुर्वृष्यो वातवह्निप्रणाशनः । साम्लो बस्तिप्रशमनः पित्तश्लेष्मविवर्धनः" । भा. प्र ॥

**दध्युत्तरम्** । चि. ४ etc. **दधिसरः** । दधिजलमित्येके ॥

**दन्तः** । उ. ११. **गोदन्तः** । गजवराहादीनां दन्ता इति केचित् ॥

**दन्तकाष्ठम्** । सू. २०. दन्तशोधनकाष्ठम् । हिं.—दतौन; इं.—Tooth-brush, stick for brushing the teeth ; **मल.**—मुस्साक्कु ഉമ്മിക്ക । **गुणाः**—"दन्तधावनमुद्दिष्टमास्यवैशद्यकारणम् । प्रसेकारुचिदौर्गन्ध्यमलपित्तकफापहम् । मदात्ययी कृशः श्रान्तो दन्ततालव्वोष्ठरोगवान् । हिक्काच्छर्दिशिरःपीडामूर्च्छाशोषी न तच्चरेत्" । म. पा ॥

**दन्तधवनम्** । सू. २. दन्तकाष्ठम् । दन्तपवनमिति पाठः । दन्ताः पूयन्ते शोध्यन्ते अनेनेति दन्तपवनम् । दन्तधावनमिति संग्रहपाठः । "चूतपत्रेण यो नित्यं दन्तधावनमाचरेत् । तस्य तिष्ठति जिह्वाग्रे सुप्रसन्ना सरस्वती" इति ॥

**दन्तनिर्घातनम्** । उ. २२. दन्तलेखनकम् ॥

**दन्तमांसम्** । सू. २ etc. दन्तवेष्टः । हिं.—मसूढे, दांतोंके मांस । मल.—मूणा മൂണാ, नोण्णु, ऊनु, पल्लरि । बं.—दांतेर माडि । Gums ॥

**दन्तलेखनकम्** । सू. २६. अस्त्रविशेषः । यथा—"एकधारं चतुष्कोणं प्रवृद्ध्याकृति चैकतः । दन्तलेखनकं तेन शोधयेद्दन्तशर्करान्" । अत्रि । Tooth-pick, Tooth cleaner : **सिं.**—दत्कटुव ; म.—दांत कोरणें ; **मल.**—पल्लुकुत्ति പല്ലുകത്തി, पल्लुळि ॥

**दन्तशठः** । सू. ६. दन्तशठोऽम्लत्वात् । दन्तानां शठ इव अपकारित्वाद्वा । "स्याद्दन्तशठो जंबीरे कपित्थे करमर्दके । नागरंगेऽपि च पुमान् स्याच्चांगेर्यां च योषिति" इति मेदिनी । **जंबीरो नाम अम्लफलवृक्षः** । N. O.—*Rutaceæ* । **हिं.**—जंभीरी नींबु, पहाडिकघज्ञु, पहाडिनिंबु ; बं.—जामीरलेबू, गोरानेबू, करणानेबू ;

म.—ईडलिंबु , थोरला लिंबु ; गु.—लांवालींबु , मोतुनिंबु ; तै.—जंभिर , पेद्दनिंबा; क.—कंचिले , कानिले ; दोड्डनिंबे हन्नु ; पञ्जा.—खुत्तिया ; त.—पेरेलिमिचं ; सिं.—डोडं ; मल.—वडुकप्पुळिनारकं ; पा.—लिमुनेशिरि ; इं.—Acid orange tree ; ल.—*Citrus Limonum* । नामानि—"जंभीरो जंभलो जंभः प्रोक्तो दन्तशठस्तथा । गंभीरो वक्त्रशोधी च रोचनो दन्तहर्षणः" । ध. नि । पक्वफलं ग्राह्यम् । गुणाः—"जबीरमुष्णं गुर्वम्लं वातश्लेष्मविबन्धनुत् । शूलकासकफोत्क्लेशच्छर्दितृष्णामदोषजित् । आस्यवैरस्यहृत्पीडावह्निमान्द्यकृमीन् हरेत्" । भा. प्र । "पक्वं जंबीरजं तीक्ष्णं कृमिवातकफापहम् । सुराभर्दीपनं रुच्यं मुखवैशद्यकारकम्" । दन्तशठो जंबीरभेद इति चरकोपस्कारे । केचिदम्लोटं वदन्ति । दन्तशठजंबीरौ विभिन्नाविति सुश्रुतः । जंबीरस्य नानाविधत्वमन्यैरप्यंगीकृतम् । प्रचुराम्लफल एव जंबीर इत्येके ॥

**दन्ती** । सू. ९ etc. दन्ताभा , दाम्यन्त्यनया दोषा वा । स्वनामख्यातक्षुपः । N. O.—*Euphorbiaceæ* । हिं.—जामालगोटेकी जड, छोटी दन्ती, अजयपालवृक्ष, हकुं, हकानि; बं.—दन्तीगाछ ; म.—दांती , लघुदंता , जामालगोट ; गु.—दांती , नाहानो नेपालो ; कों.—जामालगोटा ; तै.—दन्तिचेट्टु , कोण्डअमदुम् ; क.—दंतीगिड ; त.—नाकतेन्नि, नेर्वाळमरं ; मल.—नीर्वाळमरं നീർവാളമരം ; सिं.—दत्त ; बर्मा.—ता-डु-वा ; पा.—दंद ; अ.—हबुलं मुलुक ; इं.—Croton plant ; ल.—*Jatropha montana, Baliospermum montanum* । नामानि—"लघुदन्ती विशल्या च स्यादुदुंबरपर्ण्यपि । तथैरण्डदला शीघ्रा श्येनघण्टा घुणप्रिया । वाराहांगी च कथिता निकुंभश्च मकूलकः" । भा. प्र । गुणाः—"दन्तीद्वयं सरं पाके

रसे च कटु दीपनम् । गुदांकुराश्मशूलार्शःकण्डूकुष्ठविदाहनुत् । तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदराक्रिमीन्" । भा. प । ह्रस्वदीर्घभेदेन दन्ती द्विधा । तयोर्ह्रस्वा उदुंबरदलाकारा, अन्या एरण्डदला । फलानि बीजानि चैरण्डसदृशान्येव । दन्ती नागदन्तीति केरलेषु बहवः । अथापि "नागदन्तीत्रिवृद्दन्तीद्रवन्तीस्नुक्पयःपलैः" इत्यादि संग्रहवाक्यान्यप्यत्रानुस्मरणीयानि । दन्त्याः बीजमेव जैपालकम् । "जयपालो दन्तिबीजं विख्यातं तन्तिलीफलं" इति भावमिश्रः । नागदन्ती पृथक्कया भाति केरलेषु । दन्तीत्युच्यमाने सति तत्र तस्याः मूलमेव ग्राह्यम् । उन्मादप्रतिषेधाध्याये "व्योषश्यामात्रिवृद्दन्ती"त्यत्र दन्तीस्थाने "बिंबी"त्येव संग्रहपाठः ॥

**दन्ती** । उ. १६. अतिशयितौ दन्तावस्य । **गजः** ॥

**दन्तीमूलम्** । चि. ३. दन्तीक्षुपस्य मूलम् । see **दन्ती** ॥

**दर्दुरः** । सू. ६. शालिधान्यविशेषः । षष्टिकभेद इत्येके । दुर्दुरइति पाठः ॥

**दर्पः** । सू. ३. **कस्तूरी** । उक्तं हि—"दर्पो नाभिश्च कस्तूरी"इति ॥

**दर्भः** । सू. ६ etc. दृणाति पारुष्याद्दर्भः, दृभ्यते वा । 'दृभी ग्रन्थे' । **कुशो नाम उलुपतृणम्** ; N. O.—*Gramineae* । हिं.—कुशा , दाभ , डाभ ; बं.—कुश ; म.—दर्भ , बारीकदर्भ ; गु.—कुश; तै.—कुशदर्भालु , दुभ ; क.—कुशदर्भ , दर्भ , दर्भेहुल्लु ; कों.—दर्भ्यातण ; तु.—दर्भेपंति ; सिं.—इलुप् , कुशतण ; मल.—दर्भा ഒഠ ; पञ्जा.—चिङ्का ; इं.—Sacrificial grass, Sacred kusagrass ; ल.—*Poa cynosuriodes*, *Eragrostis cynosuroides* । **दर्भनामगुणाः**—"कुशो दर्भस्तथा बर्हिः सूच्यग्रो यज्ञभूषणः । ततोन्यो दीर्घपत्रः स्यात् क्षुरपत्रस्तथैव च । दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमम । मूत्रकृच्छ्राश्मरी-

तृष्णावस्तिरुकूप्रदरास्रजित्" । भा. प्र । मूलं ग्राह्यम् । कुशो ह्रस्वो मृदुः सूचीपत्र इति डल्हणः । पित्ताश्मरीचिकित्सिते कुशादिमूत्रयोगे "दर्भो विदारी वाराही"त्यत्र "दर्भ"स्थाने वरीति दृश्यते सुश्रुतसंहितायाम् । कफतृष्णाचिकित्सायां "बिल्वाढकीपञ्चकोलदर्भपञ्चकसाधित"मित्यत्र "बिल्वाढकीकन्यकपञ्चमूलीदर्भेषु सिद्ध"मित्येव सुश्रुतपाठः ॥

**दर्भपञ्चकम्** । चि. ६. तृणपञ्चमूलम् ॥

**दर्भपूर्वकपञ्चमूलम्** । चि. ६. तृणपञ्चमूलम् ॥

**दर्भमूलम्** । चि. ३. दर्भस्य मूलम् । दाभका मूल ॥

**दलम्** । सू. २५ etc. दाली । "स्फोटस्तु चणकादीनां दलीति परिकीर्तिता" इति नृसिंहः । अन्यच्च—"दलितन्तु शमीधान्यं दालिर्दाली स्त्रियामुभे" । बं.—दाल ; म.–डाळ ; मल.—परिप्पु ; इं.—Dholl, Peas । तत्पाकविधिः—"दाली तु सलिले सिद्धा लवणार्द्रकहिंगुभिः । संयुक्ता सूपनाम्नी स्यात् कथ्यन्ते तद्गुणा अथ । सूपो विष्टंभको रूक्षः शीतस्तु स विशेषतः । निस्तुषो भृष्टसंसिद्धो लाघवं सुतरां व्रजेत्" । भा. प्र ॥

**दलम्** । उ. ५. तमालपत्रम् ॥

**दशमूलम्** । सू. १५ etc. दश मूलानि यत्र । दशानां मूलानां समाहारः । **बिल्वादिदशविधवृक्षमूलम्** । "शालपर्णीपृश्निपर्णीबृहतीद्वयगोक्षुरैः । बिल्वाग्निमन्थश्योनाककाश्मरीपाटलायुतैः । दशमूलमिति ख्यातं सन्निपातहरो गणः" । ध. नि । **गुणाः**—"दशमूलं त्रिदोषघ्नं श्वासकासशिरोरुजः । तन्द्राशोथज्वरानाहपार्श्वपीडारुचीर्हरेत्" । भा. प्र । "गणः श्वासहरो ह्येष कफपित्तानिलापहः । आमस्य पाचनश्चैव सर्वज्वरविनाशनः" इति सुश्रुतः ।

"महान्ति यानि मूलानि काष्ठगर्भाणि यानि च । तेषां तु वल्कलं ग्राह्यं ह्रस्वमूलानि कृत्स्नशः" इति वङ्गसेनसंहितायाम् । महत्पञ्चमूलस्य काष्ठान्येव केरलेषु केचित् गृह्णन्ति । "अतिस्थूलजटा याः स्युस्तासां ग्राह्यास्त्वचो ध्रुवम् । गृह्णीयात् सूक्ष्ममूलानि सकलान्यपि बुद्धिमान्" । भा. प्र ॥

**दशमूलकम्** । see **दशमूलम्** ॥

**दशा** । शा. ६. **वर्तिः** । हिं.—पलीता, कपडेकी वत्ती ; म.—वात, वत्ती ; त.—तुणित्तिरि ; सिं.—पान्तिरय ; मल.—तिरि ത്തിരി; इं.—Wick । "दशा वर्तिरथ स्त्रियां" इति वैजयन्ती ॥

**दशांगः** । उ. २. दशविधद्रव्यकृतधूपविशेषः । यथा—"वचाहिंगुविडंगानि सैन्धवं गजपिप्पली । पाठा प्रतिविषा व्योषं दशांगः परिकीर्तितः । अन्यच्च—"मधु मुस्तं घृतं गन्धो गुग्गुल्वगुरुशैलजम् । सरलं सिह्लसिद्धार्थं दशांगो धूप उच्यते" । अपि च, "पञ्चाशद् गन्धपाषाणास्तावान्माहिषगुग्गुलुः । चतुरंशं चन्दनञ्च जटामांसी च तावती । त्रिभागः सार्जकः सारः तावदेव हि वालकम् । उशीरं तु द्विभागं स्याद् घृतभृष्टनखं समम् । कर्पूरो मृगनाभिश्च एकभागौ प्रकीर्तितौ" । अयं धूपः सर्वग्रहाजित् ॥

**दशांगी** । उ. २. **दशाङ्गधूपः** । see **दशाङ्गः** । कैवर्तमुस्तेऽन्ये ॥

**दहनः** । सू. १५ etc. **चित्रकः** ॥

**दाडिमः** । सू. ६ etc. दाल्यते दाडिमः । डाडिम इति पाठः । **स्वनामख्यातफलवृक्षः** । N. O.—*Lythraceae* । हिं.—अनार, दाडिम, दरिं ; उर्दु.—अनार ; बं.—डालिम, दाडिम ; म.—डाळिंब, दाळिंब; गु.—दालिम, डालम ; कों.—दाळिंब ; दखा.—दाड़िम ; काश्मी.—धाउन ; उत्.—दालिंब ; तै.—दाडिममु, दानिम्म, दाळिंब ; क.—दाळिंबे, दाड़िंब ; तु.—दाळिंब ; त.—मा-

तुळै , मातळं , मातळै , तूचकं ; सिं.—देलुं ; मल.—मातळं ഛാതളം , ताळिमातळं , वरुमाम्पळं ; बर्मा.—साले-बिन् ; तालिबिन् ; मलायी.—दालिमा ; पा.—गुलूनार् , अनार , तुरस ; अ.—रुमान हामीज , रुम्मान् ; फ्र.—Grenadier cultive ; जर्मन.—Granatbaum ; इं —Pomegranate ; ल.—*Punica granatum* । नामानि—"दाडिमः करको रक्तकुसुमः शुकवल्लभः । सुफलो रक्तबीजश्च रोचनो दन्तवीजकः" । स. नि । पक्वफलं ग्राह्यम् । "दाडिमं द्विविधमीरितमार्यैरम्लमेकमपरं मधुरञ्च" । रा. नि । स्वादुस्वाद्वम्लकेवलाम्लभेदेन त्रिभेदामिच्छति भावमिश्रः—"दाडिमं त्रिविधं स्वादु स्वाद्वम्लं केवलाम्लकम् । तत्तु स्वादु त्रिदोषघ्नं तृड्दाहज्वरनाशनम् । हृत्कण्ठमुखगन्धघ्नं तर्पणं शुक्रलं लघु । कषायानुरसं ग्राहि स्निग्धं मेधाबलावहम् । स्वाद्वम्लं दीपनं रुच्यं किञ्चित् पित्तकरं लघु । अम्लं तु पित्तजनकमम्लं वातकफापहम्" । दाडिमपुष्पादिगुणाः—"तत् पुष्पं च पुनर्ज्ञेयं नासासृग्गतिनाशनात् । दाडिमत्वक् क्रिमिघ्ना च ग्राही रक्तातिसारहा" । "न भवेद्दाडिमो यत्र वृक्षाम्लं तत्र दापयेत्" ॥

**दाडिमसाराम्लम्** । चि. ९. see **दाडिमाम्लम्** ॥

**दाडिमाम्लम्** । चि. ९. दाडिमफलकेशरस्य रसम् । अनारका रस ॥

**दाडिमी** । चि. ९. दाडिमः ॥

**दात्यूहः** । सू. ६ etc. द्वितीयं तृतीयं वा रूपं वहति दित्यवाट् , तस्यापत्यं दात्यूहः । दातिं मारणमूहते इति वा । 'ऊह वितर्के' । अन्धकाको नाम पक्षिविशेषः । बं.—डेओ ; मल.—पकालिण्णामन् പകലിണ്ണാമൻ । क्षुद्रोलूक इति केरलेष्वेके । रायुक इति

लोके इति डल्हणः । डाहुक इत्यभिधीयते इति हाराणचन्द्रः । नामानि—"जलकाकस्तु दात्यूहः स च स्यात् कालकण्ठकः" । रा. नि । गुणाः—"दात्यूहः श्रमवातघ्नः वृष्यः शुक्रबलप्रदः" । Gallinule इति चरकांग्लेयानुवादकः । "दात्यूहः कालकण्ठके । चातकेऽपि" इति हैमः ॥

**दारु** । सू. १५ etc. दीर्यते । देवदारु । शारीरे बलातैलयोगे "सरलं देवदारु च" इत्येव दारुस्थाने सुश्रुतः पठितवान् ॥

**दार्वी** । सू. १५ etc. दीर्यते । 'दृ विदारणे' । पिण्डहरिद्रातोऽन्या । दारुहरिद्रा नाम पीतकाष्ठविशेषः । N. O.—*Berberideae*, *Menispermaceae* इत्येके । हिं.—दारुहलदी, जारकेहलदी ; उ.—जरकी हलदी ; बं.—दारुहरिद्रा ; म.—दारुहळद, जारके हळद ; गु.—दारुहलदर ; तै.—मानुपसुपु ; क.—गोडु-मरदरसिन ; त.—मरमञ्जळ् ; मल.–मरमञ्ञळ् മരമഞ്ഞൾ ; सिं.—वेनिवेल्गेट, वनुवेल ; तु.—मरमञ्जल् ; पा.—फिल-झाबरह, दारचोब ; अ.—दारहलद ; इं.—Indian barberry, Treeturmeric, Nepal or Ophthalmic Barberry, False calumba ; ल.—*Berberis aristata; Coscinium fenestratum* । "अतिपीता प्रशस्ता तु ज्ञेया दारुनिशा बुधैः । यदि न स्याद्दारुनिशा तदा देया निशा बुधैः" इति भावमिश्रः । नामगुणाः—"दार्वी दारुहरिद्रा च पर्जन्या पर्जनीति च । कटंकटेरी पीता च भवेत् सैव पचंपचा । सैव कालीयकः प्रोक्तस्तथा कालेयकोऽपि च । पीतद्रुश्च हरिद्रुश्च पीतदारु कपीतकम् । दार्वी निशागुणा किन्तु नेत्रकर्णास्यरोगनुत्" । भा. प्र । अन्यच्च—"तिक्ता दारुहरिद्रा तु कटूष्णा व्रणमेहनुत् । कण्डूविसर्पत्वग्दोष-विषकर्णाक्षिदोषनुत्" । रा. नि । काष्ठं ग्राह्यम् ॥

दार्वी । शा. १. "दार्वीमधुकतोयेन मृजां च परिशीलयेत्" इत्यत्र "परिषेकः पुनर्मालतीमधुकसिद्धेनांभसा" इत्येव चरकसंग्रहयोः पाठः । पित्तकुष्ठनाशकतिक्तकघृतयोगे "दार्वीपाठा" इत्यत्र "त्रिफलाटरूषका"विति पठितवान् सुश्रुतः ॥

दार्वीत्वक् । सू. २० etc. दार्व्याः त्वक् । हिं.—दारुहलदीकी छाल । अभावे काष्ठं ग्राह्यमिति श्रीकण्ठः ॥

दिव्यम् । सू. ५. गंगांबु । "दिव्योदकं खवारि स्यादाकाशसलिलं तथा । व्योमोदकं चान्तरिक्षजलं चेष्वभिधाह्वयम्" ॥

दिव्यांबु । चि. ६. गंगांबु ॥

दिव्यांभः । चि. ८. गंगांबु । मेघसलिलमिति चरकः ॥

दीपनीयम् । शा. २ etc. पञ्चकोलम् ॥

दीप्यकः । शा. २ etc. अग्निदीपकः । यवानी ॥

दीर्घवृन्तः । सू. १७ etc. दीर्घं वृन्तमस्य । स्योनाकः ॥

दीर्घशूकः । सू. ६. दीर्घाः शूका यस्य स दीर्घशूकः । शुक्काकारशालिधान्यविशेषः । स सारामुखाद्धीनगुणः ॥

दुकूलम् । सू. २६ etc. दुह्यते क्षुमाया आकृष्यते दुकूलम् । सूक्ष्मं क्षौमम् । "क्षौमं सूक्ष्मं दुकूलं स्या"दिति वैजयन्ती । Woven silk । श्लक्ष्णवस्त्रभेद इत्येके ॥

दुग्धम् । सू. १५ etc. दुह्यते । क्षीरम् ॥

दुग्धिका । चि. ८ etc. दुग्धं क्षीरमिव निर्यासोऽस्त्यस्याः । क्षीरिणी । अर्शश्चिकित्सिते "दुग्धिकाकण्टकारीभ्यां" इत्यत्र दुग्धिका रक्तापामार्ग इति केचित् । "उक्तं हि राजनिघण्टौ—

"अन्यो रक्तो ह्यपामार्गः क्षुद्रापामार्गकस्तथा । आघट्टको दुग्धनिका रक्ताबिन्दुदलपपालिका" ॥

**दुग्धिनीका** । उ. ३७ श्वेतदुग्धालाबुः । तोंबी । see **अलाबुः** ॥

**दुरालभा** । शा. ९ etc. कृच्छ्रेण लभ्यते दृश्यते दुरालभा । **ताम्रमूलसूक्ष्मदलदुस्पर्शकण्टकयुतः मरुजः करभाजादिभक्ष्यः पृथुक्षुपविशेषः** । शरपुंखाभ इति केचित् । N. O.—*Zygophylleae* । हिं.—धमासा, हिंगुणा ; बं.—दुरालभा ; म.—धमासा, कांटे चुवूक, वेलिकामूली ; गु.—धमासो ; तै.—पिलरेगटि, दुलगोंडी ; क.—वल्लिदुरुवे, नेलइंगळ ; त.—काञ्चोरि इत्येके ; सिं.—वेल्कसांबिलिया ; मल.—चेङ्कोटिक्तूवा ചെങ്കൊടിത്തൂവ इत्येके ; **पञ्जा.**—सामादा ; **सिन्धी.**—द्रमहा ; **कच्छी.**—धारामा ; हिमालयेषु.—स्पालाधझयी ; पा.—बादावर्द ; अ.—शुकाई ; ल.—*Fagonia arabica* । **नामानि**—"धन्वयासो दुरालंभा ताम्रमूली च कच्छुरा । दुरालभा च दुःस्पर्शा यासो धन्वयवासकः" । ध. नि । **गुणाः**—"यवासस्य गुणैस्तुल्या बुधैरुक्ता दुरालभा" । भा. प्र । **अन्यच्च**—"दुरालभा कटुस्तिक्ता मधुरा रक्तशुद्धिकृत् । शीता चोष्णा विसर्पघ्नी विषमज्वरनाशिनी । तृट्च्छर्दिमेहगुल्मघ्नी मोहरक्तरुजापहा । वातं पित्तं कफं कुष्ठं ज्वरं चैव विनाशयेत्" । नि. र । मूलपत्रकाण्डादिकं ग्राह्यम् । सा द्विधा स्थूलसूक्ष्मभेदात् । अभावाद्वृश्चिकालीमेव केरलेषु प्रायेणांगीकरोति ॥

**दुरालंभा** । चि. ३ etc. **दुरालभा** ॥

**दुष्टयानम्** । सू. २. **दुष्टगजघोटकादि** ॥

**दुःस्पर्शकः** । चि. ८. कण्टकित्वात् । **दुरालभा** ॥

**दुःस्पर्शा** । चि. १ etc. **दुरालभा** ॥

**दुःस्पर्शा** । चि. ७. **कण्टकारी** । "दुःस्पर्शो धन्वयासे ना कण्टकार्यां स्त्रियां त्रिषु । खरस्पर्शे" इति मेदिनी ॥

**दूर्वा** । सू. १५ etc. दूरं वाति दूर्व्यते वा पशुभिर्दूर्वा । 'दूर्वी हिंसायाम्' । **स्वनामख्यातघासविशेषः** । N. O.—*Gramineae* । हिं.—दूब , हरीदूब , दुब ; बं.—नीलदूर्वा , दूर्वा ; उर्दू.—दुब ; पञ्जा.—तड्डा , कव्वर् , दुब ; म.—निळीदूर्वा , हरळी , हरयाळी ; गु.—नीली धो ; तै.—गरिके , हरयाळी , दूर्वालु ; क.—गरिके , करिके, अबटेहुल्लु, हसुगरुके ; त.—अरुकु , अरुकंपुल्लु , मुयल्पुल् ; तु.—कादिकेपन्ति ; सिं.—वलत्तन , हीतन ; कों.—जिरवांकुर ; मल.—करिंकरुका കറിംകറുക , बलिक्करुका , करुका , मुयल्पुल्लु ; इं.—Hariali, Huriallee grass, Doub grass, Couch grass, Creeping cynodon, Creeping panic grass ; फ्रं.—Chiendent ; जर्मन्.—Wucherndu hundzahn ; ल.—*Cynodon dactylon* । **नामगुणाः**—"नीलदूर्वा रुहाऽनन्ता भार्गवी शतपर्विका । शष्पं सहस्रवीर्या च शतवल्ली च कीर्तिता । नीलदूर्वा हिमा तिक्ता मधुरा तुवरा हरेत् । कफपित्तास्रवीसर्पतृष्णादाहत्वगामयान्" । भा. प्र । दूर्वा बहुधा श्वेतनीलमालागण्डभेदेन । सर्वांशो ग्राह्यः । वातशोणितचिकित्सिते मधुयष्ट्यादितैलयोगे दूर्वास्थाने 'मूर्वा' इत्येव चरकपाठः ॥

**देवदारु** । सू. १७ etc. देवानां प्रियं दारु यस्य तत्काष्ठचन्दनस्य देवप्रियत्वात् । **स्वनामख्यातसुगन्धिकाष्ठविशेषः** । N. O.—*Coniferae* । हिं.—देवदार , देवदारु ; उर्दु.—देवदार ; बं.—देवदारु ; पञ्जा.—दियार , पहाडिकेलि ; म.—तेल्या देवदार ;

गु.—देवदार ; तै.—देवदारु , देवदारचेक्का , देवदारि ; क.—चोपडा देवदारु , देवदारि ; त.—तेवतारु , तेवतारं , चेम्पुळिवै ; सिं.—देवदुरु ; मल.—देवतारं ഒരാലാരം ; पा.—देवदार ; अ.—शजर तुलजीन ; इं.—Red cedar; Fir tree इत्येके ; ल.—*Cedrus deodara, Pinus deodara* । "सुगन्धि लघु रूक्षञ्च सुरदारु वरं मतं" इति भावमिश्रः । **नामगुणाः**—"देवदारु स्मृतं दारु भद्रदार्विन्द्रदारु च । स्निग्धदारु द्रुकिलिमं सुराह्वं सुरभूरुहः । देवदारु लघु स्निग्धं तिक्तोष्णं कटुपाकि च । विबन्धाध्मानशोथामतन्द्राहिक्काज्वरास्रजित् । प्रमेहपीनसश्लेष्मकासकण्डूसमीरनुत्" । भा. प्र । काष्ठं ग्राह्यम् ॥

**देवदाली** । सू. १५ etc. **लोमशवृत्तफलवान् लताविशेषः** । अस्याः खखासवत् फलपुष्पवृन्तानि , फलञ्च कर्कोटकीवत्" इति वैद्यकशब्दसिन्धुः । सा त्रिधा-उक्तं हि , "श्वेता रक्ता च पीता च देवदाली गुणैः समः" N. O.—*Cucurbitaceae* । हिं.—घघरवेल , बंदाल , बिंदाल , बिदाली , कुकुडलता , सोनैया , सौनैया , सनैया , बन्दाल डोडे ; बं.—देयाताडा , घोषकलता ; म.—देवडंगरी , देवडांगरी , कांटे इन्द्रावण , घुले इन्द्रावण ; गु.—कुकडवेल ; तै.—डानरगांडि ; क.—देवडंगर , देवडंगरी ; सिं.—देवदालिय ; मल.—उण्टप्पीचि , परिप्पोट्टि ; इं.—Bristly Luffa ; ल.—*Luffa Echinata, L. Bindaal* । **नामगुणाः**—"देवदाली तु वेणी स्यात् कर्कटी च गरागरी । देवताण्डी वृत्तकोशस्तथा जीमूत इत्यपि । पीता परा खरस्पर्शा विषघ्नी गरनाशिनी । देवदाली रसे तिक्ता कफार्शःशोफपाण्डुनाः । नाशयेद्वामनी तिक्ता क्षयहिक्काक्रमिज्वरान् । देवदालीफलं तिक्तं क्रमिश्लेष्मविनाशनम् । स्रंसनं गुल्मशूलघ्नमर्शोघ्नं वातजित् परम्" । भा. प्र । फलमूलादिकं ग्राह्यम् ॥

**देवधूपः** । सू. १५ etc. **सर्जरसः** ॥

**देवाद्वयम्** । सू. १५. **नागबला पीतबला च** । see **देवाह्वयम्** ॥

**देवाह्वम्** । सू. १५ etc. **देवदारु** ॥

**देवाह्वयम्** । सू. १५. देवाद्वयमित्येव मुंबापुरमुद्रितसंग्रहपाठः । सुश्रुतसंहितायां विदार्यादिगणे 'विश्वदेवा सहदेवा' चेति पृथक् दर्शनाद्देवाद्वयपाठ एवात्राप्यनुयुज्यते । तद्युग्मं बलायुग्मविशेष एव । एका नागबला अन्या पीतबला । पीतबलास्थाने महाबलेति केचित् । श्वेतपीतपुष्पभेदाद् बलाद्वयमिति भाष्यकारः । विश्वदेवा गांगेरुकी प्रसिद्धा गुडशर्करेति पूर्वदेशे, अन्ये सितकुसुमां बलामाहुः । सहदेवी बलाभेदः पीतपुष्पा 'काङ्कसी' इति लोके , अन्ये बलां नीलपुष्पामाहुरिति डल्हणः । सहदेवा पीतपुष्पा दण्डोत्पला , विश्वदेवा अरुणपुष्पा दण्डोत्पला चेत्येके ॥

**दौग्धिकः** । नि. १४. अलाबुः । "दौग्धिकपुष्पव"दित्यत्र "अलाबुपुष्पसङ्काशानी"ति चरकपाठः । "तुंब्यलाबूश्च दुग्धिका" इति हलायुधः ॥

**द्रवन्ती** । सू. १५. श्या. ग etc. द्रवति । 'द्रु गतौ' । **स्थिरबहलताम्रवर्णविशिष्टमूलो एरण्डतुल्यबीजो सक्षीरबृहत्पत्रो स्वनामख्यातवृक्षविशेषः** । N. O.—*Euphorbiaceae* । **हिं.**—बड़ीदंती , मुंगलाई अंड ; जंगलि एरण्डि ; **बं.**—सांबरी , बृहद्दन्ती , वन-भेरण्डा , गब्-भेरण्डा ; **म.**—थोरदांती , मोंगली एरण्ड , मोघलि एरण्डी ; रान एरण्डी ; **गु.**—मोटोनेपालो , रतनजोत , नेपाल ; **कों.**—काडएरण्डि ; **तै.**—अडवि आमुदमु , कोण्टामदमु , पेपाळं ; **क.**—दोड्डदंती , आडलुहरळु , दोड्डहरळु , तुरुकहरळु , काडहरळु , मरहरळु , फरंगिहरळु , दुंडिगिनगिड , मर-

औडल ; तु.—काडळंवुडु ; त.—कटलामणक्कु , आतळै , करुपवरुणि ; मल.—कटलावणक्कु കടലാവണക്ക , काट्टामणक्कु ; सिं.—वलएरण्डु ; गोवा.—गालामरक ; बर्मा.—केसुगि, सिंबोकेसु ; पा.—दन्तीनाहरि , शकारहुजवा ; अ.—अबुखलसा ; फ्र.—Medicinier ; इं.—Angular leaved physic nut, or Purging nut ; ल.—*Jatropha curcas* । पुत्रश्रेणीति सुश्रुतपाठः । एरण्डसदृशफलपत्राल्पऽविटपा संबरीति लोके इति डल्हणः । समुद्रैरण्ड इति केचित् । नामानि—"द्रवन्ती शंबरी चित्रा न्यग्रोधा मूषिकाह्वया । प्रत्यक्श्रेणी विषा चण्डा पुत्रश्रेण्याखुकर्णिका" । ध. नि । मूलं बीजं च ग्राह्यम् । गुणाः—दन्तीवत् । see दन्ती । "द्रवन्ती ग्रहणीतृष्णात्रिदोषशमनी हिता । अभिच्छिन्नतनौ ग्रन्थ्यां प्रमेहे जठरे गरे । कफपित्तामये पाण्डौ कृमिकोष्ठभगन्दरे । द्रवन्ती हृद्रोगहरा कफक्रिमिविनाशिनी" । ध. नि ॥

**द्राक्षा** । सू. ३ etc. द्राङ्ध्यते । 'द्राक्षि काङ्क्षायाम्' । द्राति सरसत्वादिति वा । स्वनामख्यातलता । N. O.—*Ampalideae* । हिं.—दाख , अंगूर , मुनक्का , किशमिश ; उर्दु.—मुनाखा ; बं.—मनेक्का , आंगूर , किसमिस ; म.—द्राक्ष ; गु.—द्राक्ष , धराख , मुद्राका ; तै.—द्राक्षा ; क.—द्राक्षे ; कों.—द्राक्षा ; त.—तिराक्षै , तिरादचैक्कोटि , मिन्तिरि ; सिं.—वेळ्मिदि , मुद्दिरप्पलं ; मल.—मुन्तिरि മുന്തിരി , मुन्तिरिङ्ङा ; दखा.—अंगूर ; पा.—किशमिश , अंगूर , मुनक्का ; अ.—एनबजबीब , हबुसजबीब ; जर्मन्.—Edleweinrebe; Rosinen ; फ्र.—Vigne cultive ; इं.—Grapewine , Raisins ; ल.—*Vitis vinifera; Uvae passae* । नामगुणलक्षणानि—"द्राक्षा स्वादुफला प्रोक्ता तथा मधुरसाऽपि च । मृद्वीका हारहूरा च गोस्तनी चापि कीर्तिता । द्राक्षा पक्वा सरा शीता चक्षुष्या बृंहणी गुरुः । स्वा-

द्विपुनर्नवम् । चि. १२ etc. शुक्लपुनर्नवा रक्तपुनर्नवा च ॥

द्विबला । शा. २ etc. बलाद्वयम् ॥

द्विबृहती । सू. १५ etc. बृहतीद्वयम् ॥

द्विमेदा । शा. २ etc. मेदा महामेदा च । अभावे अश्वगन्धा शारिबा च ग्राह्ये ॥

द्विरजनी । सू. १० etc. निशाद्वयम् ॥

द्विरदेन्द्रः । शा. ३. गजश्रेष्ठः । see गजः ॥

द्विलवणम् । चि. ८. लवणद्वयम् ॥

द्विवार्ताकी । उ. २. बृहतीद्वयम् ॥

द्विव्याघ्री । उ. २२. बृहतीद्वयम् ॥

द्विशारिबा । उ. ६. सारिवे । सारिबा उत्पलसारिबा च ॥

द्विस्थिरा । उ. ६. स्थिरे । पृश्निपर्णी शालपर्णी च । पर्णीनीति सुश्रुतपाठः । तत्र पर्णीनीचतुष्कमवश्यं ग्राह्यमिति हाराणचन्द्रः । "सौम्या पृथक्पर्णीनी"चेति पठति कलिकाकारः ॥

द्विहरिद्रा । उ. १०. निशाद्वयम् ॥

द्वीपी । सू. ६ etc. द्वौ वर्णौ वीयते द्वीपोऽस्त्यस्य वा तन्निवासित्वाद् द्वीपी । द्वीपं द्विवर्णं चर्म तदस्त्यस्य इति वा । चित्रकायो व्याघ्रः । हिं.—तेंदुआ ; बं.—चितावाघ ; म.—चिता ; त.—चिरुत्तैप्पुलि ; सिं.—दिविया ; मल.—पुळिप्पुलि പുള്ളിപ്പുലി ; इं.–Panther, Leopard ; ल.—*Felis pardus* । नामानि—"चित्रको वेगवांश्चित्रो द्वीपी स्याद्दीर्घदंष्ट्रकः" । म. पा । मांसगुणाः—"द्वीपी स्निग्धो भवेच्चोष्णो मधुरो लघुदीपनः । वातघ्नः पित्तशमनो बल्यो वृष्यो रुचिप्रदः" । रा. नि ॥

**द्वीपी** । सू. १५ etc. चित्रकः । मुष्ककादिगणे 'चित्रक' इत्येव सुश्रुतपाठः ॥

**द्व्यंशुमती** । उ. ३. अंशुमतीद्वयम् । पृश्निपर्णी शालपर्णी च ॥

---

## ध।

**धत्तूरः** । उ. ३८. धयति धातून् । धेट् पाने । **उपविषजातीयस्वनामप्रसिद्धक्षुपविशेषः** । N. *O.—Solanaceae* । **हिं.**—धतूरा, धतुर, धत्तूरा; **उर्दु.**—धतूरा; **बं.**—धुत्तूरा; **म.**—धोत्रा, धोतरा; **दखा.**—धतूरा; **कों.**—दुतुरो; **काश्मी.**—दथिर; **पञ्जा.**—धतूरा; **गु.**—धंतुरो, धुंतुरो; **तै**—उम्मेत्तचेट्टु, दुत्तूरमु; **क.**—दत्तूर, दुत्तूरि, उन्मत्त, उम्मत्त, महुगुणिकेगिड, मदकुणिगे; **त.**—ऊमत्तै, इलकं, तुत्तूरं; **तु.**—उंबे; **सिं.**—अत्तन; **मल.**—उम्मं ഉമ്മം, उम्मत्तं; **पा.**—तातुलह, कौसमासाब; तातूरहा; **अ.**—जोजमासील; जौझ-उला-मथिल; **बर्मा.**—पादयिन्; **मलायी.**—कचुभङ्; **फ्रा.**—Datura fatesux; **जर्मन्**—Weichhaariger stechapfel; **इं.**—Stramony, Thorn apple; **ल.**—*Datura alba & D. Fastuosa* । *Datura Stramonium* । "सितनीलकृष्णलोहितपीतप्रसवाश्च सन्ति धत्तूराः। सामान्यगुणोपेतास्तेषु गुणाढ्यस्तु कृष्णकुसुमः स्यात्" । रा. नि । **नामगुणाः**—"धत्तूरधूर्तधुत्तूरा उन्मत्तः कनकाह्वयः । देवता कितवस्तूरी महामोही शिवप्रियः । मातुलो मदनश्चास्य फले मातुलपुत्रकः । धत्तूरो मदवर्णाग्निवातकृज्ज्वरकुष्ठनुत् । कषायो मधुरस्तिक्तो यूकालिक्षाविनाशकः । उष्णो गुरुर्व्रणश्लेष्मकण्डूकृमिविषापहः" । भा. प्र । "धुत्तूरादेश्च यद्बीजमन्यच्चोपविषञ्च यत् । क्षीरेण पाचयेद्दोलायन्त्रेण शु-

द्धिमाप्नुयात्" इति सारकौमुदी । बीजपत्रमूलादिकं ग्राह्यम् ॥

**धत्तूरकः** । उ. २४. धत्तूरः ॥

**धनञ्जयः** । उ. २२. **अर्जुनवृक्षः** । see **अर्जुनः** । "धनञ्जयः सर्पभेदे ककुभे देहमारुते । पार्थेऽग्नौ" इति ॥

**धनिका** । चि. ८. धनिवत् कायति । **धान्यकम्** ॥

**धन्वनः** । सू. २४. **रक्तकुसुमस्वादुफलपिच्छिलत्वग्विशिष्टो बदरीदलाकारदलो वृक्षभेदः** । शाल्मलीषु मध्ये मरुदेशीयपर्वतस्था हि नितरां पिच्छिलनिर्यासो भवन्ति तदिदमुच्यते इति केचन वृद्धवैद्याः । हिं.—धामिन, धाम्नी ; बं.—धामनागाछ ; म.—धामणी ; गु.—धामण ; क.—उदुवे ; सिं.—चलंगुणु ; उरणा इति केरलेष्वके । विल्मरं इति मदननिघण्डुः । Grewia elastica इत्यविनाशचन्द्रः । नामानि—"धन्वनो रक्तकुसुमो धनुर्वृक्षो महाबलः । रुजापहः पिच्छिलको रूक्षः स्वादुफलश्च सः" । रा. नि । त्वक्पक्वफलानि ग्राह्याणि । गुणाः—"धन्वनः कटुकोष्णश्च कषायः कफनाशनः । दाहशोषकरो ग्राही कण्ठामयशमप्रदः । रा. नि । "धन्वङ्गः कफपित्तास्रकासहृत्तुवरो लघुः । बृंहणो बलकृद्रूक्षः सन्धिकृद्व्रणरोपणः" । भा. प्र ॥

**धन्वमांसम्** । सू. २० etc. **निर्जलदेशपशुमांसम्** । see **जांगलम्** ॥

**धन्वयवासकः** । चि. १. धन्वनो मरुभूमेर्यवासः तत्रोत्पन्नत्वात् । **दुरालभा** ॥

**धन्वयासः** । चि. १ etc. धन्वनो यासः । मरुभवत्वात् । **दुरालभा** ॥

**धन्वयासकः** । सू. १०. **दुरालभा** ॥

**धन्वरसौदनम्** । सू. १९. जांगलमांसोद्भवरसेन मिश्रओदनम् ॥

**धन्वोत्थरसः** । सू. १६ etc. जांगलदेशसमुद्भूतमृगपक्षिणां मांसाज्जातो रसः । जांगलजीवोंका मांसरस ॥

**धमनी** । शा. ४ etc. **सिराभेदः** । "धमानाद्धमन्यः" इति चरकसूत्रे । Arteries । "धमन्यो नाम हृदयाद्बहिर्मुखं रक्तवहाः प्रणालिकाः । ता जीवच्छरीरे अरुणाभाः, मृतके तु पाण्डुवर्णाः, स्थूलप्राचीरिकाः, ईषत् कठिनस्पर्शाश्च । तासु सर्वत्र उज्वललोहितं रक्तं प्रवहति, अन्यत्र फुम्फुसाभिगाया धमन्यास्तच्छाखाप्रशाखाभ्यश्च । फुस्फुसाभिगा हि धमनी सिराभिरानीतमविशुद्धं रक्तं प्राणवायुसंयोगाय फुस्फुसौ नयति स्वशाखाप्रशाखाभिरिति विशेषः" । प्र. शा ॥

**धवः** । सू. १५ etc. **दृढशुष्कदारुर्मधुरत्वग्विशिष्टो पाण्डुरवृक्षभेदः** । N. O.—*Combretaceae* । हिं.—धय, धौं, धाय, धाउरा; बं.—धाऊया गाछ; म.—धावडा; गु.—धावडो; तै.—येल्लमुद्दि, चेरिमम् शेरातिनामु; नारिंजचेट्टु; क.—सिरिवरु, बेजुलु । वमा इति केरलेष्वेके; इं.—Crane tree; ल.—*Conocarpus latifolius or Anogeissus latifolia* । **नामानि**—"धवो दृढतरुर्गौरः कषायो मधुरत्वचः । शुक्लवृक्षः पाण्डुतरुर्धवलः पाण्डुरो नव" । रा. नि । अस्य त्वगनिर्यासौ ग्राह्यौ । पक्वफलं च ग्रहणीयमित्येके । **गुणाः**—"धवः शीतः प्रमेहार्शःपाण्डुपित्तकफापहः । मधुरस्तुवरस्तस्य फलं च मधुरं मनाक्" भा. प्र । **अन्यच्च**—"धवः कषायः कटुकः कफघ्नोऽनिलनाशनः । पित्तप्रकोपनो रुच्यो विज्ञेयो दीपनः परः" । रा. नि ॥

**धातकी** । सू. १५ etc. धातुं करोति । धातुकीति पाठः । धातुरक्ता धातुकी, धातुपुष्पीत्वात् इति क्षीरस्वामी । धातुं करोतीति रामा-

शमी । स्वनामप्रसिद्धवृक्षविशेषः । N. O.—*Lythraceæ* । हिं.—धायके फूल, धावइ, धवा इयेके ; बं.—धाइफूल ; म.—धायटी फूल, पुलशाथि ; गु.—धावडीना फूल ; तै.—सेरिंगि, जार्गि, एर्रापुवुं, आरेपुव्वु, धातुकीपुड ; क.—धाथिफूल ; त.—तातरिप्पूवु, काट्टात्तिप्पू ; सिं.—मयिलमल्, मलइत्तमल्, मलितमल्, मल.—तातिरिप्पूवु താതിരിപ്പൂവ് ; मुंबापुर्याम्.—धायातिस ; नेपाली.—दाहेरी ; उत्.—जातिकी ; पञ्जा.—गुलधावा ; ल.—*Woodfordia floribunda* । नामानि—"अग्निज्वाला सुभिक्षा च धातकी धातुपुष्पिका । मदहेतुः स्वादुपुष्पी पार्वती चेन्दुपुष्पिका" । स. नि । पुष्पं ग्राह्यम् । गुणाः—"धातकी कटुका शीता तुवरा मदकारिणी । तिक्ता लघ्वी च संप्रोक्ता गर्भस्थापनकारिणी । रक्तप्रवाहिकापित्ततृड्विसर्पव्रणापहा । कृम्यतीसारहननी रक्तदोषरुजापहा । पुष्पमस्याः स्वादु रूक्षं रक्तपित्तातिसारजित् । विषनाशकरं चोक्तं मुनिभिस्तत्त्वदर्शिभिः" । नि. र ॥

**धातकीपुष्पम्** । चि. २ etc. धातक्याः पुष्पम् । धायके फूल, धावेके फूल ॥

**धातुः** । सू. १ धारणाद्धातवः । देहधारकवस्तुविशेषः । प्रीणनजीवनचालनस्नेहनधारणगर्भोत्पादनादिकराणि शारीरोपादानानि तानि धातवः । ते सप्तसंख्याः । "रसासृङ्मांसमेदोऽस्थिमज्जशुक्राणि धातवः" इति । "श्लेष्मादि रसरक्तादि महाभूतानि तद्गुणाः । इन्द्रियाण्यश्मविकृतिः शब्दयोनिश्च धातवः" इत्यमरः ।

**धातुः** । सू. ७ etc. लोहादिः । "हेमतारारनालाश्च ताम्रवंगे च तीक्ष्णकम् । कांस्यकं कान्तलौहञ्च धातवो नव कीर्तिताः" ॥

**धातुकी** । उ. १. धातकी ॥

**धात्री** । सू. ३ etc. धीयते । धेट् पाने । **आमलकः** । "धात्री स्यादुपमातापि क्षितिरप्यामलक्यपि" इत्यमरः ॥

**धात्री** । उ. १. धयन्त्येनां धत्ते च धात्री । **उपमाता** । "धात्री स्यादुपमाता" इति हलायुधः । हिं.—दूध पिलाई दाई ; बं.—धाइमा ; मल.—वळर्त्तम्मा വളർത്തമ്മ, आया । Foster-mother, Wet-nurse ॥

**धात्रीफलम्** । सू. १० etc. **आमलक्याः फलम्** । हिं.—आंवलेके फल ; मल.—नेल्लिक्का നെല്ലിക്ക । see **आमलकः** ॥

**धानका** । सू. १५ etc. धीयते । **धान्यकम्** । गुडूच्यादिगणे कुस्तुंबुर्विति सुश्रुतपाठः ॥

**धाना** । सू. ६ etc. धीयन्ते धानाः । भर्जितयवः । **यवलाजा** । धानाः शुष्कभृष्टयवाः, उलुंबकाः सरसा भृष्टयवाः इति डल्हणः । धानोलुञ्चकमित्येकपदमिति हाराणचन्द्रः । हिं.—भुने हुए यव या गेहूं, बहुरी ; मल.—यवमलर् യവമലർ । Fried barley । "यवास्तु निस्तुषा भृष्टाः स्मृता धाना" इति भावमिश्रः । "ये के च व्रीहयो भृष्टास्ते लाजा इति कीर्तिताः । यवादयश्च ये भृष्टा धानास्ते परिकीर्तिताः" । रा. नि । "धाना भृष्टयवेऽङ्कुरे धान्याके चूर्णसक्तुषु" इति हैमः । **गुणाः**—"धानाः स्युर्दुर्जरा रूक्षास्तृट्प्रदा गुरवश्च ताः । तथा मेहकफच्छर्दिनाशिन्यः संप्रकीर्तिताः" । भा. प्र । **अन्यच्च**—"वातलाः कफरोगघ्ना वातवर्चोनुलोमनाः । धानासंज्ञास्तु तेऽतीव दुर्जरा लेखनाः स्मृताः" । रा. व ॥

**धान्यम्** । सू. १४ etc. **धान्यकम्** । "धन्याकं धान्यकं धान्यं कुस्तुंबुरुः धनीयकं" इति रभसः ॥

**धान्यकम्** । शा. २ etc. धान्यमिवाकृति, धन्यते भक्ष्यार्थिभिरिति वा । धन शब्दे । **स्वनामख्यातपण्यद्रव्यम्** । N. O.—*Umbelliferæ* । हिं.—धनिया, कोथुंबुरि, कोत्तमिर ; उर्दु.—

धनिया; बं.—धने ; म.—धने, कोथिंबिर ; गु.—धाणा, कोथमीर ; कों.—कोत्तुंबरी ; तै.—कोतिमिरि, कोथुमिलु, धनियालु; क.—कोत्तुंबरि, कोत्तंबरि ; त.—कोत्तुमल्लि, कोत्तमल्लि, उत्तंपरि ; तु.—कोत्तंबरि ; सिं.—कोत्तमल्लि, कोतंबुरु ; मल.—कोत्तंपालरि കൊത്തമ്പാലരി, मल्लि ; पा.—किश्निज, तुख्मे कस्तीझ ; अ.—कुसबरा, खजबुरा ; ग्रीक्.—कोरियुन्, Koriyun ; फ्र.—Coriander cultive ; जर्मन्.—Gemeiner coriander ; इं.—Coriander ; ल.—*Coriandrum sativum* । नामानि—"धान्यकं धान्यका धान्या धानी धानेयकं तथा । कुस्तुंबुरुश्चालुका च छत्रधान्यं वितुन्नकम्" । ध. नि । फलं ग्राह्यम् । गुणाः—"धान्यकं तुवरं स्निग्धमवृष्यं मूत्रलं लघु । तिक्तं कटूष्णवीर्यञ्च दीपनं पाचनं स्मृतम् । ज्वरघ्नं रोचकं ग्राहि स्वादुपाकि त्रिदोषनुत् । तृष्णादाहवमिश्वासकासकार्श्यक्रिमिप्रणुत् । आर्द्रन्तु तद्गुणं स्वादु विशेषात् पित्तनाशि तत्" । भा. प्र ॥

**धान्या** । उ. ३०. धान्यकम् । यवास इत्येके ॥

**धान्यांबु** । शा. १ etc. तण्डुलोदकम् । धान्यकक्वाथ इति केचित् ॥

**धान्याम्लम्** । सू. ५ etc. धान्येषु अभिषुतं अम्लम् । काञ्जिकविशेषः । "तद्धान्ययोनि धान्याम्ल"मिति वैजयन्ती । हिं.—कांजी ; म.—तंदुळादि धान्याची पेजकरून आंबवितात ती ; मल.—वेप्पुकाटि വെപ്പുകാടി, काटि । Sour gruel made of fermented grain । तत्साधनप्रणाली यथा—"धान्याम्लं शालिचूर्णादिकोद्रवादिकृतं भवेत् । धान्याम्लं धान्ययोनित्वात् प्रीणनं लघु दीपनम् । अरुचौ वातरोगेषु सर्वेष्वास्थापनेषु च" । भा. प्र । अन्यच्च—"प्रस्थं षष्टिकधान्यस्य नी-

रप्रस्थद्वये क्षिपेत् । आधारभाण्डं संरुध्य भूमेर्गर्भे निवापयेत् । पश्चादथ समुद्धृत्य वस्त्रपूतञ्च कारयेत् । ततो जातरसं योज्यं धान्याम्लं सर्वकर्मसु" । इति तन्त्रान्तरे ॥

**धान्याम्लबीजम्** । सू. ३०. अधोभागस्थितं कांजिकद्रव्यम् । अम्लकाञ्जिकबीजानीति सुश्रुतपाठः । मल.—काटिमट्टु കാടി മട്ടു, काटियूरल्, काटिग्गिलरि । see **किण्वम्** ॥

**धान्वबैलरसः** । चि. ३. धान्वा जांगलाः, बैला बिलेशयास्तन्मांसैः कृतो रसः ॥

**धाम** । सू. ७. तेजः । हिं.—चमक ; मल.—तेजस्सु തേജസ്സ്, ओजस्सु, शोभा । Lustre । "धाम शक्तौ प्रभावे च तेजोमन्दिरजन्मसु" इति विश्वः ॥

**धामार्गवः** । चि. १९. धाम ऋच्छति । ऋ गतौ । गोलाकारनीलफला पीतपुष्पा, महाकोशातकी । "धामार्गवस्तु पुंसि स्यादपामार्गे च घोषके" इति मेदिनी । N. O.—*Cucurbitaceae* । हिं.—घिया तोरई, नेनुआ ; बं.—हस्तिघोषा, धुन्दुल ; म.—घोसाळें, पारोसा, मिलके ; गु.—गलकां ; तै.—पुछाबिरकाया, तुनिबीरा ; क —करहीरे, तुप्पीरी ; मुंबापुर्याम्.—तुरी ; त.—यानैपीर्क्कु ; सिं.—वेटकोलु ; मल.—आनप्पीच्चि ആനപ്പീച്ചി, वन्पीच्चि, पेरुंपीरं ; पा.—खियार ; ओरीसा तरडि ; नेपाली.—पालो ; सिन्धी.—लियासादा ; आसामी.—भद्करोला ; इं—Smooth luffa, Wash-sponge ; ल.—*Luffa aegyptica, L. Cylindrica, L. Pentandra* । नामगुणाः—"महाकोशातकी प्रोक्ता हस्तिघोषा महाफला । धामार्गवो घोषकश्च हस्तिपर्णश्च स स्मृतः । महाकोशातकी स्निग्धा रक्तपित्तानिलापहा" । भा. प्र । अन्यच्च—"हस्तिकोशातकी स्निग्धा मधुराऽ

ध्मानवातकृत् । वृष्या कृमिकरी चैव व्रणसंरोपणी च सा" । रा. नि । मध्यमफलं ग्राह्यम् ॥

**धारणम्** । सू. ७. उपस्तंभ इति चरकसंग्रहयोः पाठः । **स्तंभः** । **हिं.**—खम्भा ; **म.**—खांब ; **सिं.**—कणुव ; **त.**—तूण् ; **मल.**—तूण् തൂൺ । Pillar ॥

**धारागृहम्** । सू. ३. यत्र रचनाविशेषेण रचिता जलसीकराः प्रसरन्ति तद्धारागृहम् । जलके फुवारों वाले घर । धारागृहं नाम चतुस्तंभप्रतिष्ठितमदृश्यप्रस्रवाभिर्निष्यन्दिनीभिर्जलधाराभिः परिवृतं मण्डपमितीन्दुः । A house furnished with artificial jets of water ॥

**धारोष्णम्** । सू. ५ etc. **सद्योदुग्धम्** । दोहनकालधारापातोष्णं क्षीरम् । धारायामुष्णमिति हेमाद्रिः । दुहनेके समय धारोंसे गिरता हुवा गर्म दूध । Fresh warm milk; Warm milk as it comes out of the udder (of the cow etc) । **गुणाः**— "धारोष्णं गोपयो बल्यं लघु शीतं सुधासमम् । दीपनञ्च त्रिदोषघ्नं तद्धाराशिशिरं त्यजेत् । धारोष्णं शस्यते गव्यं धाराशीतन्तु माहिषम् । शृतोष्णमाविकं पथ्यं शृतशीतमजापयः । आमं क्षीरमभिष्यन्दि गुरु श्लेष्मामवर्द्धनम् । ज्ञेयं सर्वमपथ्यं तु गव्यमाहिषवर्जितम्" । भा. प्र ॥

**धावनी** । चि. १. धावति प्रसरति धावनी । **कण्टकारी** । निदिग्धिकेति चरकसंग्रहयोः पाठः । सिंहीति सुश्रुतः ॥

**धावन्यौ** । सू. २०. **द्विबृहती** । बृहतीद्वयमिति संग्रहपाठः ॥

**धूमः** । उ. २२. **गृहधूमः** ॥

**धूमनेत्रकम्** । सू. २१. **धूमपाननालिका** । Smoking tube ।

लक्षणम्—"धूमनाडी भवेत्तत्र त्रिखण्डा च त्रिपर्विका । कनिष्ठिकापरीणाहा राजमाषागमान्तरा" । भा. प्र ॥

**धूमिका** । सू. ६. चटकविशेषः । धूम्याटः इति हेमाद्रिः । हिं.—गरगैया । Butcher bird, shrike । ल.—*Lanius collurio* । "भृङ्गः कुलिंगो धूम्याट" इति हलायुधः ॥

**धूमौषधः** । सू. २१. कुष्ठतगरवर्ज्यो एलादिवर्गः । तथा च निमिः—"धूमो हि वक्रकुष्ठाभ्यां विलालयति शक्तितः । मस्तिष्कं तद्धि विष्यण्णं नाशाय प्रतिपद्यते" इति ॥

**धेनुः** । शा. ६ धयति सुतान् धेनुः । गौः ॥

**धौतगुडम्** । सुसंस्कृतविमलगुडम् ॥

**ध्यामम्** । चि. १. ध्यामकम् । "ध्यामं दमनके गन्धतृणे श्यामेऽभिधेयवत्" इति विश्वः ॥

**ध्यामकम्** । सू. १५ etc. ध्यायते पशुभिर्ध्यामं धूसरवर्णं वा । गन्धतृणः । कुशविशेष इत्येके । N. O.—*Graminaceae* । हिं.—रोहिस, रोहीतृण, सौंधिया, गंधेजघास, हरीचाहा; बं.—रामकर्पूर; म.—सुगन्धरोहिषतृण, रोहिसगवत; गु.—रोंस, रौसा; गन्धवेला, लिलिचा; तै.—निम्मगड्डि, चिप्पगड्डि, कामंचिगड्डि; क.—कामंच, कावंचे, काचि, मज्जिगे, वासने, नेसे, लावंचिहुल्लु; किरुगंजणि; कों.—ताकातण; त.—कावट्टंपुल्, मान्तप्पुल्, कर्प्पूरप्पुल्; तु.—चातप्पु; मल.—कोतिप्पुल्लु കൊതിപ്പുല്ല്, संभारप्पुल्लु, कावट्टप्पुल्लु, नान्मुकप्पुल्लु; बर्मा.—मिक्कोतियु; पा.—खवालमानून; अ.—अजखर; इं.—Lemon grass, Ginger-grass, Sweet-rush; ल.—*Andropogon citratis*, *A. Schoenanthus* ।

नामानि—"कत्तृणं सकलं भूतिर्भूतिदं रौहिषं तृणम् । ध्यामकं श्यामकं पौरं पाटलं देवदंशकम्" । ध. नि । सर्वांशो ग्रहणीयः । गुणाः—"रौहिषं तुवरं तिक्तं कटुपाकं व्यपोहति । हृत्कण्ठव्याधिपित्तास्रशूलकासकफज्वरान्" । भा. प्र । अभावे उशीरमित्येके । see **भूस्तृणम्** ॥

**ध्वजः** । सू. २. देवादीनां आरोपिता पताका । देवतागारमस्तके शूलचक्रादिसंबद्धः पटेनोपलक्षित इति पदार्थचन्द्रिका । यूपादिरिति हेमाद्रिः ॥

## न ।

**नकुलः** । शा. ५ etc. नास्ति कुलमस्य । स्वनामख्यातजन्तुः । "स्थूलपुच्छो रक्तनेत्रो बभ्रुदेहः स नाकुलः" इति । हिं.—न्यौला, नेवला, नौला ; बं.—नेउल, वेजि ; म.—मुंगुस ; तै.—नकुलमु ; क.—मुंगलि ; त.—कीरिप्पिळ्ळै ; सिं.—मुगटिया ; मल.—कीरि കീരി ; इं.—Mungoose, Mangoust, Ichneumon ; ल.—*Herpestes mungo; Viverra ichneumon* । नामानि—"नकुलः पिंगलो बभ्रुः सर्पारिः सर्पभक्षकः" । म. पा । गुणाः—"गुरूष्णं स्निग्धमधुरं बलोपचयवर्धनम् । वृष्यं परं वातहरं नाकुलं मांसमुच्यते" । मार्जारसमगुण इति मदनपालः ॥

**नक्तकः** । चि. १४. वस्त्रखण्डः । लक्तक इति केषांचन पाठः ॥

**नक्तमालः** । सू. १० etc. नक्तं रात्रौ आ अलति; नक्तं मालो धारणमस्य इति वा । करंजः । बृहत्करंज इत्येके ॥

**नक्ताह्वः** । उ. २५. करंजः ॥

**नक्रः** । सू. ६. क्रामति दूरस्थलम् इति रामाश्रमी । क्रमु पादवि-

क्षेपे । न क्रामति नक्रः इति क्षीरस्वामी । कुंभीरभेदः । हिं.—घड़ियाल; म.—सुसर; सिं.—मोरुय; मल.—चींङ्कण्णि ചീങ്കണ്ണി, मण्णन्; इं.—Alligator । नाका इति लोके । नक्रराज एव कुंभीरः । "भवेन्नक्रस्तु कुंभीरो गलग्राहो महाबलः" । रा. नि । "नक्रस्तु कुंभीरः" इत्यमरवचनमपि दृश्यते ॥

**नखम्** । चि. १ etc. न खनति । गन्धद्रव्यविशेषः । "नखं पुनर्गन्धद्रव्ये नखः करजषण्डयोः" इति हैमः । "नखी पञ्चविधा ज्ञेया गन्धार्थं गन्धतत्परैः । काकोदुंबरपत्राभा तथोत्पलदलायता । काचिदश्वखुराकारा गजकर्णसमा परा । वराहकर्णसंकाशा गन्धकर्मणि गर्हिता" इति । "लवङ्गकुसुमं देयं नखस्याभावतः पुनः" इति भावमिश्रः । हिं.—नख ; बं.—नखी ; म.—नखला ; गु.—नखला ; तै.—नखमुंचिप्प ; क.—नख ; सिं.—वक्निय ; मल.—असुरनखं അസുരനഖം, नागुणं ; पा. – नाखूनपर्या ; अ.—अजफारुत्तीव । Lid of the shells of Purpura and Murex । This being flat and something like a nail explains the origin of its name ; ल.—*Unguis odoratus* ; *Helix aspera* इत्येके । नामगुणाः—"नखं व्याघ्रनखं व्याघ्रायुधं तच्चक्रकारकम् । नखं स्वल्पं नखी प्रोक्ता हनुर्हट्टविलासिनी । नखद्रव्यं महच्छ्लेष्मवातास्रज्वरकुष्ठहृत् । लघूष्णं शुक्रलं वर्ण्यं स्वादु व्रणविषापहम् । अलक्ष्मीमुखदौर्गन्ध्यहृत् पाकरसयोः कटु" । भा. प्र ॥

**नतम्** । सू. १५ etc. तगरम् । कल्याणकघृतयोगे नतस्थाने 'अनन्ता' इत्येव चरकपाठः । नतमित्येव शार्ङ्गधरः ॥

**नदीमाषकम्** । सू. ६. कन्दशाकभेदः । नन्दीमाषकमिति पाठः । नन्दीमासवक इति ख्यात इति चक्रः । नदीमाष इत्येव चरकप्रसादनी । वानीरक इति हेमाद्रिः । जलालुकभेद इति पाठ्यकारः । नन्दी तुण्डेरिका माषको वास्तुल इति पदद्वयमित्यरुणदत्तः । बर्बे-

मानक इति गंगाधरश्चरकटीकायाम् । गुणाः—"विशदं गुरु शीतं च समभिष्यन्दि चोच्यते" । च. सू. २७ ॥

**नन्दी** । सू. ६ etc. अधोमुखपत्रशाखो अश्वत्थविशेषः । पार्श्वपिप्पल इति लोके इति डल्हणः । N. O.—*Urticaceae* । हिं.—वेलिया पीपल ; वेलियापीपरा ; बं.—गया अश्वत्थ ; गु.—वेलियो पीपलो ; तै.—वद्दिचेट्टु ; क.—काड अश्वत्थमर ; मल.—चेलामरं ചേലമരം , कल्लरयाल् ; नन्द्यारवट्ट इति भास्करव्याख्या । ल.—*Ficus arnottiana* । नामगुणाः—"नन्दीवृक्षोऽश्वत्थभेदः प्ररोही गजपादपः । स्थालीवृक्षः क्षयतरुः क्षीरी च स्याद्वनस्पतिः । नन्दीवृक्षो लघुः स्वादुस्तिक्तस्तुवर उष्णकः । कटुपाकरसो ग्राही विषपित्तकफास्रजित्" । भा. प्र । अस्य त्वगादिकं ग्राह्यम् । पटोलादिशाकवर्गव्याख्यायां मेषशृङ्गीति हेमाद्रिः । जयवृक्ष इत्यपरे ॥

**नन्दीमाषकम्** । see **नदीमाषकम्** ॥

**नन्दीमुखी** । सू. ६. नान्दीमुखीति पाठः । गोधूमविशेषः । हिं—लंबी सफेद गेहूँ ; म.—खपले गहूं ; मल.—नीळन्कोतम्पु നീളൻകോതമ്പ । नामगुणाः—"निःशूको दीर्घगोधूमः क्वचिन्नन्दीमुखाभिधः । शुक्ला बृंहणी पथ्या तद्वन्नन्दीमुखी स्मृता" । भा. प्र । पुराणं ग्राह्यम् । दीर्घसूक्ष्मो गोधूम इति केचित् । मर्कटहस्ततृणभेद इत्यन्ये । यविका इति चक्रपाणिदत्तः । मधुरस्निग्धशीतलेति चरकः ॥

**नन्दीवृक्षः** । सू. १५ etc. see **नन्दी** । काश्मरी , अन्ये गर्दभाण्डमाहुरिति डल्हणः । नन्द्यावर्त इत्येके । अश्वत्थाकारः क्षीरद्रुमविशेषस्तदभावे 'तुंद' इति ख्यातस्य व्यवहार इति भाष्यकारः ॥

**नमस्करी** । सू. १५. नमस्करणशीला ; अञ्जलिरूपपत्रत्वात् ।

लज्जावन्ती। see समंगा। "लज्जालुस्तु नमस्कारी बदर्यञ्जलिकारिका"। इति वैजयन्ती ॥

**नयनौषधम्**। चि. ११. अक्षिभैषज्यम्। श्वेतरोध्रः। श्वेतधातुकासीसमित्येके। तन्न, सुश्रुतपाठोऽप्यत्र रोध्र इत्येव॥

**नलः**। सू. १५. नडयत्यर्दयति नडः। नल गन्धे। दूर्वाकारांकुरोऽन्तःसुषिरः स्वनामख्याततृणविशेषः। N. O.—*Gramineae*। हिं.—नरनल; नल; बं.—नल; म.—ऊधुदेवनळ; गु.—नडगल, नाळी; तै.—किकेश गड्डि, मुंगुण्डुरु; क.—देवनाल; त.—कोरुकै, तण्टरुम्पुल्लु; सिं.—बट; मल.—ईट्टा ഇത്ത, ओटा; इं.—Reed; ल.—*Arundo karka*। नामानि—"नडो नटो नलश्चैव स च पोटगलः स्मृतः। धमनो नर्तको रन्ध्री शून्यमध्यो विभीषणः"। ध. नि। मूलं ग्राह्यम्। गुणाः—"नलस्तु मधुरस्तिक्तः कषायः कफरक्तजित्। उष्णो हृद्बस्तियोन्यर्तिदाहपित्तविसर्पहृत्"। भा. प्र। "नलः पोटगले राज्ञि पितृदेवे कपीश्वरे। कमलेऽपि च नल्यां च क्रमेण क्लीबयोषितोः" इति मेदिनी॥

**नलकम्**। उ. २७. नाडीवत्सरन्ध्रमस्थिपर्वन्। नलीके समान छेदवाली हड्डी॥

**नलदम्**। सू. २१ etc. नलं गन्धं ददाति, दयते वा। मांसी। अञ्जनप्रतिषेधाध्याये 'नलदवालक' मित्यत्र मांसीत्येव सुश्रुतपाठः। तिमिरप्रतिषेधाध्याये 'चूर्णितं नलदपत्रविमिश्रं" इत्यत्र नलदं कमलमिति केचित्। "नलदं स्यात् पुष्परसोशीरमांसीषु न द्वयोः" इति मेदिनी॥

**नालिका**। सू. २५. वेण्वादिनाडी॥

**नलिका** । चि. १७ etc. उत्तमारणी । see **करंभा** । विद्रुमल्लते-तीन्दुः ॥

**नलिनी** । चि. ७. पद्मिनी ॥

**नवधान्यादिवर्गः** । सू. २९.'नवधान्यमाषतिलकलायकुलत्थनिष्पावहरितकशाकाम्ललवणकटुकगुडपिष्टविकृतिवल्लूरशुष्कशाकाजाविकानूपौदकमांसवसाशीतोदककृशरापायसदधिदुग्धतक्रप्रभृतीन् परिहरेत् । तक्रान्तो नवधान्यादिर्योऽयं वर्ग उदाहृतः । दोषसंजननो ह्येष विज्ञेयः पूयवर्धनः' । सु. सू. १९ ॥

**नवनीतम्** । सू. ५ etc. दध्नो मथितान्नवं तत्कालं नीतमुद्धृतं नवनीतं घृतयोनिः । दुग्धजसारः । हिं.-मक्खन, माखन, नोंनी; बं.—नुनी, माखन; म.—लोणी, मस्का; गु.—मांखण; तै.—वेन्ना, क.—बेणे, बेण्णि, वेणो : कों.—लोणी ; त.—वेण्णे ; सिं.—वेण्हरु ; मल.—वेण्णा വെണ്ണ ; पा.—मस्का ; अ.—जुब्द ; इं.—Butter ; ल.—*Butyrum* । सद्यस्कं ग्राह्यम् । नामानि—"नवनीतं दधिभवं घृतहेतुः शिशुप्रियम् । दधिमण्डोद्भवं चैव मन्थनोद्भवमेव च" । ध. नि । गुणाः—"शीतं बलाढ्यं मधुराम्लवृष्यं श्लेष्मावहं पित्तमरुत्प्रणाशम् । शोफक्षयक्षीणकृशातिवृद्धबालेषु पथ्यं नवनीतमुक्तम्" । इति । "दुग्धोत्थं नवनीतं तु चक्षुष्यं रक्तपित्तकृत् । वृष्यं बल्यमतिस्निग्धं मधुरं ग्राहि शीतलम् । नवनीतं तु सद्यस्कं स्वादु ग्राहि हिमं लघु । मेध्यं किञ्चित्कषायाम्लमीषत्तक्रांशसंक्रमात् । सक्षारकटुकाम्लत्वाच्छर्द्यर्शःकुष्ठकारकम् । श्लेष्मलं गुरु मेदस्यं नवनीतं चिरन्तनम्" । भा. प्र । "पुराणं नवनीतं यदभक्ष्यमशुभप्रदम् । बुद्धिजाड्यकरं तच्च निन्दितं व्याधिकृद् भवेत् । निष्ठीवनं पुनः श्लेष्महिक्कादीन्

वर्धयेच्च तत् । अतो भक्ष्यमिदं त्याज्यं नवनीतं चिरोत्थितम्" । इति पाकदर्पणे । तन्नानादुग्धजत्वाद्दशविधम् । अष्टविधमित्येके । उत्तरस्थानप्रथमाध्याये "स्तन्यानुपानं द्वौ कालौ नवनीतं प्रयोजयेत्" इत्यत्र नवनीतस्थाने मधुसर्पिरिति पठति सुश्रुतः ॥

**नाड्डिका** । उ. ३०. नलिकेति शिवपुरमुद्रितसंग्रहपाठः ॥

**नाकुली** । उ. ३६. नकुलानां प्रिया, न आकुलत्वं यया वा । **स्वनामख्यातमहाकन्दशाकविशेषः** । N. O.—*Apocynaceae* । हिं.—नकुलकंद, चन्द्रा; नाइ, छोटाचंद; बं.—नाकुली, चन्द्रा; म.—मुंगुसकांदा, मुंगुसवेल, सांपकंद, नावळी; गु.—नकुलकंद, नोळवेल, नोरवेल; कों.—नावळीचा वेल; तै.—पाताळगन्धि, पद्मपुचेदडु; क.—विषमुंगरी, सूत्रनाभि; मुंबापुर्याम्.—हरकाइ; सिं.—दनूकेटिय; पा.—विषमुंगरी, छोटा चांदा; उ.—छोटा चांदा; त.—चिवन्त अमलप्पोरि; मल.—चुवन्न अमल्पुरि ചുവന്ന അമല്പ്പൊരി, वण्टुवाळा इति चिट्टरत्ता इति च केचित् व्याख्यातारः । ल.—*Ranwolfia serpentina* । **नामानि**—"नाकुली सर्पगन्धा च सुगन्धा रक्तपत्रिका । ईश्वरी नागगन्धा चाप्यहिभुक् सुरसा तथा । सर्पादनी व्यालगन्धा ज्ञेया चेति दशाह्वया" । रा. नि । **गुणाः**—"नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत् । भोगिलूतावृश्चिकाखुविषज्वरकृमिव्रणान्" । भा. प्र । कन्दो ग्राह्यः । नाकुली द्विधा—नाकुली गन्धनाकुली च ॥

**नाकुलीद्वयम्** । चि. १ etc. नाकुली गन्धनाकुली च । सर्पाक्षी सर्पगन्धा चेति केचित् । गन्धनाकुली ईश्वरमूलकश्चेति केरलेष्वेके । शारिबा ईश्वरमूलकश्चेति कैरली । **गुणाः**—"नाकुलीयुगलं तिक्तं कटूष्णं च त्रिदोषनुत् । अनेकविषविध्वंसि किञ्चिच्छ्रेष्ठं द्वितीयकम्" ॥

**नागः** । चि. ११ etc. न अगः । नगे भवो वा । **गजः** । "नागो मतंगजे सर्पे पुंनागे नागकेसरे । क्रूराचारे नागदन्ते मुस्तके वारिदेऽपि च । देहानिलविशेषे च श्रेष्ठे स्यादुत्तरास्थितः । नागं रंगे सीसपत्रे स्त्रीबन्धे करणान्तरे" इति हैमः ॥

**नागः** । उ. ५. **नागकेसरः** । नखमितीन्दुः ॥

**नागकुसुमम्** । **चि. ५. नागकेसरः** ॥

**नागकेसरः** । **चि. ४.** नागप्रियाणि केसरवन्ति पुष्पाण्यस्य नागकेसरः । **स्वनामख्यातपुष्पवृक्षः** । N. O.—*Guttiferae* । हिं.—नागकेसर, नागचंपा ; बं.—नागेश्वर ; म.—नागकेशर ; गु.—नागकेशर ; कों.—नागचंपे ; तै.—नागकेसरालु, नागकेसरमुलु ; क.—नागसंपिगे, नागकेसरिमर ; तु.—नागसंपै, केशर ; त.—नाकेचुरं, नाकप्पू ; वेळ्ळैचम्पकं इत्येके ; मल.—नागप्पूमरं നാഗപ്പൂമരം, नागचम्पकं, नागप्पूवु ; सिं.—नाकेसुरु, नामल्रेणु ; बर्मा.—कैंगन्, गुंगेन् ; अ.—नारमुष्क ; फ.—Mesua Naghas ; इं.—Cobra's saffron ; ल.—*Mesua ferrea* । "कीटादिकेन रहितमभिनवमिह केवलं ग्राह्यं" इति वृद्धवैद्याः । "अभावे नागपुष्पस्य पद्मकेसरमिष्यते" इति भावमिश्रः । **नामगुणाः**—"नागपुष्पः स्मृतो नागः केशरो नागकेशरः । चांपेयो नागकिञ्जल्कः कथितः कांचनाह्वयः । नागपुष्पं कषायोष्णं रूक्षं लघ्वामपाचनम् । ज्वरकण्डूतृषास्वेदच्छर्दिहृल्लासनाशनम् । दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम्" । भा. प्र । पुष्पं ग्राह्यम् ॥

**नागदन्ती** । **सू. १५** etc. **स्थूलमूला दन्ती** । "नागदन्ती कटुस्तिक्ता रूक्षा वातकफापहा । मेधाकृद्विषदोषघ्नी पाचनी शुभदायिनी । गुल्मशूलोदरव्याधिकण्ठदोषनिकृन्तनी" । रा. नि ॥

**नागपुरीषम्** । उ. ३७. गजालिण्डः ॥

**नागपुष्पम्** । चि. ७. नागकेसरः ॥

**नागबला** । चि. ३ etc. नागानां बलकृत् । नागानामिव बलं यस्याः सा इति वा । **गोरक्षतण्डुला नाम बलाविशेषः** । N. O.—*Malvaceae* । हिं.—गंगेरन, गुलसकरी ; बं.—गोरखचाकुले, गोरखचाकुलिया ; म.—गांगटी, गांडे धामण ; तुकाटीखरेटी ; गु.—गंगटी, काण्टालो-बल ; दखा.—गुलसकरी ; कों.—ळेंचो ; क.—काडुमेन्थैया, वट्टगरुके ; पा.—शांलेते-दृशित ; सिं.—सिरिवेटिबेबिल ; मल.—त्रलिय ऊरकं വലിയ ഉറകം, आनस्तुत्ति ; ल.—*Sida spinosa* । **नामानि**—"गांगेरुकी नागबला खरगन्धिनिका झषा । विश्वदेवा तथाऽरिष्टा खण्डा ह्रस्वगवेधुका" । ध. नि । मूलं ग्राह्यम् । **गुणाः**—"मधुराम्ला नागबला कषायोष्णा गुरुस्तथा । कण्डूतिकुष्ठवातघ्नी व्रणपित्तविकाराजित्" । रा. नि ॥

**नागरम्** । सू. ६ etc. नागराख्ये देशे भवम् । शुण्ठी । "नागरं मुस्तके शुण्ठ्यां विदग्धे नगरोद्भवे" इति मेदिनी ॥

**नागरम्** । चि. ९. मुस्ता । "ह्रीबेरोत्पलनागरैः" । यदुक्तं जतूकर्णे "रक्तातिसारेऽजाक्षीरक्रोष्ट्रीघनजलोत्पलैः" इति ॥

**नागरकम्** । चि. ५. नागरम् ॥

**नागविघ्ना** । उ. ६. दन्ती । "ज्योतिष्मतीं नागविघ्ना"मित्यत्र "नागरं चे"त्येव डल्हणपाठः । नागच्छत्रेति केचित् । इन्द्रवारुणीभेद इति हाराणचन्द्रः । वृश्चिकपत्रिकेत्यपरे ॥

**नागाह्वम्** । सू. १५ etc. **नागकेसरपुष्पम्** ॥

**नागाह्वयम्** । सू. १५ etc. **नागकेसरपुष्पम्** ॥

**नागेन्द्रद्विजम्** । **उ. ५. गजदन्तम्** । हाथीदाँतका बुरादा । **मल.**– आनप्पल्लु ആനപ്പല്ലു । Ivory, tusk ॥

**नाडी** । **सू. ६. कलंबभेदः** । कालशाकम् । तिक्तपट्टशाक इति चक्रोपस्कारे । "पट्टशाकस्तु नाडीको नाडीशाकश्च स स्मृतः" इति भावमिश्रः । see **नाडीकलायम्** । "नाडीको रक्तपित्तघ्नो विष्टंभी वातकोपनः" । भा. प्र ॥

**नाडी** । **सिराभेदः** । नाड्यः पीताभाः । "नाड्यो नाम मृदुसूक्ष्मसूत्रसंघातमया नीरन्ध्रास्तन्त्र्योऽस्मिन् शास्त्रे । ताश्च समाश्रित्य संज्ञाचेष्टयोरभिप्रवृत्तिः । तासां भगवान् वायुरधिष्ठाता । स हि विभुरचिन्त्यशक्तिरखिलान् शब्दादीन् विषयानादत्ते प्रवर्त्तयति च नानाविधाश्चेष्टाः क्रमेण संज्ञावहाश्चेष्टावहाश्च नाडीरधिष्ठाय । तासां च निखिलानां मूलं मस्तिष्कं सुषुम्ना च" । प्र. शा । Nerves । न्युरन्' इति लत्तीनूभाषायां पारस्यभाषायां नई, इति च संज्ञाः ॥

**नाडीकलायम्** । **सू.** ६. नाडीकलापमिति पाठः । मत्स्याक्ष इति हेमाद्रिः । **शकुलाख्यः सुवर्चलाभेद** इति पदार्थचन्द्रिका । शकुलाक्षक इतीन्दुः । सर्पाक्षीत्येके । कृष्णचण्डेति पाठ्यकारः । नाडी नाडीचः, कलायं वर्तुलकलायमिति पदद्वयमिति सम्मतमेव चक्रपाणिदत्तप्रमुखानां । तन्त्रान्तरेऽपि कलाय इति व्यतिरिक्ततया भाति । तस्मादप्यत्र कलायशब्दः पृथगित्यवश्यमवगन्तव्यः ॥

**नारिकेलः** । **सू.** ५ etc. नालिः केन वायुना जलेन वा इलति चलति । **स्वनामख्यातवृक्षः** । N. O.—*Palmaceae* । **हिं.**—नारियल, नरियल, नारलके झाड्; **बं.**—नारिकेल, नारिकोल; **उत्.**—नडिया; **मुंबापुर्याम्.**—नारली; **म.**—नारळी, माड, नारळ; **गु.**—नालीएर; **कों.**—नारल-मड्डो; **तै.**—टेङ्कायिचेट्टु, नारिकेडमु; **क.**—तेंगिनमर; **त.**—तेन्नमरं, तेन्नै, तेंकु,

तेङ्काय् ; तु.—तारे ; सिं.—पोल् ; मल.—तेङ्कु ഩ്ഩ് ; पा.—जोजहिन्दी , नारीयल ; अ.—नारजिल ; शजरातुनारजिला ; जर्मन्.—Achte-kokospalme ; फ्र.—Cocotier ; इं.—Cocoanut palm ; ल.—*Cocos nacifera* । **नामानि**—"केरस्तुंगद्रुमः केली नारिकेली महाफलः । नालिकेरी जलफलस्त्र्यक्षिमश्रुञ्च लांगुली" । स. नि । अन्यच्च—"नारिकेलो दृढफलो लांगली कूर्चशीर्षकः । तुंगः स्कन्धफलश्चैव तृणराजः सदाफलः" । भा. प्र । प्रधानतः पक्वफलं ग्राह्यम् । **गुणाः**—"नालिकेरफलं शीतं दुर्जरं वस्तिशोधनम् । विष्टंभि बृंहणं बल्यं वातपित्तास्रदाहनुत् । विशेषतः कोमलनालिकेरं निहन्ति पित्तज्वरपित्तदोषान् । तदेव जीर्णं गुरु पित्तकारि विदाहि विष्टंभि मतं भिषग्भिः । तस्यांभः शीतलं हृद्यं दीपनं शुक्रलं लघु । पिपासापित्तजित् स्वादु वस्तिशुद्धिकरं परम् । नारिकेलस्य तालस्य खर्जूरस्य शिरांसि तु । कषायस्निग्धमधुरबृंहणानि गुरूणि च" । भा. प्र । **नारिकेलदुग्धगुणाः**—"दुग्धं तु नारिकेलस्य बल्यं रुच्यं गुरु स्मृतम् । पाके स्वादु समुदिष्टं स्निग्धं वृष्यं च दाहकम् । किञ्चिदुष्णं वातकफगुल्मकासविनाशकम्" । नि. र । **पुष्पगुणाः**—"नारिकेलस्य पुष्पं तु शीतं रक्तातिसारहृत् । रक्तपित्तं प्रमेहं च सोमरोगं च नाशयेत् । मलस्तंभकरं चापि प्रोक्तं पूर्वमनीषिभिः" । नि. र । **ताडीगुणाः**—"नारिकेलतरुतोयमतीव स्निग्धमाशु मदकृद् गुरु वृष्यम् । साम्लतामुपगमत्यपराह्णे श्लेष्मपित्तजनकं च कृमिघ्नम्" । **फलतैलगुणाः**—"नारिकेलफलोद्भूतं तैलं वाजीकरं गुरु । पोषणं क्षीणधातूनां वातपित्तप्रणाशनम् । मूत्राघाते प्रमेहे च श्वासे कासे च यक्ष्मणि । मेधालोपे च हितदं क्षतानां भरणं तथा" । **मधुनारिकेलगुणाः**—"मधुरं मधुनारिकेलमुक्तं शिशिरं दाहतृषार्तिपित्तहारि । बलपुष्टिकरं च कान्तिमग्र्यां कुरुते वीर्य-

विवर्धनं च रुच्यम्" । रा. नि । **खुबरगुणाः**—"खुबरं नालिकेरस्य स्निग्धं गुरु च दुर्जरम् । दाहविष्टंभदं रुच्यं बलवीर्यविवर्धनम्" । रा. नि । खुबरं=Copra; हिं.—खोपडा; म.—खोबरें; मल.—कोप्रा കൊപ്ര, कोप्परा ॥

**नारिकेलशुक्तिः** । उ. ३२. नालिकेरास्थि ॥

**नालिका** । सू. ६. जलजामिष्टपत्रशाकविशेषः । see **कलंबः** । कपोतचरणेतीन्दुः । गौनाडीच इति चक्रपाणिदत्तः । दीर्घनालरूपा कलंबुसंज्ञेत्येके ॥

**नालिकेरः** । सू. ५ etc. नाळिकान् नलयुक्तान् पुष्पादीनीरयति नालिकेरः इति क्षीरस्वामी । **नारिकेलः** ॥

**नालिकेरास्थि** । उ. ११. **नालिकेरफलस्य कपालम्** । बं.—नारिकेलेर खोल; मल.—चिरट्टा ചിരട്ട | Cocoanut shell ॥

**नालिकेरोदकम्** । सू. ५. ईषत्पक्वाद्रनारिकेलफलान्तर्वर्ति सलिलम् । नारिकेलफलके अन्दरका जल । **गुणाः**—"नारिकेलांबु तरुणं तृष्णाघ्नं पित्तनाशनम् । बालस्य नारिकेलस्य जलं प्रायो विरेचनम् । शीतं वमथुमूर्च्छाघ्नं पित्तज्वरविनाशनम् । नारिकेलोदकं जीर्णं विष्टंभि गुरु शीतलम्" । रा. व ॥

**नारीक्षीरम्** । चि. ४. **मानुषीक्षीरं, स्तन्यम्** ॥

**निकुंभः** । सू. १५. etc. नियतः कुंभः । **दन्ती** । "निकुंभः कुंभकर्णस्य तनये दन्तिकौषधौ" । इति मेदिनी ॥

**निकोचकम्** । सू. ६. निकुच्यते । कुच शब्दे तारे । **मिष्टफलविशेषः** । N. O.—*Anacardiaceae* । हिं.—पिस्ता; बं.—पेस्ता; म.—पिस्ते; गु.—पस्ता; पा.—पिस्ता, गुलिपिस्ता; अ.—पिस्तक; मल.—पिस्ता പിസ്ത, पिस्ताशियण्टि; इं.—

Pistachio nut ; ल.—*Pistacia vera* । उत्तरापथिकं कोल-कफलमुत्तरापथादवगन्तव्यमिति डल्हणः । अंकोलफलसदृशमिति हेमाद्रिः । सरलफलमित्यरुणदत्तः । पक्वफलं ग्राह्यम् । नामानि—"निकोचकं चारुफलमंकोठफलकोजसम्" । म. पा । गुणाः—"निकोचकं गुरु स्निग्धं वृष्योष्णं धातुवर्द्धकम् । रक्तप्रसादनं स्वादु बल्यं पित्तकरं मतम् । तिक्तं सरं च कफहृद्वातगुल्मत्रिदोषजित्" । नि. र । निकोठक इत्येव केषांचन पाठः । चिलगोजा इति चरकप्रसादनी ॥

**नेचुलः** । चि. १२ etc. निचोल्यतेऽम्बुना । **हिज्जलवृक्षः** । "निचुलो रक्तमञ्जर" इति त्रिकाण्डशेषः । "निचुलोंऽबुज इज्जलः" इति वैजयन्ती । "निचुलो जलवेतसः" इति मदनपालः । N. O.—*Myrtaceae* । हिं.—समुद्रफल , समुन्दरफल , इजर ; बं.—समन्दर , हिजल ; म.—समुद्रफळ , परेळ , पर्यलु , पिवर , सतफल , मानूकुंब ; उत्.—किञ्जोली , किञ्जोले ; गु.—समुद्रफल , समुद्रशोष , जळजांबवो ; तै.—कनपुचेट्टु , कागिगि , व्यारंगचेट्टु ; क.—केंपुकणगिन , गणिगिलतोर , होळे कोवमर , तोरेगणगिले ; त.—नीर्कैटम्पु , रत्नमि ; मल.—समुद्रप्पळम् ; नीर्कैटम्पु നീർക്കടമ്പ് इत्येके ; आसां.—हिन्दोल ; इं.—Hijjal ; ल.—*Barringtonia Acutangula* । **नामानि**—इज्जलो हिज्जलश्चापि निचुलश्चांबुजस्तथा । जलवेतसवद्वेद्यो हिज्जलोयं विषापहः" । भा. प्र । **गुणाः**—"हिज्जलः कटुरुष्णश्च पवित्रो भूतनाशनः । वातामयहरो नानाग्रहसंचारदोषजित्" । रा. नि । "फलं समुद्रस्य कटूष्णकारि वातापहं भूतनिरोधकारि । त्रिदोषदावानलदोषहारि कफामयभ्रान्तिविरोधकारि" । रा. नि । **चन्द्राद्या विभागेनाहुः**—"वेतसो विदुलो नम्रो वंजुलो दीर्घपत्रकः । नादेयी गन्धपत्रश्च जलौकाः सभूतस्तथा । नदीकूलप्रिय-

स्त्वन्यः सुशीतो घनपुष्पकः । जलजातस्तोयकामो विदुलो जलवेतसः । निचुलो वेतसादन्यो वक्ष्यते स्थलवेतसः" इति । "वानीरे कविभेदे स्यान्निचुलः स्थलवेतसे" इति शब्दार्णवात् । जलवेतस इतीन्दुः । फलं ग्राह्यम् ; श्वयथुचिकित्सिते पटोलमूलादिक्वाथयोगे निचुलस्थाने वेतस इति मुंबापुरमुद्रितसंग्रहपाठः ॥

**निदग्धिका** । उ. ४०. **कण्टकारी** । निदिग्धिकेति शुद्धः पाठः ॥

**निदिग्धः** । शा. २ etc. **कण्टकारी** । "निदिग्ध्याः फलमूलाभ्याम्" ॥

**निदिग्धिका** । चि. २१. निदिह्यते स्म । दिह उपचये । **कण्टकारी** ॥

**निमर्दकः** । चि. ७. विमर्दक इति पाठः । मांसस्य विविधव्यञ्जनप्रकारम् । मल.—वरट्टुमांसम् വരട്ടുമാംസം । मांसहरितकवर्गादिनानारसोच्छगोधूमावेष्टितो वटकाकृत्या छिन्नो निमर्दक उच्यते इतीन्दुः । "नानाद्रव्यैः समायुक्तः पक्त्वा वह्निषु भर्जितः । निमर्दको गुरुर्हृद्यो वृष्यो बलवतां हितः" इति चरकः ॥

**निंबः** । सू. ५ etc. निम्बति स्वास्थ्यम् । णिवि सेचने । **तिक्तरसप्रधानो स्वनामख्यातवृक्षः** । N. O.—*Meliaceae* । **हिं.**—नीम , निम ; **उर्दु.**—नीम ; **बं.**—निम , निंब ; **म.**—कडुनिंब , कडुलिंब ; **गु.**—लिंबडो ; **पञ्जा.**—निम ; **कों.**—बेवारूक्कु ; **दखा.**—निम ; **तै.**—वेपा , निंबमु ; **क.**—बेविनमर , बेवु ; **त.**—वेंपु ; **तु.**—कैबेवु ; **सिं.**—कोसंब ; **मल.**—वेप्पु വേപ്പ്, आर्यवेप्पु ; **बर्मा.**—तामाबिन , कामाखा ; **मलायी.**—दावून नंबु , बायूपायू ; **पा.**—दरखहक , दरख्तहक ; **फ्र.**—Azadirac d' Inde, Margousier ; **जर्मन.**—Indischer-zedrach ; **इं.**—Neem or Margosa tree, Indian Lilac tree ;

ल.—*Melia azadirachta* । नामानि—"निंबः स्यात् पिचुमर्दश्च पिचुमन्दश्च तिक्तकः । अरिष्टः पारिभद्रश्च हिंगुनिर्यास इत्यपि" । भा. प्र । त्वगादिकं ग्राह्यम् । **गुणाः**—"निंबः शीतो लघुर्ग्राही कटुपाकोऽग्निवातनुत् । अहृद्यः श्रमतृट्कासज्वरारुचिक्रिमिप्रणुत् । व्रणपित्तकफच्छर्दिकुष्ठहृल्लासमेहनुत् । निंबपत्रं स्मृतं नेत्र्यं क्रिमिपित्तविषप्रणुत् । वातलं कटुपाकञ्च सर्वारोचककुष्ठनुत् । निंबफलं रसे तिक्तं पाके तु कटु भेदनम् । स्निग्धं लघूष्णं कुष्ठघ्नं गुल्मार्शःक्रिमिमेहनुत्" । भा. प्र ॥

**निंबकुसुमम्** । चि. १. निंबस्य पुष्पम् । नीमके फूल ॥

**निंबछदनम्** । चि. १. निंबपत्रम् ॥

**निंबजम्** । सू. ५. निंबबीजतैलम् । नीमका तेल । मल.—वेप्पेण्णा വേപ്പെണ്ണ ॥

**निंबपत्रम्** । चि. १. निंबस्य पत्रम् । नीमके पत्र । बं.—निम पाता । see **निंबः** ॥

**निंबप्रसवम्** । चि. ६. निंबपत्रम् ॥

**नियुद्धम्** । सू. ३. निगृह्य नितरां वा युद्धम् । **बाहुयुद्धम्** । Close fight, Wrestling । हिं.—कुस्ति ; त.—मल्युत्तं ; मल.—मल्पिटुत्तं മല്പിടുത്തം, गुस्ति । "नियुद्धं बाहुयुद्धं स्या"दिति वैजयन्ती ॥

**निर्गुण्डी** । चि. ३ etc. निष्क्रान्ता गुडा वेष्टनान्निर्गुडी निर्गुण्डी च । **नीलसिन्दुवारवृक्षः** । N. O.—*Acanthaceæ* । हिं.—नीलसम्हालु, काळा बार्षिब, मेउडीसम्मालु, न्यवारी इत्येके ; बं.—नीलनिशिन्दा ; म.—काळीनिर्गुडी ; गु.—नीळीनगोड ; तै.—नीलवाविलि, नल्लनोच्चिलि ; क.—करिन्नेक्किगिड, नच्चु-

कड्डि, करिलोक्कि; त.—करुनोच्चिल्; तु.—करिनेक्कि; सिं.—कलुनिक; मल.—करिनोच्चि കരിനൊച്ചി, वातङ्कोल्लि इत्येके; कों.—कालोनेगुण्ड; द्रखा.—सान्बालि, कालिसुंबालि; मुंबापुर्याम्.—कलअडुलसा; उर्दु.—शंवालि; पा.—मिसवान; अ.—वजरुल असलुक; इं.—Black chaste tree; ल.—*Gendarussa vulgaris, Justicia gendarussa; Vitex trifolia* इत्येके। नामानि–"सुगन्धाऽन्या शीतसहा निर्गुण्डी नीलसिन्दुकः। सिन्दुकच्छापिका भूतकेशीन्द्राणी च नीलिका"। रा. नि। पत्रमूलादिकं ग्राह्यम्। गुणाः—"कटूष्णा नीलनिर्गुण्डी तिक्ता रूक्षा च कासजित्। श्लेष्मशोफसमीरार्तिप्रदराध्मानहारिणी"। रा. नि। सा चतुर्धा—"श्वेता नीला आरण्या कर्तरी चेति॥

**निर्माल्यम्।** उ. ५. देवोच्छिष्टद्रव्यम्। पुष्पादि। "विसर्जिते तु देवेशे निर्माल्यं भवति क्षणात्" इति। महादेवसंबन्धीत्यरुणदत्तः। "निर्माल्यमुज्झिते" इति वैजयन्ती। शिवपर चढ़ हुआ जल" इति शिवदीपिकाकारः। गंगाजल इति वङ्गसेनभाषाटीकाकारः। "व्युषिता च माला" इत्येकत्र कलिकाकारः। स्पृक्केतीन्दुः। Used and abandoned chaplet॥

**निशा।** सू. २१ etc. हरिद्रा। दुर्विद्धचिकित्सायां "चूर्णैर्मधुकमञ्जिष्ठाप्रपुण्ड्राह्वनिशोद्भवै"रित्यत्र "प्रपौण्डरीकमधुकमञ्जिष्ठारजनीद्वयै"रित्येव सुश्रुतपाठः॥

**निशाद्वयम्।** चि. १५ etc. हरिद्रा दारुहरिद्रा च॥

**निशायुक्।** उ. ५. निशाद्वयम्॥

**निशे।** सू. १४. निशाद्वयम्॥

**निष्पावः** । सू. ६ etc. निष्पूयते तुषाद्यपनयनेन शोध्यते । श्वेतशिंबी । N. O.—*Leguminosae* । हिं.—निष्पाव, भटवांसु, भेटरासु, भेटवासु; वं.—भेटरासु, सीम; म.—श्वेतपावटे, वालपापरि, वर्णे; गु.—ओलिया, वाल, अवरि; तै.—अनुमु, अडविचिक्कुडु; क.—अवरे, होलदवरेबळ्ळि; तु.—अबरे; त.—वेळ्ळवरै, मोचकोट्टै; सिं.—अवर; मल.–अवरा അമര, अमरा, वेळ्ळवरा, मोचा; फ्र.—Chevaux defrise bean; इं.—Flat bean, Goabean, Cow gram; ल.—*Dolichos Lablab* । **नामगुणाः**—"निष्पावो राजशिंबिः स्याद्वल्लकः श्वेतशिंबिकः । निष्पावो मधुरो रूक्षो विपाकेऽम्लो गुरुः सरः । कषायः स्तन्यपित्तास्रमूत्रवातविबन्धकृत् । विदाह्युष्णो विषश्लेष्मशोथहृच्छुक्रनाशनः" । भा. प्र । मध्यमफलं ग्राह्यम् । "निष्पावफलमानीय कोमलं क्रिमिवर्जितम् । त्वचमुत्सृज्य तद्बीजमाहरेच्छोधयेद् बुधः । पचेत्तत् प्रवणिभाण्डे श्रुते नैव ततःपरम् । नारिकेलफलक्षीरं वटकान् पेषयेत्तिलान् । मरिचान् सर्षपान् पिष्ट्वा कल्कं तत्र विनिक्षिपेत् । पुनः क्षीरं समासिच्य सुगन्धञ्च निषिञ्चयेत् । रामठं क्षीरमासिच्य तानि पक्वावतारयेत् । ततश्च घनसाराद्यैः सूदस्तान्यभिवासयेत् । ततस्तत्पूगपट्टेन वेष्टयित्वा प्रदापयेत् । इदं स्वादुतरं हृद्यं कषायं गुरु पित्तकृत् । वृष्यं बल्यं कफहरं समीरणविवर्धनं" इति पाकदर्पणे ॥

**नीपः** । चि. १९ etc. नयति सुखम् । **महाकदंबः** । see **गिरिकदंबः** । "नीपो धाराकदंबकः" इति त्रिकाण्डशेषः । गुह्यरोगप्रतिषेधे "जंब्वाम्रसुमनोनीपश्वेतकांबोजिकांकुरान्" इत्यत्र "जंब्वाम्रसुमनानिंबश्वेतकांबोजिपल्लवाः" इति सुश्रुतः पठति । "नीपो धूलिकदंबोऽन्यः सुवासो वृत्तपुष्पकः" । ध. नि ॥

**नीलांभोजम्** । सू. २६. **नीलोत्पलम्** ॥

**नीलिका** । चि. २१. नलिकेति चरकसंग्रहयोः पाठः । विद्रुमलते-त्यत्रार्थः ॥

**नीलिनी** । सू. १५ etc. नीलोऽस्त्यस्याः । **स्वनामख्यातक्षुपः** । नीलपुष्पा श्रीफलिका । N. O.—*Leguminosæ* । हिं.—नील, लील; बं.—नीलगाच्छी; म.—नीळ, गुळी, गु.—गळी; सिन्धी.—नील; कों.—नीली; तै.—अविरि, नीली; क.—ओळ्ळेनीलि, हेण्णुनीली, नीली; तु.—नीलि; त.—अवरि, अविरि, अवुरि, नीली; सिं.—अवरिय; मल.—अवरि അമരി, अमरि; पा.—दुओरो खाट्-ए-निला; अ.—निलाजा, नाबातुना मिलाजा; फ्र.—Indigotier des teinturiers; जर्मन्.—Farbe-Indigop-flanze; इं.—True Indigo, Indigo plant, Dyer's Indigo; ल.—*Indigofera tinctoria* । **नामानि**—"नीलिनी नीलिका काला ग्राम्या तूणी विशोधनी । तुत्था श्रीफलिका मेला भारवाही च रञ्जनी" । ध. नि । **गुणाः**—"नीलिनी रेचनी तिक्ता केश्या मोहभ्रमापहा । उष्णा हन्त्युदरप्लीहवातरक्तकफानिलान् । आमवातमुदावर्तं मदं च विषमुद्धतम्" । भा. प्र । मूलं ग्राह्यम् । अभावे सर्वांशो ग्रहणीयः । उत्तराष्टत्रिंशाध्याये "च्छर्दनं नीलिनीक्वाथै"रित्यत्र "जालिनीक्वाथै"रिति पाठः समीचीनः । काला दाना इत्येके ॥

**नीली** । क. २. **नीलिनी** । कालाञ्जनीत्येके । काला दाना इति शिवदीपिकाकारः ॥

**नीलोत्पलम्** । चि. १ etc. **उत्पलम्** । "नीलोत्पलस्याभावे तु कुमुदं देयामिष्यते" इति भावमिश्रः ॥

**नीवारः** । **सू. ६.** नि व्रियन्ते । 'वृञ् वरणे' 'नौ वृ धान्ये' इति घञ्। **तृणधान्यविशेषः** । उलिका नामाऽरण्यशालिः ।"नीवारोऽरण्यधान्यं स्यान्मुनिधान्यं तृणोद्भवम्" । रा. नि । **हिं.**—तीनी, नीवार, तिनी, पुनेरा, तीली; **बं.**—उडी धान; **म.**—देवभात; **गु.**—नानवी, वंटी; **तै.**—निवरिचेट्टु; **क.**—जरहुमेधे; **मल.**—वरिनेल्लु; **इं.**—Wild rice; Rice growing wild । नीवारः द्विविधः एकं धान्यसदृशविटपं धान्यक्षेत्रजम् । अन्यत् महाद्लकाण्डं सलिलजम् । तत्र सलिलजं सलिलवृद्धिमात्रस्तंबप्ररोहं रक्तशूकं इति चरकोपस्कारे । नीवारः प्रसाधिका धान्यमध्ये रक्तशूको भवति, उऊजीधान्यमिति लोके प्रसिद्ध इति डल्हणः । पुराणं ग्राह्यम् । **नामानि**—"नीवारस्तापसश्चैव मुनिभक्तः प्रसाधिका । अरण्यधान्यनामा च रसिकश्च प्रकीर्तितः" । ध. नि । **गुणाः**—"नीवारो मधुरः स्निग्धः पवित्रः पथ्यदो लघुः" । रा. नि । "नीवारः शीतलो ग्राही पित्तघ्नः कफवातकृत्" । भा. प्र ॥

**नृत्यकुण्डकः** । **चि. ११.** नृत्यकुण्डल इति पाठः । **तृणधान्यविशेषः** । N. O.—*Graminaceæ* । **हिं.**—नर्तक, मडुआ, रागीधान; **बं.**—मरुआ; **म.**—नाचणी, नाचण्या, नागली; **गु.**—नागली, नावतो; **सिन्धी.**—नागली; **कों.**—नाञ्चणो; **पञ्जा.**—चालोद्रा; **तै.**—रागि, रागुलु, तमिद्लु, चोलु; **क.**—रागि, टपिगुचणे; **त.**—इराकि, केळ्वरकु; **सिं.**—कुराखान; **पा.**—नण्डुआ, मकरा, रोतका; **मल.**—मुत्तारि മുത്താറി, रागि, कोरा, कूवरकु, पञ्ञप्पुल्लु; **इं.**—Ragi; **ल.**—*Eleusine coracana* । **नामानि**—"नर्तको नृत्यकुण्डश्च भूचरा च मलीयसः । कठिनो गुच्छकणिशो लंछनो बहुपत्रकः" । **अन्यच्च**—"रागी तु लाञ्चनः स्याद् बहुदलकणिशश्च गुच्छकणिश-

श्च" । रा. नि । गुणाः—"नर्तकस्तुवरस्तिक्तो मधुरस्तर्पणो लघुः। बल्यः शीतः पित्तहरास्त्रिदोषशमनो मतः। रक्तदोषहरश्चैव मुनिभिः पूर्वमीरितः" । नि. र । तुवरीत्यरुणदत्तः । "त्रिकण्टकस्य बीजानां चूर्णं माक्षिकसंयुतं" इत्येवात्र सुश्रुतपाठः। अन्ये तु मर्कटकस्य बीजानामिति पठन्ति, 'मकरा' इति लोके । अपरे अनर्तकस्य बीजानामिति पठन्ति । तत्रापि स एवार्थ इति डल्हणः । मुंबापुरमुद्रितसंग्रहग्रन्थे "भृङ्गकण्टकबीजचूर्ण' इत्येव पाठः। नृत्यत्कोरण्डबीजचूर्ण' इति दृश्यते शिवपुरमुद्रितसंग्रहग्रन्थेषु । कतकबीजचूर्ण इति च पाठो विद्यते । पुराणं धान्यं ग्राह्यम् ॥

**नृपतरुः** । चि. १९. आरग्वधः ॥

**नृपद्रुमः** । चि. १ etc. द्रुमाणां नृपः। **आरग्वधः** ॥

**नेपाली** । उ. ५ etc. नेपाले भवा । **मनःशिला** । कस्तूरीत्यरुणदत्तः। नैमालीत्येव शिवपुरमुद्रितसंग्रहपाठः ॥

**नैपालः** । **सू. ५. इक्षुविशेषः** । मिश्रवर्णकः। हिं.—मिश्रवर्ण ऊंस; वेण्णीट्टुकरिम्पु इति केरलेष्वेके । नेपालीति प्राकृताः । कृष्णेक्षुरिति केचित् ॥

**नैषधकः** । सू. ६. **निषधदेशीयः शालिधान्यभेदः** । 'कोरक' इत्याख्यायते, स च धान्यविशेष इति डल्हणः ॥

**न्यग्रोधः** । **सू.** २ etc. न्यक् तिर्यग्रुणद्धि मार्गं मूलैर्न्यग्रोहति वा। **वटः** ॥

**न्यग्रोधप्ररोहः** । उ. २२ see **वटप्ररोहः** ॥

**न्यंकुः** । **सू.** ६. नितरामञ्चति । **बहुशृङ्गो मृगविशेषः** । "न्यंकुस्तु शंबराकारस्त्रिकेण विपुलोन्नतः" इति वैजयन्ती । "न्यंकुर्बहुविषाण" इति भावमिश्रमदनपालौ । कुरंगसदृशो विकटबहुविषाण इति

हेमाद्रिः । न्यंगुण इति लोके इति डल्हणः । कटमान् इति केरलेष्वेके । हिं.—बाराहसिंगा, बारहसिंगा । Any ordinary deer of two horns इत्यविनाशचन्द्रः । मांसगुणाः—"न्यंकुः स्वादुर्लघुर्बल्यो वृष्यो दोषत्रयापहः" । भा. प्र ॥

---

# प ।

**पक्करसः** । सू. ५. सीधुविशेषः । see सीधुः । इक्षुरसको पकाकर बनायी हुई सीधु । गुणाः—"रोचनो दीपनो हृद्यः शोषशोफार्शसां हितः । स्नेहश्लेष्मविकारघ्नो वर्ण्यः पक्वरसो मतः" । च. सू. २७. । "पक्वो रसो गुरुः स्निग्धः सुतीक्ष्णः कफवातनुत् । गुल्मानाहप्रशमनः किञ्चित् पित्तकरः स्मृतः" । भा. प्र ॥

**पक्काधानम्** । सू. १२. पक्वाशयः ॥

**पक्काशयः** । सू. ६ etc. मलाशयः । "पच्यमानस्य विपक्वस्य चाशयः अन्त्राणि नाभेरधः परितश्च । तत्र क्षुद्रान्त्राणि पच्यमानाशयः, बृहदन्त्रं तु पक्वाशयो मलाशयो वा । सर्वान्त्राणां वा पक्वाशयसंज्ञेत्यन्ये" । प्र. शा । क्षुद्रान्त्राणि पच्यमानाशयः= Small Intestines । बृहदन्त्रं तु पक्वाशयो मलाशयो वा= Colon (कोलन्) । "पक्वाशयस्त्वधोनाभेरूर्ध्वमामाशयः स्मृतः" । भा. प्र ॥

**पङ्कजम्** । उ. ३९. पङ्के जायते । कमलम् ॥

**पचनम्** । सू. ७. पात्रम् ॥

**पञ्चकापित्थम्** । उ. ३८. कपित्थवृक्षफलमूलपुष्पत्वक्पत्रकल्ककषायसिद्धं घृतम् ॥

**पञ्चकोलम्** । सू. ३ etc. पिप्पल्यादिपञ्चद्रव्यम् । **लक्षणम्**—"पिप्पलीपिप्पलीमूलचव्यचित्रकनागरैः । पञ्चभिः कोलमात्रं यत् पञ्चकोलं तदुच्यते" इति भावमिश्रः । "कोलमात्रोपयोगित्वात् पञ्चकोलकसंज्ञितं" इत्येके । **गुणाः**—"पञ्चकोलं रसे पाके कटुकं रुचिकृन्मतम् । तीक्ष्णोष्णं पाचनं श्रेष्ठं दीपनं कफवातनुत् । गुल्मप्लीहोदरानाहशूलघ्नं पित्तकोपनम्" । भा. प्र । कफतृष्णाचिकित्सायां "बिल्वाढकी पञ्चकोल"मित्यत्र ह्रस्वपञ्चमूलार्थेन कन्यकपञ्चमूलीति सुश्रुतपाठो दृश्यते । कण्टकपञ्चमूलीति पठन्ति केचित् । पञ्चकोलपाठं कार्तिककुण्ठो नेच्छति, सर्वतृष्णासु पित्तसद्भावेन पञ्चकोलस्यानुचितत्वात् ॥

**पञ्चकोलकम्** । सू. ६ etc. **पञ्चकोलम्** । "पञ्चकोलकिनीं मात्रामनु चोष्णं गुडोदक"मित्यत्र "पिप्पलीपिप्पलीमूलहस्तिपिप्पलीचित्रकशृङ्गवेरचूर्ण"मित्येव सुश्रुतपाठः ॥

**पञ्च पञ्चमूलानि** । चि. ५ etc. पञ्चानां पञ्चमूलानां समाहारः । महत्पञ्चमूलं लघुपञ्चमूलं मध्यमपञ्चमूलं जीवनपञ्चमूलं तृणपञ्चमूलं च । उक्तं हि चरकेण ब्राह्मरसायनकथनारंभे,—"विदारिगन्धां बृहतीं पृश्निपर्णीं निदिग्धिकाम् । विद्याद्विदारिगन्धाद्यं श्वदंष्ट्रापञ्चमं गणम् । बिल्वाग्निमन्थश्योनाकं काश्मर्यमथ पाटलाम् । पुनर्नवां शूर्पपर्ण्यौ बलामेरण्डमेव च । जीवकर्षभकौ मेदाः जीवन्तीं सशतावरीम् । शरेक्षुदर्भकाशानां शालीनां मूलमेव च । इत्येषां पञ्चमूलानां पञ्चानामुपकल्पयेत्" । इति ॥

**पञ्च पटूनी** । **पञ्चलवणम्** ॥

**पञ्चमूलम्** । **लघुपञ्चमूलम्** ॥

**पञ्चमूली** । चि. १. **लघुपञ्चमूलम्** ॥

**पञ्चमूल्यौ** । चि. १९. **दशमूलम्** ॥

**पञ्चलवणम्** । चि. ३ etc. पञ्चानां लवणानां संयुक्तसमभागः । हिं.—पांचों लवण ; मल.—अञ्चुप्पु അഞ്ചുപ്പു । "सौवर्चलं सैन्धवं च विडमौद्भिदमेव च । सामुद्रेण सहैतानि पञ्च स्युर् लवणानि च" इति चरकः । अन्यच्च—"सैन्धवं रोमकं चैव सामुद्रलवणं तथा । विडं सौवर्चलाख्यं च प्रुक्तं लवणपञ्चकम्" । ध. नि । **गुणाः**—"लवणानां पञ्चकं तु शोषणं च रुचिप्रदम् । मलानुलोमकं ग्राहि नेत्र्यं वातं कफं हरेत् । शूलं च नाशयत्येवमुक्तं पूर्वैर्मनीषिभिः" इति ॥

**पञ्चवल्कम्** । पञ्चवृक्षाणां वल्कलानि । "न्यग्रोधोदुंबराश्वत्थप्लक्षवेतसवल्कलैः । सर्वैरेकत्र संयुक्तैः पञ्चवल्कलमुच्यते" । ध. नि । केचित्तु वेतसस्थाने शिरीषं, पारीषं वा वदन्तीति शेषः । शिरीषपिप्पलवटप्लक्षवेतसानां पञ्चानां त्वगपि पञ्चवल्कलत्वेन व्यवहरन्ति । "सल्लकीझिंझिणीजंबूधवशाल्मलिकात्वचः । पञ्चवल्कलसंज्ञोयं मुनिभिः परिकीर्तितः" इति विषाधिकारे । **गुणाः**—"त्वक्पञ्चकं हिमं ग्राहि व्रणशोथविसर्पजित्" । भा. प्र ॥

**पञ्चसारम्** । सू. ३ etc. **पानकभेदः** । मध्वादिभिः पञ्चभिः कृतं पानकम् । स चाभिनवमृत्पात्रस्थोम्लरसमिश्रश्च । "मधुखर्जूरमृद्वीकापरूषकासितांभसा । मन्थो वा पञ्चसारेण स घृतैर्लाजसक्तुभिः" इति । अपि च—"द्राक्षामधूकमधुककोलदाडिमसाधितम् । पानकं पञ्चसाराख्यं दाहतृष्णानिवृत्तकं" इति । "द्राक्षाखर्जूरकाश्मर्यसमधूकपरूषकैः । पञ्चसाराभिधं पानं चन्द्रसूर्याधिवासितं" इति मदनपालः । अन्यच्च—"काश्मरीमधुखर्जूरमृद्वीकाफालसाफलम् । तेषां जलं गृहीत्वा तु एकीकृत्य क्षिपेदमून् । चातुर्जातेन्दुमरिचशर्कराश्चार्द्रकादिकान् । वस्त्रेण गालयित्वा तत् पञ्चसाराख्यपानकम् । गुरु वृष्यं धातुकरं पित्ततृट्श्रमदाहनुत्" ।

नि. २ । सुश्रुतस्त्वन्यथा पठितवान्, यथा—"शृतं पयः शर्करा च पिप्पल्यो मधुसर्पिषी । पञ्चसारमिदं पेयं मथितं विषमज्वरे । क्षतक्षीणे क्षये श्वासे हृद्रोगे चैतदिष्यते" इति । "घृतद्राक्षाक्षीरमधुगुडास्तु क्रमयोजिताः । प्रोक्तं द्वित्रिचतुःपञ्चषट्भागाः पञ्चसारकं" इति केचित् ॥

**पञ्चांगी** । सू. २८. पञ्चानामङ्गानां समाहारः । चतुर्षु चरणेषु मुखे च बन्धविशेषः । "मुखे खुरचतुष्के च पञ्चांगीसंज्ञका मता" इति । "एवं वा शाखायां कल्पयेत्तरोः" इत्यत्र पञ्चांग्यामिति विशेषयन्त्येके । ते तु पञ्चांगीं पञ्चभिः शाखान्तरैर्युतां शाखां वदन्ति । अपरे तु पञ्चांगीं प्लक्षाश्वत्थोदुंबरन्यग्रोधवेतसानामिति कथयन्ति । अन्ये त्वेवं पठन्ति 'अशक्यमेवं वा बलवद्भिः सुपरिगृहीतस्य यन्त्रेण ग्राहयित्वा शल्यवारंगं प्रविभुज्य धनुर्गुणैर्बध्वैकतोऽश्वकन्नकाविके बध्नीयात्, अथैनं कशया ताडयेत् यथोन्नामयन् शिरो वेगेन शल्यमुद्धरति, नामितायां पञ्चांग्यां वृक्षशाखायां वा पूर्ववद्बध्वोद्धरेत्" इति ॥

**पञ्चांगी** । सू. २९. जत्रूर्ध्वबन्धविशेषः । यस्मिन् पट्टे चत्वारो बाहवः, एका चोर्ध्वे पट्टिका सा पञ्चांगी । "हन्वस्थिनी समानीय हनुसन्धौ विसंहते । स्वेदयित्वा स्थिते सम्यक् पञ्चांगीं वितरेद्भिषक्" इति सुश्रुतः । ऐन्तािक्कुकेट्टु इति केरलेषु ॥

**पञ्चांगुलः** । सू. १५. पञ्च अंगुलय इव पत्राकारा यस्य । एरण्डः ॥

**पटालिका** । सू. ३. पंक्तिवत्तनुवंशतृणादिरचिता भित्तिः । हिं.—टट्टी; म.—तडदा; त.—तट्टि; मल.—तट्टि, तट्टिका ത‌ട്ടി‌ക। Screen ॥

**पटु** । सू. ८ etc. सैन्धवम् । कुष्ठचिकित्सिते 'पटुतालविश्वै"रित्यत्र 'हरितालविश्वै'रित्येव संप्रदायपाठः । "पटुर्दक्षे च नीरोगे

चतुरेऽप्यभिधेयवत् । पटोले तु पुमान् क्लीबे छत्रालत्रणयोरपि" इति मेदिनी ॥

**पटुद्वयम्** । चि. ४. लवणद्वयम् । सौवर्चलं सैन्धवं चेति चरकपाठः ॥

**पटुपञ्चकम्** । चि. १०. पञ्चलवणम् ॥

**पटोलः** । सू. ३ etc. पटति सरलत्वात् । तिक्तफलशाकलताविशेषः । N. O.—*Cucurbitaceæ* । हिं.—परवल, कडवा परवल ; उ.—किचुंडा ; बं.—पलता लता ; म.—कडुपडवळ ; गु.—कडवा परवल ; कों.—काडपड्डुल ; कान्यकुब्जे.—मोरहडी ; तै.—अडविपोट्ल, चेदुपोट्ल ; क.—कहिपडवल, सण्णपडवल, काडाडुबळ्ळि ; सोगवल्ली इत्येके : त.—काट्टुपुटोल्, पेय्पुटल्, काट्टुपेय्पुटल् ; तु.—काट्टुपट्लकायि ; सिं.—वनपतोल ; तिक्तपतोल ; मल.—काट्टुपटोलं കാട്ടുപടോലം, कय्पन्पटोलं ; इं.—Wild snakegourd फ्र.—Trichosanthes contourne ; जर्मन्.—Schlangenfruchtige Haarblume ; ल.—*Trichosanthes dioica, T. Cucumerina* । नामानि—"पटोलः कुलकस्तिक्तः पाण्डुकः कर्कशच्छदः । राजीफलः पाण्डुफलो राजनामामृताफलः" । ध. नि । मूलादिकं ग्राह्यम् । गुणाः—"पटोलः कटुतिक्तोष्णो रक्तपित्तवलासजित् । कफकण्डूतिकुष्ठासृग्ज्वरदाहार्तिनाशनः" । रा. नि । पत्रगुणाः—"पटोलपत्रं पित्तघ्नं दीपनं पाचनं लघु । स्निग्धं वृष्यं तथोष्णं च ज्वरकासक्रिमिप्रणुत्" । भा. प्र ॥

**पटोलम्** । सू. ६. स्वादुपटोलफलम् । "पटोलं फलशाकेषु" इति भावमिश्रः ॥

**पटोली** । सू. ८. स्वादुपटोललता । N. O.—*Cucurbitaceæ* । हिं.—चचेंडा, मीठापरवल, झिङ्पोड़ालि; बं.—चिचिंडा; म.—गोडपडवळ; गु.—पंडोलां, मीठा पटोल, पडोलुं; तै.—पोट्लकायि; क.—पडवल, पट्ल, अड्लबाळ्ळि; कों.—पड्डुल; तु.—पट्लकायि; त.—पुटोल्, पुटल्; सिं.—दुम्मेल्ल; मल.—कय्पपटोलं കയ്പ്പൻപടോലം, पटवलं, पटोलं; पञ्जा.—गालारतोरि, पंडेल; इं.—Snake-gourd; ल.—*Trichosanthes anguina* । नामानि—"ज्ञेया स्वादुपटोली च पटोली मण्डली च सा । पटोली मधुरादिः स्यात् प्रोक्ता दीर्घपटोलिका । स्निग्धपर्णी स्वादुपूर्वैः पर्यायैश्च पटोलिका" । रा. नि । मध्यमफलं ग्राह्यम् । गुणाः—"पटोली स्वादु पित्तघ्नी रुचिकृज्ज्वरनाशिनी । बलपुष्टिकरी पथ्या ज्ञेया दीपनपाचनी । रा. नि । "पटोलस्य भवेन्मूलं विरेचनकरं सुखात् । नालं श्लेष्महरं पत्रं पित्तहारि फलं पुनः । दोषत्रयहरं प्रोक्तं तद्वत्तिक्ता पटोलिका" । भा. प्र ॥

**पटोली** । सू. १० etc. पटोलः । चिकित्सितसप्तमाध्याये "पटोल्युत्पलकन्दैर्वा" इत्यत्र "पाटली"ति शिवपुरमुद्रितसंग्रहपाठः ॥

**पतंगः** । सू. ६. रक्तवर्णशालिविशेषः । सुगन्धकाद्धीनगुणः । पुराणं धान्यं ग्राह्यम् ॥

**पतंगः** । नि. ५. पतन् सन् गच्छति । शलभो नाम कीटविशेषः । हिं.—फतिंगा; फणिग; बं.—फड़िंग; म.—पिंगाणें; सिं.—इपिया; मल.—इय्यान् ഈയ്യാൻ, इय्यान्पाट्टा; इं.—Moth । "पतंगः शलभे शालिप्रभेदे पक्षिसूर्ययोः" इति मेदिनी ॥

**पतंगम्** । उ. १८. पत्तङ्गचन्दनं, रक्तचन्दनभेदः । N. O.—

*Leguminosæ* । हिं.—पतंग, पतर; बं.—बकम् काष्ठ; उर्.—बकमो ; म.—पतंग ; गु.—पतंग ; तै.—बुक्कपुचेट्टु , बकारुचक्का , ओकनुकट्टु ; क.—पतंग , सप्पंग , पतंगदमर ; द्खा.—पतंग ; त.—बत्तंकि , चप्पांङ्कि , वेट्टङ्कु ; तु.—चप्पंग ; कों.—सप्पंगु ; सिं.—पतंगी ; पा.—बकम्; अ.—बर्कं ; मल.—चप्पङ्ङं ചപ്പങ്ങം, पत्तङ्ङं ; इं.—Sappan wood; Brasiletto ; ल.—*Caesalpinia sappan* । नामानि—"कुचन्दनं पतंगं च रक्तकाष्ठं सुरंगकम् । पत्रांगं पट्टरागं च पट्टरञ्जनमेव च" । ध. नि । काष्ठं ग्राह्यम् । गुणाः—"पतंगं मधुरं शीतं पित्तश्लेष्मव्रणास्रनुत् । हरिचन्दनवद्वेद्यं विशेषाद्दाहनाशनम्" । भा. प्र । अन्यच्च—"पत्रांगस्तिक्तकः शीतो रूक्षोऽम्लो मधुरः कटुः । व्रणशुद्धिकरो वर्ण्यः सुगन्धिर्वातपित्तहृत् । उन्मादज्वरविस्फोटमूत्रकृच्छ्रव्रणाञ्जयेत् । कफाश्मरीरक्तदोषभूतबाधानिवारणः" । नि. र ॥

**पत्तंगम्** । सू. २७ etc. पतंगम् ॥

**पत्तूरः** । सू. ६ etc. **मत्स्याक्षकः** । "मत्स्याक्षकस्तु पत्तूरः पत्रजः प्रिय इत्यपि" । इति । "जलपिप्पल्यंबुवल्ली पत्तूरः कञ्चटस्तथा" इति मदनपालः । शालिंच इति चक्रः । शिखालिकाभेदो महापत्र इति डल्हणः । पाचोंदा इति महाराष्ट्रीयाः । शान्तिशाक इति शिवदीपिका । सर्वांशो ग्राह्यः ॥

**पत्रम्** । सू ६ etc. तमालपत्रम् ॥

**पत्रकल्कम्** । चि. २१. सुगन्धवृद्ध्यर्थमवतरणसमये तैलादिषु दीयमानानि परिमलद्रव्याणि । उक्तं हि—"गन्धनिर्यासपुष्पाणां सिद्धे शीतेऽवतारिते । प्रक्षेपो गन्धवृद्ध्यर्थं पत्रकल्कन्तु तद्विदुः" इति । अन्यच्च—"पक्वपूतेऽप्युष्ण एव सम्यक्पेषितवर्तितम् । दीयते गन्धवृद्ध्यर्थं पत्रकल्कं तदुच्यते" ॥

**पत्रभंगः** । सू. १७ etc. **पल्लवः** । खण्डीकृतानि पत्राणीत्यर्थेन हेमाद्रिः । छदसमूहमित्यरुणदत्तः ॥

**पत्राढ्यः** । सू. ७. **मयूरः** । मयूर इत्येव चरकसुश्रुतयोः पाठः ॥

**पत्रोर्णम्** । सू. २६. पत्रकृता ऊर्णा अस्त्यस्य । **पट्टविशेषः** । धौतकौशेयम् । "पत्रोर्णं धौतकौशेय"मित्यमरयादवौ । Bleached silk । नारूपट्टु इति केरलेषु केचित् । पत्रोर्णो वल्कलाख्यः कंबल इति डल्हणः । अन्ये तु यैर्हरितादीनि देवांगानि उप्यन्ते ते पत्रोर्णाः, मागधपौण्ड्रकादिदेशेषु नागवृक्षादयश्चत्वारो वृक्षाः, तत्पत्रेभ्यो जातैर्हरिततन्तुभिरूर्णारूपैर्व्यूयते यत्तत्पत्रोर्णमित्येके। लकुचवटादिपत्रेषु कृमिलालोर्णाकृतं पत्रोर्णमिति क्षीरस्वामी ॥

**पथ्या** । सू. ८ etc. पथि साधुः । **हरीतकी** । "पथ्यत्वात् सर्वधातूनां पथ्या" इति वृद्धवाग्भटः ॥

**पथ्यावृन्तम्** । चि. १६. हरीतक्याः पत्रबन्धनम् । हरीतकीपत्रमितीन्दुः ॥

**पदत्राणम्** । सू. २. पादुकादि । see **उपानत्** ॥

**पद्मम्** । सू. ७ etc. पद्यते लक्ष्मीरत्र पद्मम् । पद गतौ । **कमलम्** । ईषच्छुक्लमित्येके ॥

**पद्मम्** । क. ४. **पद्मकम्** । see **पद्मरेणु** ॥

**पद्मकम्** । सू. ७ etc. **पद्मकाष्ठम्** । "पद्मकं स्यात् पद्मकाष्ठबिन्दुजालकयोरपि" इति मेदिनी । चम्पकवृक्षविशेष इत्याढमल्लः । "पद्मकं सरलं भद्रं कीटदोषविवर्जितम्" । भै. र । N. O.—*Rosaceae* । हिं.—पद्माख, पद्माक, पद्म ; बं.—पद्मकाष्ठ ; म.—पद्मकाष्ठ ; गु.—पद्मक, पद्मकाथि ; पद्मकनुं लाकडुं ; तै.—पद्मपुचेट्टु, एणुगुसहदेवि ; क.—पद्मक ; सिं.—

पद्मकाष्ठ ; पञ्जा.—चामि आरि , अमलगुछ ; मल.—पतिमुकं പതിമുകം , पतुमुकं ; ल.—*Prunus padum* । नामानि—"पद्मको मलयश्चारुः पीतरक्तो मरुद्भवः । सुप्रभः शीतवीर्यश्च पाटलापुष्पवर्णकः" । ध. नि । गुणा.—"पद्मकं तुवरं तिक्तं शीतलं वातलं लघु । वीसर्पदाहविस्फोटकुष्ठश्लेष्मास्रपित्तनुत् । गर्भसंस्थापनं रुच्यं वमिव्रणतृषाप्रणुत्" । भा. प्र । काष्ठं ग्राह्यम् ॥

**पद्मकर्णिका** । सू. २५. पङ्कजबीजकोशः । गुणाः—पद्मस्य कर्णिका तिक्ता कषाया मधुरा हिमा । मुखवैशद्यकृल्लघ्वी तृष्णास्रकफपित्तनुत्" । भा. प्र ॥

**पद्मकेसरम्** । चि. १ etc. कमलकिंजल्कम् । हिं.—कमलकेशर ; बं.—पद्मरेनू , म.—कमळकेसर ; तै.—तामरकेसरालु ; सिं.—नेलुं बुदालि ; मल.—तामरयल्लि ; इं.—Filaments of the lotus । नूतनं ग्राह्यम् । नामानि—"पद्मकेसरमापीतं किञ्जल्कं किञ्जमेव च । मकरन्दं तथा तुंगं गौरं काञ्चनकं च तद्" । ध. नि । गुणाः—किञ्जल्कः शीतलो वृष्यः कषायो ग्राहकोऽपि सः । कफपित्ततृषादाहरक्तार्शोविषशोथजित्" । भा. प्र ॥

**पद्मबीजम्** । उ. ६, कमलस्य बीजम् । हिं.—कमलगट्टा ; कमलगाट्टा ; बं.—पद्मेरबीचि ; म.—कमळाक्ष ; क.—पद्माक्ष , तावरेबीज ; गु.—कमलकाकडी ; तै.—तामरकाया ; अ.—वालके , कुवती ; मल.—तामरक्कुरु താമരക്കുരു ; इं.—Seed of the lotus । नामानि—"पद्मबीजं तु पद्माक्षं गालोड्यं पद्मकर्कटी" । ध. नि । गुणाः—"पद्मबीजं कटु स्वादु पित्तछर्दिहरं परम् । दाहास्रदोषशमनं पाचनं रुचिकारकम्" । रा. नि । अन्यच्च—"स्वादुतिक्तं पद्मबीजं गर्भस्थापनमुत्तमम् । रक्तपित्तप्रशमनं किञ्चिन्मारुतकृद्भवेत्" । ध. नि ॥

**पद्मरजः** । सू. १५. पद्मकेसरम् ॥

**पद्मरागमणिः** । चि. ७. पद्मस्येव रागो यस्य । **रक्तवर्णो माणिक्यभेदः** । "माणिक्यं पद्मरागः स्याच्छोणरत्नञ्च लोहितं" इति भावमिश्रः । **चतुर्विधमाणिक्यजातिः**—"तद्रक्तं यदि पद्मरागमथ तत् पीतातिरक्तं द्विधा जानीयात् कुरुविन्दकं यदरुणं स्यादेषु सौगन्धिकम् । तन्नीलं यदि नीलगन्धिकमिति ज्ञेयं चतुर्धा बुधैर्माणिक्यं कषघर्षणेप्यविकलं रागेण जात्यं जगुः" । रा. नि । "अन्धकारे महाघोरे यो न्यस्तस्सन् महामणिः । प्रकाशयति सूर्याभः स श्रेष्टः पद्मरागकः । पद्मकोशेषु यो न्यस्तः प्रकाशयति तत्क्षणात् । पद्मरागवरो ह्येष देवानामपि दुर्लभं" इति तन्त्रान्तरे । "विधूमं ज्वलदनलनिभं पद्मरागं वदन्ति" इत्येके । सिंहले तु भवेद्रक्तं पद्मरागमनुत्तमं । पीतं काणपुरोद्भूतं कुरुविन्दमिति स्मृतम् । अशोकपल्लवछायमसुं सौगन्धिकं विदुः । तुंबरे छायया नीलं नीलगन्धि प्रकीर्तितम् । उत्तमं सिंहलोद्भूतं निकृष्टं तुंबरोद्भवम् । मध्यमं मध्यजं ज्ञेयं माणिक्यं क्षेत्रभेदतः" । इति युक्तिकल्पतरौ । **हिं.**—मानिक, लाल, लालमणि, चुन्नी ; **बं.**—माणिक, चुनी ; पोखराज इत्येके ; **म.**—माणीक ; **गु.**—माण्यक, चुनी ; **तै.**—माणिक्यं ; **क.**—माणिक ; **सिं.**—पद्मराग ; **मल.**—माणिक्यं മാണിക്യം ; **अ.**—लाल ; **पा.**—लालवद्प्रशानी ; **इं.**—Ruby ; **ल.**—*Rubeus* । **गुणाः**—"माणिक्यं लेखनं शीतं कषायं मधुरं सरम् । चक्षुष्यं मंगलं दाहदुष्टग्रहविषापहं" इति । **लक्षणम्**—"स्निग्धं गुरु गात्रयुतं दीप्तं स्वच्छं सुरंगं च । इति जात्या माणिक्यं कल्याणं धारणात् कुरुते" । रा. नि । **तोलनम्**—"गुञ्जाफलप्रमाणस्तु दशसप्तति गुञ्जकात् । पद्मरागस्तुलयति यथापूर्वं महागुणः । बिंबीफलसमाकारो षड्त्रयुदशतोलकः । पद्मरागस्तुलयति यथोत्तरमहागुणः । अतः परं प्रमाणेन

मानेन न च लक्ष्यते" । परीक्षा—"दुग्धे शतगुणे क्षिप्तो रंजये-द्य: समंतत: । बसेच्छिखां लोहितां वा पद्मराग: स उत्तम:" । **धारणगुणा:**—"सपत्नमध्येऽपि कृताधिवासं प्रमादवृत्तावपि वर्त-मानम् । न पद्मरागस्य महागुणस्य भर्तारमापत्समुपैति काचित् । दोषोपसर्गप्रभवाश्च ये ते नोपद्रवास्तं समभिद्रवन्ति । गुणै: समुग्रै: सकलैरुपेतो य: पद्मरागं प्रयतो बिभर्ति" । **नवग्रहरत्नक्रम:**—"माणिक्यं तरणे: सुजातममलं मुक्ताफलं शीतगोर्माहेयस्य तु विद्रु-मो निगदित: सौम्यस्य गारुत्मतम् । देवेज्यस्य च पुष्परागमसु-राचार्यस्य वज्रं शनेर्नीलं निर्मलमन्ययोर्निगदिते गोमेदवैदूर्यके" । भा. प्र ॥

**पद्मरेणु** । क. ४ etc. **पद्मकेसरम्** । पित्तनाशकबस्तियोगे "सितो-पलाजीवकपद्मरेणु" इत्यत्र 'पद्मरेणु' स्थाने 'रेणुपद्मका'विति पद-द्वयमेव सुश्रुतसंहितायां दृश्यते । रेणु: पर्पटक: ॥

**पद्मा** । **सू.** १५ etc. पद्यते । 'पद गतौ' । **पद्मचारिणी** । N. O.—*Orchideae* । **हिं.**—स्थलकमल, बेटतामर; **बं.**—स्थलपद्म; **म.**—स्थलकमलिनी; **गु.**—स्थलकमल; **क.**—नेलतावरे, ओरलेतावरे, कलुतावरे; **त.**—ओरितळ्तामरै; **मल.**—ओरिलत्तामरा ഓരിലത്താമര, कल्त्तामरा, करत्ताम-रा; **इं.**—Ground-lotus; Round-leaved Habenaria; **ल.**—*Habenaria rotundifolia* । **नामानि**—"पद्मचारि-ण्यतिचरा पद्मा पद्मवतीति च । चारटी गन्धमूला च लक्ष्मी: श्रेष्ठा सुपुष्करा" । ध. नि । सर्वांशो ग्राह्य: । **गुणा:**—"शीता तिक्ता च तुवरा स्तनदार्ढ्यकरी मता । लघ्वी कटवी च विज्ञेया कफपित्तस्य नाशिनी । मूत्राश्मरीमूत्रकृच्छ्रवातशूलातिसारहा । वान्तिं दाहं मोहमेहौ रक्तरुग्श्वासहा मता । अपस्मारं विषं कासं नाशयेत् पद्मचारिणी" । नि. र । पद्मचारिणीतीन्दु: । भार्गीति

हेमाद्रिः । सुश्रुतसंहितायां प्रियंग्वादिगणे पद्माशब्दार्थो न विद्यते ॥

**पद्माद्रजः । सू. १५** see **पद्मरजः** ॥

**पद्मिनी । सू. ३** etc. पद्ममस्त्यस्याः । **कमललता** । "मूलनालदलोत्फुल्लपुष्पैः समुदिता पुनः । पद्मिनी प्रोच्यते प्राज्ञैर्बिसिन्यादि च सा स्मृता" । भा. प्र । **गुणाः**—"पद्मिनी शीतला गुर्वी मधुरा लवणा च सा । पित्तासृक्कफनुद्रूक्षा वातविष्टंभकारिणी" । भा. प्र । The root, stem, leaves and flowers taken together are called Padmini । "पद्मिनी योषिदन्तरे । अब्जेऽब्जिन्यां सरस्यां च" इति हैमः ॥

**पद्मिनीकर्दमः । चि. १८.** बिसपङ्कः । पद्मिनीपुष्पका शीतलकल्क इत्येके ॥

**पद्मिनीपुटः । सू. ३. कमलपत्रम्** ॥

**पनसः । सू. ६** etc. पद्यते स्तूयते पनसः । **बहिःकण्टकमहाफलवृक्षः** । N. O.—*Urticaceae* । **हिं.**—कटहल, कटहर, कठार, कठैल, फनस; **बं.**—कांटाल; **म.**—फणस; **गु.**—फनस; मनफनसा; **कों.**—पणसु; **द्रवा.**—फणस; **तै.**—पनसा; **क.**—इलसिनमर, हलसु; **त.**—पिलामरं; पलाचु इत्येके; **चीरा**; **सिं.**—इदुनुकोस्; **तु.**—पेला; **मल.**—पिलावु പിലാവു, प्लावु; चक्का (fruit); **फ्र.**—Jaquier; **जर्मन.**—Indischer Brodbaum; **इं.**—Indian jack tree; **ल.**—*Artocarpus integrifolia* । **नामानि**—"पनसस्तु महासर्जः फलिनः फलवृक्षकः । स्थूलः कण्टफलश्चैव स्यान्मूलफलदः स्मृतः । अपुष्पफलदः पूतफलो ह्यङ्कमितस्तथा" । रा. नि । आमफलं पक्वफलं च ग्राह्यं । **गुणाः**—"पनसं शीतलं पक्वं स्निग्धं पित्तानिलापहम् । तर्पणं

बृंहणं स्वादु मांसलं श्लेष्मलं भृशम् । बल्यं शुक्रप्रदं हन्ति रक्तपित्तक्षतव्रणान् । आमं तदेव विष्टंभि वातलं तुवरं गुरु । दाहकृन्मधुरं बल्यं कफमेदोविवर्धनम् । पनसोद्भूतबीजानि वृष्याणि मधुराणि च । गुरूणि बद्धविट्कानि सृष्टमूत्राणि संवदेत् । अन्यच्च— मज्जा पनसजो वृष्यो वातपित्तकफापहः । विशेषात् पनसो वर्ज्यो गुल्मिभिर्मन्दवाह्निभिः" । भा. प्र । "तद्बीजं सर्पिषा युक्तं स्निग्धं हृद्यं बलप्रदं" इति राजवल्लभः" ॥

**पयः** । सू. ५ etc. पीयते पयते वा रसत्वात् । **क्षीरम्** ॥

**पयस्या** । शा. २ etc. **क्षीरकाकोली** । अर्कपुष्प्यैत्येके । उत्तरचत्वारिंशत्तमाध्याये शरमूलीये राजादन इतीन्दुः ॥

**परपुष्टः** । सू. ३. परया काक्या पुष्टः । **कोकिलः** ॥

**परभृत्** । सू. ७. काकिपुष्टत्वात् । **कोकिलः** ॥

**परमान्नम्** । उ. ५. परमं च तदन्नं च । यद्वा परमाणामुत्तमानामन्नम् । दुग्धपक्वमन्नम् । देवादिप्रियत्वात् परमत्वमस्य । दुग्धतण्डुलसिद्धः कृतान्नविशेषः । हिं.—खीर, तस्मै ; म.—दूध घालून केलेला पदार्थ खीर इत्यादि ; त.—पाल्पायचं ; मल.—पाल्पायसं പാല്പായസം , पाल्बोरु । A kind of pudding or frumenty; a dish made of milk, rice and sugar । तत्साधनप्रणाली यथा—"पायसं परमान्नं स्यात् क्षीरिकापि तदुच्यते । शुद्धेऽर्धपक्वे दुग्धे तु घृताक्तांस्तण्डुलान् पचेत् । ते सिद्धाः क्षीरिका ख्याता सासिताज्ययुतोत्तमा" । भा. प्र । **गुणाः**— "क्षीरिका दुर्जरा प्रोक्ता बृंहणी बलवर्धिनी । विष्टंभिनी हरेत् पित्तरक्तपित्ताग्निमारुतान्" । भा. प्र । **अन्यच्च**—"तण्डुलात्त्रिगुणं दुग्धं तदर्धं जीवनं प्रिये । तदर्धं तु गुडं कान्ते पाचितं परमान्नकम् । परमान्नं वातपित्तहरं वृष्यं बलप्रदम् । कफप्रकोपनं

बाले तृप्तिकृच्च प्रकीर्तितम्" ॥

**परिपेलवम्** । सू. १५ etc. परितः पेलवं मृदुता यस्य । जलमुस्ता । कैवर्तमुस्तकम् । शैवालमध्ये जायमानो मुस्ताकारपदार्थ इत्येके । हिं.—केवटी मोथा; बं.—केउटमुथा, जलेरमूता; म.—केवडीमोथा; गु.—केवडीमोथ; क.—कोमठी मोथा; त.—नीमुत्तकाचु; मल.—नीमुत्तङ्ङा നീർമുത്തങ്ങ, करीङ्ङा, कयिमुत्तङ्ङा । लक्षणम्—"मुस्तावत् पेलवपुटं शुक्राभं स्याद्वितुन्नकम्" । नामानि—"कुटन्नटं दाशपुरं वानेयं परिपेलवम् । प्लवगोपुरगोनर्दकैवर्तीमुस्तकानि च" इत्यमरः । अन्यच्च—"परिपेलवं प्लवं वन्यं तत् कुटन्नटसंज्ञकम् । जायते मण्डूकाकारं शैवालदलसंचये । कैवर्तीमुस्तके क्लीबं शोणके वा कुटन्नटः" इत्यजयः । गुणाः—परिपेलं कटूष्णं च कफमारुतनाशनम् । व्रणदाहामशूलघ्नं रक्तदोषहरं परम्" । रा. नि । कन्दो ग्राह्यः । रोध्रादिगणे परिपेलवशब्दस्य कुटन्नट इति सुश्रुतपाठः । स्योनाक इति डल्हणहाराणचन्द्रौ । क्षुद्रमुस्तेति हेमाद्रिः ॥

**परूषः** । चि. १ see **परूषकः** ॥

**परूषकः** । सू. ६ etc. **स्वनामख्यातवृक्षः** । N. O.—*Tiliaceae* । हिं.—फालसा, परुषा, फल्लूरे, फरूषा, शुकरी; बं.—परुषफलेर गाछ, फलसा; सिन्धी.—फालसा; पञ्जा.—फालना, फहआ; म.—फालसा, पर्पका; गु.—फालसा; तै.—पुटिकी; क.—बेट्टहा, दोगलि; ल.—*Grewia Asiatica* । परूषको धन्वपत्रकः स्वनाम्नैव प्रसिद्धः, स द्विविधो वृक्षविटपभेदादिति डल्हणः । धन्वनसदृशं मृद्वल्पास्थिफलमिति हेमाद्रिः । नामानि—"परूषकं परु प्रोक्तं नीलवर्णं परापरम् । परिमण्डलमल्पास्थि परूषं चापि नामतः" । ध. नि । आमपक्वफलानि ग्राह्या-

णि। गुणाः—"परूषकं कषायाम्लमामं पित्तकरं लघु। तत्पक्वं मधुरं पाके शीतं विष्टंभि बृंहणम्। हृद्यन्तु पित्तदाहास्रज्वरक्षयसमीरहृत्"। भा. प्र। "परूषकत्वक् प्रमेहघ्नी योनिमेढ्रजदाहनुत्। मूत्रदोषप्रशमनी शीतपित्तानिलापहा"। अ. सं। "परूषमम्लं कटुकं कफार्तिजिद्वातापहं तत्फलमेव पित्तलम्। सोष्णं च पक्वं मधुरं रुचिप्रदं पित्तापहं शोफहरं च पीतम्"। रा. नि। शारिवादिगणे परूषकस्थाने पद्मकमित्येव सुश्रुतपाठः॥

**पर्णशाकम्** । नि. १४. पत्रशाकम्। वास्तुककालशाकादीनि॥

**पर्णिनी** । चि. ५. शालपर्णी। अत्र तु "पर्णिनीनां चतसृणां" इति पठति चरकः॥

**पर्णिनीचतुष्कम्** । चि. १. शालपर्णी पृश्निपर्णी मुद्गपर्णी माषपर्णी च॥

**पर्णिन्यः चतस्रः** । सू. १० etc. पर्णिनीचतुष्कम्॥

**पर्णिन्यौ** । उ. ३९. मुद्गपर्णी माषपर्णी च॥

**पर्णी** । उ. १८. शालपर्णी। "धातक्युत्पलपर्णीभि"रित्यत्र "धातकी शिलपर्णीभि"रिति सुश्रुतपाठः। शिला मनःशिला, पर्णी शालपर्णी इति डल्हणः॥

**पर्पटः** । सू. ६ etc. पर्पटकः। सद्योव्रणचिकित्सायां "कालानुसार्यगुर्वेला जातीचन्दनपर्पटै"रित्यत्र पर्पटस्थाने "पद्मक" इत्येव सुश्रुतपाठः॥

**पर्पटकः** । शा. २ etc. **स्वनामख्यातह्रस्वक्षुपः** । N. O.—*Rubiaceae* । *Fumariacea* इत्येके; *Ficoideæ* इति केचित्। हिं.—पित्तपापडा, दवनपापड़ा; बं.—श्वेतपापडा, उर्दु.—हसरघाना; उत्.—जड़पाँपुडा; म.—पित्तपापडा; गु.—

खडसलियो, पीतपापडो; काश्मी.—शहतेरह; पा.—श्यातरह, शहतेरह, शातरा; अ.—बकलत-एल-मालिक; मुंबापुर्याम्.—पित्तपापडा; तै.—पर्प्पाटकमु; क.—पर्प्पाटक; कों.—पर्प्पाटक; त.—पर्प्पाटकं; तु.—कोरपंति; सिं.—पतुपाडगं, वेपिलिय; मल.—पर्प्पटकप्पुलु പര്പ്പടകപ്പുല്ല്, पर्प्पटकं; इं.—Common fumitory; Rangiarepinse इत्येके; ल.—*Oldenlandia herbacea*; *Fumaria parviflora* इति केचित्; Mollugo cerviana इत्यपरे। The Oldenlandia herbacea is a "small, weak, straggling delicate plant, appearing in the rainy season" in fields and low ground on the banks of water courses. The entire plant is used in medicine, and is regarded as a valuable bitter tonic and febrifuge. इत्युदयचन्द्रदत्तः। नामानि—"शीतप्रियः पर्पटको ज्वरघ्नः सूक्ष्मपत्रकः। वरतिक्तः पित्तघाती कवरो रेणुनामकः" । स. नि। गुणाः—"पर्पटो हन्ति पित्तास्रभ्रमतृष्णाकफज्वरान्। संग्राही शीतलस्तिक्तो दाहनुद्वातलो लघुः" । भा. प्र। सर्वांशो ग्राह्यः। "एकः पर्पटकः श्रेष्ठः पित्तज्वरविनाशनः" इति ॥

**पलम्** । सू. ३ etc. **मांसम्** ॥

**पलंकषा** । चि. १ etc. **गुग्गुलुः** । गोक्षुर इति केचित्। उत्तरषष्ठाध्याये "अतिछला पलंकषा" इत्यत्र पलंकषा लाक्षेतीन्दुः ॥

**पललम्** । चि. १४ etc. **तिलकल्कः** । भृष्टतिलचूर्णमित्यरुणदत्तः। पिष्टकमिति जेज्जटः। तिलकल्कमितीन्दुः। शुष्कमांसचूर्णमित्येके।

**पललम्** । उ. ३९. **मांसम्** । "पललं तिलचूर्णे स्यात् पललं पिशितेपि च" इति शाश्वतः। मांसरस इत्येके ॥

**पलाण्डुः** । सू. ६ etc. पिपर्ति धातून् पलाण्डुः । पलं मांसमण्डति इति वा । पलति । 'पल रक्षणे' । बाहुलकाद् आण्डुप्रत्ययः इति रामाश्रमी । **मूलशाकविशेषः** । N. O.—*Liliaceae* । **हिं.**—पियाज , प्याज ; **बं.**—पेयाँज ; **म.**—कांदा , श्वेतकान्दा ; **गु.**—डुंगरी ; **कों.**—पियावु ; **तै.**—नीरुळ्ळि ; **क.**—नीरुळ्ळि , ईरुळ्ळि ; **तु.**—नीरुळ्ळि ; **त.**—ईरवेङ्कायं , ईरुळ्ळि , वेङ्कायं ; **मल.**—ईरुळ्ळि ഉള്ളി , वसोळा , सावाळा , वलिय वेळ्ळुळ्ळि ; बङ्काळतुळ्ळि इत्येके ; **पा.**—प्याज ; **अ.**—बसल ; **बर्मा.**—Kyet-th-woni-ni (कयत्त्वोनि-नि) **इं.**—Onion, Bulb onion ; **ल.**—*Allium cepa* ; **फ्र.**—Ognon । स श्वेतहारिद्रवर्णभेदेन द्विधा । तयोर्हारिद्रो रक्तो वा राजपलाण्डुरित्युच्यते । स्थूलनालाग्रपत्रो गुन्द्रालिकाभेदः स एव सक्षीरो मधुररसः क्षीरपलाण्डुरित्युच्यते इति डल्हणः । लशुनभेद इत्येके । गृञ्जनकभेद इति केचित् । **नामानि**—"पलाण्डुर्यवनेष्टश्च सुकन्दो मुखदूषणः । हरितोऽन्यः पलाण्डुश्च लतार्को दुद्रुमः स्मृतः" । ध. नि । **गुणाः**—"पलाण्डुस्तु गुणैर्ज्ञेयो रसोनसदृशो गुणैः । स्वादुः पाके रसेऽनुष्णः कफकृन्नातिपित्तलः । हरते केवलं वातं बलवीर्यकरो गुरुः" । भा. प्र । "पलाण्डुः कटुको बल्यः कफपित्तहरो गुरुः । वृष्यश्च रोचनः स्निग्धो वान्तिदोषविनाशनः" । रा. नि । "पलाण्डुर्धवलाख्यश्च दुर्गन्धो मुखदूषकः" इति मदनपालः । धवलाक्षक इत्यरुणदत्तचन्द्रनन्दनौ । "मरकतमणिनील" मित्यादिभिर् हृदयंगमकवनतल्लजैस्सुचित्रितोस्ति रसायनाधिकारे पलाण्डुर्वृद्धवाग्भटेन । कन्दो ग्राह्यः ॥

**पलाण्डुकन्दः** । उ. ५. पलाण्ड्वोः कन्दः । पलाण्डुः । प्याजका कन्द ॥

**पलाशः** । सू. १५. अ. ग. तमालपत्रं यस्मिन्नुत्पद्यते सः । तमालपत्रवृक्षः । see **पलाशम्** ॥

**पलाशः** । सू. १५. रो. ग etc. प्रशस्तानि पलाशानि सन्त्यस्य पलाशः, पलमश्नुते रक्तपुष्पत्वाद्वा । स्वनामख्यातरक्तवर्णपुष्पो महातरुवर्गीयवृक्षः । N. O.—*Leguminosae* । हिं.—ढाक, टेसू, केसू, केशु, धारा, कांकरिया, छिउल; बं.—पलाशगाछ; म.—पळस; गु.—खाखरो; कों.—फलसारूकड्ड; उत्.—पराशु; तै.—मोदुगा, मूदुगा, पलाडुलु; क.—मुत्तगा, मुत्तलमर; त.—पलाचु, पुरचमरं; तु.—पलाश; सिं.—कूल; मल.—प्लाशु ꯂ꯭ꯑ, पिलाशु, चमता; पा.—दाराखटेपलाशा; फ्र.—Butee-feuillue; इं.—Bastard teak, Bengal kino, Pulas kino tree; ल.—*Butea frondosa* । **नामानि**—"पलाशः किंशुकः पर्णो यज्ञियो रक्तपुष्पकः । क्षारश्रेष्ठो वातहरो ब्रह्मवृक्षः समिद्वरः" । भा. प्र । **गुणाः**—"पलाशो दीपनो वृष्यः सरोष्णो व्रणगुल्मजित् । कषायः कटुकस्तिक्तः स्निग्धो गुदजरोगजित् । भग्नसन्धानकृद्दोषग्रहण्यर्शःकृमीन् हरेत् । तत्पुष्पं स्वादु पाके तु कटु तिक्तं कषायकम् । वातलं कफपित्तास्रकृच्छ्रजिद् ग्राहि शीतलम् । तृड्दाहशमकं वातरक्तकुष्ठहरं परम् । फलं लघूष्णं मेहार्शःक्रिमिवातकफापहम । विपाके कटुकं रूक्षं कुष्ठगुल्मोदरप्रणुत्" । भा. प्र । "रक्तः पीतस्सितो नीलः कुसुमैस्तु विभज्यते । किंशुको गुणसाम्येऽपि सितो विज्ञानदः स्मृतः" । रा. नि । रोध्रादिगणव्याख्यायां शठीत्यरुणदत्तः । कफवातनाशकवस्तियोगे 'पलाश' इत्यत्र निशाच्छद इति सुश्रुतपाठः । शठीति डल्हणः । "एरण्डमूलात्त्रिपलं पलाशात्तथा पलांशं लघुपञ्चमूलं" इत्यत्र "एरण्डमूलात्त्रिपलं पलानि ह्रस्वानि मूलानि च यानि पञ्च" इत्येव चरकपाठः । त्वग्बीजादिकं ग्राह्यम् ॥

**पलाशम्** । सू. १५, चि. ९, चि. २१ etc. **तमालपत्रम्** । असनादिगणे पलाशस्थाने कालस्कन्ध इति सुश्रुतपाठः, तस्मात्तत्र तमालपत्रवृक्ष इत्यवश्यमवगन्तव्यम् । किंशुक इत्येवारुणदत्तचन्द्रनन्दनौ । अतीसारसामान्यचिकित्सायां "पलाशहपुषाजाजी" त्यत्र गन्धपलाशमित्येव संग्रहपाठः ॥

**पशुगन्धा** । सू. १५ etc. **अजगन्धा** ॥

**पांशुबाष्पः** । सू. ६. पांसुवाप्यः, पांसुबाष्प इति पाठौ । पांसुभूमिवापितशालिधान्यविशेषः । हायनादधिकगुणः । पांसुः बाष्पश्चेति पदद्वयमिति केचित् । पुराणं धान्यं ग्राह्यम् ॥

**पांसुजम्** । सू. १०. **लवणविशेषः** । **मल.**—पोटियुप्पु ൧ൊാടി ഉപ്പ് ; **बं.**—पांगा ; **म.**—वापेसुखलेंमीं ; **क.**—वयलुगङ्घय उप्पु ; **त.**—चवुट्टुप्पु ; **सिं.**—पांशुलुणु ; **इं.**—Fossil salt । औद्भिदमस्य पर्यायमिति केचित् । "औद्भिदं पांशुलवणं यज्जातं भूमितः स्वयं" इति भावमिश्रः । पूर्वसमुद्रजमिति चक्रपाणिदत्तः । **गुणाः**—"पांसुजं तिक्तमत्युग्रं व्यवायि कटुपाचितम्" । ध. नि । शोधितं ग्राह्यम् ॥

**पांसूत्थम्** । **सू. ६. पांसुजम्** ॥

**पाकलम्** । **उ. ३६.** व्याधित्वात्, पाकं लाति वा । **कुष्ठम्** । "पाकलं कुष्ठभेषज्ये पुंसि स्यात् कुञ्जरज्वरे" इति मेदिनी ॥

**पाश्वमूलिकम्** । **चि. ८.** "निरूहं वा प्रयुञ्जीत सक्षीरं पाश्वमूलिकं" इत्यत्र "दाशमूलिक" मित्येव चरकपाठः ॥

**पाटलः** । **सू. ६.** पाटं लाति । पाटलो वर्णोऽस्यास्तीति वा । वर्षापाकिव्रीहिभेदः, **आशुधान्यम्** । "पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते" । भा. प्र । **गुणाः**—"बद्धमूत्रपुरीषोष्णाक्षिदोषस्त्वेत

पाटल:" । च. सू. २७ । "अत्युष्णो बद्धनिष्यन्दी पाटलस्तु त्रिदोषकृत्" । रा. व । "आशुव्रीहौ पाटलो ना श्वेतरक्तेऽयालिंगवान्" इति रुद्र: ॥

**पाटला** । सू. ३ etc. ताम्रपुष्पत्वात् । "पाटला पाटलौ स्त्री स्याद् स्या: पुष्प पुनर्न ना । आशु धान्ये पुमान् श्वेतरक्तवर्णेऽपि वाच्यवत्" इति मेदिनी । **स्वनामख्यातवृक्ष:** । N. O.—*Bignoniaceae* । **हिं.**—पाढल , पाडर , पाडरि , पद् ; **बं.**—पारुलगाछ ; **म.**—पाढळ , पाडळ , पाड्ली ; **गु.**—पाडल , काकच , पान्दन ; **कों.**—कुसगो ; **उत्.**—पाटुडि ; **तै.**—कलिगोट्टु , कलगोरु , कलगोरिपाद्री ; **क.**—पाद्री , पुरुळिमर ; हाद्री ; **त.**—पातिरिमर ; **तु.**—पुरुळि ; **सिं.**—पलोल् ; **मल.**—पातिरि ပာതിരി , पूप्पातिरि ; **इं.**—Trumpet flower; **ल.**—*Stereospermum suaveolens, S. chelonioides; Bignonia suaveolens* । **नामानि**—"पाटली ताम्रपुष्पी च कुंभीका रक्तपुष्पिका । वसन्तदूती चामोघा स्थाली च विटवल्लभा । स्थिरगन्धांबुवासा च कालवृन्तीन्दुभूह्वया" । रा. नि । घण्टापाटलकाष्ठपाटलभेदेन सा द्विधा । मूलकाष्ठं ग्राह्यम् । मूलत्वगित्येके । **गुणा:**—"पाटला तुवरा तिक्तानुष्णा दोषत्रयापहा । अरुचिश्वासशोथास्रच्छर्दिहिक्कातृषाहरी । पुष्पं कषायं मधुरं हिमं हृद्यं कफास्रनुत् । पित्तातिसारहृत् कण्ठ्यं फलं हिक्कास्रपित्तहृत्" । भा. प्र ॥

**पाटलि:** । सू. १५. पाटला ॥

**पाटली** । चि. ११. पाटला । मुष्कक इति केचित् ॥

**पाठा** । सू. ६. etc. पठ्यते । 'पठ व्यक्तायां वाचि' । पाठस्तु पठने ख्यातो विद्धकर्ण्यां तु योषिति" इति मेदिनी । **ईषद्रोमशा श्वेतपुष्पगुच्छा विद्धकर्णीलता** । N. O.—*Menispermaceae* । **हिं.**—पाढ , पाठ , निमुका , हरजोरि ; **बं.**—आकनादि ; **म.**—पहाडमूळ ; **गु.**—पाड , काळीपाट , करेंढियुं ; करान्धिस ;

कों.—पहाड, पाडावळि; पञ्जा.—पिलाजुर, पिलिजारि; द्रवा.—निर्विसि; उत्.—अकानविन्धि; तै.—पाडचेट्टु; क.—पाडावळिबळ्ळि, अगरुसुटि, अगलुशुटी; त.—पाटै; वट्टत्तिरुप्पि; सिन्धी.—तिकरी, कटोरि; सिं.—दियमित्त; तु.—तिपले; मुंबापुर्याम्.—वेनिवित, पहाडवेल. मल.—पाटवळ्ळि പാടവള്ളി, पाटक्किळङ्ङु, पाटा; इं.—Velvet-leaf, Parroroot; ल.—*Cissampelos pereira; cyclea burmanni* इत्येके । **नामानि**—"पाठांवष्ठा विद्धकर्णी स्थापनी श्रेयसी रसा । एकाष्ठीला पापचेली प्राचीना वनतिक्तका" । स. नि । मूलादिकं ग्राह्यम् । **गुणाः**—"पाठोष्णा कटुका तीक्ष्णा वातश्लेष्महरी लघुः । हन्ति शूलज्वरच्छर्दिकुष्ठातीसारहृद्रुजः । दाहकण्डूविषश्वासकृमिगुल्मगरव्रणान्" । भा. प्र । कफजोष्ठरोगचिकित्सायां "पाठाक्षारमधुव्योषै"रित्यत्र "पाठा"स्थाने विडामित्येव सुश्रुतपाठः ॥

**पाठीनः** । सू. ६. बहुदंष्ट्रत्वात् पाटयतीति, भक्ष्यत्वेन पठ्यते वा । पाठीं पृष्ठं नमयतीति वा । वातालो नाम मत्स्यविशेषः । "मीने वदालः पाठीन" इति त्रिकाण्डशेषे । हिं.—पठिना, बुआरी; बं.—वोयालमाछ; म.—पाठीन; मल.—चेरुमीन् ചെറുമീൻ, चेरनुविराल्; वाका इति केचित् । ल.—*Silurus boalis* । रूप्योदरः कृष्णवर्णकः कण्टकमञ्जरिरिति हेमाद्रिः । "निद्रायुक्तो मांसभुक् स्यात् स पाठीनः स्मृतो बुधै"रिति निघण्टुरत्नाकरे । "सहस्रदंष्ट्रः पाठीनः कृष्णवर्णो महाशिराः" इति मदनपालः । अशल्कल एव दीर्घो निर्मलः सोपि 'वोयाल' इति लोके प्रसिद्ध एवेति डल्हणः । "पाठीनः श्लेष्मलो वृष्यो निद्रालुः पिशिताशनः । दूषयेद्रक्तपित्तं तु कुष्ठरोगं करोत्यसौ" इति सुश्रुतः । "पाठीनः श्लेष्मलो बल्यो निद्रालुः पिशिताशनः । दूषयेद्रुधिरं पित्तं कुष्ठरोगं करोति च" । भा. प्र ॥

**पादत्रम्** । चि. १३. उपानत् ॥

**पादत्राणम्** । सू. २. उपानत् ॥

**पानकम्** । चि. ६. मत्स्यण्डिकादिमिष्टद्रव्यकृतपानीयम् । हिं.—शरबत ; **मल.**—सर्बत्तु സർബ്ബത്തു് । Sherbet । सिं.—रसपानयक् , सर्वत् ॥

**पायसः** । सू. ७ etc. पयसि संस्कृतम् । **परमान्नम्** । "पायसस्तु क्लीबपुंसोः श्रीवासपरमान्नयोः" इति मेदिनी ॥

**पारदः** । उ. ३२ etc. पारं ददाति । पारत इति पाठः । पारं तनोति । तनु विस्तारे । "रसेन्द्रः पारदः प्रोक्तः पारतोपि निगद्यते" इति तारपालः । **स्वनामख्यातो खनिजतरलधातुविशेषः** । "मूर्छितो हरते व्याधीन् बद्धः खेचरसिद्धिदः । सर्वसिद्धिकरो लीनो निरुद्धो देहसिद्धिदः । विविधव्याधिभयोद्यमरणजरासङ्कटेऽपि मर्त्यानां । पारं ददाति यस्मात्तस्मादयमेव पारदः कथितः" । रा. नि । हिं.—पारा ; बं—पारा ; म.—पारा ; गु.—पारो ; तै.—पारदरसमु , पादरसमु ; क.—पारदरस , पादरस ; त.—प्रातरचं , इरचं ; कों.—पादरस ; सिं.—रसदिय ; **मल.**—रसं രസം ; पा.—सिमाव , इसीबक ; अ.—अबुक , सिबख ; फ्र.—Mercure ; जर्मन्.—Merkur ; इं—Mercury , Quicksilver ; ल.—*Hydrargyrum* । **नामानि**—"पारदो रसधातुश्च रसेन्द्रश्च महारसः । चपलः शिववीर्यं च रसः सूतः शिवाह्वयः" । भा. प्र । शोधितमारितं ग्राह्यम् । **गुणाः**—"पारदः षड्रसः स्निग्धस्त्रिदोषघ्नो रसायनः । योगवाही महावृष्यः सदा दृष्टिबलप्रदः । सर्वामयहरः प्रोक्तो विशेषात् सर्वकुष्ठनुत्" । भा. प्र । **दोषाः**—"संस्कारहीनं खलु सूतराजं सेवेत यस्तस्य करोति बाधाम् । देहस्य नाशं विदधाति नूनं कुष्ठादिदोषाननेकरागाणाम्" ।

भ. नि । हिंगुलाद्रसाकर्षणविधिः—"निंबूरसैर्निंबपत्ररसैर्वा याममात्रकम् । घृष्ट्वा दरदमूर्ध्वं तु पातयेत् सूतयुक्तिवत् । तत्रोर्ध्वपिठरीलग्नं गृह्णीयाद्रसमुत्तमम् । शुद्धमेव हितं सूतं सर्वकर्मसु योजयेत्" । भा. प्र ॥

**पारावतः** । चि. २. परं जीवमवति । पराक्रमोऽहंकाराद्वा ज्ञानोपदेशेन । अव रक्षणादौ । "पारावतः कपोतः स्यात् कपोतो विहगान्तरे" इति विश्वः । **कपोतजातिभेदः गृहदेवकुलालयः** । **हिं.**—परेवा; **बं.**—पायरा, पारवा; **म.**—पारवा; **तै.**—पारुवापिट्ट; **त.**—माटप्पुरा; **सिं.**—परविय; **मल.**—माटप्रावु മാടപ്രാവു, वळर्तुंप्रावु; **इं.**—Pigeon; **ल.**—*Columba livia* । **नामानि**—"पारावतो कलरवोऽरुणलोचनश्च पारावतो मदनकाकुरवश्च कामी । रक्तेक्षणो मदनमोहनवाग्विलासी कण्ठीरवो गृहकपोतक एष उक्तः" । रा. नि । **मांसगुणाः**—"रक्तपित्तप्रशमनः कषायविशदोपि च । विपाके मधुरश्चापि गुरुः पारावतः स्मृतः" । सु. सू. ४६ । "कषायविशदाः शीता रक्तपित्तनिबर्हणाः । विपाके मधुराश्चैव कपोता गृहवासिनः" । च. सू. २७ । "पारावतो गुरुः स्निग्धो रक्तपित्तानिलापहः । संग्राही शीतलस्तज्ज्ञैः कथितो वीर्यवर्धनः" । भा. प्र ॥

**पारावतकः** सू. ६ व्रीहिधान्यविशेषः । पारावतवत् शुक्लतण्डुलः । लावाक्षाद्धीनगुणः ॥

**पारिभद्रः** । चि. ११. परितो भद्रमस्यास्य । **रक्तकुसुमः कण्टकीवृक्षविशेषः** । N. O.—*Leguminosae* । **हिं.**—फरहद, फरहद, पांगरा; जलनीम इत्येके; **बं.**—पालदे मान्दारगाछ; पालिधार; **म.**—पांगारा, पानारा, पारिंगा; **गु.**—पारिंगा, फरहद, पानारावास, पारारू; **कों.**—पंगिरो; **दखा.**—पञ्जीर; **तै.**—बाडिसेचेट्टु, मुंखिकर, बारिजमु, मोदुगो, बारिदाबे-

ट्टु, वार्दचिपाचेट्टु ; मुलमोतिचेट्टु ; क.—हौंगरा, हंगरक, पॉंगरा, हालिवान, वार्जिपेमर, हारावाना, हरिबाल, पावॉल-दमर ; तु.—पौंकरदमर ; त.—कलियाणमुरुक्कु, मुरुक्कु ; सिं.—एरबडु, बडु ; मल.—मुरिक्कु മുരിക്ക, मुळ्मुरुक्कु, मन्दारं ; फ्र.—Arbre immortel ; जर्मन्.—Indischer korallenbaum ; इं.—Indian coral tree; Moochy wood tree ; ल.—*Erythrina indica* । नामानि—"पारिभद्रो निंबतरुर्मन्दारः पारिजातकः । रोहितो रक्तपुष्पी च किंशुकः प्लीहनाशनः" । स. नि । पारिभद्रः फलभद्रो रक्तकुसुमः कण्टकी रोहिणीसदृशपत्रः पूर्वदेशे प्रसिद्ध इति डल्हणः । त्वगादिकं ग्राह्यम् । गुणाः—"पारिभद्रः कटूष्णः स्यात् कफवातनिकृन्तनः । अरोचकहरः पथ्यो दीपनश्चापि कीर्तितः । रा. नि । "पारिभद्रोऽनिलश्लेष्मशोथमेदःक्रिमिप्रणुत् । तत्पत्रं पित्तरोगघ्नं कर्णव्याधिविनाशनम्" । भा. प्र । "पुष्पं पित्तरुजं हन्ति कर्णव्याधिं विनाशयेत्" इत्येके ॥

**पारिभद्रकः** । सू. ३० etc. **पारिभद्रः** । क्षारक्रियायोगे देवदारुरिति डल्हणः । क्रिमिचिकित्सिते "पारिभद्रककेबुकात्" इत्यत्र पर्वतनिंब इत्येव डल्हणः ॥

**पारियात्रः** । सू. ५. **पर्वतविशेषः** । One of the Principal mountain chains in India. It is probably the same as the Sewalik mountains which run parallel to the Himalaya and guard the Gangetic Doab on the north-east.

**पार्थः** । उ. २२. **अर्जुनवृक्षः** । "पार्थस्तु ककुभे जिष्णौ" इति विश्वः ॥

**पार्थी** । सू. १५. वे. ग ; **आदित्यभक्ता** । see **सुवर्चला** ।

कपोतवङ्केति सुश्रुतपाठः । ब्राह्मीति भाष्यकारः । अन्ये शिरीषसदृशपत्रा स्वल्पविटपेति द्रव्यान्तरमाहुः । पार्थ इत्यर्जुनद्रुमत्वेन केरलेष्वेके ॥

**पालक्या । सू. ६. वस्तूकाकारशाकविशेषः** । पालंक्या इति पाठः । "पालंक्या तण्डुलीयव"दिति सुश्रुतः । पालङ्क इति लोके इति डल्हणः । "पालक्या वास्तुकाकारा" इति भावमिश्रः । ईषल्लोहितचीरितपत्रा वस्तुकसदृशा इति हेमाद्रिः । **हिं.**—पालक, पालंकी, पलकी ; **बं.**—पालङ्शाक ; **म.**—पालख ; **गु.**—टांको, पालखनी भाजी ; **क.**—पालक्य ; **मल.**—तेर्चीरा ൩ൊൻച്ചീര ; **ल.**—*Beta bengalensis* । **नामानि**—"पालक्यं तु पलक्यायां मधुरा क्षुरपत्रिका । सुपत्रा स्निग्धपत्रा च ग्रामीणा ग्राम्यवल्लभा" । रा. नि । पत्रं ग्राह्यम् । **गुणाः**—"पालक्या वातला शीता श्लेष्मला भेदिनी गुरुः । विष्टंभिनी मदश्वासपित्तरक्तकफापहा" । भा. प्र । "पालक्यमीषत्कटुकं मधुरं पथ्यशीतलम् । रक्तपित्तहरं ग्राहि ज्ञेयं सन्तर्पणं परम्" । रा. नि । "पालक्या पिच्छिला गुर्वी श्लेष्मला भेदिनी हिमा" इति संग्रहे ॥

**पालनिका । चि. १. त्रायमाणा** । ब्राह्मीति पाठ्यकारः ॥

**पालनी । चि. १. त्रायमाणा** । त्रायमाणेत्येव चरकसुश्रुतसंग्रहवंगसेनसंहितासु पाठः । कृष्णशारिबेत्येके ॥

**पालाशवृन्तम् । चि. २. पलाशकुसुमस्य वृन्तम्** । पलाशके फूलोंकी दंडियों । **मल.**—प्लाशिन्पूविन् ञेट्टि പ്ലാശിൻപൂവിൻ ഞെട്ടി ॥

**पालिंदी । उ. ३८.** पालयति । 'पाल रक्षणे' । त्रिवृत् । श्यामा त्रिवृदितीन्दुः ॥

**पालेवतम्** । सू. ६ etc. पारावतमिति पाठः । **फलविशेषः** ।
पारावतं फलं कामरूपे प्रसिद्धं पाककाले धवललोहितं, तिन्दुकाकारि च; तद्द्विविधं मधुरमम्लं चेति । "पालेवतं सितं पुष्पैस्तिन्दुकाभफलं मतम्" । ध. नि । रैवातमिति केचित् । हिं.—पारेवत; बं.—पेयारा; म.—पालेवत, उतरी; गु.—पालेवत; क.—उत्तरिगे; उर्दु.—...; पक्वफलं ग्राह्यम् । **नामानि**—"पारेवतं तु रैवतमारेवतकञ्च किञ्च रैवतकम् । मधुफलममृतफलाख्यं पारेवतकञ्च सप्त ह्वन" । रा. नि । **गुणाः**—"पारेवतं तु मधुरं कृमिवातहारि वृष्यं तृषाज्वरविदाहहरं च हृद्यम् । मूर्छाभ्रमश्रमविशोषविनाशकारि स्निग्धं च रुच्यमुदितं बहुवीर्यदायि" । रा. नि । Wilson thinks it implies the fruit of the Anona reticulata ॥

**पाषाणभेदः** । चि. ११. अश्मभेदः ॥

**पिचुकः** । चि. ११. नीलोत्पलम् । चिञ्चुक इति मुंबापुरमुद्रितसंग्रहपाठः । शितिवारक इत्यरुणदत्त इन्दुश्च । पिचुकः पक्ववकरी, कार्पासफलं इत्येके इति डल्हणः ॥

**पिचुका** । उ. २६. पिचुकीति चरकपाठः । मणिरूतारापथे प्रसिद्ध इति चक्रपाणिदत्तः । रक्तपुष्पिकेति काचिदौषधिरितीन्दुः ॥

**पिचुनक्तकः** । शा. २. वस्त्रखण्डः ॥

**पिचुमन्दः** । चि. १ etc. पिचुं कुष्ठं मन्दयति, मृद्नाति वा । निंबः ॥

**पिच्छनलिका** । सू. २५. पक्षिपिच्छनाडीति हेमाद्रिः । मल.—तूवल्तण्टु ത്തൂവൽത്തണ്ടു ॥

**पिण्डालुः** । सू. ६. पिण्डाकार आलुः । **कन्दशाकविशेषः** ।
N. O.—*Convolvulaceae* । हिं.—पिंडालु, शकरकन्दी;

रताळु ; बं.—चुवडि आलु , गोलअ लु ; म.—रताळें , पेडालु ; गु.—रतालु , शकरकन्द ; कों.—चीनिकणंग ; तै.—गेनुसु , चिलगडमु , मोहनमु ; क.—सीगेणसु , गेणसुगड्ड , विलियहेंडल ; उत्.—वराअलु ; तु.—केरेंग् ; त.—चक्करैवळ्ळि , वळ्ळिक्किळंकु ; मल.—चक्करवळ्ळिक्किळङ्ङु ചക്കരവള്ളിക്കിഴങ്ങ് , चक्करकिळङ्ङु , मधुरकिळङ्ङु , चीनिकिळङ्ङु , कप्पकिळङ्ङु ; पा.—जरदाकुलाहोरी ; फ्र.—Truffle douce: Potate de malaga ; जर्मन्.—Batate : Bataten Trichterwinde ; इं.—Sweet potato ; ल.—*Ipomoea Batatas. Batatas edulis* । Dioscorea globosa इत्यविनाशचन्द्रः । **नामानि**—"पिण्डालुः स्याद् ग्रन्थिलः पिण्डकन्दः कन्दग्रन्थी रोमशो रोमकन्दः । रोमालुः स्यात् सोपि ताम्बूलपत्रो नानाकन्दः पिण्डकोयं दशाह्वः" । **गुणाः**—"पिण्डालुर्मधुरः शीतो मूत्रकृच्छ्रामयापहः । दाहशोषप्रमेहघ्नो वृष्यः सन्तर्पणो गुरुः" । रा. नि । कन्दो ग्राह्यः । वाराहीकन्द इति केचित् । उक्तं ह्यायुर्वेदप्रकाशे—"वाराहीकन्दः पिण्डालुस्तथा शबरकन्दकः । प्रोक्तो मूलकमूलाभो वक्त्रालुस्त्वक्छदस्तथा" इति । गोलालुक इति हाराणचन्द्रः । तुण्डालुरिति समर्थयति हेमाद्रिः । यथा—"बहुभिः पठ्यमानस्य पाठस्येयं समर्थना । हेमाद्रिणा कृता किं तु तुण्डालुरिति पठ्यताम्" ॥

**पिण्डितः** । चि. ६. मदनः । पीडित इति केचित् पठन्ति । पिण्डीतक इति चरकपाठः ॥

**पिण्डीतकः** । उ. ५. पिण्डीं स्वल्पपिण्डं फलपुष्पद्वारा तकति अनुकरोति । मदनः । "पिण्डीतकः स्यात्तगरे मदनाख्यमहीरुहे" । कृष्णपुष्पो मदन इत्येके । मरुवा इति वंगसेनभाषाटीकाकारः ॥

**पिण्याकः** । सू. ६ etc. पीड्यते पिण्याकः । "पिण्याकोऽस्त्री ति-

लकल्के हिंगुबाह्लीकसिह्लके" इति मेदिनी । उद्धृततैलतिलादिपिण्डः । हिं.—तिलोंकी खल, पीना; बं.—खइल; म.—तिळांची पेंड; गु.—खोल; मल.—पिण्णाक्कु പിണ്ണാക്ക; इं.—Oil-cake । "पिण्याको ना खलिः स्त्रिया"मिति वैजयन्ती । नामगुणाः—"तैलकिट्टं तु पिण्याकः खलः स्यात्तैलकल्कजः । पिण्याकः कटुको गौल्यः कफवातप्रमेहनुत्" । रा. नि । "पिण्याको लेखनो रूक्षो विष्टंभी दृष्टिदूषणः" । भा. प्र ॥

**पिण्याकविकृतिः** । सू. ६. पिण्याकस्य विकारो व्यञ्जनत्वेनोपयोगः । पिण्डीवटिकादि देशीय इति हेमाद्रिः ॥

**पित्तम्** । कालखण्डलग्नस्थगिकामध्यगतनीलजलम् । मल.—कट्टु കട്ടു, कय्पु । Bile ॥

**पित्तधरा** । शा. ३. शारीरकलाविशेषः । "षष्ठी पित्तधरा नाम या कला परिकीर्तिता । पक्वामाशयमध्यस्था ग्रहणी परिकीर्तिता" इति सुश्रुतः । Duodenum । ग्रहणीपदं क्वचित् समग्रक्षुद्रान्त्राभ्यन्तरीयां कलामपि लक्षयति वैद्यकग्रन्थेषु, साऽसौ 'पित्तधरा' कलासंज्ञाऽपि । see **ग्रहणी** ॥

**पित्ताशयः** । शा. ३. पित्तकोषः । Gall-bladder । "पित्तकोषो नाम क्षुद्रतुंबीसमाकार ऊर्ध्वमुखः कोषो यकृदधस्तले संलग्नः । तस्य तलभागो यकृत्पुरोधारास्पर्शी नवमोपपर्शुकाग्रदेशे वर्तते । ऊर्ध्वभागस्तु तस्य मरालग्रीवावद् वक्रीभूतमुखो यकृद्द्वारसीतां यावत् प्रसृतः । तत्र च नलिकारूपेण परिणतमस्य मुखं प्रतिहारिणीं सिरामनुवर्तते" । प्र. शा ॥

**पिपीलिका** । नि. ११ etc. क्षुद्रजन्तुविशेषः । हिं—चींटी, चिऊंटी; बं.—क्षुदे पिँपडा; म.—मुंग्या; सिं.—दिमिया,

वेया; मल.—उरुम्पु ഉറുമ്പ്, वीरु; इं.—Ant; ल.—*Ecophylla smaragdina* । "पिपीलिकः पिपीलश्च स्त्रीसंज्ञा च पिपीलिका" । रा. नि ॥

**पिप्पलः** । **मू. १५.** पिप्पलानि देश्यां पत्राणि, तानि सन्त्यस्य । पिप्पलं जलमस्यास्ति मूले सिक्तत्वादिति रामाश्रमी । अश्वत्थः । "पिप्पलं सलिले वस्त्रच्छेदभेदे च ना तरौ । इति मेदिनी ॥

**पिप्पली** । **मू. ६** etc. पिपर्ति पिप्पली । पॄ पालनपूरणयोः । **स्वनामख्यातपण्यद्रव्यम्** । N. O.—*Piperaceae* । **हिं.**—पीपल, पिपर, पिपलि; **बं.**—पिपुल, पीपुल; **उर्दु.**—पिप्पिलि; **म.**—पिंपळी; **गु.**—पीपर; **कों.**—हिपली; **द्रखा.**—पिपालिअना; **तै.**—पिप्पली, पिप्पल्लु; **क.**—हिप्पालि, तिप्पलि; **त.**—तिप्पिलि; **तु.**—इप्पुलि; **सिं.**—तिप्पिलि; **मल.**—तिप्पलि തിപ്പലി; **पा.**—मघस-पिपल, पिलपिलदराज; **अ.**—दारफिलफिल; **इं.**—Long pepper, Dried catkins । **ल.**—*Piper longum* । **नामानि**—"पिप्पली मागधी कृष्णा वैदेही चपला कणा । उपकुल्योषणा शौण्डी कोला स्यात्तीक्ष्णतण्डुला" । भा. प्र । शुष्कफलं पुराणं ग्राह्यम् । **गुणाः**—"पिप्पली दीपनी वृष्या स्वादुपाका रसायनी । अनुष्णा कटुका स्निग्धा वातश्लेष्महरी लघुः । पिप्पली रेचनी हन्ति श्वासकासोदरज्वरान् । कुष्ठप्रमेहगुल्मार्शःप्लीहशूलाममारुतान् । आर्द्रा कफप्रदा स्निग्धा शीतला मधुरा गुरुः । पित्तप्रशमनी सा तु शुष्का पित्तप्रकोपिणी । पिप्पली मधुसंयुक्ता मेदःकफविनाशिनी । श्वासकासज्वरहरा वृष्या मेध्याग्निवर्धिनी । जीर्णज्वरेऽग्निमान्द्ये च शस्यते गुडपिप्पली । कासाजीर्णारुचिश्वासहृत्पाण्डुक्रिमिरोगनुत् । द्विगुणः पिप्पलीचूर्णाद् गुडोत्र भिषजां मतः" । भा. प्र । कासचिकित्सिते "त्वक्क्षीरीपिप्पलीलाजचूर्णै"रित्यत्र पिप्पलीस्थाने शर्करेत्येव चरकपाठः ॥

**पिप्पलीकः** । चि. ५ etc. पिप्पली । पटोलादिघृतयोगे "सपिप्पलीकै"रित्यत्र "सव्योषचव्यै"रिति पठति वृद्धवाग्भटः ॥

**पिप्पलीकणा** । चि. ५. पिप्पल्याः तण्डुलम् । "पिप्पलीकणे"त्यत्र "पिप्पली शुभे"ति चरकपाठः । तालीसाद्ये शुभा इति विशेषणं पिप्पल्याः इति चक्रपाणिदत्तः । उक्तं हि हारीते—"तालीसमरिचं शुण्ठी पिप्पल्योश्चांशको भवः । त्वगेलार्धांशके दद्यात् शर्कराष्टपलं भवे"दित्यादि ॥

**पिप्पलीद्वयम्** । चि. ३ etc. पिप्पली गजपिप्पली च ॥

**पिप्पलीमूलम्** । मू. ६ etc. **स्वनामख्यातहृस्वलतामूलम्** । **हिं.**—पीपरामूल, पीपलामूल ; **बं.**—पीपुलमूल ; **म.**—पिंपळमूळ; **गु.**—पीपरीमूल; **तै.**—पिप्पलीवेरु, पिप्पलीदुमुप ; **क.**—हिप्पलियबेरु ; **त.**—तिप्पिलिक्कटै, मोटि ; **सिं.**—तिप्पलिमुल्; **मल.**—तिप्पलिवेरु തിപ്പലിവേര് ; **फा.**—फिल्फिलमोया ; **अ.**—असलुल फिल्फिल्; **इं.**—Piper root; **ल.**—*Piper officinarum* । **नामगुणाः**—"ग्रन्थिकं पिप्पलीमूलमूषणं चटकाशिरः । दीपनं पिप्पलीमूलम् कटूष्णं पाचनं लघु । रूक्षं पित्तकरं भेदि कफवातोदरापहम् । आनाहप्लीहगुल्मघ्नं कृमिश्वासक्षयापहम्" । भा. प्र ॥

**पियालः** । सू. १४. पियति सरलत्वात् । प्रियालः ॥

**पिष्टम्** । सू ३ etc. **तण्डुलगोधूमादिचूर्णम्** । **मल.**—मावु മാവ് ; **बं.**—पिटे ॥

**पिष्टान्नम्** । चि. १७. **तण्डुलादिपिष्टकृतमन्नम्** । पिष्टमित्येव चरकपाठः । मिठाई इति शिवदीपिका ॥

**पीततैला** । सू. १५. पीतं तैलं यस्याः । **ज्योतिष्मती** । अलवणा

इति सुश्रुतपाठः । ज्योतिष्मती वर्तुलपक्वरक्तफला पीततैला 'काकमर्दनिका' इति लोके प्रसिद्धा इति डल्हणः । हरीतकीति हाराणचन्द्रः । काकादनीति चन्द्रनन्दनारुणदत्तौ ॥

**पीतदारुः** । चि. १३. पीतं च तद्दारु च । **दार्वी** । "पीतद्रारु पचंपचा" इति निघण्टुः । सरलदेवदार्विति केचित् । दारुहरिद्रेतीन्दुः । पीतदारुस्थाने केचिद्देवदारुं पठन्तीति डल्हणः । "दार्व्वी दारुहरिद्रा स्यात् पीतदारुश्च पर्जनी" इति वैजयन्ती ॥

**पीतद्रुः** । चि. ६ etc. **पीतदारुः** । कल्पप्रथमाध्यायव्याख्यायां "रास्नापीतद्रुनैलिकै"रित्यत्र 'सरलं' इतीन्दुः । हरिद्रेत्यरुणदत्तः । अपस्मारप्रतिषेधाध्यायव्याख्यायां देवदार्वीति चक्रपाणिदत्तः ॥

**पीतांगा** । उ. २८. पीतमंगमस्याः । **हरिद्रा** । पीतांगीति पाठः । पीतरोहिणीति पाठ्यकारः ॥

**पीयूषम्** । सू. ५. पीयति । पीयते अनेन वा । 'पीयू प्रीतौ' । **नवक्षीरम्** । नवप्रसूतायाः गोः सप्तदिनाभ्यन्तरीणदुग्धम् । हिं.—पेवसी , पेयूषे । तत्काल ब्याई हुई गायया भैंसीके दूधको पीयूष कहते हैं । The milk of a cow or buffalo during the first seven days after calving । प्रसूतिदिनमारभ्य यावन्मलिनघनं क्षीरं तावत्पीयूष इति हेमाद्रिः । "पीयूषं सप्तदिवसावधिक्षीरे तथामृते" इति विश्वमेदिन्यौ । "क्षीरं तत्कालसूताया घनं पीयूषमुच्यते" इति भावमिश्रः । "आसप्ताहात्तु पीयूष"मिति वैजयन्ती । अपिच—"क्षीरं सद्यः प्रसूतायाः पीयूषमिति संज्ञितम् । सप्तरात्रात् परं क्षीरमप्रसन्नं च मोरटम्" । **गुणाः**—"मधुरौ बृंहणौ वृष्यौ तद्वत् पीयूषमोरटौ" इति सुश्रुतः । सद्यः सूतायाः क्षीरकृतं दधि इतीन्दुः ।

**पीलुः** । चि. ४ etc. पीयते माधुर्यात् पीलुः पीड्यते वा । पीलति । 'पील प्रतिष्टंभे' । इति रामाश्रमी । "पीलुः पुमान् प्रसूने स्यात्

परमाणौ मतंगजे । अस्थिखण्डे च तालव्य काण्डपादपभेदयोः" । औत्तरापथिके **मधुरफलवृक्षः** । N. O.—*Salvadoraceae* । **हिं.**—पीलु, झल; **बं.**—पीलुगाछ; **म.**—लघुपीलु; **गु.**—पीलु; **तै.**—वरगोगु, गोलुगुचेट्टु; **क.**—गोणिमर, मिरीये ऊगनि; **मुंबापुर्याम्.**—पिलवा, कखाम; **त.**—उकायिपुट्टै, उकामरं; **सिं.**—मस्मोर; **मल.**—उकमरं ഉകമരം, पीलु; अतन्द्रीति केरलेष्वेके प्रस्खलन्ति; **अ.**—ईराक; **पा.**—दरखते मिस्वाक्; **इं.**—Tooth brush tree; **ल.**—*Salvadora persica*; **फ्र.**—Salvadore de persa; **जर्मन्.**—Persische salvadore । **नामानि**—"पीलुः शीतः सहस्रांशी धानी गुडफलस्तथा । विरेचनफलः शाखी श्यामः करभवल्लभः" । रा. नि । पक्वफलं ग्राह्यम् । **गुणाः**—"पीलु श्लेष्मसमीरघ्नं पित्तलं भेदि गुल्मनुत् । स्वादु तिक्तञ्च यत् पीलु तन्नात्युष्णं त्रिदोषहृत्" । भा. प्र ॥

**पीलुपर्णी** । उ. ३०. पीलोरिव पर्णान्यस्याः । **मूर्वा** । "पीलुपर्णी चिंचिकायां मूर्वायामौषधीभिदि" इति मेदिनी ॥

**पुण्डरीकः** । चि. ८. पुण्डरीकेण सदृशम् । "साधुपुष्पं स्थलपद्मं दृष्टिकृत् पुण्डरीककं" इति रभसः । गजमनुष्याणां चक्षुर्हितकारको शालपर्णीतुल्यपत्रको **ह्रस्ववृक्षभेदः** । स्वनामख्यातं यष्टीमधुद्रव्यादीषत्स्थूलं मधुररसं नेत्राश्चोतनार्हं द्रव्यमिति डल्हणः । अन्ये श्रीपुष्पमाहुः । **हिं.**—पुण्डरिया, पुण्डेरी, पंड्यारा; **बं.**—पौण्डरीया गाछ, पुण्डरिया; **म.**—पुण्डरीकवृक्ष; **गु.**—पुण्डारिया; पांडेरवा; **क.**—पुण्डरिक; **त.**—वरळ्त्तामरै; **सिं.**—पोण्डरु; **मल.**—वीरपुण्डरि वीരപുണ്ഡരി; मुमीरा इति युनानीवैद्याः । **नामानि**—"प्रपौण्डरीकं चक्षुष्यं पुण्डर्यं पुण्डरीयकम् । सितपुष्पं सुपुष्पं स्याच्छ्रीपुष्पं सानुजानुजम्" । ध. नि । सर्वांशो ग्राह्यः ।

गुणाः—"पौण्डर्यं मधुरं तिक्तं कषायं शुक्रलं हिमं । चक्षुष्यं मधुरं पाके वर्ण्यं पित्तकफप्रणुत्" । अन्यच्च—"प्रपौण्डरीकं चक्षुष्यं मधुरं तिक्तशीतलम् । पित्तरक्तव्रणान् हन्ति ज्वरदाहतृषापहम्" । रा. नि । कमलमित्येके । तन्न, "यष्ट्याह्वपुण्डरीकेण"त्यत्र "प्रपौण्डरीकं मधुकं" इत्येव चरकपाठः ॥

**पुण्डरीकम्** । क. ४. पुण्डयति । 'पुडि भूषायाम्' । **अतिश्वेतकमलम्** । हिं.—सफेद कमल; बं.—श्वेतपद्म; म.—पांढरें कमळ; गु.—धोळां कमल; क.—बिळिय तावरे; सिं.—इेलनेलुं; मल.—वेळ्ळत्तामरा വെള്ളത്താമര; इं.—White lotus । "पुण्डरीकं सितांभोजे सितछत्रे च भेषजे । पुंसि व्याघ्रेऽग्निदिग्नागे कोशकारान्तरेऽपि च" इति मेदिनी । see **कमलम्** ॥

**पुण्ड्रः** । **इक्षुविशेषः** । see **पौण्ड्रकः** । "पुण्ड्रो दैत्यविशेषेक्षुभेदयो रतिमुक्तके । चित्रे कृमौ पुण्डरीके पुंभूम्नि नीवृदन्तरे" इति मेदिनी ॥

**पुण्ड्रः** । सू. १५ etc. **पुण्डरीकवृक्षः** । see **पुण्डरीकः** । पद्मकादिगणे प्रपौण्डरीकमिति सुश्रुतपाठः ॥

**पुण्ड्राह्वः** । सू. २० etc. **पुण्डरीकवृक्षः** । see **पुण्डरीकः** ॥

**पुनर्नवः** । शा. २ etc. **पुनर्नवा** ॥

**पुनर्नवा** । सू. ६ etc. पुनर् नवेव (छिन्नापि) विशाखत्वात् । पुनरभीक्ष्णं नवा । नूयते वा । **स्वनामख्यातपत्रशाकभेदः** । सा त्रिधा श्वेता रक्ता नीला चेति । "पुनर्नवा च रक्तायां" इति वैजयन्ती । N. O.—*Nyctagineae* । हिं.—सांठ, शाठ्न, गदहपूर्णा, गदहपुरेना, विषखपरा, तिकरी; बं.—पुण्या, रांगा गांदावन्ते; उर्दु.—पीसकोपरा; म.—घेंटुळी, खपरा, वासु; गु.—साटोडी, घेटुली, वखाखपरो, कों.—खापरी, सांठ; तै.—अडतमामिडि, गलिजेरु, अतिकममेदि; क.—

सनाडिका, बळेवडकिंगिड, कोम्पिनबेळ्ळडकिलु, गज्जेरु, गोनाजाली; तु.–नेलबसले; त.- मूक्किरट्टै, कटिपिरत्तं, चट्टरणै, चारटै, चारणै; सिं.–सारण; मल.–तलुताश्मा ത്ഴുതാമ്മ, तमिळामा; अ.—इंदकूकी; इं.—Hog's weed; Spreading Hogweed; ल.—*Boerhaavia diffusa* । **नामगुणाः**—"पुनर्नवा श्वेतमूला शोथघ्नी दीर्घपत्रिका । कटुः कषायानुरसा पाण्डुघ्नी दीपनी परा । शोफानिलगरश्लेष्महरी व्रण्योदरप्रणुत् । पुनर्नवाऽपरा रक्ता रक्तपुष्पा शिवाटिका । शोथघ्नः क्षुद्रवर्षाभूर्वृषकेतुः कठिल्लकः । पुनर्नवाऽरुणा तिक्ता कटुपाका हिमा लघुः । वातला ग्राहिणी श्लेष्मपित्तरक्तविनाशिनी" । भा. प्र । "श्वेता पुनर्नवा सोष्णा तिक्ता कफविषापहा । कासहृद्रोगशूलास्रपाण्डुशोफानिलार्तिनुत्" । रा. नि । "रक्ता पुनर्नवा तिक्ता सारिणी शोफनाशिनी । रक्तप्रदरदोषघ्नी पाण्डुपित्तप्रमर्दनी" । रा. नि । मूलं ग्राह्यम् । अभावे सर्वांशो ग्राह्य इत्येके ॥

**पुन्नागः** । सू. १५. पूजितः पुमान् पुन्नागः स इव प्राधान्यात् । तुंगो रक्तकेसराख्यो वृक्षविशेषः । अन्ये सुरपर्णिका सुगन्धिपुष्पा दक्षिणापथे सुरपतीति प्रसिद्ध इति डल्हणः । N. O.—*Guttiferae* । हिं.—पुन्नाग, सुलतानचम्पक; बं.—पुन्नांगाछ, राजचम्पक; म.—गोडी उंडीण, कडु उंडीण, उण्टग, पुनाग; गु.–पुन्नाग; तै.—पोन्ना, पुन्नागमु; क.—सुरहोन्ने, वोमा, ऊमागिड; दखा.—ऊण्ड; कों.—उण्टीकक्कु; उत्.—पुणां; मुंबापुर्याम्.—ऊदि; त.—पुन्नै; सिं.—दोंब; मल.—पुन्ना ചുന്ന, पोन्नकं; इं.—Alexandrian Laurel; Pinnay oil tree; ल.—*Calophyllum inophyllum* । **नामानि**—"गुरुशाख्यो रक्तवृक्षः पुन्नागो देववल्लभः" । वृ. नि. र । पुष्पं ग्राह्यम् । **गुणाः**—"पुन्नागो मधुरः शीतः सुगन्धिः पित्तनाशकृत् ।

देवप्रसादजनको रक्तश्रमकफपित्तजित् । कफं पित्तं भूतबाधां नाशयेदिति कीर्तितम् । पुष्पं वृष्यं वातशूलकफदोषाञ्जयत्यलम्" । नि. र ॥

**पुरः** । चि. १ etc. पुरति । 'पुर अग्रगमने' । **गुग्गुलुः** । "पुरं पाटलिपुत्रेऽगे गुग्गुलौ तु पुमानयम्" इति रभसः । see **मुरा** ॥

**पुरुषकः** । शा. ६. पुरुषप्रतिकृतिः, पुत्तलकः ॥

**पुलाकम्** । उ. ३७. **पुलाकोदकम्** ॥

**पुलाकांबु** । उ. २५. **पुलाकोदकम्** ॥

**पुलाकोदकम्** । नि. ७. अप्राप्तपाकं धान्यं पुलाकशब्दवाच्यम् । आगमः—"धान्यं पुलाको निष्पन्न"मिति । अथवा पुलाकः कुत्सितं धान्यं तस्योदकम् । अन्ये तु यवगोधूमादिस्वेदः पुलाकोदकमित्याहुरित्यरुणदत्तः । तुच्छधान्यक्वथितजलमित्येके । पुलाकोदकं गवेधुकोदकं, गवेधुकस्तृणविशेषः, जलगोधूम इति लोके; अन्ये तु पुलाकशब्देनाप्राप्तपाकं धान्यमाहुरिति डल्हणः । हिं.—पलाव । 'धुसरा' इति विज्ञायते इति भाष्यकारः । बं.—आगड़ा ; मल.—पतिर् പതിര്, चण्टु । Chaff । "पुलाकस्तुच्छधान्ये स्यात् संक्षेपे भक्तसिक्थके" इति वैजयन्ती ॥

**पुष्करम्** । चि. ४. पुष्णाति, पुष्यति वा । 'पुष पुष्टौ' । **पुष्करमूलम्** । पौष्करमिति संग्रहपाठः । "पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः । ओषधिद्वीपविहगतीर्थरागोरगान्तरे । पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च" इति विश्वः ॥

**पुष्करजटा** । उ. ७ etc. **पुष्करमूलम्** ॥

**पुष्करबीजम्** । सू. ७. **कमलस्य बीजम्** । कमलगट्टे ॥

**पुष्करमूलम्** । चि. ३. **कुष्ठभेदः** । पुष्करदेशे स्वनाम्ना प्रसिद्धं मूलम् । पातालपद्मिनीति ख्यातो काश्मीरदेशप्रसिद्धः कन्दविशेषः । हिं.—पोहकरमूल, पोकरमूल, पुहकरमूल, पोहोकरमूली ; बं.—पुष्करमूल ; गु.—पोकरमूल ; त.—अल्लिकिळंकु, मेद्दुत्तामरैक्किळंकु इत्येके ; सिं.—पोकरुमुल् ; मल.—पुष्करमूलं പുഷ്കരമൂലം ; वेळ्ळकोट्टं इति केचित् । This root is not available; the root of Aplotaxis auriculata is substituted for it । "अभावात् पौष्करे मूले कुष्ठं सर्वत्र गृह्यते" इति । **नामानि**—"उक्तं पुष्करमूलं तु पौष्करं पुष्करञ्च तद् । पद्मपत्रञ्च काश्मीरं कुष्ठभेदमिमं जगुः" । भा. प्र । **गुणाः**—"पौष्करं कटुकं तिक्तमुक्तं वातकफज्वरान् । हन्ति शोथारुचिश्वासान् विशेषात् पार्श्वशूलनुत्" । भा. प्र । "पुष्करं कटु तिक्तोष्णं कफवातज्वरापहम् । श्वासारोचककासघ्नं शोफघ्नं पाण्डुनाशनम्" । रा. नि ॥

**पुष्कराख्यम्** । चि. ८. **पुष्करमूलम्** ॥

**पुष्कराह्वम्** । चि. ३ etc. **पुष्करमूलम्** ॥

**पुष्पम्** । सू. १५ etc. **नागकेसरः** । see **पुष्पाञ्जनयुग्मम्** ॥

**पुष्पकासीसम्** । उ. १६ etc. किञ्चित्पीतकासीसम् । "द्वितीयं पुष्पकासीसं वत्सकं च मलीमसम् । ह्रस्वं नेत्रौषधं योज्यं विशदं नीलमृत्तिका" । ध. नि । "भस्मवन्मृत्तिकाम्लं च कासीसं धातु इत्यपि । तदेव किञ्चित् पीतं तु पुष्पकासीसमुच्यते" । इति । "श्वेतं कृष्णं च कासीसं पुष्पकासीसमुच्यते" इति रत्नमाला । "अरं पुष्पकासीसं तुवरं वस्त्ररागधृक्" इति मदनपालः । हिं.—पुष्पकसीस ; बं.—पुष्पकासीस ; म.—श्वेतनीळी ; निळा हिराकस ; गु.—धोळी हीराकशी । पूनीलमिति केरलेष्वेके । पुत्रञ्चारीत्यपरे । पुष्पका, सीसमिति पदद्वयमिति केचित् । पुष्पका

दार्वी इति । दशपुष्पमित्यन्ये । शोधितं ग्राह्यम् । **गुणाः**—"पुष्पकासीसकं तिक्तं शीतं नेत्रामयापहम् । लेपेनात्यामकुष्ठादिनानात्वग्दोषनाशनम्" । रा. नि । "पुष्पादिकासीसमतिप्रशस्तं सोष्णं कषायाम्लमतीव नेत्र्यम् । विषानलश्लेष्मगदव्रणघ्नं श्वित्रक्षयघ्नं कचरञ्जनं च" । ध. नि । "पुष्पकासीसचूर्णो वा सुरसारसभावितः" इत्यत्र "पुष्पकासीसशब्देन धातुकासीसभ्रान्तिनिवृत्ति"रितीन्दुः । गुह्यरोगप्रतिषेधे "हरेणुपुष्पकासीससौराष्ट्रीलवणोत्तमै"रित्यत्र पुष्पं पुष्पाञ्जनमिति डल्हणः ॥

**पुष्परसम्** । उ. २. मधुः ॥

**पुष्पाञ्जनम्** । **उ. १६. कृत्रिमाञ्जनं, रीतिपुष्पम्** । सितवर्णमञ्जनमित्येके । "पुष्पाञ्जनं सितं स्निग्धं हिमं नेत्रामयापहम्" इति । **हिं.**—पुष्पाञ्जन, फूलाहुआ जिस्त, जस्तका सुरमा, पुट्टी; **बं.**—पुष्पाञ्जन, कोम्काजल; **म.**—पितळचें कीट; **गु.**—कसांजण, जसता भस्म, जसता-ना-फुला; **तै.**—पुष्पाञ्जनमु; **मल.**—पिचळकिट्टं പിച്ചളക്കിട്ടം, पिचळप्पूवु; **पा.**—तुतिआ जिस्त; **इं.**—Brass calx, White zinc; flowers of zinc; **ल.**—*Zinci oxidum* । **नामानि**—"पुष्पाञ्जनं पुष्पकेतुः कौसुंभं कुसुमाञ्जनम् । रीतिजं रीतिकुसुमं रीतिपुष्पं च पौष्पिकम्" । ध. नि । **गुणाः**—"पुष्पाञ्जनम् हिमं प्रोक्तं पित्तहिक्काप्रदाहनुत् । नाशयेद्विषकासार्तिसर्वनेत्रामयापहम्" । रा. नि ॥

**पुष्पाञ्जनयुग्मम्** । सू. १५. प्रि. ग. नागपुष्पं अञ्जनयुग्मं च । नागपुष्परसाञ्जनस्रोतोञ्जनानीति सुश्रुतपाठः । पुष्पं प्रियंगुपुष्पमिति पदार्थचन्द्रिका । हेमाद्रिरपि स्रोतोञ्जनं रसाञ्जनं चेति व्याख्याति । "पुष्पाञ्जनं रीतिपुष्पम् । युग्मेत्यत्रानुवृत्तिकृतेन

संबन्धेनांजनमिति संबध्यते । तेनांजनयुग्मं स्रोतोऽञ्जनमेकमन्यत् सौवीरमित्यर्थोऽवतिष्ठते" इत्यरुणदत्तः ॥

**पुस्तस्त्री** । सू. ३. **दार्वादिमयो स्त्रीरूपः** । पाषाण या काष्ठादिसे बनीहुई स्त्रीमूर्ति । "मृदा वा दारुणा वापि वस्त्रेणाऽप्यथ चर्मणा । लोहरत्नैः कृतं वापि पुस्तमित्यभिधीयते" ॥

**पूगः** । उ. ११. पवते, पुनाति, वा । "पूञ् पवने" । **क्रमुकः** । "पूगः क्रमुकसंघयोः इति हैमः । श्वेतरोध्र इति केचित् ॥

**पूतना** । उ. ६. पूतं करोति पूतना विरेचनीत्वात् । "पूतना तु हरीतक्यां दानवीरोगभेदयोः" इति मेदिनी । **हरीतकी** । पथ्येति चक्रपाणिदत्तारुणदत्तौ । गन्धमांसीतीन्दुः । "जटिला पूतनाकेशी"त्यत्र पदद्वयमित्येके । "द्वितीया गन्धमांसी स्यात् केशी भूतजटा स्मृता । पिशाची पूतनाकेशी भूतकेशी च लोमशा" । ध. नि । see **महापुरुषदन्ता** ॥

**पूतनाकेशी** । उ. ६. **सुगन्धजटामांसी** । गोलोमीति जतूकर्णः । पदद्वयमिति बहवः । see **पूतना** ॥

**पूतिकरंजः** । चि. ८. **पूतीकरंजः** ॥

**पूतिःकीटः** । चि. २०. **दुर्गन्धिकीटविशेषः** । "चाग्नि" इति केरलेषु; कुम्पळक्कोत्तन् इति केचित् । May bug । पूतिःकीटः शस्यादः वर्षाकाले कर्बुरकः नलिनीति प्रसिद्धः, पूर्वदेशे पुण्डालिकेति इति डल्हणः । अधोवातवत् पूतिगन्धिः कीटः पूतिकीट इति हाराणचन्द्रः । तेनैव सुश्रुतोत्तरपञ्चाशत्तमाध्यायव्याख्यायां "स च 'गाँधि' इति पादुराकीट इति च नाम्ना विज्ञायते" इति व्याख्यातम् । 'ओंदुलिका' इति तत्र डल्हणः । पूतीकीटः कर्कटीकारवल्लीवद् दुर्गन्धी कृमिविशेषः प्रसिद्ध इतीन्दुः । वर्षाकालोद्भवः पिलिंदिकेति लोके प्रसिद्ध इत्यरुणदत्तः । पूतीकीट इति पाठः ॥

**पूतिमत्स्यः** । उ. २४. **पूतिमत्स्यकः** । मत्स्यगन्धा इति शिवदीपिका ॥

**पूतिमत्स्यकः** । उ. २०. क्लिन्नमत्स्य इतीन्दुः । दुर्गन्धीभूतो मत्स्य इति भाष्यकारः । विट्खदिर इति पाठ्यकारः । **मल.**—चीञ्ञमीन् ചീഞ്ഞമീൻ । जलपीपल इति शिवदीपिका ॥

**पूतिवल्कः** । **चि. ८.** पूतीकरंजस्य त्वक् ॥

**पूती** । उ. ३. **पूतीकरंजः** । पूतिःकीट इति कैरली ॥

**पूतीकः** । **सू. ३०** etc. **पूतीकरंजः** । करंज इतीन्दुः । कण्टकीकरंज इत्यपरे ॥

**पूतीकरंजः** । **चि. ३** etc. पूतियुक्तः करंजः । **चिरिबिल्वः** । "शोफघ्नमुष्णवीर्यन्तु पत्रं पूतिकरंजजं" इति सुश्रुतः । कण्टकिकरंज इत्येके । करंज एवेत्यपरे ॥

**पूषा** । see **शूषा** ॥

**पृथक्पर्णी** । **चि.** ३. पृथक् पर्णान्यस्याः ङीप् । **पृश्निपर्णी** ॥

**पृथुकः** । **सू. ६.** प्रथते । 'प्रथ प्रख्याने' । आर्द्रं भृष्टं सस्यं तद्विपाकात् पृथूभवति चिपिटीभवति च , नीलधान्यं वा भृष्टमूलूखलक्षोदाच्चिपिटीभूततण्डुलमिति क्षीरस्वामी । "पृथुकश्चिपिटेऽर्भके" इति हेमचन्द्रः । **चिपिटको नाम भक्ष्यविशेषः** । **हिं.**—चिड़वे , चिवडा , चूड़ा , चौले ; **बं.**—चिड़ा ; **म.**—पोहे ; **त.**—अरल् ; **मल.**—अविल् അവില് ; **इं.**—Flattened rice । Paddy unhusked is boiled, and while still soft, is flattened by pressure. It is then exposed to the sun and dried । **आर्द्रशालिधान्यं मृदुभृष्टं मुषलाघातचिप्पटीभूतावयवं पृथुकाः इत्युच्यते इति डल्हणः** । **नामगुणाः**—"शालयः

सतुषा आर्द्रा भृष्टा अस्फुटिताश्च तत् । कुट्टिताश्चिपिटाः प्रोक्तास्ते स्मृताः पृथुका अपि । पृथुका गुरवो वातनाशनाः श्लेष्मला अपि । सक्षीरा बृंहणा वृष्या बल्या भिन्नमलाश्च ते" । भा. प्र ॥

**पृथ्वीका** । सू. १५ etc. ईषच्छ्यामवर्णः स्थूलजीरकः । N. O.—*Umbelliferæ* । हिं.—कलौंजी , मगरेल ; बं.—मोटाकेले जीरे ; म.—कलौंजी जिरें ; गु.—कलौंजी जीरूं ; तै.—नेल्लजिरकरा ; क.—करिदोड्डुजीरगे ; त.—चोंमैच्चीरकं , पिळ्ळुच्चीरकं ; सिं.—महदुरु ; मल.—पेरुंजीरकं ൧ചെരുംജീരകം; पा.—श्यादाने , शोनिझ ; अ.—हब्बतुस्सौदा ; फ्र.—Anis ; ज.—Anis-biberrell ; इं.—Anise, Sweet fennel ; ल.—*Anethum foeniculum; Pimpinella anisum* इत्येके । **नामानि**—"उपकुञ्चा चोपकुञ्ची कालिका चोपकालिका । सुषवी कुञ्चिका कुञ्ची पृथ्वीका स्थूलजीरकः" । ध. नि । बीजं ग्राह्यम् । **गुणाः**—"उक्तोपकुञ्चिका तिक्ता कट्वी चोष्णा च दीपनी । वृष्या चाजीर्णशमनी गर्भाशयविशोधिनी । आध्मानवातगुल्मं च रक्तपित्तं कृमींस्तथा । कफं पित्तं चामदोषं वातं शूलं च नाशयेत्" । वै. नि । हिंगुपत्रीत्यरुणदत्तः । हरेणुरित्येके । धूमपानविध्यां जीरक इत्येके । सूक्ष्मैलेत्यपरे । ज्वरचिकित्सायां 'पृथ्वीकाशिग्रुसुरस' इत्यत्र "हिंगुपत्रिके"तीन्दुः ॥

**पृथ्वीका** । चि. १४ etc. **बाष्पिका** । बाष्पिकेति संग्रहपाठः ।

**पृश्निपर्णी** । शा. २ etc. पृश्नि स्वल्पं पर्णमस्याः । पृश्निश्चित्रगवीव पर्णान्यस्याः इति वा । **स्वनामख्यातः क्षुपविशेषः** । वर्तुलपत्रा सिंहपुच्छीति चक्रपाणिदत्तः । N. O.—*Rubiaceæ* । हिं.—पिठवन , पिठौनी , पिठवनी , पिथिवन , पीठवन , पीतवन , पठौनी , पृष्ठपत्ता , पिथ्रवत्ता , पिठपत्ता ; बं.—चाकुलिया ,

चाकुले ; म.—पिठवण , सेवरा , देवरा ; उर्दू.—कष्टपाणि ;
गु.—पृष्टिपरणी , पिठवन , नाहानो समरवो , रानागञ्जा ;
तै.—कोलाकुपन्ना ; क.—तोरेमोड , नवियलबोने ; मुंबापुर्याम्.—दोवला ; त.—चित्तामल्लि , पेरुमाल्लिकै ; सिं.—पुस्वेन्न ; मल.—ओरिला ഓരില ; ल.—*Uraria lagopoides* ।
"अभावे पृश्निपर्ण्याश्च सिंहपुच्छी विधीयते" इति भावमिश्रः ।
नामानि—"पृष्टि (श्नि) पर्णी पृथक्पर्णी कलशी धावनी गुहा ।
शृगालविन्नांघ्रिवला पर्णी क्रोष्टुकपुच्छिका" । ध. नि । मूलं ग्राह्यम्।
गुणाः—"पृष्टि(श्नि)पर्णी त्रिदोषघ्नी वृष्योष्णा मधुरा सरा ।
हन्ति दाहज्वरश्वासरक्तातीसारतृड्वमीः" । भा. प्र ॥

**पृषतः** । सू. ७. पृषताः सन्त्यस्य । यद्वा पर्षति । 'पृषु सेचने' । "पृषन् मृगे पुमान् बिन्दौ न द्वयोः पृषतोऽपि ना । अनयोश्च त्रिषु श्वेतबिन्दुयुक्तेऽप्युभावपि" इति मेदिनी । श्वेतबिन्दुचित्रितहरिणः । हिं.—चित्तालमृग , चित्तरि ; बं.—चीतल ; मल.—पुळ्ळिमान् പുള്ളിമാൻ ; इं.—Spotted deer; Axis ; Hog deer इत्येके ; Porcine deer इत्यविनाशचन्द्रः । ल.—*Cervus axis* । "पृषतस्तु स बिन्दुमान्" इति वैजयन्ती । "पृषतश्चन्द्रबिन्दुः स्याद्धरिणात् किञ्चिदल्पकः" इति भावमिश्रः । "पृषतो बिन्दुचित्रकः" इति मदनपालः । रक्तबिन्दुहरिणविशेष इत्येके । बिन्दुचित्रितः 'चित्तल' इति लोके इति डल्हणः । घुग्गी इति शिवदीपिका । अपस्मारप्रतिषेधाध्याये "पृषतशृंगवा"मित्यत्र "वृषभशृंगवा"मिति प्रस्खलति केषांचन पाठः ।
मांसगुणाः—"पृषतस्तु भवेत् स्वादुर्ग्राहकः शीतलो लघुः । दीपनो रोचनः श्वासज्वरदोषत्रयास्रजित्" । भा. प्र ॥

**पेया** । सू. ६ etc. अल्पसिक्था । सा च पञ्चदशगुणैर्जलैः सिध्यति । म.—पेज ; मल.—कञ्ञि കഞ്ഞി । "पेया सिक्था-

न्विता तोये चतुर्दशगुणे कृता" इति मदनपालः। "द्रवाधिका स्वल्पसिक्था चतुर्दशगुणे जले । सिद्धा पेया बुधैर्ज्ञेया" इति शार्ङ्गधरः। "भक्तं पञ्चगुणे तोये यवागूं षड्गुणे पचेत् । चतुर्दशगुणे पेयां विलेपीं च चतुर्गुणे" इत्येके। "मण्डश्चतुर्दशगुणे" इति केचित्। "तण्डुलेभ्यस्तिथिगुणे वैकादशगुणेऽम्भसि । साधिता स्वल्पसिक्था तु पेया विज्ञैरुदीरिता" इति नावनीतके । **गुणाः**—"पेया लघुतरा ज्ञेया ग्राहिणी धातुपुष्टिदा" ॥

**पेशी । मांसरज्जुविशेषः** । Muscles । पेश्यो नाम प्राणभृतां सकलचेष्टासाधनानि । ताः मांसमय्यः स्वरूपेण प्रायः स्थूलमध्या रज्ज्वाकाराः क्वचित् प्रच्छदाद्याकाराश्च । ता द्विविधाः स्वतन्त्राः परतन्त्राश्च , क्रियाविशेष्यात् । तत्र परतन्त्राणां प्रायः सर्वासामेव पेशीनामेकैकस्या द्वौ द्वावन्तौ रजतवर्णावस्थिनिबद्धौ चोभयतः प्रायेण । आकुञ्चनप्रसारणाभ्याञ्च पेशीनां नानाविधचेष्टाभिनिवृत्तिः" । प्र. शा ॥

**पैष्टिकम् । सू. १३** etc. पिष्टस्य विकारः । पैष्टीति पाठः । "पैष्टी हेमन्तवर्षयोः" इति । पिष्टेन कृतं मद्यम् । "कृता बहुविधैर्धान्यैः पैष्टीति मदिरोच्यते" इति । Spirit distilled from different sorts of grain । प्रस्तुतविधिर्यथा—"शष्कुलीमर्धसिद्धामुष्णोदकसमन्वितम् । वह्नौ सन्तापयेत् किञ्चित् स्थापयित्वा दिनद्वयम । शेषेऽहनि तु संप्राप्ते शैवलं तत्र निक्षिपेत्। शृङ्गवेरं मरीचञ्च मातुलुंगं तथैव च । एतेषामेव सन्धानात् पैष्टीमद्यं प्रकीर्तितम्" । **गुणाः**—"पैष्टी सन्दीपनी रुच्या कफकृद्वातनाशिनी । पित्तला पाण्डुरोगाणां कारिणी बहुधा मता" । आ. सं । अन्यच्च—"पैष्टी सुरा तु मधुरा तीक्ष्णाम्ला कटुका गुरुः । दीपनी स्तन्यकफहा मेदःपुष्टिकरी मता" । नि. र । एषा मादकत्वे हीनतमा ॥

**पैष्टिकम्** । चि. १०. पिष्टानां समूह: तेन निर्वृत्त: । **पिष्टकृतमधुरखाद्यविशेष:** । हलुवा इति शिवदीपिका ॥

**पोटगल:** । चि. १३. पोटेन संश्लेषेण गलति । 'गल अदने' । **नल:** । "अथ पोटगल: पुंसि नले च काशमत्स्ययो:" इति मेदिनी ॥

**पौण्ड्रक:** । सू. ५. पुण्ड्रदेशजत्वात् । पुण्ड्र इति पाठ: । **इक्षुविशेष:** । श्वेतेक्षुरिति हेमाद्रि: । श्वेतरक्तरेखायुक्तेक्षुरित्येके । म.—श्वेत ऊंस, पुण्डा उंसा ; हिं.—सफेद ईख, पौंडा ; क.—बिलियकबु, बासरकबु ; मल.—वेळ्ळक्करिम्पु വെള്ളക്കരിമ്പു ; इं.—White sugarcane । तुलाभुँडी इति प्राकृता: । चित्रवर्णेक्षुरिति केचित् । पौण्ड्रक: विख्यात: इक्षुविशेष:, इक्षु: सामान्य: स च लोहितेक्षुप्रभृतिको यथालाभं ग्राह्य इत्याढमल्ल: । स्वरसो ग्राह्य: । **गुणा:**—"वातपित्तप्रशमनो मधुरो रसपाकयो: । सुशीतो बृंहणो बल्य: पौण्ड्रको भीरुकस्तथा" । भा. प्र ॥

**पौष्करम्** । चि. ३ etc. **पुष्करमूलम्** । "पौष्कराभावत: कुष्ठं" इति भावमिश्र: ॥

**पौष्करं मूलम्** । चि. १ etc. **पुष्करमूलम्** ॥

**प्रकीर्य:** । सू. १५. प्रकीर्यते । 'कॄ विक्षेपे' । **पूतीकरंज:** । "प्रकीर्य: पूतिकरजे विप्रकीर्णे तु वाच्यवत्" ।

**प्रकीर्या** । सू. १५ etc. **पूतीकरंज:** । करंज इति चन्द्रनन्दन: । कण्टकीविटपकरंज इति डल्हण: । चिकित्सितप्रथमाध्यायव्याख्यायां 'रीठे'ति शिवदीपिका ॥

**प्रतिविषा** । चि. ९ etc. प्रतीपा विषस्य प्रतिविषा, अगदत्वात् । प्रतिषिद्धं विषं यया इति वा । **अतिविषा** । श्यामकन्दा अतिविषाभेद इत्येके ॥

**प्रतुदः** । सू. ६. पक्षिणां वर्गविशेषः । प्रतुद्य तुण्डेनाहत्य शाल्या-देर्भक्षणात् प्रतुदः । ये चोंचसे पदार्थको निखोल कर खाते हैं इ-ससे इनको प्रतुद कहा है । A bird which strike or take food with its beak as pigeons, wagtails, cuckoos etc । see **जांगलम्** ॥

**प्रत्यक्पुष्पी** । सू. १५ etc. प्रत्यञ्चि पुष्पाण्यस्याः । **अपामार्गः** ॥

**प्रपुण्ड्राह्वम्** । उ. १८. **पुण्डरीकवृक्षः** ॥

**प्रपुनाटः** । चि. १९ etc. प्रपुनाति प्रपुणति वा । **एडगजः** ॥

**प्रपुन्नाटः** । उ. २४. **एडगजः** ॥

**प्रपौण्डरीकः** । चि. ३ etc. प्रकर्षेण पुण्डरीकस्येदं दाहहृत्त्वात् । **पुण्डरीकवृक्षः** । see **पुण्डरीकः** । स्थलपद्ममिति गौडाः इति क्षीरस्वामि ॥

**प्रवालः** । सू. १० etc. प्रवलते प्रु(प्र)वते वा—अङ्कुरूर्ध्वं प्रवालम् । समुद्रजातोऽत्यन्तरक्तो वल्लीविशेषः, **स्वनामख्यातो रत्नभेदः** । "प्र-वालो वल्लकीदण्डे विद्रुमे नवपल्लवे" इति शाश्वतः । विद्रुमः । "माहे-यस्य तु विद्रुमः" इति ज्योतिर्विदः । **प्रवाललक्षणम्**—"शुद्धं दृढ-घनं वृत्तं स्निग्धगात्रं सुरंगकम् । समं गुरु शिराहीनं प्रवालं धा-रयेच्छुभम्" । **कुप्रवाललक्षणम्**—"गौररङ्गं जलाक्रान्तं वक्रं सू-क्ष्मं सकोटरम् । रूक्षं कृष्णं लघु श्वेतं प्रवालमशुभं त्यजेत्" । **प्रवालपरीक्षा**—बालार्ककिरणरक्ता सागरसलिलोद्भवा प्रवालल-ता । या न त्यजति निजरुचिं निकषे घृष्टापि सा स्मृता जात्या" । रा. नि । Class—*Polypi* । **हिं.**—मूँगा, परवारा ; **बं.**—पला, मुँगा, मुगा ; **दखा.**—गुल्लि ; **कों.**—पोवाले ; **म.**—पोंवळें ; **गु.**—परवाली, परवाला ; **तै.**—पागडालु, पागडमु ; **क.**—हवाला, अवलेहवत ; **त.**—पवळं ; **सिं.**—कोरल्,

पवळु; मल.—पविळं ပဝါ၆၀; बर्मा.—Ky-a-ve-khet; फा.—मिरजान्, बेखमिरजां; अ.—बसद, बुस्सुद, एहेमखुस्सुद; इत्ताली.—Corallo; जर्मन.—Korallian; फ्र.—Corail; इं.—Coral; ल.—*Corallium rubrum* | नामानि—"प्रवालोऽङ्गारकमणिर्विद्रुमोंभोधिपल्लवः। भौमरत्नं च रक्तांगो रक्तांकुरो लतामणिः" । रा. नि । शोधितमारितं ग्राह्यम् । गुणाः—"प्रवालो मधुरोम्लश्च कफपित्तादिदोषनुत् । वीर्यकान्तिकरः स्त्रीणां धृतो मङ्गलदायकः" । रा. नि । "प्रवालकं सरं शीतं वातपित्तत्रिदोषनुत् । दृष्टिदोषविघाताय विषनाशाय चेष्यते । क्षयपित्तास्रकासघ्नं दीपनं पाचनं लघु । विषभूतादिशमनं विद्रुमं नेत्ररोगनुत्" । ध. नि ॥

**प्रवेणी** । सू. ३. प्रवयन्त्येनां प्रवेणी । सूचीबाणाख्यो वस्त्रविशेषः। गोणीति प्रसिद्धा इति चक्रपाणिदत्तः । रजाई इति शिवदीपिकायाम् । हिं.—दरी, कालीन, जाजम; म.—जमखाना, गालिचा; त.—जमुक्काळं; मल.—चौक्काळं ചൗക്കാളം, जमक्काळं; वीणियप्पदट्टु इति भास्करव्याख्या । Sack carpet; Thick hempen cloth इत्यविनाशचन्द्रः । "प्रवेणी तु कुथावेण्यो"रिति वैजयन्ती । "प्रवेण्यास्तरणं" इत्यमरः ॥

**प्रसन्ना** । सू. ७ etc. प्रसीदति स्म । अच्छसुरा । "प्रसन्ना स्त्री सुरायां स्यात् स्वच्छसन्तुष्टयोस्त्रिषु" इति मेदिनी । "तावरं इति केरलेष्वेके । "प्रसन्ना स्त्री सुरायां स्यादच्छसंतुष्टयोस्त्रिषु" इति मेदिनी । "प्रसन्ना स्यात् सुरामण्डः तस्मात् कादंबरी घना । मद्यस्याद्यविभागोऽसौ प्रसन्ना प्रोच्यते बुधैः" इति । गुणाः—"छर्दरोचकहृत्कुक्षितोदशूलप्रमर्दनी । प्रसन्ना कफवातार्शोविबन्धानाहनाशिनी" इति सुश्रुतः । Prasanna, is the clear upper portion of sura । According to some it is liquor disti-

lled from rice with the addition of medicinal herbs॥

**प्रसहः** । सू. ६. प्रसह्यापहृत्य भक्षणात् प्रसहः। **प्रसह्यभक्षणशीलमृगपक्षिणां वर्गविशेषः**। "प्रसहाः कीर्तिता एते प्रसह्याच्छिद्य भक्षणा"दिति नरहरिः। ये बलात्कारसे छीनकर खाते हैं इससे इनका नाम प्रसह है । The animals have been called *Prasahas* in consequence of the suddenness and force with which they seize their food and eat it । "गोखराश्वतरोष्ट्राश्वद्वीपिसिंहर्क्षवानराः। वृको व्याघ्रस्तरक्षुश्च बभ्रुमार्जारमूषिकाः। लोपाको जंबुकः श्येनो वान्तादश्चाषवायसौ । शशघ्नी मधुहा भासो गृध्रोलूककुलिंगकाः। धूमिका कुररश्चेति प्रसहा मृगपक्षिणः" इति चरकः। "एते सिंहादिभिः सर्वे समाना वायसादयः। रसवीर्यविपाकेषु विशेषाच्छोषिणे हिताः" । सु. सू. ४६ । see **जांगलम्** ॥

**प्रसारिणी** । चि. २१. प्रसार्यतेऽङ्गमनया । **स्वनामख्यातलता** । N. O.—*Rubiaceæ* । हिं.—गन्धप्रसारिणी, पसरन, चांद्‌बेल, खीम, नारी, गान्धालि, गन्धालि, खिप; बं.—गांधाल, गंधभादली, गन्धभादाल, गन्धभादुले, गन्धभादुलिया; म.—चांद्‌वेल, नितणवेली, हिरनवेल; गु.—नारी, प्रसारणवेल्य, गन्धाना; आसाम्.—बेदोलि सुत्ता; सिकिं.—पदेबिरि; तै.—प्रविरेला, गोन्तेमगोरुचेट्टु; क.—हेसरणे, हसराणि; त.—मुतियार्कून्तल्; सिं.—आपसुमदु; मल.—तलनीलि തലനീലി, प्रसारणि, चक्करप्पुल्लु; ल.—*Pæderia foetida* ।

**नामानि**—"प्रसारणी राजबला भद्रपर्णी प्रतानिका। सरणी सारणी भद्रा बला चापि कटंभरा" । भा. प्र । सर्वांशो ग्राह्यः।

**गुणाः**—"प्रसारिणी गुरुर्वृष्या बलसन्धानकृत्सरा। वीर्योष्णा वातहृत्तिक्ता वातरक्तकफापहा" । भा. प्र । "प्रसारिणी गुरुश्चोष्णा

तिक्ता बल्या सरा मता । भग्नास्थिसंधानकरी कान्तिकृद्धातुवर्धका । वातार्शःशोफकफहा मलस्तंभकरी मता । वातरक्तं त्रिदोषं च नाशयेदिति कीर्तिता" । नि. २ ।।

**प्राच्यः** । सू. ५. जनपदविशेषः । "प्राग्दक्षिणश्शरावत्याः प्राच्यः" इति वैजयन्ती । शरावत्या नद्या मर्यादायाः प्राक्सहचरितो दक्षिणो देशः प्राच्यः । उक्तं हि क्षीरस्वामिना—"प्रागुदञ्चौ विभजते हंसः क्षीरोदके यथा । विदुषां शब्दसिध्यर्थं सा नः पातु शरावती" । The Country south-east of the river Saravathi । गौड इत्येवारुणदत्तादयः ॥

**प्राजनम्** । नि. २. प्राज्यते (प्रवीयते) प्रेर्यतेनेन प्राजनम् । प्रतोदः । हिं.—आँकुस, कोजक; म.—अंकुश; बं.—पाँचनी; सिं.—केविट, हेण्डुव; मल.—आनत्तोट्टि ആനത്തോട്ടി, मुटिक्कोल् । Goad । "प्रतोदः प्राजनं तोत्र"मिति वैजयन्ती ॥

**प्राणदा** । चि. १ etc. प्राणं बलं ददाति द्यति वा । हरीतकी । अतीसारचिकित्सिते "प्राणदा प्राणदा दोषे विबद्धे संप्रवर्तिनी" इत्यत्र अभयेत्येव चरकपाठः ॥

**प्राणाचार्यः** । सू. ७. वैद्यः । "शीलवान् मतिमान् युक्तो द्विजातिश्शास्त्रपारगः । प्राणिभिर्गुरुवत्पूज्यः प्राणाचार्य इति स्मृतः" इति चरकः । पितृवत्पूज्य इति संग्रहे । "ब्रह्मा मूर्धाभिषिक्तश्च वैद्यक्षत्रविशा अपि । अमी पञ्च द्विजाः प्रोक्ता गुरवः स्युर्यथोत्तरं" इति हारीतः । "विद्यासमाप्तौ ब्राह्मं वा सत्वमार्षमथापि वा । ध्रुवमाविशति ज्ञानात्तस्माद्वैद्यो द्विजः स्मृतः" इति चरकः । "ब्राह्मणाः क्षत्रिया वैश्या शूद्राश्चैव विशेषतः । सर्वे प्रलयमायान्ति वैद्यवृत्तिपरिग्रहा"दित्यग्निपुराणे ॥

**प्रापुनाटम्** । चि. १९. चक्रमर्दबीजम् । पनवाडके बीज । see एडगजः ॥

**प्रावारः** । सू. ३. प्राव्रियतेऽनेनाङ्गम् । कार्पासरोमवान् घनः पटः। Woollen cloth । Thick cloth इत्यविनाशचन्द्रः । कार्पासो रोमवान् घनः पटस्तूलपटकादिरित्यरुणदत्तः । वर्णकंबलमिति पदार्थचन्द्रिका । गुरु प्रावरणं कंबलादि इति चक्रपाणिदत्तः । हिं.—रोमयुक्त मोटा वस्त्र 'गुदमा' ; मल.—करिम्पटं കരിമ്പടം, चकलासु । "द्वौ प्रावारोत्तरासङ्गौ समौ" इत्यमरः ॥

**प्रियंगुः** । सू. ६. कंगुः । "प्रियंगुः कंगुवृक्षयोः" इति शाश्वतः ॥

**प्रियंगुः** । सू. १५ etc. प्रियं गच्छति । स्वनामख्यातसुगन्धलता । "प्रियंगुः स्त्री राजिकाकणयोरपि । फलिन्यां कंगुसस्ये च" इति मेदिनी । "या किञ्चित् पाण्डुरा श्यामा कीटदोषविवर्जिता । सा प्रियंगुर्मता भद्रा विपरीता तु निन्दिता" । भै. र । हिं.—प्रियंगु , फूलप्रियंगु ; बं.—प्रियंगु , गन्धप्रियंगु ; म.—गहुला ; गु.—घऊँला ; तै.—प्रेंगणचेट्टु ; क.—नेर्पिलगु ; त.—ञाळल् ; सिं.—पुवंगु , मूणमल् ; मल.—ञाळल् ഞാഴല് ; इति केचित् । ल.—*Aglaia Roxburghiana* । Prunus mahaleb इत्येके । नामानि—"प्रियंगुः फलिनी कान्ता लता च महिलाह्वया । गुन्द्रा गुन्द्रफला श्यामा विष्वक्सेनांगना प्रिया" । भा. प्र । त्वग्फलादिकं ग्राह्यम् । गुणाः—"प्रियंगुः शीतला तिक्ता तुवरानिलपित्तहृत् । रक्तातियोगदौर्गन्ध्यस्वेददाहज्वरापहा । गुल्मतृड्विषमोहघ्नी तद्वद्गन्धप्रियंगुका । तत्फलं मधुरं रूक्षं कषायं शीतलं गुरु । विबन्धाध्मानबलकृत्संग्राहि कफपित्तजित्" । भा. प्र ॥

**प्रियंगुका** । चि. २. प्रियंगुः ॥

**प्रियंगुपुष्पम्** । सू. १५. प्रियंग्वादिगणे "प्रियंगुपुष्पाञ्जनयुग्म" मित्यत्र प्रियंगुर्गन्धप्रियंगुस्तस्या: पुष्पमिति पदार्थचन्द्रिका । तन्न । see **पुष्पाञ्जनयुग्मम्** ॥

**प्रियवादी** । शा. ६. **सारिका** । "जीवंजीवकसारङ्गसारसप्रियवादिनां" इत्यत्र "जीवंजीवकसिद्धार्थसारसप्रियवादिना"मित्येव चरकपाठ: । प्रियवादी चातक इति चक्रपाणिदत्त: । तन्न समीचीनमिति मन्ये । सारङ्गशब्दोपि चातकार्थेनैव स्फुटतयात्र भासते ॥

**प्रियाल:** । सू. ६ etc. प्रियाय अलति पर्याप्नोति । **चारवृक्ष:** । मधुराम्लफल: प्रायश: मगधेषु जायते इति चरकोपस्कारे । N. O.—*Anacardiaceæ* । हिं.—चिरौंजी, पियाल, नियेवेरु; बं.—पियाल, पियासाल; म.—चारोळी, चार, चौर; गु.—चारोली; पञ्जा.—चिरौली; दखा.—चारकी-चारोली; तै.—चारुमामिडि, चारपप्पु; क.—मोरवे, मुर्कलि, नूर्कलमर, चार्वळ, मोरप्पि, चारनीज; तु.—मोरंटे; त.—चारप्परुप्पु; मल.—मुरळ् മ०ള° इत्येके; बर्मा.—लोनेफे; लिंबो; पा.—तुकले खाजा; अ.—हबुस्समाना; इं.—Piyal; ल.—*Buchanania latifolia* । **नामानि**—"प्रियालोथ खरस्कन्धश्चारो बहुलवल्कल: । स्नेहबीजश्चापवटो ललनस्तापसप्रिय:" । ध. नि । **गुणा:**—"चार: पित्तकफास्रघ्नस्तत्फलं मधुरं गुरु । स्निग्धं सरं मरुत्पित्तदाहज्वरतृषापहम् । प्रियालमज्जा मधुरो वृष्य: पित्तानिलापह: । हृद्योतिदुर्जर: स्निग्धो विष्टंभी चामवर्धन:" । भा. प्र । पक्वफलं ग्राह्यम् ॥

**प्रियाह्वा** । उ. ५. **कंगु:** । कंगुणिकेत्यरुणदत्त: । प्रियंगुरित्येके ॥

**प्लक्ष:** । सू. १५ etc. प्लक्ष्यते कीटै: । प्लक्षत्यधोगच्छति मूलैरिति वा । **पर्कटीवृक्ष:** । "प्लक्षो जटीगर्दभाण्डद्वीपमित्कुञ्जराशने" इति

मेदिनी । N. O.—*Urticaceæ* । हिं.—पाखर , पिलखन , पाकर , पाकड़ि , पखर , पकरिया , पाकरी , गजदन्तसहोरा ; बं.—पाकुडगाछ ; म.—पिंपरी , बस्सरी , पाकरी ; गु.—पीपर्य ; तै.—कलजुव्वि , जेवि , गङ्गरयजुव्वि ; क.—बसुरी , जुव्विमर , करि ; त.—इच्चि , इत्ति , इरळिमरं ; सिं.—पुलिल ; मल.—इत्ति ഇത്തി , चकिला । इं.—Wave-leaved fig tree ; ल.—*Ficus Tsiela, Thespasia populuca* । नामानि—"प्लक्षो जटी पर्करी च पर्कटी च स्त्रियामपि" इति भावमिश्रः । त्वग्पक्वफलादिकं ग्राह्यम् । गुणाः—"प्लक्षः कषायः शिशिरो व्रणयोनिगदापहः । दाहपित्तकफास्रघ्नः शोथहा रक्तपित्तहृत्" । भा. प्र । "प्लक्षः शीतो व्रणश्लेष्मपित्तशोथविसर्पजित्" । म. पा । न्यग्रोधादिगणे "प्लक्षाम्र" इत्यत्र "वृक्षाम्ल" इति शिवपुरमुद्रितसंग्रहपाठोऽशुद्धतया दृश्यते । पूतनारोगचिकित्सिते "त्रिफलाबदरीप्लक्षत्वगि"त्यत्र "त्रिफलाकोलखदिर"मित्येव सुश्रुतपाठः ॥

प्लवः । प्लु. ६. प्लवते । जलचरपक्षिविशेषः । हिं.—माहीखोर , हवासील ; म.—पाणकोळी ; त.—नीर्वात्तु ; सिं.—करवेल्कोका ; मल.—कुटन्नवात्त् കടന്നവാത്ത് , उरक्कोकन् इत्येके ; नावा इति भास्करव्याख्या । इं.—Pelican; ल.—*Pelecanus onocrotalus* । The pelican is in shape and habit a swimming bird somewhat like a large goose । महाप्रमाणः प्रसेवकगलः सगड इति लोके इति डल्हणः । कारण्डवभेद इति हाराणचन्द्रः । "वस्तेरभावे प्लवजो गलो वा" इति चरकसंहितायां दृश्यते । सुश्रुतोपि "गलचर्म तु पक्षिणां" इति पठितवान् । "प्लवः प्लक्षे प्लुतौ कपौ । शब्दे कारण्डवे म्लेच्छजातौ भेलकभेकयोः । क्रमनिम्नमहीभागे कुलके जलवायसे । जलान्तरे प्लवं गन्धतृणे मुस्तकभिद्यपि" इति हेमचन्द्रः ॥

**प्लवम्** । सू. २० etc. प्लवते लघुत्वात् । **परिपेलवम्** । क्षुद्रमुस्तमिति हेमाद्रिः । अणुतैलयोगे 'वन्य'मिति चरकपाठः । वातव्याधिचिकित्सिते "वचामदनकप्लवै"रित्यत्र "वचामदनपल्लवै"रिति चरकपाठो दृश्यते । पल्लवं कैवर्तमुस्तेति चरकप्रसादनीकारः । see **प्लवः** ॥

**प्लीहा** । प्लेहते । 'प्लिह गतौ' । **आमाशयवामभागस्थो रञ्जकपित्तप्रभवोऽवयवविशेषः** । "शोणिताज्जायते प्लीहा वामतो हृदयादधः । रक्तवाहिसिराणां स मूलं ख्यातो महर्षिभि"रिति भावमिश्रः" । हिं.—तिल्ली ; मल.—मण्णीरल् മണ്ണീരല് । Spleen । "प्लीहा नाम निःस्रोतस्कग्रन्थिषु मुख्यो बृहत्तमश्च ग्रन्थिः उदरगुहायां वामानुपार्श्विकभागे वर्तमानः । स प्रायेण सप्ताष्टांगुलदीर्घः, चतुरंगुलप्रस्थः, द्व्यंगुलस्थूलः, किञ्चिद्विवृत्तकायः, स्थूलकपालिकाकारः पक्वजंबूफलश्यामश्च । तस्य गुरुत्वपरिमाणं प्रायेण पञ्चदशतोलकमात्रम् । ज्वरादिहेतोस्तु तस्य आयतनं गुरुत्वञ्च क्रमाद्विवर्धते । प्लीहोदरे पुनः स एवाभिप्रवृद्ध आवंक्षणं प्रसृतः प्रायः समग्रामपि उदरगुहामधिकरोति" । प्र. शा ॥

---

# फ ।

**फञ्जी** । चि. ९. भार्गी । पाठभेद इति डल्हणः ॥

**फणिज्जः** । सू. ६ etc. फणी जातोऽस्मात् । फणाभपत्रपुष्पत्वात् । फणी उज्झको वर्जकोऽस्य, इति केचित् । **पर्णासभेदः** । तीक्ष्णगन्धतुलसी । मरिचक इत्यरुणदत्तमुख्याः । फणिज्जकस्तीक्ष्णगन्धो 'मरुवक' इति लोके इति डल्हणः । फणिज्जकस्तुलसीभेदः 'रामतुलसी' इति प्रसिद्ध इति हाराणचन्द्रः । N. O.—*Labiatæ* । हिं.—मरुआ, मरुवा, गोला तुलसी इत्येके । बं.—गन्धतुलसी, मरुयाफुल ; म.—मरवा ; गु.—मरवो ; तै.—रुद्रजाड ; क.—मरुवा, मरुगुपत्रि ; त.—पच्चै तुन्तु, किटारै ; मल.—कर्पूर-

तुळसि കർപ്പൂരത്തുളസി, मणिकल्वकम् ; इं.—Sweet marjoran ; ल.—*Ocimum caryophyllatum* । नामानि—"जंबीरः खरपत्रश्च पाणी चोक्तः फणिज्जकः । मरुत्तको मरुवको मरुर्मरुबकस्तथा" । ध. नि । "द्विधा मरुबकः प्रोक्तो श्वेतश्चैव सितेतरः । श्वेतो भेषजकार्ये स्यादपरः शिवपूजने" । रा. नि । गुणाः—"मरुदग्निप्रदो हृद्यस्तीक्ष्णोष्णः पित्तलो लघुः । वृश्चिकादिविषश्लेष्मवातकुष्ठक्रिमिप्रणुत् । कटुपाकरसो रुच्यस्तिक्तो रूक्षः सुगन्धिकः" । भा. प्र । "मरुवः कटुतिक्तोष्णः कृमिकुष्ठविनाशनः । विड्बन्धाध्मानशूलघ्नो मान्द्यत्वग्दोषनाशनः" । रा. नि । पत्रं ग्राह्यम् ॥

**फणिज्जकः** । चि. ३. फणिज्जः ॥

**फलम्** । सू. ८ etc. मदनवृक्षस्य फलम् । see मदनः । वस्तिकल्पाध्याये "पूतो यवानीफलबिल्वकुष्ठवचाशताह्वघनपिप्पलीनां" इत्यत्र 'फल' स्थाने 'प्रियंगु'रिति पठति सुश्रुतः ॥

**फलकम्** । सू. २९ काष्ठपट्टिका । हिं.—तख्ता ; म.—फळी, तक्ता ; सिं.—ानपोरुव ; त.—पलकै ; मल.—पलका പലക । Plank ॥

**फलत्रयम्** । सू. २१ etc. त्रिफला ॥

**फलत्रिकम्** । उ. ३६. त्रिफला । "त्रिफला तु फलत्रिक"मित्यमरः ॥

**फलत्रिका** । उ. ५. त्रिफला ॥

**फलपिप्पली** । क. १. मदनफलस्य बीजम् । मैनफलोंके अन्दरकी बीज ॥

**फलरसः** । चि. १ etc. द्राक्षादाडिमादिफलनिष्पादितजलम् । दाख अनार आदि फलोंका रस । ज्वरचिकित्सिते "ज्वरापहैः फलरसै"रित्यत्र "द्राक्षादाडिमकाश्मर्यपथ्यापीलुपरूषकैः । समधूकैः सब-

दरैः सक्षौद्रान् ससितोपलान् । ज्वरघ्नैस्तोयमृदितैरद्भिर्वा लाजतर्पणान् । पिबे"दिति संग्रहे सुव्यक्ततया दृश्यते । दाडिमफलरस इत्येके ॥

**फलस्नेहः** । see **स्नेहफलसारः** ॥

**फलांबु** । चि॰ २ etc. **फलरसः** ॥

**फलाम्लम्** ! चि॰ ४ etc. बीजपूरादिवातानुलोमनाम्लफलानां केसरैरम्लीकृतम् ॥

**फलाह्वयतैलम्** । क॰ ४॰ मदनफलकल्केनाम्लैश्च पक्वं तैलम् । फलबिल्वत्रिवृत्कृष्णारास्नाभूनिंबदारुभिः सिद्धं तैलं फलतैलं, केचित्तु मदनफलैरण्डतैलम् फलतैलामित्याहुरिति डल्हणः ॥

**फलिनी** । सू॰ १५ etc. **प्रियंगुः** । "फलिनी प्रियंग्वाह्वयपादपे" इति केशवस्वामी ॥

**फल्गुः** । सू॰ ६ etc. फलति फल्गुः । **काकोदुंबरिका** । "फल्गुः काकोदुंबरिके वृक्षे निरर्थकेऽपि च" इति हैमः । फल्गुसारेऽभिधेयवत् । नदीभेदे मलय्यां स्त्री" इति मेदिनी । कैंवरी इति श्वित्रकृमिचिकित्सिताध्यायव्याख्यायां शिवदीपिकाकारः ॥

**फाणितम्** । सू॰ ५ etc. फाण्यते द्रवत्वात् । **गुडविकृतिविशेषः** । द्रवगुडः । हिं.—राब, सीरा ; बं.—फेणि ; म.—काकवी ; त.–वेल्लप्पाकु ; सिं.–उक्पेनि ; मल.–तालिशर्करा താലിശക്കര, नीर्शर्करा, पावु, पानि । Molasses । Thickened juice of sugar-cane ; Phanitha or sugar-cane juice boiled down to one-forth. It can be drawn out in threads. Syrup । **लक्षणम्**—"इक्षो रसस्तु यः पक्वः किञ्चिद्गाढो बहुद्रवः । स एवेक्षुविकारेषु ख्यातः फाणितसंज्ञया" । भा. प्र । अक-

लुषं ग्राह्यम् । गुणाः—"फाणितं गुर्वभिष्यन्दि बृंहणं कफशुक्रकृत् । वातपित्तश्रमान् हन्ति मूत्रबस्तिविशोधनम्" । भा. प्र ॥

**फालः** । सू. १७ etc. **शस्त्रपट्टः** । शस्त्रमयमिति पदार्थचन्द्रिका । हिं.—धार, फल ; मल.—अलकु അലക് । Blade । लांगलमुखस्थलोहखण्ड इत्येके । Ploughshare । "फाल उत्प्लुतौ । क्लीबं सीरोपकरणे पुंसि शङ्करसीरिणोः" इति मेदिनी । "फालः कुशिक उच्यते" इति हलायुधः ॥

**फुस्फुसः** । शा. ३ etc. फुप्फुस इति पाठः । शोणितफेनप्रभवो हृदयनाडिकालग्नो यन्त्रविशेषः । हिं.—फेफडे ; त.—नुवाचलै, वेण्णीरल् ; मल.—चेम्पराति ചെമ്പരത്തി । Lungs । तद्विवरणं यथा—"फुप्फुसश्च द्विधा भिन्नो वामदक्षिणभेदतः । पेश्यां वक्षःस्थलस्थायां समासन्नोऽणुशीर्षकः । अधो विशालो बहुभिः कोषैरिव मधुक्रमः । दुष्टशोणितसंशुद्धिकोषोऽयं परिकीर्तितः । तरुणास्थिमयी नाडी जिह्वामूलात् प्रधाविता । अधःशाखाद्वयवती फुस्फुसद्वयमागता । ततः शाखाद्वयात्तस्मात् बह्व्यः शाखा विनिःसृताः । कोषेषु फुप्फुसस्थेषु सुसूक्ष्मा समुपस्थिताः । नासामुखसमाकृष्टः पवनः श्वासकर्मणः । श्वासनाड्या तया सर्वांस्तान् कोषान् प्रविशत्यसौ" इति । "हृदयाद्वामतोऽधश्च फुप्फुसो रक्तफेनजः" इति भावमिश्रः । "फुप्फुसौ नाम श्वसनकर्मणः प्रधानसाधनं यन्त्रद्वयं उरोगुहान्तरवस्थितम् । तयोरेकैकमेकैकार्धे उरसः । तदन्तराले च हृदयं, क्लोमनलिका, सिराधमनीनाड्यादयश्च विशेषाः । तौ च फुस्फुसौ पुप्फुसधराभ्यां (Pleura) कलाभ्यां सर्वत्र प्रावृतौ मसृणकोमलस्पर्शौ वायुकोषबहुलत्वाल्लघुभारौ जलप्रतरणार्हौ च । तौ क्लोमनलिकया फूत्कारेण वातप्रवेशनाद् विचित्रविशालाकारौ भवतः, अंगुल्या पीडनाद् मृदुमर्म्मरशब्दौ च । तत्र पुंसो दक्षिण-

फुप्फुसः प्रायेण पञ्चपञ्चाशत्तोलकमात्रः, वामस्तु पञ्चाशत्तोलकमितः । स्त्रियास्तु प्रत्येकं तोलकपञ्चकेन न्यूनः । तौ च जातमात्रस्य बालस्य पद्मवर्णौ, प्राप्तवयसस्तु क्रमात् श्यामकर्बुरच्छायौ। आकृतितस्तु—एकैकस्य फुप्फुसस्य परिणाह ऊर्ध्वे संकुचितः, अधस्तादायतः । स बहिःपार्श्वे वृत्तप्रायः, अन्तःपार्श्वे कोरोदरश्च । तस्य पुरोधारा तन्वी शिथिला स्तोकेन हृदयावरणी चोभयतः" । प्र. शा ॥

फेनः । सू. २४ etc. समुद्रफेनः ॥

फेनकः । चि. १९ etc. समुद्रफेनः ॥

फेनिकः । उ. १३. समुद्रफेनः ॥

---

## ब ।

बकः । सू. ६ etc. वङ्कते । 'वकि कौटिल्ये गतौ च' । प्लवजातीयपक्षी । पाण्डुरपक्षः प्रसिद्ध इति हेमाद्रिः । "बकस्तु बकपुष्पे स्यात् कह्वे श्रीदे च रक्षसि" इति मेदिनी । हिं.—बगुला । बं.—बक् पाखी, बकोट, म.—बगळा ; क.—बेळ्ळकी ; त.—कोक्कु ; सिं.—कोक्कुय, विकुरुल्ला ; मल.—कोक्कु കൊക്ക, कोक्का, कोट्टि Kotti, मुण्टि ; इं.—Paddy bird । ल.—*Ardeola grayi* । नामानि—"बकः कह्वो बकोटश्च तीर्थसेवी च तापसः। मीनघाती मृषाध्यानी निश्चलांघ्रिश्च दांभिकः" । रा. नि । गुणाः—"तथा बकबलाकाद्या गुरवो मांसभक्षणात्" ॥ "प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः । वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः" । रा. नि । "रक्तपित्तहराः शीताः स्निग्धा वृष्या मरुज्जितः । सृष्टमूत्रपुरीषाश्च मधुरा रसपाकयोः" । सु. सू. ४६ ॥

**बकरः** । सू. ६. पक्षिविशेषः । बकसदृश इति हेमाद्रिः । अवकर-वृकराविति पाठौ । वरक इत्येव मुद्रितसंग्रहपाठः ॥

**बदरः** । चि. १ etc. **बदरी** । कासचिकित्सिते 'पिबेत् बदरमज्जो वा' इत्यत्र "पिबेत् खदिरसारं वा" इत्येव चरकपाठः ॥

**बदरम्** । सू. ६. बदरीफलम् । see **सौवीरबदरम्** ॥

**बदरकः** । चि. १५. बदरी ॥

**बदरी** । चि. १. बदति बदरी । 'बद स्थैर्ये' । **बृहत्कोलीवृक्षः** । "बदरी पुनः । अजगन्धाह्वयस्तंबे कुवलीसंज्ञपादपे । ईश्वरस्थान-भेदे च स्त्रियां" इति केशवस्वामी । "बदरी कोले, क्लीबं तु तत्फले" इति मेदिनी । N. O.—*Rhamneæ* । **हिं.**—बेर, बैरी, बेर, बयेर, उन्नाव, उनाव, उन्नाभ; **बं.**—कुल, बडकुल गाछ; **म.**—बोर; **गु.**—बोरडी, चणिबोर; **पञ्जा.**—बयर, बैर; **कों.**—बोरिरूक्कु; **उत्.**—कुड़ि; **तै.**—रेगुचेट्टु, गंगरेगुचेट्टु; **क.**—बोगरि, बोरे, एलाचि, इलिचि, येरनु; **तु.**—बोगोरि; **त.**—इलन्तै, कल्लरि; **सिं.**—इलन्दय, डेबर, मसं; **मल.**—लन्तमरं ലന്തമരം, लन्ता, लन्तक्कुरु; **पा.**—कुनार; **अ.**—सीदरनबक; **जर्मन्.**—Stumpfblattriger judendorn । **फ्.**—Jujubier cotonneux; **इं.**—Jujube, Bhere fruit tree, Indian plums; **ल.**—*Zizyphus jujuba* । **नामानि**—"पुंसि स्त्रियां च कर्कन्धूर्बदरी कोलमित्यपि । फेनिलं कुवलं घोंटा सौवीरं बदरं महत् । अजप्रिया कुहा कोली विषमोऽभयकण्टका" । भा. प्र । पक्वफलमूलादिकं ग्राह्यम् । **गुणाः**—"कोलन्तु बदरं ग्राहि रुच्यमुष्णञ्च वातलम् । कफपित्तकरं चापि गुरु सारकमीरितम्" । भा. प्र । "बदरी शीतला रूक्षा तिक्ता पित्तकफापहा । फलमस्यास्तु मधुरं तुवरं चाम्लमीरितम् । तत्र पक्वं तु मधुरमम्लमु-

ष्णकफप्रदम् । ग्राहकं लघु रुच्यं च वातज्वरासारशोषहृत् । रक्तश्रमहरं प्रोक्तं पण्डितैश्चरकादिभिः" । नि. र । "बदरस्य पत्रलेपो ज्वरदाहविनाशनः । त्वचा विस्फोटशमनी बीजं नेत्रामयापहम्" । रा. नि । "बदरीफलमज्जा तु तुवरा मधुरा मता । शुक्रदा बलदा वृष्या कासश्वासतृषापहा । वातघ्नी छर्दिदाहघ्नी पित्तहा मुनिभिर्मता" । नि. र । बदरञ्च सौवीरकोलकर्कन्धूभेदेन त्रिविधम् । सौवीरं महत्तममामपक्वावस्थासु मधुरं मरुदेशजमिति डल्हणः । पञ्चधा इत्येके । उक्तं हि—"कर्कन्धु बदरं कोलं सौवीरं सिञ्चतीफलम् । यथोत्तरं महत् स्वादु पञ्चधा बदरीफलं" इति । सौवीरबदरं कर्कन्धूश्चेति बदरी द्विधा इत्यपरे ॥

**बन्धूकः** । उ. १५. बध्नाति चित्तं बन्धूकः । "बन्धूकं बन्धुजीवे स्याद् बन्धूकः पीतशालके" इति मेदिनी । मध्याह्नपुष्पको नाम पुष्पवृक्षविशेषः । N. O.—*Sterculiaceae* । हिं.—दुपहरिया, दोपहरिया, गेजुलिया ; गोजुनिया ; बं.—बान्धुलि फूलेर गोछ ; बान्धूली ; पञ्जा.—गुलदुपरिया ; म.—दुपारी, बान्दुजा ; गु.—बपोरिया ; तै.—मकिनचेट्टु, वेगासिनचेट्टु, नितिमल्लि ; कों.—तांबडी दुपारी ; क.—बन्दूरे ; त.—उचिरितलकं ; सिं.—बन्दुवद ; मल.—उच्चमलरि ഉച്ചമലരി ; ल.—*Pentapetes Phœnicea* । अस्य पुष्पं मध्याह्ने विकसति, पराह्ने च सूर्योदये शुष्यति । नामानि—"बन्धूको बन्धुजीवः स्यादोष्ठपुष्पोऽर्कवल्लभः । मध्यंदिनो रक्तपुष्पो रागपुष्पो हरिप्रियः । असितसितपीतलोहितपुष्पविशेषाच्चतुर्विधो बन्धूकः" । रा. नि । पुष्पं ग्राह्यम् । गुणाः—"बन्धूकः कफकृद् ग्राही वातपित्तहरो लघुः" । भा. प्र । "ज्वरहारी विविधग्रहपिशाचशमनः प्रसादनः सवितुः स्या"दिति नृसिंहः ॥

**बभ्रुः** । सू. ६. नकुलः । "बभ्रुर्ना नकुले विष्णौ विपुले पिंगले त्रिषु"

इति बलशर्मा । "नारायणः स्मृतो बभ्रुर्बभ्रू नकुलपिंगलौ" इति शाश्वतः। "बभ्रुः स्यान्नकुलेपि च" इति हलायुधः। "बभ्रुर्विशाले नकुले कृशानावले मुनौ शूलिनि पिंगले च" इति विश्वः । "नकुलस्तु महान् बभ्रु"रिति वैजयन्ती । जाहक इत्येके । अतिलोमशः कुक्कुरः पर्वतोपकण्ठे भवतीति चक्रपाणिदत्तश्चरकटीकायाम्। अच्छभल्ल इति हेमाद्रिः ॥

**बभ्रुः** । क. ४. बृहत् । "मृगाणां लघुबभ्रूणां" इत्यत्रास्मिन् वृष्यवस्तियोगे मयूरहंसकुक्कुटानेव गृह्णाति चरकः । अथापि सोनन्तरं "मृगविष्किरानूपबिलेशयानामेतेनैव कल्पेन वस्तयो देयाः" इति कथितवान् ॥

**बर्हिणः** । चि. २. बर्हमस्त्यस्य । मयूरः । "मयूरो बर्हिणो बर्ही नीलकण्ठो भुजंगभुक् । शिखावलः शिखी केकी मेघनादानुलास्यपि" इत्यमरः ॥

**बर्हिशिखा** । चि. ११. क्षुपविशेषः । मयूरशिखा । N. O.—*Filices* । हिं.—मोरशिखा ; बं.—मयूरशिखा ; म.—मोरशेंडा, मण्यारशिखा ; गु.—मोरशिखा ; तै.—मयूरशिखिने ; क.—होरेयसूवुव, नविलिनबाल ; त.—मयिलिकोण्टै ; मल.—मयिलोशिका മയിലോശിക ; पा.—असनाने, असलान ; इं.—Peacock-tailed Adiantum ; ल.—*Adiantum melanacaulon* । सर्वांशो ग्राह्यः । नामगुणाः—"मयूराह्वशिखा प्रोक्ता सहस्राहिर्मधुच्छदा । नीलकण्ठशिखा लघ्वी पित्तश्लेष्मातिसारजित्" । भा. प्र । "बर्हिचूडा रसे स्वादुर्मूत्रकृच्छ्रविनाशनी । बालग्रहादिदोषघ्नी वश्यकर्मणि शस्यते" । रा. नि ॥

**बर्ही** । शा. २ etc. बर्हं पिच्छमस्यास्ति । बर्हति नृत्यनोर्द्ध्वीभवति बर्हम् । मयूरः ॥

**बला** । सू. ६ etc. बलत्यनया बला । 'बल संवरणे' । बलमस्त्यस्याः इति वा । **स्वनामख्यातक्षुपविशेषः** । "बलयुक्तेऽन्यलिंगः स्याद् बला वाट्यालके स्त्रियां" इति मेदिनी । N. O.—*Malvaceae* । **हिं.**—खिरैंटी, बरियारा, खरहटी, खरेंटी, खरैंहटी, बीजवन्द ; **बं.**—वेडेला ; बालियाडा इत्येके ; **म.**—लघुचिकणा, खिरहटी ; **गु.**—बलदाणा, खरेटी, खपाट ; **उ.**—बरियार ; **तै.**—मुप्पिडी, लुंजपट्नल्चेट्टु, चित्तामुट्टि, पाचितोगे, मुत्तुवपुलगमु ; मयिलुमाणिक्यं इत्येके ; **क.**—कंदिरबेरु, बेणगरग, कल्लंगडले गिड, बवियारा ; **त.**—चित्तामुट्टि ; मयिर्माणिक्यं इति केचित् ; **तु.**—कडीर् ; **कों.**—तुप्काडि ; **सिं.**—बेबिल ; **मल.**—कुरुन्तोट्टि കുറുന്തോട്ടി ; **इं.**—Heart leaved sida ; **ल.**—*Sida cordifolia* । **नामानि**—"बला भद्रौदनी वाटी समंगा खरयष्टिका । महासमङ्गौदनिका शीतपाक्यौदनाह्वया" । ध. नि । मूलं ग्राह्यम् । **गुणाः**—"बला स्निग्धा हिमा स्वादुर्वृष्या बल्या त्रिदोषनुत् । रक्तपित्तक्षयं हन्ति बलौजो वर्धयत्यपि" । ध. नि । "बलातितिक्ता मधुरा पित्तातीसारनाशनी । बलवीर्यपुष्टिदात्री कफरोधविशोधनी" । रा. नि । सा चतुर्धा बलामहाबलातिबलानागबलाभेदेन । "बलाचतुष्टयं शीतं मधुरं बलकान्तिकृत् । स्निग्धं ग्राहि समीरास्रपित्तास्रक्षतनाशनम्" । भा. प्र ॥

**बलाका** । see **बलाका** ॥

**बलात्रयम्** । सू. १० etc. बला अतिबला नागबला च । बला अतिबला श्वेतबला चेतीन्दुः । **गुणाः**—"बलात्रयं स्वादुशीतं स्निग्धं वृष्यं बलप्रदम् । आयुष्यं वातपित्तघ्नं ग्राहि मूत्रग्रहापहम्" ॥

**बलात्रितयम्** । उ. १२. **बलात्रयम्** ॥

**बलाद्वयम्** । सू. १५ etc. बला अतिबला च । बलातिबले शुक्लपीतपुष्पमिति डल्हणः ॥

**बष्कयणी** । क. ६ etc. बष्कतेतिक्रामति बष्कयश्चिरकालः, सोऽस्त्यस्याः । बष्कयिणी इति पाठः । बष्कयस्तरुणवत्सः । सोऽस्त्यस्याः इति रामाश्रमी । 'बष्कयस्त्वेकहायनो वत्सः' इति शाकटायनः । चिरप्रसूता गौः । प्रौढवत्सा गौः । बहुदिनप्रसूता गौः । "चिरप्रसूता बष्कयणी गृष्टिस्सूतवती सकृत् । समासमीना सा गौर्या प्रतिवर्षं प्रसूयते" इति वैजयन्ती । "बष्कयणी प्रौढवत्सा स्या"दिति हलायुधः । हिं.—बाखरी गाय, जवान बछडे वाली गौ ; म.—फार दिवसांची व्यालेली गाय ; त.—वलीट्टुप्पचु ; A cow that has already grown up calves । **क्षीरगुणाः**—"बष्कयिण्यास्त्रिदोषघ्नं तर्पणं बलकृत्पयः" इति भावमिश्रः ॥

**बस्तः** । चि. ८ etc. वस्तयति । 'वस्त अर्दने' । अजः ॥

**बस्तगन्धा** । चि. १७. अजगन्धा । अजगन्धेत्येव संग्रहपाठः ॥

**बस्तमूत्रम्** । उ. ३ etc. अजायाः मूत्रम् । बकरीके मूत्र ॥

**बस्तवारि** । उ. ५. बस्तमूत्रम् ॥

**बस्ताण्डः** । उ. ४०. अजस्य मुष्कः । बकरेके अण्डकोष ॥

**बस्तान्त्री** । सू. १५. श्या. ग. बस्तस्येवाण्डान्यस्थीन्यस्याः । बस्ताण्डीति पाठः । लताविशेषः । छगलान्त्रीति सुश्रुतपाठः । वृद्धदारकभेद इति डल्हणः । भुम्राभेद इत्येके । हिं.—बोकडी ; म.—बोकडी ; गु.—पुंगळ ; त.—कटल्प्पालै ; मरुतुटरी इति केरलेष्वेके । **नामानि**—"बस्तान्त्री वृषगन्धाख्या मेषान्त्री वृत्तपत्रिका । अजान्त्री बोकडी चैव स्यादित्येषा षडाह्वया" । रा. नि । मूलादिकं ग्राह्यम् । **गुणाः**—"बस्तान्त्री स्यात् कटुरसा कासदोष-

विनाशिनी । बीजदा गर्भजननी कीर्तिता भिषगुत्तमैः" । रा. नि । वृद्धदारुक इति हेमाद्रिः । N. O.—*Convolvulaceae* । हिं.—विधारा, भिदारा ; बं.—बीजताडक, बितारक ; म.—वरधारा ; गु.—वरधारो ; तै.—समुद्रपाल, चन्द्रपुंडि ; क.—एरडुमुष्टे, समुद्रपाल, समुद्रबळ्ळि ; त.—पोत्तिक्कीरै, चमुत्तिरप्पालै ; मल.—मरिक्कुन्नि മറിക്കന്നി ; समुद्रजोंगमित्येके ; इं.—Elephant creeper ; ल.—*Argyreia speciosa* । वृद्धदारुलक्षणं यथा—"त्रिकोणकाण्डा सुबहुप्रताना फलेषु पीता कुसुमेषु रक्ता । पत्रैः सदुग्धैर्मृदुरोमवद्भिस्तांबूलतुल्यैर्घनकन्दमूला । पवनविवस्वदंशुवनितादिषु कामचरा विविधमनःशरीरगदवृन्दनिवृत्तिकरी । भुवि परमौषधिर्महिषवल्लिरिति प्रथिता क्वचिदपि वृद्धदारक इयन्त्वपि वेल्लरिका" इति संग्रहे । नामगुणाः—"वृद्धदारुक आवेगी जुंगको दीर्घवालुकः । वृद्धः कोटरपुष्पी स्यादजान्त्री छागलान्त्र्यपि । वृद्धदारुः कटुस्तिक्तस्तथोष्णः कफवातजित् । श्वयथुक्रिमिमेहास्रवातोदरहरः परः" । ध. नि । पत्रादिकं ग्राह्यम् । This is a huge climber, commonly found in thickets and jungles, especially near the sea. Stem and lower side of leaves covered with white, silky hairs. Leaves large and cordate. We choose this plant as a type of the lianas, a name given to climbing and winding plants in tropical forests ॥

**बस्तांबु** । उ. २०. बस्तमूत्रम् ॥

**बहलपल्लवः** । सू. १५. शिग्रुः । शिग्रुरित्येव सुश्रुतपाठः । वरणादिगणे मधुशिग्रुरित्यपरशब्दोपि सुश्रुतसंहितायां दृश्यते ॥

**बहलबहुरसः** । सू. १५. इक्षुः । "घनभूरिरसस्त्विक्षुर्गुडमूलोऽसिपत्रकः" । बहलः शिग्रुः बहुरस इक्षुश्चेति पदद्वयमित्येके ॥

**बाकुचिका** । चि. १९. वाकुची ॥

**बाकुची** । वाकुची ॥

**बाणः** । सू. १५ etc. **सहचरः** । "बाणः स्याद्गोस्तने दैत्यभेदे केवलकाण्डयोः । बाणा तु बाणमूले स्त्री नीलझिण्ट्यां पुनर्द्वयोः" इति मेदिनी । वीरतरादिगणे 'सहाचरबाण' इति पदद्वयस्थाने सैर्यकयुग्ममिति संग्रहपाठः । सहचरद्वयमिति सुश्रुतेनापि पठितम् । "नीलस्तु बाण उक्तः त्वार्तगलः केशरंजनो दासी" इति मञ्जरी । आरग्वधादिगणे बाणस्थाने दासीकुरण्डक इत्येव सुश्रुतपाठः । शरपुंख इति केरलेष्वेके ॥

**बार्हतम्** । सू. १५. **बृहतीबीजम्** । कटेलीके बीज ॥

**बालकम्** । सू. १० etc. see **वालकम्** ॥

**बालपत्रः** । उ. ३९. बालास्तनया इव पत्राण्यस्य । **खदिरः** । "बालपत्रो यवासः खदिरश्चेति द्रव्यर्थेषु धन्वन्तरिपाठमदृष्ट्वा बालपुत्रभ्रान्त्या ग्रन्थकृद् बालतनयमाह" इत्यमरसिंहमधिकृत्य क्षीरस्वामी । "गायत्री बालतनयः खदिरो दन्तधावनः" इत्यमरः ॥

**बालबिल्वम्** । शा. २ etc. **बिल्वस्य कोमलफलम्** । **हिं.**—बिल्वका कच्चा फल, कच्चा बेल; कच्चे बेलका गूदा; **म.**—कोंवळें बेल फळ; **त.**—विल्वपिञ्चु; **मल.**—इळय कूवळक्काय् ഇളയ കൂവളക്കായ് । Tender bael fruit । **गुणाः**—"कफानिलहरं तीक्ष्णं स्निग्धं संग्राहि दीपनम् । कटुतिक्तकषायोष्णं बालं बिल्वमुदाहृतम्" । सु. सू. ४६ । "फलेषु परिपक्वेषु ये गुणाः समुदाहृताः । बिल्वादन्यत्र विज्ञेया बिल्वमामं गुणोत्तरम्" । रा. व । see **बिल्वः** ॥

**बालमूलकम्** । सू. ६ etc. **अचिरजातकोमलमूलकम्** । **हिं.**—

कच्ची मूली; बं.—कची मुला; म.—कोंवळा मुळा। मल.—इळय मुळ्ळाङ्कि ഇളയ മുള്ളങ്കി। Tender radish। **गुणाः**—"बालं तु मूलकं तिक्तं कटूष्णं च रुचिप्रदम्। लघ्वग्निदीपकं हृद्यं तीक्ष्णं तु पाचकं सरम्। मधुरं ग्राहकं बल्यं मूत्रदोषार्शनाशनम्। गुल्मक्षयश्वासकासनेत्ररोगविनाशकम्। नाभिशूलं कफं वातं कण्ठरोगविनाशकम्। त्रिदोषदद्रुशूलघ्नमुदावर्तप्रणुत्परम्। पीनसं च व्रणं चैव नाशयेदिति कीर्तितम्"। नि. र॥

**बालोदुंबरम्**। शा. २. उदुंबरस्य कोमलफलम्। कचे गूलड़। **गुणाः**—"कोमलं चास्य च फलं स्तंभकृत्तुवरं मतम्। हितकारि तृषापित्तकफरक्तरुजापहम्। मध्यमं कोमलं स्वादु शीतलं तुवरं मतम्। पित्तं तृषामोदकरं रक्तस्रुतिवमीहरम्। प्रदरघ्नं समुद्दिष्टमपक्वं तुवरं मतम्। रुच्यं चाम्लं दीपनं स्यान्मांसवृद्धिकरं मतम्। रक्तरुकारकम् चैव दोषलं च जडं मतम्"। नि. र॥

**बाष्कयणम्**। क. ६. बष्कयणीक्षीरम्। बाखरी गायका दूध। **मल.**—अरुपालु അറുപാല്। see **बष्कयणी**॥

**बाष्पिका**। सू. ७ etc. **हिंगुपत्री**। हिं.—हिंगुपत्री; बं—रांदुनी; **म.**—बाफळी; **गु**—बाफली, बहुफली; **क.**—हिंगुपत्री; **त.**—करिप्पेरुंकायं; **मल.**—करिकायं കറികായം; **नामानि**—"हिंगुपत्री तु कबरी पृथ्वीका पृथुला पृथुः। बाष्पिका दीर्घिका तन्वी बिल्विका दारुपत्रिका"। ध. नि। शोधितं ग्राह्यम्। **गुणाः**—"हिंगुपत्री कटुस्तीक्ष्णा तिक्तोष्णा पाचका मता। रुच्या पथ्या दीपनी च हृद्या सौगन्धकारिणी। तुवरा कफवातामवस्तिपीडां च नाशयेत्। बद्धविट्कार्शगुल्मादिप्लीहामेदोपचीविषान्"। नि. र॥

**बाह्लीकम्**। उ. ३४. बह्लीकदेशजम्। **कुंकुमम्**। हिंग्विति केरली। "बाह्लीकं हिंगु कुंकुमं" इति हैमः॥

**बिडम्** । सू. ६ etc. बिलति भिनत्ति मलं बिडम् । लवणभेदः । हिं.—बिड्नमक, बिरियासंचरनोन, कबीलनोन; मनयारी नमक इति वंगसेनभाषानुवादकः ; बं.—विट्नून ; म.—बिडलोण ; गु.—बिडलूण ; त.—वळैयलुप्पु ; सिं.—बलल्लुणु ; मल.—वळयलुप्पु വളയലുപ്പ്, विळयुप्पु । Vit is black salt with a strong odor. "Vit lavana is an artificially prepared salt occurring in dark-red shining granules. It is also called sanchal or black salt. It has a mild, saline and somewhat nauseous taste. It is manufactured thus.—56 lbs. of sambar salt are mixed with 20 ounces of dried emblic myrobalans; ¼ of these materials is put into a round earthern pot with a narrow mouth, which is put in a fireplace made of clay. The fire-place has a hole at the bottom for introducing the firewood. After the fire has been lighted about an hour, and the materials in the pot appear to be heated, the rest of the materials are added by degrees. The whole is then exposed to a strong red heat for about 6 hours. The fire is then allowed to die away, and the pot to cool; which upon being broken is found to contain about 48 lbs. of Vitlavan.—" The Indian materia medica । **नामानि**— "विडं कृत्रिमकं धूर्तं क्षारं द्रावणमासुरम् । सुपाक्यं खण्डलवणं कृतकं चेति नामतः" । ध. नि । शोधितं ग्राह्यम् । **गुणाः**— "बिडं सक्षारमूर्ध्वाधःकफवातानुलोमनम् । दीपनं लघु तीक्ष्णोष्णं रूक्षं रुच्यं व्यवायि च । विबंधानाहविष्टंभहृद्रुग्गौरवशूलनुत्" । भा. प्र । बिडं कृत्रिमं स्वनाम्ना ख्यातं, तच्च प्रसारणीकल्कभक्तलवणसंयोगादग्निदाहेन निर्वृत्तमिति डल्हणः ॥

**बिडालः** । शा. ६ etc. वेडति । विड्यते वा । 'विड आक्रोशे' ।

मार्जारः । "विडालो नेत्रपिण्डे स्याद् वृषदंशकके पुमान्" इति मेदिनी ॥

**बिडालकः** । उ. १६. नेत्रललाटयोर्बहिर्लेपः । हिं.—लेपकरना ; मल.—पुरवळयं പുറവളയം । "बिडालको बहिर्लेपो नेत्रपक्ष्मविवर्जितः । तस्य मात्रा परिज्ञेया मुखलेपविधानवत्" इति शार्ङ्गधरः । "सेक आश्चोतनं पिण्डी बिडालस्तर्पणं तथा । पुटपाकोऽञ्जनं चैभिः कल्पैर्नेत्रमुपाचरेत्" इति भावमिश्रः ॥

**बिभीतकः** । see **विभीतकः** ॥

**बिंबी** । सू. १० etc. **तुण्डिकेरी नाम लताविशेषः** । N. O.—*Cucurbitaceae* । हिं.—कंदूरी , कुन्दरू , कुंदोरी ; बं.—तेलाकुचा , कुदरका ; म.—गोडतोंडली ; गु.– घोली टींडोरी , टिंडोरॉं ; तै.—दोंडतीगे , काकिदोंड ; क.—तोंडे , कोण्टेबळ्ळि , सीहिदोंडे ; कों.—तेंडले ; तु.—मणोलि ; त.—कोवै ; सिं.—कोवक्का , कैंवेल् ; मल.–कोवा , तोण्टि ; इं.—Kayidonda । Large flowered Bryonia । ल.—*Cephalandra Indica* । कटुतुण्डिकेरीति हेमाद्रिः । **नामानि**—"बिंबी रक्तफला तुण्डी तुण्डिकेरी च बिंबिका । ओष्ठोपमफला प्रोक्ता पीलुपर्णी च कथ्यते" । भा. प्र । मध्यमफलं ग्राह्यम् । **गुणाः**—"बिंबीफलं स्वादुशीतं गुरुपित्तास्रवातजित् । स्तंभनं लेखनं रुच्यं विबन्धाध्मानकारकम्" । भा. प ॥

**बिलेशयः** । **सू. ६** etc. बिले बाहुल्येन शयनात् बिलेशयः । बिलो भूगर्तः । **प्राणिनां वर्गविशेषः** । Animals living in holes under ground as serpents, Porcupines etc । **गणनागुणाश्च**—"गोधाशशभुजङ्गाखुशल्लक्याद्या बिलेशयाः । बिलेशया वातहरा मधुरा रसपाकयोः । बृंहणा बद्धविण्मूत्रा वीर्योष्णाश्च प्र-

कीर्तिताः" । भा. प्र । "श्वासानिलकासहरं तन्मांसं पित्तदाह-हरम्" । रा. नि । see **जाङ्गलम्** ॥

**बिल्वः । सू. ६** etc. बिलति । 'बिल भेदने' । **स्वनामख्यात-वृक्षः** । "बिल्वं फले श्रीफले ना" । इति मेदिनी । N. O.—*Rutaceae* । **हिं.**—बेल , सीफल ; **वं.**—बेलगाछ , बिल्व ; **पञ्जा.**—बिलगिरि ; **म.**—बेल, बिल, बेला ; **गु.**—बिली; **कों.**—बेलाफल ; **तै.**—बिल्वमु , मारेडुचेट्टु ; **क.**—बेलपत्रे, बेळविनमर , बिलु, बिलपत्रि , बेलदमर , बेलवत्त , बिल्व ; **तु.**—बेलपत्रे ; **त.**—विल्वं , पिल्वं , कूविळम् , कूविळै , अलुवीकं ; **सिं.**—बेलि ; **मल.**—कूवळं കൂവളം ; **पा.**—शुल ; **अ.**—अनार हिंदी ; **सिन्धी.**—कटोरी ; **इं.**—Bael tree, Bengal quince; **ल.**—*Aegle marmelos* । **नामानि**—"मालूरः श्रीफलो बिल्वः शाण्डिल्यो नीलमल्लिका । महाकपित्थः शैलूषो मङ्गल्यः पूतिमारुतः । कर्कटः श्रीद्रुमो रुद्रः श्रीसंज्ञो बहलत्वचः" । स. नि । मूलत्वक्-बालफलादिकं ग्राह्यम् । मूलकाष्ठमपि ग्राह्यमित्येके । **गुणाः**—"बालं बिल्वफलं ग्राहि दीपनं पाचनं कटु । कषायोष्णं लघु स्निग्धं तिक्तं वातकफापहम् । पक्वं **गुरु** त्रिदोषं स्वादु दुर्जरं पूतिमारुतम् । विदाहि विष्टम्भकरं मधुरं वह्निमान्द्यकृत् । फलेषु परिपक्वं यद् गुणवत्तदुदाहृतम् । बिल्वादन्यत्र विज्ञेयमामं तद्धि गुणाधिकम् । द्राक्षाबिल्वशिवादीनां फलं शुष्कं गुणाधिकम्" । भा. प्र । **मूल-गुणाः**—"बिल्वमूलं तु मधुरं त्रिदोषच्छर्दिशूलनुत् । लघु कृच्छ्रहरं वातकफपित्तस्य नाशकम्" । नि. र । **पत्रपुष्पगुणाः**—"तत्पत्रं कफवातामशूलघ्नं ग्राहि रोचनम् । निहन्याद् बिल्वजं पुष्पमतिसारं तृषां वमिम्" ॥

**बिल्वकः । उ. २८.** पित्तप्रतिश्यायनस्ययोगे "धवत्वक्त्रिफलाश्या-

माश्मीपर्णीयष्टिबिल्वकै''रित्यत्र ''बिल्वक'स्थाने 'तिल्वक' इत्येव सुश्रुतपाठ इत्यनुस्मारयामि ॥

**बिल्वकर्कटिका** । चि. ८. बालबिल्वम् ॥

**बिल्वपेशिका** । सू. १५ etc. **बालबिल्वफलस्य मज्जा** । हिं.–कच्चे बेलकी गिरू ; बिल्वकी गिरी , बेलफलका सूखा गूदा ; बं.— बेलगूंड । अंबष्ठादिगणे—बिल्वपेशिका बालबिल्वगिर इति डल्हणः । शुष्कबिल्वपेशिकेति हेमाद्रिः । ''बालं बिल्वफलं बिल्वकर्कटी बिल्वपेशिका'' इति भावमिश्रः । **गुणाः**—''कफवातामशूलघ्नी ग्राहिणी बिल्वपेशिका'' । रा. व ॥

**बिल्वमज्जा** । सू. २१. बिल्वपेशिका ॥

**बिल्वमध्यम्** । चि. २ etc. बिल्वपेशिका । चिकित्सिताष्टमाध्याये ''गजकणादि'' पेयायोगे 'बिल्वमध्य'मित्यत्र ''बिल्वं कर्कटक'' मित्येव मुद्रितचरकपाठः । तदेकपदेनावश्यमवधारणीयम् ॥

**बिल्वशलाटुः** । चि. ९. बालबिल्वम् । ''आमे फले शलाटुः स्या'' दित्यमरः ॥

**बिल्वादिः** । क. ४. महत्पञ्चमूलम् ॥

**बिल्वादिपञ्चकम्** । शा. २. महत्पञ्चमूलम् ॥

**बिल्वादिपञ्चमूलम्** । क. ४ etc. महत्पञ्चमूलम् ॥

**बिल्वासवम्** । शा. १. बिल्वं वारिणा आसुत्य धान्यराशौ धारितं तच्छीतकषायो बिल्वज आसव उच्यते । ''यूषेण वा कुलत्थानां बिल्वजेनासवेन वा'' इत्यत्र ''कुष्ठतालीसकल्कं बल्वजयूषे मैरेयसुरामण्डे तीक्ष्णे कौलत्थे वा मण्डूकपिप्पलीसंपाके वा संप्लाव्य पाययेतैनां'' इत्येव चरकपाठः । बल्वजस्तृणविशेषः । ''कुष्ठतालीसकल्कं बिल्वबल्वजयूषमैरेयासवसुरामण्डान्यतमेन व्योषतीक्ष्णोष्णेन

वाम्लेन कुलत्थरसेन मधुकपिप्पलीसंपाकेन वा पाययेत्" इति पठितवान् वृद्धवाग्भटः ॥

**बिसम्** । सू. ६ etc. विस्यति । 'विस प्रेरणे' । **कमलस्य स्थूलं मूलम्** । पद्ममूलमिति डल्हणः । स्थूलं कमलकन्दमिति हेमाद्रिः । स्थूलपद्मनालमित्येके । हिं.—भिस ; म.—बिसीं , भिशी ; सिं.—नेलुंबलय ; मल.—तामरवळयं താമരവളയം । Tender white tuber of the lotus plant । सूक्ष्मं स्थूलं च ग्राह्यम् । नामानि—"पद्मजटा तु बिसं स्यान्मृणालसंज्ञस्तु नालिका नलिका" इति मञ्जरी । **गुणाः**—"मृणालं शीतलं वृष्यं पित्तदाहास्रजिद् गुरु । दुर्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम् । संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम्" । भा. प्र ॥

**बिसग्रन्थिः** । चि. ३ etc. विषग्रन्थिरिति पाठः । मृणालपर्वन् । भिसकी गांठ , कमलका कन्द । पद्ममूलमित्येके । त्रिपादिकेतीन्दुस्संग्रहसूत्रषष्ठाध्यायव्याख्यायाम् । पदद्वयमिति केचित् ॥

**बीजम्** । उ. ५. सर्षपयवादीनां बीजानि । "रत्नानि गन्धमाल्यानि बीजानी"त्यत्र रत्नस्थाने रक्तमित्येव सुश्रुतपाठः ॥

**बीजकः** । चि. ३ etc. असनः । मातुलुङ्ग इत्येके ॥

**बीजपूरः** । चि. ६. बीजेन पूर्यते । **छोलङ्गवृक्षः** । N. O.—*Aurantiaceae* । *Rutaceae* इत्येके । हिं.—बिजौरा नींबु , विजोरा नीबु , वीजौरा , माफल , लीमु ; बं.—छोलोंगो नेबू , छोलंग लेबू , टावालेबु ; टबानेबु ; गोड़ालेबु इति हाराणचन्द्रः । म.—महालुङ्ग , मादळा ; कों.—मातलिङ्गा ; गु.—बीजोरु , बालाङ्क ; पञ्जा.—बजौरी निंबु ; तै.—मातिफलमु , दब्बाकाया ; क.—

मादळ, मादवाळ, महाफलगिड; तु.—मापल; त.—कोटिमातळं, मातुळै, तुरिञ्चुनारत्तं, कुम्मट्टिमातुळै; सिं.—लप्नारं; मल.—वळिळनारकं വള്ളിനാരകം, मातळनारकं; पा.—तुरंज; अ.—उतरंज; इं.—Citron tree; ल.—*Citrus medica*। नामानि—"मातुलुङ्गश्च रुचको बीजाह्वः फलपूरकः। लुङ्गोऽम्लकेसरो बीजपूरकः सुमनःफलः" । स. नि। पक्वफलं ग्राह्यम्। गुणाः—"बीजपूरफलं स्वादु रसेऽम्लं दीपनं लघु। रक्तपित्तहरं कण्ठजिह्वाहृदयशोधनम्। श्वासकासारुचिहरं हृद्यं तृष्णाहरं स्मृतम्" । भा. प्र। "त्वक्तिक्ता दुर्जरा स्यात् क्रिमिकफपवनध्वंसिनी स्निग्धमुष्णं मध्यं शूलार्तिपित्तप्रशमनमखिलारोचकघ्नं च गौल्यम्। वातार्तिघ्नं कटूष्णं जठरगदहरं केसरं दीप्यमम्लं बीजं तिक्तं कफार्शःश्वयथुशमकरं बीजपूरस्य पथ्यम्" । रा. नि। "मातुलुङ्गफलं हृद्यमम्लं लघ्वग्निदीपनम्। श्वासकासारुचिहरं तृष्णाघ्नं कण्ठशोधनम्। विबद्धे चैव हिक्कायां शूले छर्द्यां च शस्यते" । रा. व। भगन्दरचिकित्सिते "सबीजपूरछदनै"रित्यत्र "सुधावचालांगलकी" इत्येव सुश्रुतपाठः॥

**बीजपूरकः** । चि. ६ etc. **बीजपूरः**॥

**बीजपूरजटा** । चि. ६. फलपूरमूलमित्येव चरकपाठः॥

**बीजाह्वः** । चि. ६. **बीजपूरः**। मातुलिंङ्ग इत्येवात्र चरकपाठः॥

**बुसम्** । शा. ६. तुच्छधान्यम्। फलरहितधान्यम्। हिं.—भूसा, छिलका; बं.—आगड़ा; म.—भुसा, भूस; सिं.—पतुर; मल.—चण्टु ചണ്ടു, पतिर्। Chaff। "बुसः कडङ्गरः प्रोक्तः कणः स्यात् क्षुद्रतण्डुलः" इति हलायुधः॥

**बूकः** । मू. १५. वे. ग. वाति बुकः। बूकबकाविति पाठौ। "शिवम-

ह्यां तु ना बुकः" इति केशवस्वामी । बृहद्बकुलवृक्षः । हिं.—वनहुला, वासना, बडी मौलसिरी; बं.—पद्मवक; म.—थोर बकुळ; गु.—मोटी बोलसरी, वरशोली; क.—बगेटाहु; तै.—अविसि; त.—कोक्कुमन्तारै; मल.—कोक्कुमन्तारं കൊക്കുമന്താരം, वलिय इलञ्ञि; नामानि—"बुको वसुक इत्युक्तः शिवाह्वः शिवशेखरः । महापाशुपतश्चैव सुव्रतः शिवमल्लिका" । ध. नि । गुणाः—"बुकोऽनुष्णः कटुस्तिक्तः कफपित्तविषापहः । योनिशूलतृषादाहकुष्ठशोथास्रनाशनः" । भा. प्र । "वसुकः कटुतिक्तोष्णः श्लेष्मोद्भूतव्यथापहः । व्रणान् समस्तान् हरति प्रलेपादिप्रयोजितः" । ध. नि । स्थूलपुष्पः ईश्वरमल्लिकेति पदार्थचन्द्रिका । बकपुष्प इति हेमाद्रिः । वसुक इत्येव सुश्रुतपाठः। वसुको बकः 'बकपुष्प' इति लोके इति डल्हणः । अगस्तिवृक्ष इत्येके ॥

**बूकः** । उ. ३०. एरण्डः । पूग इति केचित् ॥

**बृहती** । सू. ६ etc. कण्टकबाहुल्यात् । आमलकीफलाकारफला क्षुद्रवार्ताकुः । "बृहती क्षुद्रवार्ताक्यां कण्टकार्यां च वाचि च । वारिधान्यां महत्यां च छन्दोवसनभेदयोः" इति विश्वः । N. O.—*Solanaceae* । हिं.—बडी कटेरी, बडी भटकटैया, बडी कठाई, वाहृण्टा, बडी कटेली; बं.—व्याकुड, भांटा तितवेगुन; म.—मोठी डोरली, थोर डोरली, मोठी रानवांगी, मोठी रिंगनी । गु.—उभीभोरिंगणी, उभीरिंगणी; तै.—तेल्लमुलक, पेद्दामुलुंगा; कुकमाचि इत्येके; क.—किरिगुळ्ळ, केंपुगुळ्ळ, हबुगुळ्ळगिड; त.—मुळ्ळिक्कत्तिरि, करिमुळ्ळि, चिरुवलुतणै; कों.—कल्लांटा; तु.—कळंटे; सिं.—तिब्बट्टु; मल.—वन्चुण्टा വൻചുണ്ട, आनच्चुण्टा, चेरुवलुतिना;

पा.—बाद्ंजान ; अ.—वाल्तुंहिन्तुं जंङ्गली : इं.—Indian Nightshade ; ल.—*Solanum indicum* । बृहती द्विधा—सिंही व्याघ्री च । क्षविका श्वेता चेत्येके । **नामानि**—"बृहती सिंहिका क्रान्ता वार्ताकी राष्ट्रिका कुली । विषदा स्थूलभण्डाकी महती तु महोटिका" । ध. नि । मूलं ग्राह्यम् । अभावे सर्वांशो ग्राह्य इति केचित् । **गुणाः**—"बृहती ग्राहिणी हृद्या पाचनी कफवातहृत् । कटुतिक्तास्यवैरस्यमलारोचकनाशिनी । उष्णा कुष्ठज्वरश्वासशूलकासाग्निमान्द्यजित्" । भा. प्र । "फलानि बृहतीनां च कटुतिक्तलघूनि च । कण्डूकुष्ठक्रुमिघ्नानि कफवातहराणि च" । "बृहती कटुतिक्तोष्णा वातजिज्ज्वरहारिणी । अरोचकामकासघ्नी श्वासहृद्रोगनाशिनी" । रा. नि । कल्याणघृतयोगे बृहतीस्थाने बृहत्यावित्येव सुश्रुतपाठः ॥

**बृहतीद्वयम्** । सू. ६ etc. स्थूलबृहती महोटिकाख्या, क्षुद्रबृहती कण्टकारिकाख्या, एका स्थूलफला द्वितीया ह्रस्वफला ॥

**बृहत्यादिगणः** । चि. ९ etc. लघुपञ्चमूलम् ॥

**बृहत्याद्यः** । चि. १४. लघुपञ्चमूलम् ॥

**बृहत्यौ** । सू. १४ etc. बृहतीद्वयम् । विषप्रतिषेधे "पुनर्नवे त्रिकटुकं बृहत्यौ सारिबे बला" इत्यत्र 'पुनर्नवे हरेणुश्च त्रिकटुः सारिबे बला' इत्येव सुश्रुतपाठः । 'सारिबे बला' इत्यत्र 'सारिबोत्पले' इति च पठन्ति ॥

**बोटः** । चि. ३. जातीरसः । बोल इति पाठः । अलंबुषेत्यरुणदत्तः । शकदेशे मुण्डिकेति प्रसिद्धा इत्यर्थेन बोटस्थविरशब्दमेकपदमितीन्दुः ॥

**बोधिः** । उ. ३७. बोधिसत्वाख्यः सर्वोपकारित्वात् । **अश्वत्थः** । "बोधिवृक्षस्तु पिप्पलः" इति नरहरिः । "पिप्पलो बोधिरश्वत्थः"

इति रत्नकोषः । "बोधिः समाधिभेदे स्याद् बोधिः पिप्पलपादपे" इति विश्वः ॥

**ब्रध्नः** । नि. १४. see **बध्रः** ॥

**ब्रह्मचारिणी** । सू. २९. श्रावणी । ब्रह्मयष्टिकेत्यरुणदत्तहाराणचन्द्रौ । मुण्डितिकेति डल्हणः । ब्राह्मीति हेमाद्रिः । पत्तंगकाष्ठमित्यपरे । अलंबुषेति पाठ्यकारः ॥

**ब्रह्मसुवर्चला** । उ. ३९. दिव्यौषधिभेदः । "ब्रह्मसुवर्चला नामौषधिर्या हिरण्यक्षीरा पुष्करसदृशपत्रा" इति चरकचिकित्सितायुर्वेदसमुत्थानीयरसायनपादे । सुवर्चलाभेद इत्येके । मण्डूकपर्णीतीन्दुः । ब्राह्मीत्यपरे ॥

**ब्रह्मसोमा** । उ. १. श्वेतवृद्धदारकः । सफेद विधायरा । see **बस्तान्त्री** । पथ्येति पाठ्यकारः ॥

**ब्राह्ममुहूर्तः** । सू. २. ब्रह्मा देवतास्य । ब्रह्मज्ञानाध्ययनादियोग्यो मुहूर्तः । **अरुणोदयकालः** । अरुणोदयात् प्राग्वर्त्ती दण्डद्वयात्मको कालः । रात्रेरुपान्त्यो मुहूर्त इति हेमाद्रिः । "रात्रेश्च पश्चिमे यामे मुहूर्तो ब्राह्म उच्यते" इति । रात्रेश्चतुर्घटिकावशेषः काल इत्यरुणदत्तः । सरस्वतीयाम इति केचित् । ब्रह्मदेवताकोऽभिजिन्नामको मुहूर्त इति मल्लिनाथसूरिर्रघुवंशपञ्चमसर्गषट्त्रिंशत्तमपद्यव्याख्यायाम् । Two hours before sunrise ॥

**ब्राह्मी** । चि. १९ etc. पावनीत्वात् । **स्वनामख्यातक्षुपविशेषः** । "ब्राह्मी तु भारती सोमवल्लरी ब्रह्मशक्तिषु" इति मेदिनी । N. O.—*Scrophularineae* । हिं.—ब्रह्मी, बरमी, सफेद कम्मि, बरंभी ; बं.—ब्रह्मीशाक, अधविराणि, ब्राह्मी ; म.—ब्राह्मी, बाम्बा ; गु.—ब्राह्मी ; तै.—सांब्राणिचेट्टु ; क.—नीरुब्राह्मि,

ब्राह्मि ; को.—ब्राह्मि ; त.—पिरामि , नीर्ष्पिरामि ; सिं.—लुणु-
विल , बेमितिरिय ; मल.—ब्राह्मि ബ്രാഹ്മി ; इं.—Thyme-
leaved Gratiola ; ल.—*Herpestis monniera* । नामानि—
"ब्राह्मी सोमा विनिर्दिष्टा दिव्यतेजा महौषधी । कपोतवंका त्वाष्ट्री
च सैव ब्रह्मसुवर्चला" । ध. नि । सर्वांशो ग्राह्यः । गुणाः—
"ब्राह्मी हिमा सरा तिक्ता लघुर्मेध्या च शीतला । कषाया मधुरा
स्वादुपाकायुष्या रसायनी । स्वर्या स्मृतिप्रदा कुष्ठपाण्डुमेहास्रका-
साजित् । विषशोथज्वरहरी तद्वन्मण्डूकपर्णिनी" । भा. प्र । मण्डू-
कपर्णीत्येके ॥

---

## भ ।

**भण्डी** । सू. १५. शिरीषः । शिरीष इत्येव सुश्रुतपाठः । भूशिरी-
ष इत्यर्थेन पाठ्यकारः ॥

**भद्रकाष्ठम्** । उ. १८. देवदारु ॥

**भद्रदारु** । सू. १५ etc. देवदारु ॥

**भद्रमुस्ता** । चि. ७. नागरमुस्ता । "अनूपदेशे यज्जातं मुस्तकं
तत्प्रशस्यते । तत्रापि मुनिभिः प्रोक्तं वरं नागरमुस्तकम्" इति भाव-
मिश्रः । N. O.—*Cyperaceae* । हिं.—नागरमोथा ; बं.—नाग-
रमुता , भद्रमुथा , मादुलामोथा ; म.—भद्रमोथें , नागरमोथ ;
गु.—भद्रमोथ्य ; तै.—सकहतुङ्ग , कालातुङ्ग ; क.—नागर-
मुस्ता , कोन्नारिगड्डे ; द्खा.—नागरमोथा ; त.—पेरुमुत्तकाचु ;
सिं.—महकलान्दु ; मल.—पेरुमुत्तङ्ङा ; इं.—Indian Cy-
perus ; ल.—*Cyperus pertenuis* । नामानि—"गांगेयं कुरु-
विन्दं च भद्रमुस्तं कुटन्नटम्" । बृ. नि. र । गुणाः—"तिक्ता

नागरमुस्ता कटुः कषाया च शीतला कफनुत् । पित्तज्वरातिसारारुचितृष्णादाहनाशिनी श्रमहृत्" । रा. नि । मूलं ग्राह्यम् ॥

**भद्रश्रीः** । उ. ३०. भद्रा श्रीरस्य । चन्दनः ॥

**भद्रादिवर्गः** । चि. १३. भद्रदार्वादिगणः ॥

**भद्रैला** । उ. ६. बृहदेला । वडैला इति पाठः । "रोध्रैला" इत्येव मुंबापुरमुद्रितसंग्रहपाठः । N. O.—*Scitamineæ* । हिं.—बडी इलायची, वड् एलाइच , लाल इलायची । बं.—बड एलाइच ; म.—थोरवेला , थोरवेलदोडा , मोटो एलदोरि , एलदोडे ; गु.—मोठी एलची , जाडी एलची ; तै.—पेद्द एलकायलु ; क.—दोड्ड एलकि ; त.—पेरेलं ; मल.—वलिय एलत्तरि വലിയ ഏലത്തരി, पेरेलं ; पा.—हैलकलां ; अ.—काकलेकिबार ; इं.—Large cardamom ; ल.—*Amomum subulatum* । नामानि—"भद्रैला बृहदेला तु त्रिपुटा त्रिपुटोद्भवा । स्थूलैला त्वक्सुगन्धा च पृथ्वीका कन्यका पुटा" । ध. नि । बीजं ग्राह्यम् । गुणाः—"स्थूलैला कटुका पाके रसे चानलकृल्लघुः । रूक्षोष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषापहा । हृल्लासविषवस्त्यास्यशिरोरुग्वमिकासनुत्" । भा. प्र । कल्याणघृतयोगे "एलयुग्म"मिति श्रीवाग्भटैरेवावतारितम् । भद्रैलास्थाने 'कौन्ती' इत्यर्थेनैव चरकसुश्रुतशार्ङ्गधरभावमिश्रनावनीतकृत्कारप्रमुखानां पाठः । कलिकायामपि हरेणुरित्येव दृश्यते ॥

**भरद्वाजः** । शा. ६. भारद्वाज इति केषांचन पाठः । भरन् धारको वाजोऽस्य । यद्वा भरद्वाजस्यापत्यम् । "भारद्वाजो गुरोः पुत्रे व्याघ्राटाख्यविहंगमे" इति मेदिनी । व्याघ्राटनामपक्षिविशेषः । हिं.—भरदूल ; बं.—भारुइ पाखी ; म.—कुकुडकुंभा ; त.—चेम्पोत्तु , मल.—चेम्पोत्तु ചെമ്പോത്ത് ,

उत्पन्; इं.—Coucal, crow-pheasant; Snake-bird । Skylark इत्येके । ल.—*Centropus Sinensis* । **नामानि**— "भरद्वाजः कुकराटो व्याघ्राटः पुण्यदर्शनः" । ध. नि । **मांसगुणाः**—"वातघ्नोऽनलपित्तघ्नो भारद्वाजः कफास्रजित्" । रा. नि ॥

**भल्लातः** । सू. १५ etc. भल्लं भल्लाघ्रमिवातति स्पर्शिना । **स्वनामख्यातवृक्षः** । N. O.—*Anacardiaceæ* । हिं.—भिलावा, भिलाए, भिलावन्; उर्दु.—भिलावा; बं.—भेला; म.—बिबवा, भिलावा, बिब्बा, बिब्बे; गु.—भिलामां, भिअमु; दखा.—भिलावन, भिलवना; कों.—बिब्बायि; तै.—जीडिचेट्टु, जीडिवित्तुलु; क.—केरमर, गेक्कायि, गेरुबीज; तु.—तेरेद्मर, गेर्कायि; उत्.—भल्लिय; त.—चेरांकोट्टैमरं, चेङ्कोट्टैमरं, चेङ्कोट्टै; सिं.—बदुल्ल, सेङ्कोट्टम्; मल.—चेर्मरं ചേർമരം, तेंब्राक्कु, चेर्कुरु; पा.—बिलादुर; अ.—बेलादिन, हबुलकलब; फ्र.—Anacardier; जर्मन्.—Ostindishcher Dintenbaum; इं.—Marking nut tree; ल.—*Semecarpus Anacardium* । "क्षिप्तांभसि निमज्जेद्या भल्लातकयस्तथोत्तमाः" इति भावमिश्रः । **नामानि**—"भल्लातकं त्रिषु प्रोक्तमरुष्कोऽरुष्करोऽग्निकः । तथैवाग्निमुखी भल्ली वीरवृक्षश्च शोफकृत्" । भा. प्र । पक्वफलं ग्राह्यम् । **गुणाः**—"भल्लातकफलं पक्वं स्वादुपाकरसं लघु । कषायं पाचनं स्निग्धं तीक्ष्णोष्णं छेदि भेदनम् । मेध्यं वह्निकरं हन्ति कफवातव्रणोदरम् । कुष्ठार्शोग्रहणीगुल्मशोफानाहज्वरक्रिमीन् । तन्मज्जा मधुरो वृष्यो बृंहणो वातपित्तहा । वृन्तमारुष्करं स्वादु पित्तघ्नं केश्यमाग्निकृत् । भल्लातकः कषायोष्णः शुक्रलो मधुरो लघुः । वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् । हन्ति गुल्मज्वरश्वित्रवह्निमान्द्यक्रिमिव्रणान्" । भा. प्र । **शोधनविधिः**—"भल्लातकानि पक्वानि समानि प्रक्षिपेज्जले । मज्जन्ति यानि तत्रैव शुद्ध्यर्थं तानि

योजयेत् । इष्टकाचूर्णनिचयैर्घर्षणान्निर्विषं भवेत्" । आ. सं । "भल्लातकासहत्वे तु रक्तचन्दनमिष्यते" इति वृद्धवैद्याः । "भल्लाताभावतश्चित्रः" इति भावमिश्रः ॥

**भल्लातकः** । सू. ६ etc. **भल्लातः** ॥

**भल्लातकास्थि** । नि. ९. भल्लातफलस्य बीजम् । भिलावेकी गुठली । "भल्लातकास्थ्यग्निसमं त्वङ्मांसं स्वादु शीतलं" इति चरकः ॥

**भल्लूकः** । सू. १५ etc. **स्योनाकः** ॥

**भव्यम्** । सू. ६ etc. **फलविशेषः** । "भव्यं शुभे च सत्ये च योग्ये भाविनि च त्रिषु । कर्मरङ्गतरौ पुंसि" इति मेदिनी । N. O.—*Dilleniaceae* । हिं.—ओट, चालता, रोमफल; बं.—चालिता, चालता; म.—नीव, नहीव; गु.—ओंटफल, करमल; आसां.—चालिता, ओटेनीह; उरिया.—रायि, ओऔ; नेपाली.—रांफा; तै.—पेद्दकलिङ्गा; क.—बेट्टकानागाला; कों.—कडुकानागाला, वड्लिकरमळ; त.—उवा; सिं.—होन्दापारा, वाम्पारा; पा.—चकी; ल.—*Dillenia Indica* । नामानि—"भवं भव्यं भविष्यं च भावनं वक्त्रशोधनम् । तथा पिच्छिलबीजं च तच्च रोमफलं मतम्" । ध. नि । गुणाः —"भव्यमम्लकटूष्णं च बालं वातकफापहम् । पक्वं तु मधुराम्लं च रुचिकृत्सामशूलहृत्" । रा. नि । "स्वादु हृद्यं कषायाम्लं भव्यमास्यविशोधनम् । पित्तश्लेष्महरं ग्राहि गुरु विष्टंभि शीतलम्" इति सुश्रुतः । पक्वफलं ग्राह्यम् । भव्यमारुकं कार्तिकेयपुरे प्रसिद्धं, अन्ये तु कर्मरङ्गफलं भव्यमाहुः, भव्यं तालफलोपमं केवलवल्कलसंहितमात्रमित्यपरे इति डल्हणः । "कर्मरंगं नागफलं भव्यं पिच्छिलबीजकं" इति मदनपालः ॥

**भस्मशर्करा** । सू. ३०. काष्ठरसो भस्मनि गलितो दग्धः शर्करा-

सदृशत्वाद् भस्मशर्करा । तथा च निघण्टुः,—"मुष्ककाद्दह्यमानात्तु: रस: प्रच्यवते हि यः । भस्मना सह संयुक्तः काठिन्यमुपगच्छति । तां भस्मशर्करामाहु"रिति । दह्यमानार्द्रकाष्ठरसाच्छर्करैवान्योन्यसंहता भस्मशर्करेत्युच्यते इति डल्हणः । भस्मशर्करास्तु क्षारद्रव्यैः सह दग्धाश्चूर्णपाषाणा इति केचित् । भस्मीभूतशर्करेति हाराणचन्द्रः ॥

**भार्गी** । **सू. १५** etc. भृज्जति भार्गी, भृगुजेत्येके । **स्वनामख्यातक्षुपः** । एषा श्वेतनीलपुष्पा इति द्विधा । N. O.—*Verbenaceae* । हिं.—भारङ्गी, भांडगी, ब्रह्मनेटी, वरङ्गी ; बं.—वामनहाटी ; भूइ जां इत्येके ; म.—भारङ्ग, भारङ्गी ; नेपा.—चूया ; गु.—भारङ्गी ; तै.—भंटभारङ्गी, गंटुभारङ्गी, गुण्टभारिङ्ग ; क.—गंटुभारिङ्ग, नायित्-गगा, किरुदेगु ; कों.—निर्विष ; त.—चिरुतेक्कु, कण्टुपारङ्कि ; सिं.—र्स्मदेवुदु, सिरितेक्कु ; मल.—चेरुतेक्कु ൧ചറുതേക്ക | पारङ्गी इत्येके । **ल.**—*Premna herbacea* । Clerodendron siphonanthus इति केचित् । **नामानि**—"भार्गी गर्दभशाकं च पद्मा ब्राह्मणयष्टिका । अङ्गारवल्ली फञ्जी च सैव ब्रह्मसुवर्चसा । शुक्रमाता च कासघ्नी भृगुजा भार्गवा मता" । ध. नि । सर्वांशो ग्राह्यः । **गुणाः**—"भार्गी रूक्षा कटुस्तिक्ता रुच्योष्णा पाचनी लघुः । दीपनी तुवरा गुल्मरक्तनुन्नाशयेद् ध्रुवम् । शोथकासकफश्वासपीनसज्वरमारुतान्" । भा. प्र । "भार्ग्यभावे तु तालीसं कण्टकारीजटाथवा" इति भावमिश्रः । भार्ग्यैव "पाणल्" इति नाम्ना प्रसिद्धा इति केरलेषु केचित् ॥

**भार्ङ्गनिर्यासः** । **उ. ३९.** भृङ्गराजस्वरसः क्वाथो वा । भङ्गरेका क्वाथ ॥

**भार्ङ्गी** । see **भार्गी** ॥

**भासः** । सू. ६ etc. **गोकुलचारी गृध्रविशेषः** । "भासः पुंसि प्रभायां स्याद् विशेषे विहगस्य च" इति मेदिनी । सफेद चील इत्येके । मल.—वेण्चूट्टन्कलु വെൺച്ചുട്ടൻകഴു । कुतळा इति भास्करव्याख्या । Griffon इति केचित् । Fish-eating kite इति अविनाशचन्द्रः । श्वेतशिखावान् गृध्रसदृशो गोपृष्ठचारी इति हेमाद्रिः । "भासः शिखावान् भासन्तो गृध्राकारो रजःप्रभः" इति मदनपालः । भस्मवर्णपक्षी इति चक्रपाणिदत्तः । गोष्ठकुक्कुट इति शिवदासः । गृध्रविशेषः स्वल्पतुण्डो धूसरवर्णः इति डल्हणः । गिधाडीकावळा इत्येके । **मांसगुणाः**—"काकभासभवं मांसं चक्षुष्यं दीपनं लघु । आयुष्यं बृंहणं बल्यं क्षतदोषक्षयापहम्" । ध. नि ॥

**भुजगम्** । उ. १३. **सीसम्** ॥

**भुजङ्गम्** । उ. १३. **सीसम्** ॥

**भूकदंबः** । चि. १९ etc. श्रावणीभेदः । **महाश्रावणी नाम भूमिकदंबक्षुपः** । N. O.—*Compositae* । **हिं.**—बडी मुंडी, गोरखमुंडी ; **बं.**—बड़ थुलकुडी ; **म.**—मोठी मुंडी, गोरखमुंडी ; **गु.**—मोठी मुंडी, कलार ; **क.**—हिरियबोंडयर ; **मल.**—वलिय अटय्कामणियन् വലിയ അടയ്ക്കാമണിയൻ । see **श्रावणी** । **नामानि**—"महाश्रावणिकान्या तु सा स्मृता भूकदंबिका । कदंबपुष्पिका च स्यादव्यथाऽतितपस्विनी" । भा. प्र । **गुणाः**—"महामुण्डी तु मधुरा तिक्ता चोष्णा रसायनी । रुच्या स्वर्या प्रमेहघ्नी वातनाशकरी मता । अन्ये गुणास्तु मुण्डीवज्ज्ञेया वैद्यैश्च सूरिभिः" । नि. र । यवानीतीन्दुः ॥

**भूकन्दः** । सू. ६. **शिलीन्ध्रः** । "उक्तं संस्वेदजं शाकं भूमिछत्रं शिलीन्ध्रकम् । क्षितिगोमयकाष्ठेषु वृक्षादिषु तदुद्भवेत् । श्वेताःशुभ्र-

स्थलीकाष्ठवंशगोत्रजसंभवाः । नातिदोषकरास्ते स्युश्शेषास्तेभ्यो विगर्हिताः" इति भावमिश्रः । हिं.—सांपकी छत्री, छतोना; बं.—छातकुड, छातोना; म.—भुईफोड; क.—नायिकोटे, आलिंबे; त.—काळान्; मल.—कूण् കൂൺ; इं.—Mushroom; ल.—*Agariciasis campestris* । "भूवल्लूरमहिच्छत्रं भूस्फोटं भूमिकन्दकं" इति वैजयन्ती । सूरण इत्येके ॥

भूतकेशी । सू. १५ etc निर्गुण्डी । "शुक्लाऽन्या श्वेतसुरसा भूतकेशी च कथ्यते" । ध. नि । "सिन्दुकच्छपिका भूतकेशीन्द्राणी च नीलिका" । रा. नि । पुत्रंजारीति पदार्थचन्द्रिका । सुरसादिगणे मांसीत्येके । नीलनिर्गुण्डीत्यपरे । भूतप्रतिषेधाध्यायव्याख्यायां शुक्ला निर्गुण्डीतीन्दुः । अत्र वालकमिति कैरली । मांसीति डल्हणः । श्वेतवचेति हाराणचन्द्रः ॥

भूतिकम् । चि. ४ etc. ध्यामकम् । महापञ्चगव्यघृतयोगे "मूर्वाभूतिकभूनिंब" इत्यत्र भूतिकस्थाने 'पूतीक' इति सुश्रुतपाठः । भूतीक इति पठति चरकः ॥

भूतिक्तः । चि. २. भूतीक इत्येव मुंबापुरमुद्रितसंग्रहपाठः । पूतीक इत्येके ॥

भूतीकः । चि. १ etc. यवानी । भूतिक इति पाठः । कल्पचतुर्थाध्याये "पटोलनिंबभूतीकरास्नासप्तच्छदांससः" इत्यस्मिन् पञ्चतिक्तकषाये "भूनिंब" इत्येव 'भूतीक' स्थाने पठितव्यश्चरकमतानुसारिणा । "भूतीकमपि भूनिंबे दीप्यभूस्तृणकत्तृणे" इति मेदिनी ॥

भूतीकम् । चि. ६ etc. ध्यामकम् । "सप्ततिर्दारुबीजाह्व" इत्यत्र 'सप्तति'स्थाने "भूतीक"मित्येव चरकपाठः । खोरासानी यमानीत्येके ॥

**भूतीकम्** । चि. ९, क. ४ etc. **यवानी** । अतीसारचिकित्सिते "भूतीकपिप्पलीशुण्ठी"त्यत्र "भूतीक"स्थाने 'मुस्त'मिति पठत्याचार्यसुश्रुतः । कल्पचतुर्थाध्याये "गुडूच्यैरण्डभूतीकभार्गीवृषकरोहिष"मिति चरकपाठ एवावतारितः । कत्तृणमिति चक्रपाणिदत्तः । भूतिकमिति सुश्रुतपाठः । कत्तृणापरपर्यायमिति डल्हणः । भूतिकं यवानी, रोहिषो गन्धतृणमिति हाराणचन्द्रः ॥

**भूतोदनम्** । उ. ५. **मांसौदनम्** । भूतानामोदनः सोपहारो बलिः । भूतौदनमिति पाठः । A pap with meat । ओदनविशेष इत्येके । उक्तं हि—"तिललाजादधियवहरिद्रायुक्तमोदनम् । भूतोदनं तु संप्रोक्तं गुणाः सर्वे पदार्थवत्" । नि, र ॥

**भूनिंबः** । सू. १० etc. भुवो निंब इव । **किराततिक्तः** ॥

**भूर्जः** । सू १५ etc. भृणाति भृर्जः, भूरूर्जोऽस्य इति वा । हिमालयादिपर्वतोपरिस्थो **स्वनामख्यातवृक्षविशेषः** । फटक इति हिमालयप्रान्तेषु प्रसिद्धः । भूर्जस्थाने स्फूर्जक इति पठन्त्येके । **हिं.**—भोजपत्र, भुजपत्र ; **बं.**—भूर्जिपत्र ; **म.**—भूर्जपत्र ; **सिं.**—भुजपत्र, रुक्बुरुद ; **मल.**—भूर्जमरं ഉൾമരം, **गु.**—भोजपत्र ; **क.**—भूर्जपत्र ; **इं.**—Birch tree, the bark of which was used for writing, and for winding round the Hooka-snake; **ल.**—*Betula Bhojpatra* । **नामानि**—"भूर्जो वल्कद्रुमो भूर्जः सुचर्मा भूर्जपत्रकः । चित्रत्वग्बिन्दुपत्रश्च रक्षापत्रो विचित्रकः । भूतघ्नो मृदुपत्रश्च शैलेन्द्रस्थो द्विभूमितः" । रा. नि । त्वग्ग्राह्या । **गुणाः**—"भूर्जः कटुकषायोष्णो भूतरक्षाकरः परः । त्रिदोषशमनः पथ्यो दुष्टकौटिल्यनाशनः । पित्तरक्तरुजां हन्ता मन्त्रकार्येषु सिद्धिदः" । रा. नि ॥

**भूर्जग्रन्थिः** । उ. १८. भूर्जवृक्षस्य ग्रन्थिः । भोजपत्रकी ग्रंथि ॥

**भूर्जपत्रः** । उ. ३. **भूर्जः** । भूर्जवृक्षस्य पत्रमित्येके ॥

**भूवेश्मन्** । सू. ३. भूम्यन्तर्वर्तिगृहम् । पा.—तहखाना ; म.—तळघर , भुयार ; सिं.—बिमुगे , यटगबडाव ; मल.—निलयरा നിലയറ | Cellar, under-ground chamber, any subterranean chamber ॥

**भूशयः** । सू. २४. भूमौ बिले शेरते इति भूशयः । **बिलेशयः** । "भूशया बिलवासित्वा"दिति चरकः ॥

**भूस्तृणम्** । सू. ६ etc. भुवस्तृणम् । गन्धबहुलो तृणविशेषः । आन्ध्रदेशप्रसिद्ध इति वैद्यकशब्दसिन्धुः । N. O.—*Gramineae* । हिं.—भूतृण , शरबाण ; बं.—गन्धतृण , गन्धबेना ; म.–पाण्यांतील वाळा , रोष् ; गु.–सुगन्धरोंस , भूतृण ; तै.–चिप्पगाड्डि ; क.–चाहुल्लु , शुंठि , बोदे , परिमलदगंजाणि , संबारहुल्लु ; त.—चुक्कुनारिपुल्ल् ; पटप्पुल्लु इत्येके ; सिं.—सुवन्दतने ; इं.—Roussa grass, Roosa gras, Ginger grass, Grass of nemaur; ल.—*Andropogon martini* । चायप्पुल्लु इति केरलेत्वेके । वङ्कणंपुल्लु इत्यपरे । पूतणक्कप्पुल्लु इति केचित् । **नामानि**—"गुह्यबीजं तु भूतीकं सुगन्धं जंबुकप्रियम् । भूतृणं तु भवेच्छत्रा मालातृणकमित्यपि" । भा. प्र । कत्तृणस्य भूस्तृणस्यापि गुणवीर्यविपाकादिषु किञ्चित्साम्यत्वं विद्यते । उक्तं हि राजनिघण्टौ—"कत्तृणं दशनामाढ्यं कटुतिक्तकफापहम् । शस्त्रशल्यादिदोषघ्नं बालग्रहविनाशनं" इति । **तथा**—"भूतृणं कटु तिक्तं च वातसन्तापनाशनम् । हन्ति भूतग्रहावेशान् विषदोषांश्च दारुणान्" इति । सर्वांशो ग्राह्यः । मूलमित्येके । अंगुदाकनामधेयो द्रोणपुष्पसदृश इति डल्हणः । छातिया इति प्रसिद्ध इति सुश्रुतभाष्यकारः ॥

**भृङ्गः** । चि॰ ३ etc. **मार्कवः** । see **भृङ्गराजः** । उत्तरद्वितीयाध्याये "शृङ्गवेरनिशाभृङ्ग"मित्यत्र "शृङ्गिवेरनिशाकुष्ठ"मित्येव शिवपुर-मुद्रितसंग्रहपाठः ॥

**भृङ्गम्** । क॰ २ etc. कार्ष्ण्यतैक्ष्ण्याभ्याम् । त्वक् । "भृङ्गैलाभ्यां समा नीली"त्यत्र "त्वगेलाभ्या"मिति केषांचन पाठः । "भृङ्गैला-भ्यां समं नील"मिति भाति मुद्रितचरकपाठः । "मधुव्रते भृङ्गरा-जे पुंसि भृङ्गं गुडत्वचि" इति मेदिनी ॥

**भृङ्गरजः** । उ. ३९. भृङ्ग इव रजोऽस्य । भृङ्गराजः ॥

**भृङ्गराजः** । उ. २४. भृङ्गवद्राजते रञ्जयति कृष्णीकरोति च भृङ्ग-राजः । स श्वेतपीतनीलकुसुमभेदात्त्रिधा । **स्वनामख्यातपत्र-शाकविशेषः** । "अथ भृङ्गराज उक्तः पक्षिविशेषे च मार्कवे भ्रम-रे" इति मेदिनी । N. O.—*Compositæ* । हिं.—भांगरा, भङ्गरा, भागरी, भागरो, भङ्गरिया, भङ्गरैया, भेगरिया, घमिरा; उर्दु.—भृङ्गरा, भृङ्गराज; बं.—भीमराज, केशुरे, केशुरिया; म.—माका; गु.—भङ्गरो; दखा.—भांगरा; कों.—काजलमावु, माको; पञ्जा.—माका, दोधक, बाबरि; उत्.—कलाकेशदुरा; मुंबापुर्याम्.—पिवलभांरा; तै.—गुंटग-लिजेरु, गुंटकलगरचेट्टु; क.—गरुग, गर्ग, अजागर, गरुगलुगिड, काटिगे गरगे, भङ्गरैया; त.—करिचलाङ्कण्णि, करिप्पान्तळै, करचनांकण्णि, कैयान्तकरै, करिक्कण्डु, करिय-लाङ्कण्णि, करिकै, करिशान्पूण्डु, करि(य)चालै; मल.- कञ्ञुण्णि കഞ്ഞുണ്ണി, कञ्ञण्णि, कय्योन्नि, कय्यान्नि, कय्यान्तकरा, कय्पेण्णा, कय्यन्यं, कैतोन्नि; सिं.—कीकिरिन्द्रिया; पा.—जमर्दर; अ.—हजीज, रदिम-एल-बिन्त; इं.—Traling eclipta; ल.—*Eclipta alba, E. Erecta, E. Prostrata* ।

**नामानि**—"मार्कवस्तेकराजश्च मेघाह्वः केशरञ्जनः । भृङ्गराजो

महानीलो भृङ्गपर्यायवाचकः" । स. नि । अपि च—"भृङ्गराजो भृङ्गरजो मार्कवो भृङ्ग एव च । भृङ्गारकः केशराजो भृङ्गारः केशरञ्जनः" । भा. प्र । गुणाः—"भृङ्गारः कटुकस्तीक्ष्णो रूक्षोष्णः कफवातनुत् । केश्यस्त्वच्यः कृमिश्वासकासशोथामपाण्डुनुत् । दन्त्यो रसायनो बल्यः कुष्ठनेत्रशिरोऽर्तिनुत्" । भा. प्र । सर्वांशो ग्राह्यः । "अथ भृङ्गराज उक्तः पक्षिविशेषे च मार्कवे भ्रमरे" इति मेदिनी ॥

**भृङ्गारः** । शा. ६. नालमुखजलपात्रविशेषः । हिं.—झारी, झज्झर इत्येके ; अ.—सुराही ; त.—कूजा , किण्टि इत्येके ; सिं.—कोण्डिया , गुरुलेत्तुव ; मल.—कूजा കൂജ , पिटिमोन्ता ; पोन्किण्टि इत्यन्ये । बं.—झारी ; गाडु इति केचित् ; म.—झारी । Long-necked ewer, goglet । "भृङ्गारो हेमकरकः" इति वैजयन्ती । "भृङ्गारः कनकालुका" इत्यमरहलायुधौ ॥

**भृङ्गाह्वः** । सू. ६ etc. भीमराजपक्षी । "भृङ्गाद्याः क्षुद्रपक्षिणः" इति वैजयन्ती । कृष्णवर्णचटकसदृशः शिखावान् गोप्रेरक इति हेमाद्रिः । भृङ्गराजो भ्रमरको धूम्याटसदृशः 'पक्षिराज' इति लोके इति डल्हणः । "मुनौ हरे तटे शुके भृङ्गो धूम्याटषिङ्गयोः" इति मेदिनी । 'फिंगा' इत्यभिधीयते इति भाष्यकारो यन्त्रविधिव्याख्यायाम् । कालचटक इति पारियात्रीयाः कान्यकुब्जास्तु 'पेगी' इति । भृङ्गराज इति चरकपाठः । भ्रमरवर्ण इति चक्रपाणिदत्तः । भृङ्गवत् कृष्णपक्षी इति क्षीरस्वामी । मल.—करिङ्किळि കരിങ്കിളി , करिंकुरिकिल् । Bhimraj, Drongo, Big king-crow । A kind of bird of deep black colour । ल.—*Dicrurus macrocercus* ॥

**भृष्टतण्डुलम्** । सू. ६ etc. भृष्टैस्तण्डुलैः कृतमोदनम् । भुने हुए

चावलोंका भात । Fried rice, Muri । "भृष्टतण्डुलजं चान्नं लघु वह्निप्रदीपनं" इति राजवल्लभः ॥

**भेकः । सू. ६** etc. **मण्डूकः** । "भेको मण्डूकमेघयोः" इति मेदिनी । **हिं.**—मेंढक, मेघा ; **बं.**—ब्याङ् ; **म.**—बेडूक ; **त.**—तवळै ; **सिं.**—गेमटिया ; **मल.**—तवळा തവള, मेक्कान्, माक्कि ; **इं.**—Frog, Rana ; **ल.**—*Rana esculenta* । **नामानि**—"मण्डूकः प्लवगो भेको वर्षाभूर्दर्दुरो हरिः" । भा. प्र । **गुणाः**— "मण्डूकः श्लेष्मलो नातिपित्तलो बलकारकः" । भा. प्र ॥

**भौमम् । चि. ६. कूपोदकादिजलम्** ॥

**भ्राष्ट्रः । सू. ६.** भृज्यतेनेन अस्मिन् वा । **अपूपपचनपात्रविशेषः** । भर्जनपात्रम् । **हिं.**—कड़ाही ; खपरी इत्येके ; **बं.**—भाज्ना, खोला ; **सिं.**—ताच्चुव ; ताच्चिय, बदिन आतिलिय ; **म.**—तळणी, कढई ; **त.**—चिरुवाणालि ; **मल.**—कारा കാറ, कनल्कारा, वरुचट्टि । Frying pan । "भ्राष्ट्रः पुंस्यंबरीषोऽस्त्री"रिति वैजयन्ती । सछिद्रखर्परमिति हेमाद्रिः ॥

---

# म ।

**मकरः । सू. ६** etc. मनुष्यं कृणाति हिनस्ति, मं विषं किरति वा । **मत्स्यविशेषः** । मगर इति लोके । "मकरो यादसो भेदे निधिराशिप्रभेदयोः" इति मेदिनी । हिंस्रदंष्ट्रक इति डल्हणः । **मल.**—स्राव സ്രാവ് । Shark । **ल.**—*Carcharias gangeticus* । "मकरस्तिमिदंष्ट्रकः" इति मदनपालः । **नामानि**—"जलरूपस्तु मकरो मरोलिरसिदंष्ट्रकः । मीनरः" इति त्रिकाण्डशेषे । **गुणाः**—

"मत्स्यानां मकरः श्रेष्ठो दीपनो वातनाशनः । रुचिप्रदः शुक्रकर-श्चाश्मरीदोषनाशनः" । अ. सं ॥

**मकुष्टकः** । सू. ७. मङ्कति, मङ्क्यते वा । "मकि मण्डने" वन-मुद्गः । "मकुष्टो वनमुद्गे स्या"दिति नरहरिः । N. O.—*Leguminosae* । हिं.— मोठ, मठ, मुहट, मोट, मुगानी; बं.—वन-मूंग, मुगानि; म.—मटक्या, मठ; गु.—मठ; कों.—काडु-मुगु; तै.—वनमुद्गचेट्टु, अडविपेसलु; क.—मडिके, काडहे-सरुबळिळ; तु.—काट्टुपदेङ्कि; त.—काट्टुपयरु; मल.—काट्टुपयर् കാട്ടുപയർ; पा.—माष हिंदी; इं.—Tapery beans; ल.—*Phaseolus Aconitifolius, P. adenanthus* । नामानि—"मकुष्ठो वनमुद्गः स्यान्मकुष्ठकमुकुष्ठकौ" । भा. प्र । गुणाः—"मकुष्ठो वातलो ग्राही कफपित्तहरो लघुः । वह्निजि-न्मधुरः पाके कृमिकृज्ज्वरनाशनः" । भा. प्र । "मकुष्ठकः कषायः स्यान्मधुरो रक्तपित्तजित् । ज्वरदाहहरः पथ्यो रुचिकृत् सर्वदोष-जित्" । रा. नि । पुराणं ग्राह्यम् । संग्रहसूत्रसप्तमाध्याये "शिंबि-जा मुद्गमङ्कल्यवनमुद्गमकुष्टकाः" इत्यत्र 'वनमुद्गस्तु वने जायते कृ-ष्णमुद्ग इति प्रसिद्धः, मुद्गिकेति लोके इति डल्हणमतमेवांगीकरणी-यम् ॥

**माक्षिका** । सू. ७ etc. मक्षन्ति रुष्यन्त्यस्यै । मधुमाक्षिका । हिं.—मकखी; बं.—माचि; म.—माशी; त.— ई; सिं.—मेस्सा; मल.—तेनीचा തേനീച്ച, इं.—Honey bee ॥

**मगधा** । चि. ७ etc. **पिप्पली** ॥

**मज्जा** । सू. ५. अस्थ्नां मध्यवर्ती षष्ठो धातुः । **अस्थिसारम्** । Marrow । "स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तराश्रितः" इति सुश्रुतः । 'तदेव च शिरसि कपालप्रतिच्छन्नं मस्तिष्काख्यं मस्तुलु-

ङ्गाख्यं च' इत्यष्टाङ्गसंग्रहेऽधिकः पाठो दृश्यते । "बलशुक्ररसश्ले-ष्ममेदोमज्जविवर्धनः । मज्जा विशेषतोऽस्थ्नां च बलकृत् स्नेहने हि-तः" इति चरकः । "मज्जा स्त्री कौशिकं सूक्ष्ममस्थितेजोऽस्थिसंभवम् । अस्थिस्नेहो वीर्यकरो मज्जतेजस्विनौ बली" इति वैजयन्ती । "मज्जा नाम—अस्थिमध्यगतः स्नेहः । स द्विविधः पीतो रक्तश्च, तत्र पीतो नलकास्थ्नामन्तः, रक्तस्त्वितरास्थिषु प्रान्तभागेषु च नलकास्थ्नाम् । सोयं स्थूलस्वरूपेण मेदसोऽभिन्नोऽपि कर्मवैशेष्यात् पृथगेव धातुः" । प्र. शा । "अस्थि यत् स्वाग्निना पक्वं तस्य सारो भवेद् घनः । यः स्वेदवत् पृथक्भूतः स मज्जेत्यभिधीयते" इति स्वरूपम् ॥ कल्पतृतीयाध्याये "मज्जासृक्शर्करोदक"मित्यत्र बिल्वमज्जेति शिवदीपिकाकारः । तन्न, 'अजासृक्शर्करोदक'मित्येवात्र शुद्धः पाठः । see **असृक्** ॥

**मञ्जिष्ठा** । शा. १ etc. मञ्जौ मनोज्ञे वर्णे तिष्ठति । **स्वनामख्यातलता** । "बोलस्तु योजनी कौची भाहिली च चतुर्विधा । मञ्जिष्ठा चैव सा प्रोक्ता विलोमे चोत्तमोत्तमा" । रा. नि । N. O.—*Rubiaceæ* । हिं.—मजीठ, मञ्जीठ; उ.—मंजिठ; बं.—मंजिष्ठा; म.—मंजिष्ठ; गु.—मजीठ; मुंबापुर्याम्.—इटारी; तै.—ताम्रवल्लि, मंजिष्ठतीटी, मंजिष्ठ; क.—मंजिष्ठ, इष्टमधुक; त.—मञ्चिट्टि; सिं.—वेल्मदट; मल.—मञ्चट्टि മഞ്ചട്ടി, पूवत्तु; पा.—रूनास; अ.—कुबहुसिवग; इं.—Madder root, Indian madder, Manjeet; **जर्मन्.**—Farberwurzel; ल.—*Rubia cordifolia* । **नामानि**—"मंजिष्ठा कालमेषी च समङ्गा विकसारुणा । मञ्जुका रक्तयष्टी च भाण्डी योजनवल्ल्यपि । क्षेत्रिणी विजया रक्ता रक्तांगी वस्त्रभूषणा । जिङ्गी भण्डी तथा काला गण्डाली कालमेषिका" । ध. नि । मूलं ग्राह्यम् । **गुणाः**—"मंजिष्ठा मधुरा तिक्ता कषाया स्वरवर्णकृत् ।

गुरूरुष्णा विषश्लेष्मशोथयोन्यक्षिकर्णरुक् । रक्तातिसारकुष्ठास्र-वीसर्पव्रणमेहनुत्" । भा॰ प्र ॥

**मण्डः** । **सू. ६** etc. मण्डयति । यवादिसाधितसिक्थकरहितद्रव्य-विशेषः । **हिं.**—माण्ड ; **बं.**—माड ; **म.**—शिथां वांचून पेज ; **सिं.**—केन्द ; **मळ.**—कञ्ञिवेळ्ळं കഞ്ഞിവെള്ളം, तेळिक्क-ञ्ञि । Barm of barley or rice । "सिक्थैर्विरहितो मण्डः पेया सिक्थसमन्विता । विलेपी बहुसिक्था स्याद्यवागूर्विरलद्रवा" इति सुश्रुतः । "मण्डश्चतुर्दशगुणे सिद्धस्तोये त्वसिक्थकः" इति मदनपालः । **गुणाः**—"मण्डो ग्राही लघुः शीतो दीपनो धातु-साम्यकृत् । स्रोतोमार्दवकृच्चापि पाचनः श्रमवातनुत् । त्रिदोष-ज्वरतृट्पित्ताश्मरीश्लेष्मातिसारहा" । इति ॥

**मण्डूकपर्णी** । **सू. ६** etc. मण्डूकाकृति पर्णमस्याः । **स्वनामख्या-तशाकः** । "मण्डूकपर्णी मञ्जिष्ठाब्राह्मण्योर्ना तु शोणके" इति मेदि-नी । N O.—*Umbelliferæ* । **हिं.**—ब्रह्ममांडूकी, खुलखुडि, वल्लारि ; **बं.**—थालकुडि, थालकुनि, थुलकुडि ; **म.**—ब्रह्मी ; करिवना, उन्दरि ; **गु.**—खडभरामी, कडब्रह्मि ; **तै.**—मण्डूक, ब्रह्मिचेट्टु, बोक्कुडुचेट्टु, भीकपर्णमु, सारस्वतकु, मण्डूक-ब्रह्मि ; **क.**—ओंदेलग, इळीकिविबळ्ळि, तिमरे, वोन्देलग ; **कों.**—एकपानि ; **मुंबा.**—करिंगा ; **काश्मी.**-ब्रह्मबुति ; **दखा.**-वल्लरि, ब्रह्ममण्डूकि ; **त.**—वल्लारै ; **तु.**—तिमरे ; **सिं.**—मकु-लुवेन्न, गोटुकोल ; **मळ.**—मुत्तिल्, कुटकं, कुटकन्, कुटक्ङ-ल् ; **वर्मा.**—मिन्ख्वाबिन्, Minkhuabin ; **मलायी.**—Da-woopungah-gah दवूपुंघगह ; **अ.**—अरतनिया-ए-हिन्दि ; **पा.**—जरनव ; **फ्र.**—Bevilacque ; **जर्मन्.**—Asiatischer Wassernabel ; **इं.**—Indian pennywort ; **ल.**—*Hydro-*

*cotyle asiatica* । "ब्राह्मीवद् गुणयुक्ता सा मात्रा चास्या द्विमाषकः" इत्यायुर्वेदविज्ञाने । **नामानि**—"मण्डूकपर्णी माण्डूकी त्वाष्ट्री दिव्या महौषधी" । भा. प्र । **गुणाः**—"मण्डूकपर्णिका लध्वी स्वादुपाका सरा हिमा" । रा. व । see **ब्राह्मी** । ब्राह्मीत्येके । ब्रह्मसुवर्चलेतीन्दुः । सर्वांशो ग्राह्यः ॥

**मण्डूकी** । चि. १५ etc. **मण्डूकपर्णी** । उदरचिकित्सिते "मण्डूक्या वास्तुकस्य वा" इत्यत्र 'मण्डूकपर्णी' इत्येव चरकपाठः । "मण्डूकपर्ण्यां मण्डूकी" इति मेदिनी" ॥

**मण्डूरम्** । चि. १६. मण्डति(ते) । 'मडि भूषायाम्' । **लोहमलम्** । "षष्टिवर्षीयमधमं मध्यं सप्ततिवार्षिकम् । सर्वश्रेष्ठं समाख्यातं मण्डूरं शतवार्षिकं" इति रसतरंगिणी । "शतोर्ध्वमुत्तमं किट्टं मध्यंचाशीतिवार्षिकम् । अधमं षष्टिवर्षीयं ततो हीनं विषोपमं" इति रसेन्द्रचिन्तामणिः । **हिं.**—किटी , लोहेका मैल ; **बं.**—मण्डूर; **म.**—लोहकीट; **क.**—लोहकिट्ट ; **त.**—मण्टूरं ; **सिं.**—यबोर ; **मल.**—पुराणाकिट्टं പുരാണകിട്ടം ; **मुंबा.**—लोहेका जङ्ग ; **दखा.**—लोहका-गु , मण्डूर; **गु.**—लोधानो काटा ; **तै.**—इनुपा किट्टुमु ; **कों.**—लोखण्ड-गु ; **बर्मा.**—साम्पिया , तम्पिया ; **अ.**—खबसुल् हदिद ; **पा.**—सङ्ग-ए-अहाना ; **इं.**—Ironrust, Impure oxide of iron, Dross ; **ल.**—*Ferro-ferric oxide or Ferri peroxidum rubrum* । **लक्षणनामानि**—"ध्मायमानस्य लोहस्य मलं मण्डूरमुच्यते । लोहसिंहानिका किट्टी सिंहानश्च निगद्यते" । भा. प्र । "ईषच्छवि गुरु स्निग्धं मुण्डाकिट्टं जगुर्बुधाः । भिन्नाञ्जनाभं यत् किट्टं विशेषात् गुरु निर्व्रणम् । निष्कोटरश्च विज्ञेयं तीक्ष्णाकिट्टं मनीषिभिः" इति तन्त्रान्तरे । शोधितमारितं ग्राह्यम् । **मारणाविधिः**—"अक्षाङ्गारैर्धमेत किट्टं लोहजं तद्द्रवां जलैः । सेचयेत्तप्ततप्तञ्च स-

प्तवारं पुनः पुनः । चूर्णयित्वा ततः क्वाथैर्द्विगुणैस्त्रिफलोद्भवैः । आलोड्य भर्जयेद्वह्नौ मण्डूरं जायते वरम्" । र. चि । **नामानि**—"लोहोच्छिष्टं च मण्डूरं किट्टं चैव मलोद्भवम् । लोहोत्थं लोहनिर्यासमयःशिष्टं च कीर्तितम्" । ध. नि । **गुणाः**—"लोहकिट्टं तु मधुरं कटूष्णं कृमिवातनुत् । पक्तिशूलं मरुच्छूलं मेहगुल्मार्तिशोफनुत्" । रा. नि । "स्वर्णाद्यभावे लोहं स्यान्मण्डूरं तदभावतः । ये गुणा मारिते लोहे ते गुणा लोहकिट्टके । तस्मात् सर्वत्र मण्डूरं रोगशान्त्यै प्रयोजयेत्" । भा. प्र ॥

**मत्स्यः** । सू. ७ etc. **मीनः** । हिं.—मछली ; बं.—माछ ; म.—मासा ; क.—मीनु ; कों.—मस्ली ; त.—मीन् ; सिं.—मत्स्यय ; मल.—मीन् മീൻ ; इं.—Fish ; ल.—*Pisces* । **नामानि**—"मत्स्यो मीनोऽथ शकुनी कण्ठी माङ्गल्यदर्शनः । रोहितः कण्ठकालश्च पाठीनो शकुली तथा" । ध. नि । **गुणाः**—"मत्स्या बलप्रदा वृष्या गुरवः कफपित्तलाः । उष्णाभिष्यन्दिनः स्निग्धा बृंहणाः पवनापहाः" । रा. नि ॥

**मत्स्यण्डिका** । सू. ५ etc. मंदं स्यन्दते । **द्रवखण्डः** । हिं.—मीजां ; बं.—मिछरि, राव ; मल.—मीन्कण्णिशर्करा । This is sugarcane juice boiled down to a solid consistance but which still exudes a little fluid on drawing । **लक्षणम्**—"इक्षो रसो यः संपक्वो घनः किञ्चिद् द्रवान्वितः । मन्दं यत् स्यन्दते तस्मात्तन्मत्स्यण्डी निगद्यते" । भा. प्र । मत्स्यण्डिका खण्डमध्ये पाकाद् घनीभूता मत्स्याण्डनिभा भवतीति चक्रपाणिदत्तः । गुड इतीन्दुः । अकलुषं ग्राह्यम् । **गुणाः**—"मत्स्यण्डी भेदिनी बल्या लघ्वी पित्तानिलापहा । मधुरा बृंहणी वृष्या रक्तदोषापहा स्मृता" । भा. प्र । "मत्स्यण्ड्यभावतो दद्युर्भिषजस्सितशर्करां" इति भावमिश्रः । "सिता मत्स्यण्डिकालाभे" इत्यन्यत्रापि दृश्यते ॥

**मत्स्यण्डिका** । चि. ३. उ. ३९. सिता ॥

**मत्स्यतालः** । सू. २५. मत्स्यस्य गलप्रदेशे बहिर्विद्यमानस्तालाकारो घनशल्कलविशेषः । मीन्पकिरि इति केरलेषु ॥

**मत्स्यनिस्तलनम्** । सू. ७. मीनभर्जनम् ॥

**मत्स्यपचनम्** । सू. ७. मत्स्याः पच्यन्ते यस्मिन् पात्रे तन्मत्स्यपचनम् । मछली पकानेके पात्र ॥

**मत्स्याक्षकः** । उ. १ etc. पत्तूरः, ब्राह्मीभेदः । गण्डदूर्वेत्येके । जलपिप्पली अपरे । सोमलताभेद इत्यन्ये । सुश्रुतशारीरान्तिमाध्यायव्याख्यायां मत्स्याक्षकः ब्राह्मीति डल्हणहाराणचन्द्रौ । मच्छुरिति लोके ख्यात इत्यैन्द्रीरसायनव्याख्यायां चक्रपाणिदत्तः । रक्तपुष्पमानूपं 'मत्स्याक्षक' इति लोके प्रसिद्धमिति केचित् । हिं.—मछेछी ; बं.—कांचडा शाप ; म.—गांठर दूर्वा , गांठी हरळी ; हरजी ; गु.—गांठवालो धो ; तै.—पोन्नगंठी ; क.—होन्नगुंदी , मीनमचे ; सिं.—मुगुणुवेन्न । मीनक्काणि इति केरलेष्वेके । **नामगुणाः**—"मत्स्याक्षी बाह्लिका मत्स्यगन्धा मत्स्यादनीति च । मत्स्याक्षी ग्राहिणी शीता कुष्ठपित्तकफास्रजित् । लघुस्तिक्ता कषाया च स्वाद्वी कटुविपाकीनी" । भा. प्र । सर्वांशो ग्राह्यः ॥

**मत्स्याण्डम्** । उ. ३०. मीनाण्डम् । हिं.—मछलीका अण्डा ; बं.—माछेर डिम ; मल.—पलिञ्ञीन् പലിഞ്ഞിൽ , पनिञ्ञिल् । Roe of fish । **गुणाः**—"मत्स्यगर्भो भृशं वृष्यः स्निग्धः स्थैर्यकरो गुरुः । कफमेदःप्रदो बल्यो ग्लानिकृन्मेहनाशनः" । म. पा ॥

**मथितम्** । चि. ८ etc. तक्रम् । निर्जलतक्रमित्येके ॥

**मदनः** । सू. १५ etc. मदयति मदनः । स्वनामख्यातवमनफ-

लवृक्षः । शुक्लकृष्णपीतपुष्पभेदात् स त्रिविधः । एतत्फलं वामनं अर्थात् अपक्वपित्तश्लेष्माणौ ऊर्ध्वं नयेत् । "मदनः स्मरवसन्तद्रु-भिद्धत्तूरसिक्थके" इति मेदिनी । N. O.—*Rubiaceae* । हिं.—मैनफल, करहर, मेन्द् फल; बं.—मयनाफल; दखा.—मेन्द्-फल; उत्.—पातर; नैपा.—मैदल; पञ्जा.—मिण्डकोल्ल; दक्षि.—मेठहाल; म.—गेळा; गु.—मींढोल, ढोल; तै.—मङ्ग, मङ्गकायलु, मण्डचेट्टु, उन्मेत्तचेट्टु, वसन्तकडिमिचे-ट्टु; क.—मङ्गरि, मङ्गारे, करेकायिगिड, गेल, बोनगरे; त.—मरुकारै, मरुक्काळंकाय्, पूङ्कारै; सिं.—कुकुरुमुवन्; मल.—मलङ्कारा മലങ്കാര, करच्चुळिळ, मङ्ककायि, कराळि-काय; अ.—जौजुक्कि; कौसला; पा.—सुस्-उल्-कुच्; इं.—Emetic nut; Busby gardenia इत्येके; ल.—*Randia dumetorum* । नामानि—"मदनः शल्यको राटः पिण्डी पिण्डी-तकः फलः । गालश्च करहाटश्च च्छर्दनो विषपुष्पकः" । ध. नि । फलं ग्राह्यम् । गुणाः—"मदनो मधुरस्तिक्तो वीर्योष्णो लेखनो लघुः । वान्तिकृद्विद्रधिहरः प्रतिश्यायप्रशान्तकः । रूक्षः कुष्ठक-फानाहशोथगुल्मव्रणापहः" । भा. प्र । "मदनः कटुकस्तिक्तस्तथा चोष्णो व्रणापहः । श्लेष्मज्वरप्रतिश्यायगुल्मेषु विद्रधीषु च । शो-फस्यापि हरो वस्तौ वमने चेह शस्यते" । ध. नि ॥

**मदनम्** । सू. २१ etc. **मधूच्छिष्टम्** । see **सिक्थकम्** । भगन्दरप्रतिषे-धे "मदनसर्जरसामयरोध्रका" इत्यत्र 'मधूच्छिष्ट' मित्येव सुश्रुतपाठः ॥

**मदनकम्** । चि. २१. सिक्थकम् ॥

**मदनीयहेतुः** । सू. १५. धातकी । सुश्रुतपाठोऽप्येवमेव दृश्यते ॥

**मदयन्तिका** । चि. २. नखरञ्जको नाम वृक्षविशेषः । यस्याः पिष्टैः पत्रैर्नखानां रागं स्त्रिय उत्पादयन्ति । "पत्रं च दद्यान्मदय-

न्तिकाया लेपोऽङ्गरागो नरदेवयोग्यः" इति सुश्रुतः । N. O.—*Lythraceae* । हिं.—मेहदी, मेंदी, मयिन्दिए; बं—मेंहदी, मेदी; म.—मेंदी; गु.—मेंदी; पञ्जा.—मेंदी; दखा.—मेंदी; काश्मी.—मोहुस्; पा.—हिना; अ.—योरन्ना, हिन्ना अकान् काफलयुन; तै.—गोरंटचेट्टु, मैद, क्रोम्मि, कुरवकमु; क.—मदरङ्गि, गोरण्टि, गोरंटलुगिड; तु.—मदूरेंगि; कों.—मेल्वेझाड; त.—मरुतोन्रि, ऐवनं, कुरवकं; सिं.—मेरितोण्टि; मल.—मैलाञ्चि ൈമലാഞ്ചി, पोन्तलचि; बर्मा.—दंबिन्; मलायी.—हिनिए; फ्र.—Henne; इं.—Henna, Samphire; ल.—*Lawsonia alba* । नामानि—"तिमिरः कोकदन्ता च द्विवृन्तो नखरंजकः" । गुणाः—"रक्तरङ्गा दाहहन्त्री वान्तिकृच्छ्लेष्मकुष्ठहा । बीजमस्या ग्राहकं तु शोषकं च प्रकीर्तितम् । भूतग्रहाणां दोषं च ज्वरं चैव विनाशयेत्" । माल्लिकेति बहवः । नवमल्लिकेत्येके ॥

**मदयन्ती** । उ. ७. नखरञ्जकः । धातकीतिन्दुः । 'काठमल्लिका' इति परिचीयते इति हाराणचन्द्रः । see **मदयन्तिका** ॥

**मदा** । चि. ८. धातकी ॥

**मदिरा** । चि. ३ etc. मद्यम् । शालिषष्टिकपिष्टादिकृतं मद्यमित्येके ॥

**मद्गुः** । सू. ६. मज्जति । जलकाकः । "मद्गुः पानीयकाकिका" इति रभसः । बं.—पानकौडि, पानकोडी; म.—पाणकावळा; क.—नीरुकागे; सिं.—दियकवुडु; मल.—कटल्काका കടല്കാക്ക, नीर्काका; इं.—Gull; ल.—*Larus cachinnans* । Shag इत्यविनाशचन्द्रः । 'पानिकाउर' इत्यभिधीयते इति हाराणचन्द्रः । "मद्गुस्तु जलकाकः स्या"दिति वैजयन्ती । see **शरारिः** ॥

**मद्यम्** । तरलमादकद्रव्यविशेषः । "पेयं यन्मादकं लोकैस्तन्मद्यमभिधीयते" इति भावमिश्रः । हिं.—मदिरा ; वं.—मद् ; म.—दारू ; गु.—दारू ; तै.—कल्लु ; क.—साराइ , शरे ; त.—कळ्, मतु ; इं.—Spirituous liquor । "तस्यानेकप्रकारस्य मद्यस्य रसवीर्यतः । सौक्ष्म्यादौष्ण्याच्च तैक्ष्ण्याच्च विकासित्वाच्च वह्निना । समेत्य हृदयं प्राप्य धमनीरूर्ध्वमागतम् । विक्षोभ्येन्द्रियचेतांसि वीर्यं मदयतेऽचिरात्" इति सुश्रुतः । "नवं मद्यमभिष्यन्दि गुरु वातादिकोपनम् । अनिष्टगन्धि विरसमहृद्यं च विदाहि च" । सु. सं । "चिरस्थितं जातरसं दीपनं कफवातजित् । रुच्यं प्रसन्नं सुरभि मद्यम् सेव्यं मदावहम्" । सु. सं. । "तदम्लं रसतः प्रोक्तं लघु रोचनदीपनम् । केचिल्लवणवर्ज्यांस्तु रसानत्रादिशन्ति हि" । सु. सं ॥

**मधु** । सू. ३ etc. मन्यते । 'मन ज्ञाने' । पुष्परसः । "मधु पुष्परसे क्षौद्रे मद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" इति विश्वमेदिन्यौ । "नव्याज्यसदृशं रुच्यं गन्धं मधु वरं स्मृतं" इति भावमिश्रः । "तद्युक्तं विविधैर्योगैर्निहन्यादामयान् बहून् । नानाद्रव्यात्मकत्वाच्च योगवाहि परं मधु" इति सुश्रुतः । "नानापुष्पप्रकाराणां रससारात्मकं मधु । तच्छैत्यात् सौकुमार्याच्च सर्वैरुष्णैर्विरुध्यते" इति हारीते । "मधु यत्र न लभ्येत तत्र जीर्णगुडो मतः" इति भावमिश्रः । (Class.—*Hymenoptera*) । हिं.—मधु , शहद , सहत ; बं.—मधु ; पञ्जा.—सहत ; काश्मी.—मह्छ ; दखा.—शहद ; म.—मध ; गु.—मध ; कों.—महौ ; तै.—तेनी , तेनु ; क.—जेनुतुप्प ; त.—तेन् ; सिं.—मीपेणि ; मल—तेन् തേൻ ; बर्मा.—प्या-या ; मलायी.—आयुर्-मदेर् ; पा.—षहद्-अङ्गबिन ; अ.—इञ्चुबिन ; असतल-नहि , असल ; इं.—Honey ; ल.—*Mel* । नामानि—

"मधु क्षौद्रं पुष्परसं माक्षिकं सीधु सारघम् । मकरन्दं पुष्परसो मक्षिकालयमीरितम्" । स. नि । **गुणाः**—"मधु शीतं लघु स्वादु रूक्षं ग्राहि विलेखनम् । चक्षुष्यं दीपनं स्वर्यं व्रणशोधनरोपणम् । सौकुमार्यकरं सूक्ष्मं परं स्रोतोविशोधनम् । कषायानुरसं ह्लादि प्रसादजनकं परम् । वर्ण्यं मेधाकरं वृष्यं विशदं रोचनं हरेत् । कुष्ठार्शःकासपित्तास्रकफमेहक्लमक्रिमीन् । मेदस्तृष्णावमिश्वासहिक्कातीसारविड्ग्रहान् । दाहक्षतक्षयांस्तत्तु योगवाह्यल्पवातलम्" । भा. प्र । "मध्वामात् परतस्त्वन्यदामं कष्टं न विद्यते । विरुद्धोपक्रमत्वात्तत् सर्वं हन्ति यथा विषं" इति सुश्रुतः । **मधुभेदाः**—"माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं छात्रमित्यपि । आर्घ्यमौद्दालकं दालमित्यष्टौ मधुजातयः" । भा. प्र । "माक्षिकं भ्रामरं क्षौद्रं पौत्तिकं मधुजातयः" इत्येव चरकसंहितायाम् । "भ्रामरं पौत्तिकं क्षौद्रं माक्षिकं च यथोत्तरम् । वरं जीर्णं च तेष्वंत्ये द्वे एव ह्युपयोजये"दिति संग्रहमधुवर्गेपि दृश्यते । पुराणं ग्राह्यम् ॥

**मधु** । सू. ३, सू. ७. मार्द्वीकम् । "मध्वरिष्टं चिरन्तनम्" । "मधुमैरेयशार्करम्" ॥

**मधु** । उ. ४०. मद्यम् । "मधु मुखमिव सोत्पलं प्रियायाः" ॥

**मधुः** । चि. २. उ. ५. म. भूत. घृ ; **मधूकः** । रक्तपित्तचिकित्सिते "मधुखर्जूरमृद्वीकापरूषकसिताम्भसा" इत्यत्र "जलं खर्जूरमृद्वीकामधूकैः सपरूषकै"रित्येव चरकपाठः । "मधु पुष्परसक्षौद्रमद्ये ना तु मधुद्रुमे । वसन्तदैत्यभिच्चैत्रे स्याज्जीवन्त्यां तु योषिति" इति मेदिनी ॥

**मधुकम्** । सू. ९ etc. मध्वित्र । **यष्टीमधु** । "मधुकं क्लीतके खगे । वन्द्यन्तरे ना" इति मेदिनी । योनिरोगचिकित्सायां शतावर्यादिघृतयोगे "मधुकद्वि बलान्वितै"रित्यत्र "द्वियष्टिमधुकै"रित्येव च-

रकपाठः । द्वियष्टिमधुकैरिति द्विभागमधुयष्टिकैः किं वा जलस्थ-लयष्टिमधुकद्वययुक्तैरिति चक्रपाणिदत्तः ॥

**मधुकरीगृहम्** । उ. १८. मक्षिकालयम् । हिं.—भृङ्गीका घर (अञ्जनहारी) ; मल.—तेनीच्चक्कूटु തേനീച്ചക്കൂട് ॥

**मधुकांबु** । चि. ५. यष्टिमधुकसिद्धजलम् । मुलहठीके क्वाथ ॥

**मधुकोदकम्** । चि. २. मधुकांबु ॥

**मधुपर्णिका** । शा. २. यष्टीमधु । गंभारीति भावप्रकाशव्याख्याता । जीवन्तीतीन्दुः । मधुयष्टिकेति डल्हणः । गुडूचीत्येके ॥

**मधुपर्णी** । चि. १९ etc. मधूनि पर्णान्यस्याः । गुडूची । "मधुपर्णी तु काश्मर्यगुडूचीनीलिनीषु च" इति केशवस्वामी ॥

**मधुफला** । चि. ८. द्राक्षा ॥

**मधुमाधवम्** । चि. ५. मधूकपुष्पमद्यम् । धातकीपुष्पमद्यमिति केचित् । see **मध्वासवः** ॥

**मधुयष्टिः** । शा. २ etc. मधुरा यष्टिः काण्डम् । यष्टीमधु ॥

**मधुयष्टिका** । शा. २ etc. **यष्टीमधु** ॥

**मधुरकः** । उ. २४. **जीवनीयगणः** । काकोल्यादिरिति डल्हणः ॥

**मधुरकचूर्णः** । चि. ५. मधुररसप्रधानस्य जीवनीयगणस्य वस्त्रगालितं सूक्ष्मचूर्णम् ॥

**मधुरगणः** । उ. ३ etc. **जीवनीयगणः** । हेमगुडादिरिति कैरली ॥

**मधुरवर्गः** । चि. ७. **जीवनीयगणः** ॥

**मधुरसा** । सू. १५ etc. मधुरो रसोऽस्याः । **मूर्वा** ॥

**मधुरौषधः** । उ. २७. जीवनीयगणः ॥

**मधुशर्करा** । सू. ५. **मधूत्पन्नशर्करा** । मधुजातखण्डभेदः । पुराणं ग्राह्यम् । हिं.—सहतकी बनी हुई चीनी ; मालखण्डीति प्रसिद्ध-मिति वैद्यकशब्दसिन्धु ; बं.—सिताखण्ड ; म.—मधाची साखर ; मल.—कट्टित्तेन् കട്ടിത്തേൻ, तेन्कट्टा । Honeysugar । साष्टविधा । ताश्च मधूनामष्टविध्यादष्टविधा भवन्ति । तच्छर्करा-गुणा अपि तत्तन्मधुगुणतुल्याः ज्ञेयाः । पाकात् कालान्तरशोषणा-द्वा घनीभूतावयवं मधु शर्करातुल्यत्वात् मधुशर्करा इत्युच्यते इति डल्हणः । वह्निपाकात् कालपाकाद्वा शर्करारूपतां गतं मधु मधु-शर्करा इति हेमाद्रिः । मधुमिश्रितेक्षुरसपाकोद्भूतो शर्कराविशेष इति केरलेष्वेके । **नामगुणाः**—"माध्वी सिता मधूत्पन्ना मधुजा मधु शर्करा । माक्षिकशर्करा चैषा क्षौद्रजा क्षौद्रशर्करा । यद्गुणं यन्मधु प्रोक्तं तद्गुणा तस्य शर्करा । विशेषाद् बलवृष्यं च तर्पणं क्षीणदेहिनाम्" । रा. नि ।'

**मधुशिग्रुः** । चि. १०. **रक्तशोभाञ्जनवृक्षः** । हिं.—लालसैंजिना ; बं.—लाल सजिनागाछ ; म.—रक्तशेगुवा ; क.—केम्पिनेयनुग्गि ; त.—चेम्मुरुङ्कै ; सिं.—वेल्मुरुङ्गा ; मल.—चेम्मुरिङ्ङा ചെമ്മുരി ങ്ങ । मूलादिकं ग्राह्यम् । मधुशिग्रुः रक्तशिग्रुर्लोहितकुसुमोऽल्पवि-टपः शोभाञ्जनकभेद इति डल्हणः । **नामानि**—"रक्तेऽस्मिन् म-धुशिग्रुस्सुभञ्जनः" इति वैजयन्ती । "मधुशिग्रुः सलोहितः" इति भावमिश्रः । **गुणाः**—"मधुशिग्रुः प्रोक्तगुणो विशेषाद्दीपनः सरः" इति भावमिश्रः । "मधुशिग्रुः सरस्तिक्तः शोफघ्नो दीपनः कटुः" इति सुश्रुतः । श्वेतशिग्रुरिति राजनिघण्टौ । see **शिग्रुः** ॥

**मधुस्रवा** । सू. १५. मधुरूपं रसं स्रवति । **मूर्वा** । सुरङ्गीत्यरुण-दत्तः । मूर्वेत्येव सुश्रुतपाठः ॥

**मधुहा** । सू. ६. **प्रसहजातीयपक्षिभेदः** । महुआ इति वङ्गेषु इति गङ्गाधरः ॥

**मधूकः** । सू. १० etc. **स्वनामख्यातवृक्षः** । N. O.—*Sapotaceæ* । हिं.—महुवा, महुआ ; बं.—पोल, मौल, मउल, मौया ; म.—मोह, मोवदा ; गु.—महुदा, मुहुडा, महुडो ; तै.—इप्पचेट्टु, मधूकमु, पिन्ना ; कों.—मोहटी ; क.—इप्पेमर ; तु.—इप्पेमर, नानिल्द्मर ; त.—इलुप्पै, इरुप्पै ; सिं.—मी ; मल.—इरुप्पा ഇരുപ്പ, इलिप्पा ; पा.—इप्पिचा, मोहेचा, चकां ; इं.—Indian butter tree, Mahwa tree; ल.—*Bassia latifolia* । **नामानि**—"मधूकस्तीक्ष्णसारश्च वानप्रस्थो मधुस्रवः । ढोलाफलः स्वादुपुष्पो मधुष्ठिलः स्थिरद्रुमः" । स. नि । पक्वफलं पुष्पं च ग्राह्यम् । "मधूको गुडपुष्पः स्यान्मधुपुष्पो मधुस्रवः । वानप्रस्थो मधुष्ठीलो जलजेऽत्र मधूलकः" । भा. प्र । "**गुणाः**—"मधूकपुष्पं मधुरं शीतलं गुरु बृंहणम् । बलशुक्रकरं प्रोक्तं वातपित्तविनाशनम् । फलं शीतं गुरु स्वादु शुक्रलं वातपित्तनुत् । अहृद्यं हन्ति तृष्णास्रदाहश्वासक्षतक्षयान्" । भा. प्र ॥

**मधूक(ज)म्** । सू. ६. **मधूकफलम्** । महुएका फल ॥

**मधूकपुष्पम्** । चि. १. **मधूकस्य पुष्पम्** । महुएका फूल । ज्वरचिकित्सिते "मधूकपुष्पं मृद्वीका" इत्यत्र "मधूकमुस्तमृद्वीका" इत्येव मुद्रितचरकपाठः ॥

**मधूकसारः** । उ. ५. **मधूकवृक्षस्य सारदारु** । महुएके सार । मल—इरिप्पक्कातल् ഇരിപ്പക്കാതല് । मधूकरस इत्येके । महुवेका गोंद इति शिवदीपिका । "मधूकसारो नस्येन भूतादिकफवातजित्" इति ॥

**मधूच्छिष्टम्** । चि. ३ etc. मधुन उच्छिष्टमवशिष्टम् । सिक्थकम् ॥

**मधूदकम्** । सू. ८ etc. मधुना मधुरीकृतमुदकम् । शहदको पानी, मधुयुक्तशीतलजल ॥

**मधूलिका** । क. १. **नृत्यकुण्डको नाम तृणधान्यविशेषः** । मर्कट इति ख्याता इति चक्रपाणिदत्तः । डल्हणोपि मर्कटहस्ततृणमिति कथितवान् । मधूलिका गुडतृणः, स एव नृत्यकुण्डो मलिङ्चक इतीन्दुः । "मधूलिका गुडतृणो नृत्यकुण्डो मलिङ्चकः" इत्यभिधानेपि दृश्यते । मधुकमित्येके । जलयष्टीत्यपरे । मध्यदेशजगोधूम इति भावमिश्रः । "मधूली तु ततः किञ्चिदल्पा सा मध्यदेशजा" इति ॥

**मधूली** । चि. ४. **मधूलिका** ॥

**मध्यमपञ्चमूलम्** । सू. ६. बलापुनर्नवैरण्डशालपर्णीपृश्निपर्ण्यः । "बलापुनर्नवैरण्डशूर्पपर्णीद्वयेन च । एकत्र योजितैनैतन्मध्यमं पञ्चमूलकम्" । रा. नि । **गुणाः**—"मध्यमं कफवातघ्नं नातिपित्तकरं सरम्" । रा. नि ॥

**मध्वंबु** । सू. ३ etc. **मधूदकम्** ॥

**मध्वंभः** । चि. २. **मधूदकम्** ॥

**मध्वासवः** । सू. ५. माध्वीति पाठः । **आसवविशेषः** । मधूकपुष्पं मधु । तस्यासवः । "शरद्ग्रीष्मवसन्तेषु माध्वी ग्राह्या न चान्यथा" इति । मधूकपुष्पकृतः मध्वासव इति डल्हणचक्रपाणिदत्तौ । धातकीपुष्पमधुसंहितो मधूकपुष्पासवः । "मध्वासवः स विज्ञेयो धातकीक्वाथमाक्षिक"ादिति वृद्धशौनकः । मधुकृतं मद्यमिति केचित् । "मध्वादिविहिता या तु माध्वी सा मदिरोच्यते" इति । आसवशब्दोत्र मद्यमात्रवचनमिति ते । पुराणं ग्राह्यम् । Spirit distilled from the flowers of Madhooka and treacle ॥

**मनःशिला** । चि. ३ etc. मनःशब्दवाच्या शिला । **स्वनामख्यातखनिजोपरसभेदः** । "तालकस्यैव भेदोऽस्ति मनोगुप्तेव चान्यका । तालकं त्वतिपीतं स्याद् भवेद्रक्ता मनःशिला" । भा. प्र । "श्यामा रक्ता च गौरा च भाराढ्या श्यामिका मता । तेजस्विनी च निर्गौरा ताम्राभा करवीरिका । चूर्णभूता तु रक्ताङ्गी सभारा खण्डपूर्विका । त्रिविधासु च श्रेष्ठा स्यात् करवीरा मनःशिला" इति । **हिं.**—मनसिल, मैनशिल, लाल हरताल ; **बं.**—मनछाल, मच्छल ; **म.**—मनशीळ ; **गु.**—मणशीळ ; **तै.**—मानुशिला ; **क.**—मनशिले ; **त.**—मनचिलै, मनोचिलै ; कुतिरप्पल्पाषाणमित्येके ; **सिं.**—मनोशिल, रक् ; **मल.**—मनयोला മനയോല, मनोला ; **कों.**—मनसिल ; **अ.**—सुर्नैक सुरखह ; **पा.**—यरनिखी सुर्खा ; **फिरंङ्गी.**—Rosalgar ; **जर्मन्.**—Arsensulphur ; **फ्र.**—Sulphure rouged arsenic ; **इं.**—Realgar, Red orpiment; Red arsenic ; **ल.**—*Arsenicum sulphidum, A. Rubrum, Bisulphuret of arsenic* । Manassila is artificially prepared by fusing arsenious acid 5 parts with sulphur 3 parts. It is purified by being rubbed with the juice of lemons or of ginger । "इन्द्रपुष्पप्रतीकाशा मनोह्वा चोत्तमा मता" इति भावमिश्रः । **नामानि**—"मनःशिला मनोगुप्ता मनोह्वा नागजिह्विका । नेपाली कुनटी गोला शिला दिव्यौषधिः स्मृता" । भा. प्र । **गुणाः**—"गुर्वी मनःशिला वर्ण्या सरोष्णा लेखनी कटुः । तिक्ता स्निग्धा विषश्वासकासभूतकफास्रनुत्" । भा. प्र । शोधितं ग्राह्यम् । शुद्धिर्यथा—"जयन्तिकाद्रवे दोलायन्त्रे शुध्येन्मनःशिला । दिनमेकं त्वजामूत्रे भृङ्गराजरसेपि वा । अगस्त्यपत्रतोयेन भाविता सप्तवासरम् । शृङ्गवेररसैर्वापि विशुध्यति मनःशिला" । इति सारकौमुदी । अशुद्धमनःशिलादोषाः—"मनःशिला मन्दबलं करोति जन्तुं ध्रुवं

शोधनमन्तरेण । मलस्य बन्धं किल मूत्ररोधं सशर्करं कृच्छ्रग-दञ्च कुर्यात्" । भा. प्र ॥

**मनोह्वा** । सू. २१ etc. **मनःशिला** । चिकित्सितचतुर्थाध्याये कफनाशकधूमयोगे 'मनोह्वे'त्यत्र नैपालमिति सुश्रुतः । पूतनारोगचिकित्सिते 'मनोह्वालरसाञ्जनै''रित्यत्र 'हरितालरसाञ्जनै'रित्येव सुश्रुतपाठः ॥

**मन्थः** । चि. २ etc. पेयभेदः । **उदमन्थः** । "अथ मन्थने । मन्थो मथनदण्डे च द्रवासिक्तेषु सक्तुषु" इति केशवस्वामी । "सक्तवः सर्पिषाभ्यक्ताः शीतवारिपरिप्लुताः । नातिद्रवा नातिसान्द्रा मन्थ इत्युपदिश्यते" इति सुश्रुतः "मन्थः सद्यो बलकरः पिपासाश्रमनाशनः" इति राजवल्लभः । पित्तजच्छर्दिचिकित्सायां 'पिबेत् मन्थं यवागूं वा" इत्यत्र मन्थस्थाने मण्डमित्येव मुंबापुरमुद्रितसंग्रहपाठः ॥

**मन्दम्** । सू. ५. **दधिभेदः** । दुग्धावस्थां व्यतीत्य दध्यवस्थामसंप्राप्तमन्तरावर्ति मन्दकमित्युच्यते । यदा क्षीरं विक्रियामापन्नं घनत्वं याति, तदा तन्मन्दकमिति चक्रपाणिदत्तः । हिं.—अधजमा दही ; म.—गोड दहीं ; मल.—इळंतयिर् ഇളംതയിർ । "मन्दं दधि घनं चैव दुग्धवच्च रुचौ मतम् । मूत्रलं च सरं दाहि त्रिदोषजनकं मतं" इति ॥

**मयूरः** । सू. ७. मीनात्यहीन् मयूरः, मह्यां रौति वा । **स्थलचरपक्षिविशेषः** । "मयूरो बर्हिचूडायामपामार्गे शिखण्डिनि" इति मेदिनी । हिं.—मोर ; बं.—मयूर ; म.—मोर ; तै.—नमलि ; त.—मयिल् ; सिं.—मोणरु ; मल.—मयिल् മയിൽ ; इं.—Peacock ; ल.—*Pavo cristatus* । **नामानि**—"मयूरश्चन्द्रकी केकी मेघरावो भुजङ्गभुक् । शिखी शिखावलो बर्हीं शिखण्डी

नीलकण्ठकः। शुक्लापांगः कलापी च मेघनादानुलास्यपि" । भा. प्र । **मांसगुणाः**—"मयूरमांसं सुस्निग्धं वातघ्नं शुक्रवर्धनम् । बल्यं मेधाकरं प्रोक्तं चक्षूरोगविनाशनम् । कषायो मधुरः स्वर्यो लवणो वातहा शिखी" । ध. नि । "मयूरः श्रोत्रनेत्राग्निमेधावर्णस्वरायुषाम्। हितो वल्यो गुरुश्चोष्णो वातघ्नः शुक्रमांसदः" । मयूरमांसभक्षणकालः—"हेमन्तकाले शिशिरे वसन्ते सेव्यं हि मायूरमुशन्ति मांसम् । उष्णो हि बर्ही विषभोजनाच्च वर्षाशरद्ग्रीष्ममुखेष्वपथ्यम्" । रा. व । "बर्हभारः कलापः स्याद् बर्हनेत्राणि चन्द्रकाः । प्रचलाकः शिखा ज्ञेया ध्वनिः केकेति कथ्यते" । रा. नि ॥

**मयूरकः** । चि. ८ etc. मयूरप्रतिकृतिः । अपामार्गः । "मयूरकोऽप्यपामार्गे क्लीबं तुत्थाञ्जने पुनः" इति मेदिनी ॥

**मयूरपत्रम्** । उ. ३. चन्द्रकं नाम मयूरस्य पुच्छम् । हिं.—मोरकी पूंछके छद, मोरके चंदों, मोरपंख; मल.—मयिल्पीलि മയിൽപ്പീലി; सिं.—मोनरपिलू । Peacock's tail-feather । अपामार्गपत्रमिति शिवदीपिकाकारः ॥

**मयूरपिच्छः** । उ. ५. मयूरपत्रम् । मयूरपत्रमिति संग्रहपाठः ॥

**मरकतम्** । उ. ३६. मरकं तरन्त्यनेन । पञ्चविधमहारत्नान्यतमं रत्नम् । हरिन्मणिविशेषः । उक्तं हि—"यच्छैवालशिखण्डिशाद्वलहरित्काचैश्च चाषच्छदैः खद्योतेन च बालकीरवपुषा शैरीषपुष्पेण च । छायाभिः समतां दधाति तदिदं निर्दिष्टमष्टात्मकं जात्यं यत्तपनातपैश्च परितो गारुत्मतं रञ्जयेत्" । रा. नि । **लक्षणम्**—"स्वच्छं गुरु सुच्छायं स्निग्धं गात्रे च मार्दवसमेतम् । अव्यङ्गं बहुरङ्गं शृङ्गारि मरकतं शुभं बिभृयात् । शर्करिलकलिलरूक्षं मालिनं लघु हीनकान्ति कल्माषम् । त्रासयुतं विकृताङ्गं मरकतममरोपि

नोपभुञ्जीत" । रा. नि । हिं.—पन्ना ; बं.—पान्ना ; म.—पाच ; पन्ना ; गु.—पानां ; तै.—नीलम् ; क.—पाचिपच्चै ; त.—मरकतं , पचैकल्लु ; सिं.—पच्चगल , गरुडपाषाणय ; मल.—पच्चकल्लु പച്ചക്കല്ല് , मरतकं ; पा.—जुमुरईद ; अ.—जुमुईद ; इं—Emerald । नामानि—"गारुत्मतं मरकतं रौहिणेयं हरिन्मणिः । सौपर्णं गरुडोत्तीर्णं बुधरत्नाश्मगर्भजम् । गरलारिर्वायवालं गारुडं रुद्रसंमितम्" । ध. नि । गुणाः—"मरकतं विषघ्नं च शीतलं मधुरं रसे । आमपित्तहरं रुच्यं पुष्टिदं भूतनाशनम्" । रा. नि । ग्रन्थान्तरे—"ज्वरच्छर्दिविषश्वासकासशूलाग्निमान्द्यजित् । दुर्नामशोफपाण्डुघ्नं तार्क्ष्यमोजोविवर्धनम्" ॥

**मरिचम्** । सू. ६ etc. म्रियते विषमनेन । म्रियते जिह्वानेन इति वा । स्वनामख्यातवणिग्द्रव्यम् । N. O.—*Piperaceae* । हिं.—कालीमिरच , गोलमिरच , काली मिरिच , काला मिरिचि , मिरी , हबुष ; बं.—गोल मरिच , मरिच ; म.—मिरीं , मिरें , कालामिरी ; गु.—कालो मिरिच , मरि , तीखां ; कों.—मिरी , मीरें ; पञ्जा.—काली मिरिच ; काश्मी.—मारतस Martz ; तै.—मिर्यालतीगे ; मिरियालु ; क.—ओळ्ळे मेणसिन बळ्ळि , ओळ्ळेमेणसु ; त.—मिळकु , नल्ल मिळकु ; सिं.—गम्मिरिस् , कलुमिरिस् ; तु.—येट्टु मुण्चि ; मल.—कुरुमुळकु കുരുമുളക് ; बर्मा.—नायुकोन् ; मलायी.—लदाहितम् ; पा.—फिलफिल अस्वद ; अ.—फिलफिल अस्वद ; फ्र.—Poivre ; जर्मन.—Schwartze pfeffer ; इं.—Pepper vine ; Black pepper; Round pepper; ल.—*Piper nigrum* । This perennial, climbing shrub is indigenous to Malabar and Travancore coasts । नामानि—"मरिचं वल्लिजं कृष्णमूषणं रुचिरं घनम् । मरिचा रोचिनी तीक्ष्णं खण्डितं लेखनं कटु" ।

स. नि । शुष्कफलं ग्राह्यम् । **गुणाः**—"मरिचं कटुकं तीक्ष्णं दीपनं कफवातजित् । उष्णं पित्तकरं रूक्षं श्वासशूलकृमीन् हरेत् । तदार्द्रं मधुरं पाके नात्युष्णं कटुकं गुरु । किञ्चित्तीक्ष्णगुणं श्लेष्मप्रसेकि स्यादपित्तलम्" । भा. प्र ॥

**मरिचकम्** । चि. ७. मारिचकमिति पाठः । **मारिचेन संस्कृतम्** । मरिचमेवेति केचित् ॥

**मरीचम्** । चि. ७ etc. **मरिचम्** ॥

**मर्कटी** । उ. ६. कपिरोमफलत्वात् । **कपिकच्छुः** । "कपिकच्छुश्च मर्कटी" इत्यमरः । अपामार्ग इति भाष्यकारः । see **जटिला** ॥

**मर्कोटः** । चि. १५. **कृष्णवर्णमहापिपीलिका** । हिं.—मकोड़ ; म.—ह्मणजे मुङ्गळा ; मल.—कट्टुरुम्पु കട്ടുറുമ്പ് ; इं.—Black ant । **नामानि**—"उलंकलो महान् कृष्णस्सा मर्कोटपिपीलिका । या कृष्णाल्पाथ सूक्ष्मान्या जातिः कन्यापिपीलिका" इति वैजयन्ती । "मर्कोटैर्दंशयेच्छिद्र"मित्यत्र "कालपिपीलिकाभिर्दंशयेत" इत्येव सुश्रुतपाठः । "छिद्राण्यन्त्रस्य तु स्थूलैर्दंशयित्वा पिपीलिकै"रिति चरकसंहितायामपि दृश्यते ॥

**मलयः** । **सू. ५. पर्वतविशेषः** । One of the seven principal chains of mountains in India. It is most probably to be identified with the southern portion of the Ghats running from the south of Mysore, and forming the eastern boundary of Travancore ॥

**मलयूः** । चि. २०. मलपूरिति सुश्रुतपाठः । मलं छित्रं पावयति मलपूः, यु जुगुप्सायाम् । **काकोदुंबरिका** । सोमराजीतीन्दुः । बाकुचिकेत्यरुणदत्तः । "भद्रासंज्ञोदुंबरीमूलतुल्यं दत्वा मूलं श्चोदयित्वा मलप्वाः" इत्यत्र "उदुंबरी भद्रनामा काष्ठोदुंबरिका महती, मलपूः सैवाल्पविटपा" इति डल्हणः । भद्रा उदुंबरी मलपूश्चेति

पदत्रयेण भाष्यकारः । उदुंबरी हस्वोदुंबरः, मलपूः काकोदुंबरिका ॥

**मल्लकः** । उ. १६. शरावः । मल.—चट्टि ചട്ടി ; त.—अकल् ; बं.—शरा । Pan । An earthen shallow dish । "मल्लः पात्रे कपोले च मत्स्यभेदे बलीयसि" इति मेदिनी ॥

**मल्लिका** । सू. २४ etc. मल्ल्यते मूर्ध्नि मल्लिका । 'मल्ल धारणे' । स्वनामख्यातपुष्पक्षुपः । N. O.—*Oleaceæ* । हिं.—मोतियाबेला, बेलमोतिया ; बं.—मल्लिकाफूलेर गाछ, बेलफुल, मोतिया ; म.—मोगरी, वेलमोगरा ; गु.—बेल्य, डोलर ; तै.—मल्ले ; क.—मल्लिगे, दुण्डुमल्लिगे, बल्लिमल्लिगे ; कों.—दोडु मोग्रे ; तु.—दुण्डुमल्लिगेदै ; त.—मल्लिकै, इरुवाट्चि ; सिं.—इद ; मल.—मुल्ला മുല്ല, नल्लमाल्लि, वाळ्ळिमुल्ला ; अ.—सुमाना, जेसमाना, वरदा अब्यसा ; पा.—गुले सुपादा, समबक ; जर्मन्.—Arabischer jasmin ; फ्रं.—Jasmine d' arabie ; इं.—Arabian jasmine ; ल.—*Jasminum sambac* । नामानि—"मल्लिका शीतभीरुश्च मदयन्ती प्रमोदिनी । मदनीया गवाक्षी च भूपद्यष्टपदी तथा" । ध. नि । पुष्पं ग्राह्यम् । गुणाः—"मल्लिका कटुतिक्ता स्याच्चक्षुष्या मुखपाकहृत् । कुष्ठविस्फोटकण्डूतिविषव्रणहरा परा" । रा. नि । "मल्लिकोष्णा लघुर्वृष्या तिक्ता च कटुका हरेत् । वातपित्तास्यदृग्व्याधिकुष्ठारुचिविषव्रणान्" । भा. प्र । "मल्लिका तृणशून्येऽपि मीनमृत्पात्रभेदयोः" इति मेदिनी ॥

**मसूरः** । सू. ६ etc. मस्यति, मस्यते वा । 'मसी परिणामे' । "वेश्यायां व्रीहिभेदे च मसूरा मसुरा स्त्रियाम् । मसूरमसुरौ पुंसि द्वावेतावपि चैतयोः" इति रभसः । स्वनामख्यातशिंबीधान्यम् ।

"रागदालिर्व्रीहिः कृष्णो मसूरः सहरेणुकः" । मसूरा द्विविधाः—कृष्णाः पाण्डुराश्च, तत्र कृष्णवर्णा मसूराभिधानाः, पाण्डुवर्णा मङ्गल्यकाभिधानाः इति डल्हणः । N. O.—*Leguminoseae* । हिं.—मसूर; बं.—मसूरी, मसूरि कलाय; म.—मसूरा, चणई; गु.—मसुर; तै.—मिसूरपप्पु, चिरिशनमलु; क.—चणगि; त.—चिरुकटलै, मिचुरप्परुप्पु; मल.—चेरुकटला ചെറുകടല, चुवन्न परिप्पु; पा.—मिराजु माका; बुनोसुर्ख; अ.—अदासा, अदस; इं.—Lentils; ल.—*Lens esculenta, Vicia lens* । नामानि—"मसूरो रागदालिस्तु मङ्गल्यः पृथुबीजकः । शूरः कल्याणबीजश्च गुरुबीजो मसूरकः" । रा. नि । पुराणं ग्राह्यम् । गुणाः—"मसूरो मधुरः पाके संग्राही शीतलो लघुः । कफपित्तास्रजिद्रूक्षो वातलो ज्वरनाशनः" । भा. प्र । "मसूरो मधुरः शीतः संग्राही कफपित्तहा । वातामयकरश्चैव मूत्रकृच्छ्रहरो लघुः" । ध. नि ॥

**मसूरदलम्** । सू. २५ etc. मसूरस्य दाली । मसूरकी दाल ॥

**मस्तिष्कम्** । मस्तकस्नेहः । Cerebrum (Brain) । "मस्तिष्कं मस्तकस्नेह" इति हलायुधः । हिं.—भेजा; मल.—तलच्चोर् തലച്ചോർ ॥

**मस्तु** । सू. ३ etc. मस्यति परिणमते । दधिमस्तु । हिं.—दहीका पानी, दहीका तोड; बं.—मात्; म.—दह्यांतील पाणी, मठ्ठा; सिं.—दीपेरलिदिय; क.—मोसर नीर; मल.—तयिर्वेळ्ळम् തയിർവെള്ളം । Whey, the liquid part of curdled milk । दध्न उपर्यच्छो भागः । "दध्नो मण्डस्तु मस्त्वि"ति भावमिश्रः । "उक्तं दधि द्विगुणवारियुतन्तु मस्तु" इत्येके । गुणाः—"उष्णाम्लं रुचिपक्तिदं क्लमहरं बल्यं कषायं सरं भुक्तिच्छेदकरं वृ-

षोदरगदप्लीहार्शसां नाशनम् । स्रोतःशुद्धिकरं कफानिलहरं विष्टंभ-शूलापहं पाण्डुश्वासविकारगुल्मशमनं मस्तु प्रशस्तं लघु" । रा. नि । अन्ये तु दधितक्रजभेदेन मस्तु द्विविधमिच्छन्ति ॥

**मस्तुलुङ्गम्** । उ. २६ etc. **मस्तिष्कम्** ॥

**महत्पञ्चमूलम्** । सू. ६ etc **पञ्चमहातरूणां मूलानि** । **उक्तं** हि—"बिल्वोग्निमन्थः स्योनाकः पाटली टुण्टुकस्तथा । सर्वैस्तु मिलितैरेतैः स्यान्महापञ्चमूलकम्" । रा. नि । **गुणाः**—"सतिक्तं कफवातघ्नं पाके लघ्वग्निदीपनम् । मधुरानुरसं चैव पञ्चमूलं महत् स्मृतम्" । सु. सू । "श्रीपर्णिनीज्वलनमन्थवसन्तदूतीटिण्टूकबिल्वमिति तत्पृथुपञ्चमूलम् । श्लेष्मानिलामयहरं हितमेतदेव मेदस्विनामलसकोपहतात्मनां हि" इति चिकित्साकालिकायाम् । see **दशमूलम्** ॥

**महाद्रोणा** । उ. ३६. **द्रोणपुष्पीविशेषः** । **हिं**.—बडागोमा; **बं**.—बड गलघसिया ; **म**.—देवकुंभा ; **क**.—देवतुंबे ; **मल**.—करिंतुम्पा കരിംതുമ്പ, वन्तुम्पा । श्वेतवैकुण्ठमितीन्दुः । **नामानि**—अन्या चैव महाद्रोणा कुतुंबा देवपूर्वका । दिव्यपुष्पी महाद्रोणी देवीकाण्डा षडाह्वया" । रा. नि । **गुणाः**—"देवद्रोणी कटुस्तिक्ता मेध्या वातार्तिभूतनुत् । कफमान्द्यापहा चैव युक्त्या पारदशोधनी" । रा. नि । सर्वांशो ग्राह्यः । Anisomeles malabarica इत्येके ॥

**महान्** । **सू**. ६. **शालिधान्यविशेषः** । हिं.—बडे धान ; रक्तशालि चावलोंकी अपेक्षा मोटे शालिचावल ; हंसराज, वांसमती इत्यादि ; म.—थोरसाळि । **नामानि**—"स्थूलशालिर्महाशालिः स्थूलांगः स्थूलतण्डुलः" । रा. नि । **गुणाः**—"महाशालिः स्वादुर्मधुरशिशिरः पित्तशमनो ज्वरं जीर्णं दाहं जठररुजमह्नाय श-

मयेत्। शिशूनां यूनां वा यदपि जरतां वा हितकरः सदा सेव्यः सर्वैरनलबलवीर्याणि कुरुते"। रा. नि। "महाशालिर्गुरुर्वृष्या चक्षुष्या बलवर्धनी"। अ. सं॥

**महापिचुमन्दः।** चि. ८. पर्वतनिंबो नाम निंबसदृशबृहत्पत्रवृक्षः। ग्रामनिंब एव पर्वतभवत्वेन पर्वतनिंब इत्युच्यते इति केचित्। एतस्य त्वगेव ग्राह्या। N. O.—*Meliaceae*। **हिं.**—बकाइन, बकायन, बकास; **बं.**—घोड़ा निम, महानिम, वनानिम; **म.**—बकाणी निंब, विलायती निम; कवड्या निंब; डोंगरांचा निंबाचा झाड; **गु.**—बकान; **कों.**—फिरङ्गि निंब; **दखा.**—गौरि निम; **पञ्जा.**—द्रेक; **तै.**—पेद्दवेप, तुरुकवेप, गङ्करावि चेट्टु, कोण्ट वेप; **क.**—तुरुकबेवु, महाबेविनमर, महाबेड, हुच्चुबेवु, चिक्कबेवु; बेत्तडबेवु, अरेबेवु, गरडबेवुमर; **त.**—मलैवेम्बु, मलै वेप्पमरं; **मल.**—मलवेप्पु മലവേപ്പ്; पेरुमरं इत्येके; **पा.**—तुजा कुनार्य, तक; **अ.**—हब-उल-बान; **जर्मन्.**—Gemeiner zedrrach; **फ्र.**—Azedarak commun; Cyrovenne; **इं.**—The persian lilac; Common bead tree; **ल.**—*Melia Azedarach*। **नामानि**—"महानिंबः स्मृतो द्रेकी कार्मुको विषमुष्टिकः। केशमुष्टिर्निंबवरो रम्यकोऽक्षीर एव च"। ध. नि। **गुणाः**—"महानिंबस्तु शिशिरः कषायः कटुतिक्तकः। अस्रदाहबलासघ्नो विषमज्वरनाशनः"। रा. नि। "महानिंबो रसे तिक्तः शीतपित्तकफापहः। कुष्ठरक्तविनाशी च विषूचीं हन्ति शीतलः"। ध. नि। त्वक् अतितिक्ता अतिसेविता मादकगुणा, पुष्पं शिरःशूले हितं, फलं पत्रञ्च विषवत् कुष्ठघ्नञ्च। द्रव्यगुणः॥

**महापुरुषदन्ता।** उ. ६. महापुरुषस्य विष्णोः दन्ता इव महत्वात् मूलान्यस्याः। शतावरी। "सहस्रवीर्याऽभीरुश्च तुङ्गिनी बहुप-

त्रिका । महापुरुषदन्ता च शतावर्यूर्ध्वकण्टका" । ध. नि । शंख-पुष्पी महाशतावरी महामेदा वा इति केचन । महापैशाचिकघृतस्य द्रव्यसंकेतमेवमाह केचित्---"जटिला शतपुष्पी स्यान्मांसीभेदोऽपि चेष्यते । पूतना अभया केशी मांसी भूकेश एव च । चारटी ब्रह्मिका ज्ञेया मर्कटी शूकशिंबिका । वीरा तु पृश्निपर्णी स्याच्चण्डा स्यादिह चोरकः । कायस्था सिन्दुवारस्तु सूक्ष्मैला वाथ सूकरी । वाराहीकिन्दकाऽभावाच्चर्मकारालुको मतः । छत्राजाजी त्वतिच्छत्रा शतपुष्पा परे त्विमे । द्रोणपुष्पीद्वयं प्राहुः पलङ्कषा तु गुग्गुलुः । महापुरुषदन्ता तु विष्णुक्रान्ताऽथवा वरी । वयस्था त्वमृता ज्ञेया नाकुलीद्वयमत्र तु । सर्पगन्धाह्वयं प्राहु रास्नाद्वयमथापि वा । कटंभरा तु कटभी प्रसारण्यथवाऽमृता" । इति ॥

**महामर्म** । उ. ७. हृदयम् ॥

**महामृगः** । सू. ६. प्रमाणतो महान् मृगः ॥

**महामेदा** । उ. २४. अष्टवर्गोक्त औषधिभेदः । **गौडदेशीयः स्वनामख्यातकन्दविशेषः** । महामेदेति सर्वत्र । **सिं.**---महमेवन् ; **ल.**---*Leptadenia spartum or Gymnema spartum* । अभावे शतावरी ग्राह्या । "महामेदे तु सारिबा" इति केचित् । महामेदाऽष्टछिद्रान्विता काष्ठविशेषः, स च दक्षिणोत्तरपथे पर्वतेषु प्रसिद्धः । तत्र देवमणिरिति प्रसिद्ध इत्याढमल्लः । **उत्पत्तिलक्षणनामगुणाः**---"महामेदाभिधः कन्दो मोरङ्गादौ प्रजायते । महामेदा खनीमेदा स्यादित्युक्तं मुनीश्वरैः । शुक्लार्द्रकनिभः कन्दो लताजातः सुपाण्डुरः । महामेदाभिधो ज्ञेयो मेदालक्षणमुच्यते । शुक्लकन्दो नखच्छेद्यो मेदोधातुमिव स्रवेत् । यः स मेदेति विज्ञेयो जिज्ञासातत्परैर्जनैः । शल्यपर्णी मणिच्छिद्रा मेदा मेदोभवाध्वरा । महामेदा वसुच्छिद्रा त्रिदन्ती देवतामणिः । मेदायुगं गुरु स्वादु

वृष्यं स्तन्यकफावहम् । बृंहणं शीतलं पित्तरक्तवातज्वरप्रणुत" । भा. प्र । see **मेदा** । कन्द एव ग्राह्यः ॥

**महावृक्षः** । सू. ३०. **स्नुही** । स्नुहीति सुश्रुतपाठः ॥

**महाव्रीहिः** । सू. ६. **व्रीहिविशेषः** । षष्टिकाद्धीनगुणः ॥

**महाशालिः** । **शालिधान्यविशेषः** । see **महान्** ॥

**महाश्वेता** । उ. ३. **नीलपुष्पी गिरिकर्णिका** । "नीलायां तु महाश्वेता निष्क्यांता स्थूलपुष्पिका" इति वैजयन्ती । कटभीत्यरुणदत्तः । N. O.—*Leguminosae* । **हिं.**—नीली कोयल ; **बं.**—नीलापराजिता ; **म.**—काळी गोकर्णी ; **गु.**—नीलगरणी ; **तै.**—नील दिंटेन ; **क.**—नीलगिरिकर्णिके ; **त.**—करुक्काक्कणं ; **सिं.**—कलु कटुरोड्डु ; **मल.**—करुत्त शंखुपुष्पं കറുത്ത ശംഖുപുഷ്പം ; **इं.**—Black clitoria ; **ल.**—*Clitoria marina* । **नामानि**—"नीलपुष्पा महाश्वेता गिरिकर्णी गवादनी । व्रल्ली चास्युग्रगन्धा च नीलस्पन्दा प्रकीर्तिता" । भ. नि । मूलादिकं ग्राह्यम् । **गुणाः**—"नीलाद्रिकर्णी शिशिरा सतिक्ता रक्तातिसारज्वरदाहहन्त्री । विच्छर्दिकोन्मादमदभ्रमार्तिश्वासातिकासामयहारिणी च" । रा. नि । see **अद्रिकर्णी** । श्वेतवचेति कैरली ॥

**महासहा** । उ. २. मुद्गपर्ण्याः सहाया भिन्नेयम् । **माषपर्णी** । "महासहा माषपर्ण्याममम्लानेऽपि च योषिति" इति मेदिनी । शालपर्णीति कैरली ॥

**महास्नेहः** । **चि.** ६ etc. घृतं तैलं वसा मज्जा च । "सर्पिः शरदि पातव्यं वसा मज्जा च माधवे । तैलं प्रावृषि नात्युष्णशीते स्नेहं पिबेन्नरः" इति । **अनुपानमाह**—"जलमुष्णं घृते पेयं यूष-

स्तैलेऽनुशस्यते । वस्तमज्ञास्तु मज्जः स्यात् सर्वेष्वपि(?) यथायं वा" इति चरकः ॥

**महास्रोतः । सू. १२** etc. **आकण्ठपायुपर्यन्ता महानाडिका ।** Great stream, Alimentary canal । "कोष्ठः पुनरुच्यते महास्रोतः शरीरमध्यं महानिम्नमामपक्वाशयश्चेति पर्यायशब्दैः तन्त्रे स रोगमार्ग आभ्यन्तर इति चरकः । **उक्तं च कोष्ठविवरणे**— "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुफ्फुसश्च कोष्ठ इत्यभिधीयते" इति । "तत्र मुखं, ग्रसनिका, अन्ननलिका, आमाशयः, क्षुद्रान्त्राणि, बृहदन्त्रं चेत्येतेषां मिलितानां महास्रोत इति संज्ञा प्राचाम्" । प्र. शा ॥

**महिषः । सू. ६** etc. महति, मह्यते वा । 'मह पूजायाम्' । मह्यां शेते इति वा । यद्वा मंहते । 'मंहि वृद्धौ' । **महामृगजातीयपशुविशेषः ।** हिं.—भैंसा ; म.—टोणगा, म्हैसा ; ते.—दुन्नपोतु ; क.—यमी, कोण ; त.—एरुमैक्कडा, एरुमै ; सिं.—मीमा ; मल.—पोत्तु പോത്ത് ; इं.—Buffalo; ल. *Bos bubalus* । **नामानि**—"महिषो घोटकारिः स्यात् कासरश्च रजस्वलः । पीनस्कन्धः कृष्णकायो लुलायो यमवाहनः" । भा. प्र । **मांसगुणाः**— "महिषस्यामिषं स्वादु स्निग्धोष्णं वातनाशनम् । निद्राशुक्रप्रदं बल्यं तनुदार्ढ्यकरं गुरु । वृष्यश्च स्पृष्टविण्मूत्रं वातपित्तास्रनाशनम्" । भा. प्र । "स्निग्धोष्णमधुरो वृष्यो महिषस्तर्पणो गुरुः । निद्रापुंस्त्वबलस्तन्यवर्धनो मांसदार्ढ्यकृत्" । सु. सू. ४६ । स च ग्राम्यारण्यभेदेन द्विविधः । "वनमहिषामिषं स्यादीषल्लघु दीपनं च बलदायि । ग्रामीणमहिषमांसं स्निग्धं निद्राकरं च पित्तहरम्" । रा. नि । "स्निग्धोष्णो महिषस्तिक्तो निद्राशुक्रबलप्रदः । मधुरस्तर्पणो वृष्यो गुरुर्मांसस्य दार्ढ्यकृत् । तद्वदारण्यजो ज्ञेयो विशेषाच्छोषिणे हितम्" । ध. नि । ४४० **महिषी** ॥

**महिषाक्षः ।** उ. ३३. महिषस्याक्षीव अच् । **गुग्गुलुविशेषः ।** see **गुग्गुलु** । महिषाख्य इति पाठः । "भृङ्गाञ्जनसवर्णस्तु महिषाक्ष इति स्मृतः" इति । भैंसा गूगल ॥

**महिषी । सू. ५. महिषपत्नी** । "महिषी कृताभिषेकायां स्त्र्यामोषधीभिदि" इति मेदिनी । हिं.–भैंस ; म.–म्हैस ; क.–एम्मे ; त.–एरुमै ; सिं.–मीवोय ; मल.–एरुमा എരുമ ; इं.–She-buffalo । **नामानि**"–महिषी मन्दगमना महाक्षीरा पयस्विनी । लुलायकान्ता कलुषा तुरङ्गद्वेषिणी च सा" । ध. नि । **मांसगुणाः**– see **माहिषः** । **दुग्धगुणाः**—"माहिषं मधुरं गव्यात् स्निग्धं शुक्रकरं गुरु । निद्राकरमभिष्यन्दि क्षुधाधिक्यकरं हिमम्" । भा. प्र । "माहिषं बलवर्णाग्निनिद्राशुक्रकफप्रदम् । तीक्ष्णाग्निशमनं स्वादु रसे पाके च पुष्टिदम् । व्यायामश्रान्तदेहस्य श्रमभ्रमानिलापहम् । निष्कामस्यातिवृद्धस्य स्त्रीषु कामप्रदायकम् । बलेन तरुणस्यापि विशेषात् कफदायकम्" । सुषेणः । **दधिगुणाः**—"माहिषं दधि सुस्निग्धं श्लेष्मलं वातपित्तनुत् । स्वादुपाकमभिष्यन्दि वृष्यं गुर्वस्रदूषकम्" । भा. प्र । "घनं माहिषमुद्दिष्टं मधुरं रक्तदोषकृत् । कफशोफहरं स्वस्थं पित्तकृद्वातकोपनम्" । अ. सं । "कालिदासकविता नवं वयो माहिषं दधि सशर्करं पयः । एणमांसमबला च कोमला संभवन्तु मम जन्मजन्मनि" इति भावुकः । **तक्रगुणाः**—"माहिषं कफकृत् किञ्चिद्घनं शोफकरं नृणाम् । शस्तं प्लिहार्शोग्रहणीदोषेऽतीसारिणामपि" । अ. सं । **नवनीतगुणाः**—"नवनीतं महिष्यास्तु वातश्लेष्मकरं गुरु । दाहपित्तश्रमहरं मेदःशुक्रविवर्धनम्" । भा. प्र । "माहिषं नवनीतन्तु कषायं मधुरं रसे । शीतं वृष्यप्रदं बल्यं ग्राहि पित्तघ्नतुन्दकृम्" । रा. नि । **घृतगुणाः**—"माहिषं तु घृतं स्वादु पित्तरक्तानिलापहम् । शीतलं श्लेष्मलं वृष्यं गुरु स्वादु विपच्यते" । भा. प्र । "सर्पिर्माहिषमुत्तमं धृतिकरं सौख्यप्रदं कान्ति-

कृद्वातश्लेष्मनिबर्हणं बलकरं वर्णप्रदाने क्षमम् । दुर्नामग्रहणीविकारशमनं मन्दानलोद्दीपनं चक्षुष्यं नवगव्यतः परमिदं हृद्यं मनोहारि च" । रा. नि । **मूत्रगुणाः**—"माहिषं मूत्रमानाहशोकगुल्माक्षिदोषनुत् । कटूष्णं कुष्ठकण्डूतिशूलोदररुजापहम्" । रा. नि । "क्षारं सतिक्तं कटुकं कषायं प्रभेदि वातस्य शमं करोति । पित्तप्रकोपं कुरुते सदा च कुष्ठार्शपाण्डूदरशूलनाशनम्" । अत्रि. सं । "गोजाविमहिषीणां च स्त्रीणां मूत्रं प्रशस्यते" । भा. प्र ॥

**महेन्द्रः । सू. ५. पर्वतविशेषः ।** One of the seven principal chains of mountains in India identified with Mahendra Male which divides Ganjam from the valley of the Mahanadi and probably included the whole of the eastern Ghats between the Mahanadi and Godavari ॥

**महौषधम् । चि. ५** etc. महच्च तदौषधम् च । "महौषधं तु शुण्ठ्यां स्याद्विषायां लशुनेऽपि च" इति विश्वमेदिन्यौ । शुण्ठी ॥

**मांसधावनम् । सू. १८** etc. मांसधावनेन सृतं जलम् । मांसोदकमिति चरकपाठः ॥

**मांसरसः । सू. ८** etc. **मांसयूषः** । हिं.- शुरुवा, शोरुआ, शोरबा, माँसका जूस ; म.—मासा चें कढण ; सिं.—मस्तुमबुदिय ; मल.—सूप्पु സൂപ്പ്, इरच्चिचार् ; इं.—Broth । "पिशितेन रसस्तत्र यूषो धान्यैः खलः फलैः । मूलैश्च तिलकल्काम्लप्रायः कांबलिकः स्मृतः" इति संग्रहे । **गुणाः**—"रसो मांसस्य चक्षुष्यो बृंहणः प्राणवर्धनः । वृष्यो वातविकारघ्नः स्मृत्योजःस्वरवर्धनः । भग्नविश्लिष्टसन्धीनां कृशानां व्रणिनां हितः" । रा. व । "रसद्रव्यविशेषोक्तौ ज्ञेयो मांसभवो रसः" इति दृश्यते । **तत्पाकविधिः**—"प्रस्थेऽम्भसि पलं साध्यं मांसं पादस्थिते रसः । कंसाप्सु कुडवं मांसं पक्त्वा पादावशेषिते । तेन क्वाथेन विपचेत्

यवागू प्रोक्तकर्मसु" । नलः । "मांसक्वाथापरिस्रावी यूषो मौद्गः प्रदीयते" इति वैद्यके ॥

**मांसी** । सू. १५ etc. समांसत्वात् मांसी । "मांसी तु स्यामिषीसं-ज्ञगन्धद्रव्ये" इति केशवस्वामी । "मांसी कक्कोलीजटयोरपि" इति विश्वः । **स्वनामख्यातगन्धद्रव्यविशेषः** । जटामांसी । "ससूक्ष्मकेसरा स्निग्धा मांसी पिङ्गजटाकृतिः" । मै. र । N. O.—*Valerianeae* । **हिं.**—जटामांसी , बालछड ; कनुचर ; **बं.**—जटामांसी ; **म.**—जटामांसी ; **गु.**—जटामांसी , बालछड ; **द्रखा.**—जटामांशी ; **काश्मी.**—मूतजट , कुकिलिपोट ; **पञ्जा.**—जडमांसी , बालचिड ; **तै.**—जडामांसी ; **क.**—सुगंधमुस्ते , बहुलगन्ध , गणिगलमुस्ते , जटामांसी ; **तु.**—जटामांसी ; **त.**—चटामाञ्चि , नळर्त्त , नमर्त्त ; **सिं.**—जटामांस ; **मल.**—जटामाञ्चि ; **पा.**—सुंबुलुतिब , सुबूल् , सुंबुल ; **उर्दु.**—सुंबुल तीब ; **अ.**—सुंबुल-हिन्द , सुबुलतीब ; **ग्रीक्.**—Narde Indike ; **जर्मन.**—Achte Narde ; **फ्र.**—Nard Indien ; **इं.**—Musk-root; Indian spikenard ; **ल.**—*Nardostachys jatamansi* । This herb is growing at great elevations up to 17000 feet on the Alpine Himalaya, in Nepal, Butan and Sikkim । **नामानि**—"मांसी कृष्णजटा हिंस्रा नलदा जटिला मिशी । जटा च पिशिता पेशी क्रव्यादी च तपस्विनी" । ध. नि । **गुणाः**—"मांसी तिक्ता कषाया च मेध्या कान्तिबलप्रदा । स्वाद्वी हिमा त्रिदोषास्र-दाहवीसर्पकुष्ठनुत्" । भा. प्र । "सुरभिस्तु जटामांसी कषाया कटु-शीतला । कफहृद् भूतदाहघ्नी पित्तघ्नी मोदकान्तिकृत्" । रा. नि । मूलं ग्राह्यम् । अञ्जनादिगणे नलदमिति सुश्रुतपाठः । तदुशीरमिति भाष्यकारः । मांसीत्येव डल्हणः । कार्पासास्थ्यादिधूपनयोगे मांसी-स्थाने वांशीति मुद्रितसंग्रहग्रन्थेषु दृश्यते ॥

**माक्षिकम्** । सू. ७ etc. मक्षिकाभिः कृतम् । मधु । "नानापुष्परसाहाराः कपिला वनमक्षिकाः । याः स्थूलास्ताभिरुत्पन्नं मधु माक्षिकमुच्यते" । उक्तं हि—"माक्षिकं मधुषु श्रेष्ठम् नेत्रामयहरं लघु । कामलाशःक्षतश्वासकासक्षयविनाशनम्" । भा. प्र ॥

**माक्षिकधातुः** । चि. १६. ताप्यम् ॥

**मागधिका** । चि. ८ etc. मगधभवत्वान्मागधी । पिप्पली । "मागधी स्त्री कणायूथ्योस्त्वाच्यवन्मगधोद्भवे" इति मेदिनी ॥

**मागधिकाकणा** । उ. ३८. पिप्पलीतण्डुलम् ॥

**माचीकम्** । उ. ३४. देवदार्वित्येके । कुटजफलमितीन्दुः । धान्यकमिति पाठ्यकारः । माचीकेति केचित् । माचीकमुत्तरापथे प्रसिद्धमेव इति जेज्जटः । "शुण्ठीभूकमाचीकरक्तचन्दनकट्फल" मित्यत्र "शुण्ठीमरिचमृद्वीकारक्तचन्दनकट्फल" मित्येव संशुद्धः पाठः ॥

**माणिमन्थम्** । सू. १९ etc. मणिमन्थपर्वते भवं अण् । सैन्धवम् ॥

**मातङ्गः** । चि. २०. गजः । "मातङ्गः श्वपचे गजे" । इति मेदिनी ॥

**मातुलिङ्गः** । चि. १ etc. बीजपूरः ॥

**मातुलुङ्गः** । सू. ६ etc. बीजपूरः ॥

**मातुलुङ्गी** । उ. ३६. सुरभीफला वनजा । अरण्यबीजपूरकः । शान्तारा नाम जंबीरभेद इति केचित् । बीजपूर इत्यन्ये ॥

**माद्री** । चि. ६ etc. अतिविषा । कृष्णातिविषेत्येके ॥

**माधवः** । सू. ६ etc. मध्वासवः । मदात्ययचिकित्सिते मद्यमिति पठति चरकः ॥

**माधवी** । सू. ३. मधौ वसन्ते भवा । सुगन्धश्वेतपुष्पविशिष्टा मालतीतुल्यपत्रो लताभेदः । "माधवोऽजे मधौ राधे वसन्ते न स्त्रियां मिसौ । वासन्तीकुट्टनीमद्यमधुशर्करासु स्त्रियां" इति मेदिनी । "वैशाखे माधवः कृष्णे माधवी चातिमुक्तके" इति रन्तिदेवः । "वासन्ती माधवीलते"त्यमरः । हिं.—माधवी ; बं.—माधवीलता ; म.—मधुमाधवी , वीरवंती ; गु.—मधुमाधवी ; तै.—माधवतोगे , पुव्वुलगुरिविन्द ; क.—इन्द्रगोबे , विरवंतिगे , इरुवन्तिमल्लिगे , गुरुविंद ; सिं.—योहोबु ; मल.— वसन्तमुल्ल ‌‌‌ഛുവുമുല്ല ; मुल्ल ; इं.—Clustered hiptage, Spring creeper ; ल. —*Hiptage madhabilata* । नामानि —"माधवी चन्द्रवल्ली च सुगन्धा भ्रमरोत्सवा । भृङ्गप्रिया भद्रलता भूमिमण्डपभूषणा" । रा. नि । गुणाः—"माधवी कटुका तिक्ता कषाया मदगन्धिका । पित्तकासव्रणान् हन्ति दाहशोकविनाशिनी" । रा. नि । "माधवी मधुरा शीता लघ्वी दोषत्रयापहा" । भा. प्र । पुष्पं ग्राह्यम् ॥

**माधुतैलिकः** । क. ४. निरूहणबस्तिविशेषः । "यस्मान्मधु च तैलं च प्राधान्येन प्रदीयते । माधुतैलिक इत्येवं भिषग्भिर्बस्तिरुच्यते" इति सुश्रुतः ॥

**माधूकसारः** । सू. १५. मधूकवृक्षस्य सारदारु । महुएका गोंद इति शिवदीपिका ॥

**मानद्रुमः** । सू. १५. शाल्मली । सालद्रुम इति शिवपुरमुद्रितसंग्रहपाठः । सारद्रुम इति हेमाद्रिपाठः । सुश्रुतसंहितायां प्रियंग्वादिगणे मानद्रुमस्थाने 'कुंभीक' इति पाठो दृश्यते । कुंभीकः श्लक्ष्णत्वको रोमशः कुंभी नामा वृक्षो यस्य त्वग् वस्त्राकारा भवति , अन्ये पाटलामाहुः , अन्ये स्वरूपविटपमाहुरिति डल्हणः । वारिपर्णी

'पाना' इत्याख्यायते इति भाष्यकारः ॥

**मानसी** । उ. ३६. ब्राह्मी । मण्डूकपर्णीतीन्दुः ॥

**मानुषम्** । सू. ५. मानुषीक्षीरम् । see स्तन्यम् ॥

**मानुषीक्षीरम्** । चि. ७. स्तन्यम् ॥

**मारिचकः** । चि. ७. मरिचविश्वादयः ॥

**मार्कवः** । चि. ५. मर्वति संपृच्यते । मारि केशशौक्ल्यनाशने कू-यते वा । 'कुङ् शब्दे' । भृङ्गराजः । "स्यान्मार्कवो भृङ्गरजः भृङ्ग-राजः सुजागरः" इति रभसः ॥

**मार्जनी** । शा. ६. गृहसंशोधनी । हिं.—झाड़ु, बढ़नी; बं.—झाँटा; म.—झाडणी, केरसुणी; त.—तुडैप्पं, वारियल्कट्टै; सिं.—मुस्न, इदल; मल.—चूल् ०ꯨ०ꯨ, मायिल्ल्; इं.—Besom, Broom ॥

**मार्जारः** । सू. ६ etc. मार्ष्टि मुखम् । 'मृजू शुद्धौ' । बिडालः । "मार्जार ओतौ खट्वांग" इति मेदिनी" । हिं.—बिलाव, बि-ल्ली; बं.—बिडाल; म.—मांजर; तै.—मार्जारमु; क.—बेक्कु; त.—पूनै; सिं.—बलल्; बळला; मल.—पूच्चा ०ꯨꯨ; इं.—Cat; ल.—*Felis domestica* । **नामानि**—"बिडालो मूषकद्वेषी वृषदंशो बिडालकः । शालावृकश्च मार्जारो मायावी दीप्तलोचनः" । ध. नि । **मांसगुणाः**—"मार्जारो मधुरः स्निग्धो वीर्योष्णः कफवातजित् । क्षतश्वासकासघ्नो नकुलोऽपि समो गुणैः" । ग्राम्यादिभेदेन षट्प्रकारा मार्जाराः, तथा च—"ग्राम्यो वन्यस्तोयजातः पक्षिमार्जारविज्जकौ । सुगन्धवृषणश्चेति मार्जाराः षट् प्रकीर्तिताः" इति ॥

**मार्द्वीकम्** । सू. ३ etc. द्राक्षारसेन कृतं मद्यम् । माध्वीकमिति

पाठः । अंगूरी शराब । Spirit distilled from grapes । "मार्द्वीकमविदाहित्वान्मधुरान्वयतस्तथा । रक्तपित्तेऽपि सततं बुधैर्न प्रतिषिध्यते । मधुरं तद्धि रूक्षञ्च कषायानुरसं लघु । लघुपाकि सरं शोषविषमज्वरनाशनम्" । सु. सू ॥

**मार्षः** । सू. ६. पत्रशाकविशेषः । तण्डुलीयकभेदः । हिं.—मरसा, नवड्डा ; बं.—कांटा नटेरशाक ; म.—माठाची भाजी ; गु.- डाभो ; उत्.-नेवटाशाग ; तै.—डुगलकुरा ; त.—अरैक्कीरै ; सिं. -कुर ; मल.—मधुरचीरा മധുരച്ചീര; ल.—*Amaranthus oleraceus* । नटे इति प्रसिद्ध इति चरकोपस्कारे । गांधारीतीन्दुः । गंभारिकेत्यरुणदत्तः । मण्टक इति हेमाद्रिः । मारिष इति पाठः । "मारिषो जीवशाकः स्यादल्पे तण्डुलीयकः" इति वैजयन्ती । स द्विविधः श्वेतरक्तभेदेन । पत्रं ग्राह्यम् । **नामगुणाः**—"मारिषो बाष्पको मार्षः श्वेतो रक्तश्च स स्मृतः । मारिषो मधुरः शीतो विष्टंभी पित्तनुद् गुरुः । वातश्लेष्मकरो रक्तपित्तनुद्विषमाग्निजित् । रक्तमार्षो गुरुर्नाति सक्षारो मधुरः सरः । श्लेष्मलः कटुकः पाके स्वल्पदोष उदीरितः" । भा. प्र ॥

**मालती** । सू. १७ etc. मालयत्यामोदैर्मालती । "मालती युवतौ काकमाच्यां जातिविशल्ययोः । ज्योत्स्नायां निशि नद्यां च" इति हैमः । जाती । कल्याणघृतयोगे मालतीमुकुलस्थाने मालतीपुष्पमित्येव सुश्रुतपाठः । मालतीकुसुमं नवमिति पठति चरकः । मालतीत्येव वङ्गसेनसंहितायाम् । जातीपुष्पमिति कलिकाकारः । मालतीसुममिति नावनीतकपाठः ॥

**माषः** । सू. ३ etc. शिंबीधान्यविशेषः । N. O.—*Leguminosæ* । हिं.—उड़द, उरद, उरीद, उडीद ; बं.—माषकलाय ; म.—उडिद ; गु.—अडद ; तै.—मिनुमुलु ; क.—उद्दु ; त.—

उलुन्नु ; सिं.—उन्दु ; तु.—उर्दु ; कों.—उडिदु ; मल.—उलुन्नु ഉഴുന്നു ; पा.—माष ; अ.—माषा ; फ्र.—Haricot Radie ; जर्मन.—Strahlfruchtige Bohne ; इं.—Black gram, Kidney bean ; ल.—*Phaseolus roxburghii, P. Radiatus* । नामानि—"माषस्तु कुरुविन्दः स्याद्धान्यवीरो वृषांकुरः । मांसलश्च बलाढ्यश्च पित्र्यश्च पितृभोजनः" । रा. नि । पुराणं ग्राह्यम् । गुणाः—"माषो गुरुः स्वादुपाकः स्निग्धो रुच्योऽनिलापहः । स्रंसनस्तर्पणो बल्यः शुक्रलो बृंहणः परः । भिन्नमूत्रमलः स्तन्यो मेदःपित्तकफप्रदः । गुदकीलार्दितश्वासपक्तिशूलानि नाशयेत् । कफपित्तकरा माषाः कफपित्तकरं दधि । कफपित्तकरा मत्स्या वृन्ताकं कफपित्तकृत्" । भा. प्र ॥

**माषद्वयम्** । मू. १? माषो राजमाषश्च ॥

**माषपर्णी** । चि. ३. माषस्येव पर्णान्यस्याः । स्वनामख्यातलता । N. O.—*Leguminosæ* । हिं.—माषोणी, मासवणी, माषवनी, मषवन, मगवन, वनउडद ; बं.—माषानी, माषानी ; म.—रान उडीद, राणउड्दी ; गु.—जङ्गली अडद ; तै.—कारुमिनुमुलु ; क.—रानो डिड्डि, रालो डिड्डु, काउद्दु ; त.—पेरूवाडुकोळ्ळु ; सिं.—वल्उन्दु, मस्वेन्न ; मल.—काट्टुलुन्नु കാട്ടുഴുന്നു, पेरुकाणं ; ल.—*Glycine labialis, Teramnus labialis* । मार्जारमोदिनीति माषपर्णी च कृष्णनाला हयपुच्छिकाकारा पर्वतोद्भवा मधुरा चेत्याढमल्लः । अरण्यमाषस्तंब इत्येके । मूलं सर्वांशो वा ग्राह्यः । नामानि—"माषपर्णी तु कांबोजी कृष्णवृन्ता महासहा । आर्द्रमाषा सिंहविन्ना मांसमासाऽश्वपुच्छिका" । ध. नि । गुणाः—"माषपर्णी हिमा तिक्ता रूक्षा शुक्रबलासकृत् । मधुरा ग्राहिणी शोथवातपित्तज्वरास्रजित्" । भा. प्र । "माषप-

र्णा रसे तिक्ता वृष्या दाहज्वरापहा । शुक्रवृद्धिकरी बल्या शीत-
ला पुष्टिवर्धिनी" । रा. नि ॥

**माषसूपम्** । सू. ७ etc माषस्य दाली । हिं.—उड़दकी दाल ; मल.—उलुन्निन्‌परिप्पु ഉഴുന്നിൻപരിപ്പു ॥

**माहिषम्** । सू. ५. महिषीक्षीरम् । हिं.—भैंसीका दूध ; म.—म्हशीचें दूध ; क.—एम्मेय हालु ; त.—एरुमैप्पाल् ; मल.—एरुमप्पाल् എരുമപ്പാൽ ; इं.—Buffalo's milk ॥

**मिशिः** । सू. २२ etc. शतपुष्पा । "मिसिः स्त्री मधुरामांस्योः शतपुष्पाजमोदयोः" इति मेदिनी ॥

**मिश्रकम्** । चि. ३. घृतं तैलं च ॥

**मिश्रकोदनम्** । उ. ५. कृशरा । मिलेहुए खिचड़ी आदि अन्न । मांसमिश्रमोदनमित्येके ॥

**मिसिः** । सू. १५ etc. मस्यते । 'मसी परिमाणे' । शतपुष्पा । "स्यान्मांस्यां शतपुष्पायां मधुरायां मिसिः स्त्रियां" इति रभसः ॥

**मुकूलकम्** । सू. ६. औत्तरापथिको मिष्टफलविशेषः । "मुकूलकगुणाः सर्वे वादामवत् प्रकीर्तिताः" । नि. र । "मुकूलकं ज्ञेयं दन्तीफलसमाकृति" । म. पा । निकोचकभेद इत्येके । अक्षोडभेद इति केचित् । दन्तीफलमित्यरुणदत्तः । मकूलक इति पाठः ॥

**मुक्ता** । सू. ३ etc. मुच्यते स्म । 'मुच्लृ मोक्षणे' । "मुक्ता स्त्री मौक्तिके त्रिस्तु विसृष्टेऽतीतसंसृतौ" इति केशवस्वामी । "मुक्ता मौक्तिकपुंश्चल्योः" इति हैमः । मौक्तिकम् । "मुक्ताफलं शीतगो" रिति ज्योतिर्विदः । Class.—*Mollusca* । हिं.—मोती , मति ; बं.—मुक्ता , मति ; म.—मोतीं ; गु.—मोती ; कों.—मोती ; तै.—मोत्यालु ; क.—मौक्तिक , मुत्तु ; त.—मुत्तु ; सिं.—

मुत्तु ; मल.—मुत्तु ; अ.—लोलू, लूलू, लोलो ; पा.—मवारीद ; इं.—Pearl ; ल.—*Avicula, mytilus margaritiferus* । **नामानि**—"मौक्तिकं शुक्तिजं स्फोटशुक्तिजं शुक्तिसंभवम् । भूषणार्हतमं श्रेष्ठं तौतिकं शौक्तिजं तथा" । ध. नि । शोधितमारितं ग्राह्यम् । **तद्योनिगुणाः**—मौक्तिकं शौक्तिकं मुक्ता तथा। मुक्ताफलञ्च तत् । शुक्तिः शंखो गजः क्रोडः फणी मत्स्यश्च दर्दुरः। वेणुरेते समाख्यातास्तज्ज्ञैर्मौक्तिकयोनयः । मौक्तिकं शीतलं वृष्यं चक्षुष्यं बलपुष्टिदम्" । भा. प्र । **अन्यच्च**—"मुक्ता कषाया स्वाद्वी च बलपुष्टिप्रदायिनी । वृष्या नेत्रहिता राजयक्ष्मघ्नी विषनाशिनी । स्त्रीणां कान्तिरतिकरी धारणाद् ग्रहपापनुत्" । आ. सं । "मातंगोरगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृच्छुक्तीनामुदराच्च मौक्तिकमणिः स्पष्टं भवत्यष्टधा । छायाः पाटलनीलपीतधवलास्तत्रापि सामान्यतः सप्तानां बहुशो न लब्धिरितरच्छौक्तेयकं तूल्बणम्" । रा. नि । **मौक्तिकपरीक्षा**—"लवणक्षारक्षोदिनि पात्रे गोमूत्रपूरिते क्षिप्तम् । मर्दितमपि शालितुषैर्यदविकृतं तत्तु मौक्तिकं जात्यम्" । रा. नि । "अभावे मौक्तिकस्यापि मुक्ताशुक्तिं प्रयोजयेत्" इति भावमिश्रः ॥

**मुञ्जातः** । सू. ६. स्वनामप्रसिद्धो औत्तरापथिककन्दविशेषः । काश्मीरे प्रसिद्ध इति हेमाद्रिः । स्वनामख्यातः स्वल्पकन्द उत्तरापथे इति डल्हणः । मुजाराकन्द इत्येके । काश्मीरेषु महोयक इतीन्दुः । युंजात इति पाठः । "नित्यं युंजातकाभावे तालमस्तकमिष्यते" इति ॥

**मुञ्जातकः** । क. ४. मुञ्जात ॥

**मुत्तोली** । क. १. मूटिका नाम तृणकृतपात्रविशेषः । हिं.—डलिया, गठरी ; त.—कूटै ; मल.—कूटा, मूटा ॥

**मुद्गः** । सू. २ etc. स्वनामख्यातशमीधान्यविशेषः । N. O.—*Leguminosæ* । हिं.—हारिमुं, मूङ्ग; बं.—मुग; पञ्जा.—मूंजि, मूंङ्ग; म.—मूग; गु.—मग; कों.—मूगु, मूग; तै.—पच्चपेसलु; क.—पचे हेसरु; त.—पचैप्पयरु, मूंगु, पाचिप्प-यरु; तु.—पदेङ्गि; सिं.—मुंगु, मुंएट; मल.—चेरुपयर् ചെറുപയർ, कञ्चिप्पयर्; पा.—बुनुमास; अ.—मज; फ्र.—Haricot mungo; जर्मन्.—Rauhhaarige bohne; ई.—Green gram; ल.—*Phaseolus mungo* । **नामानि**—"मुद्गस्तु सूपश्रेष्ठः स्याद्वर्णार्हश्च रसोत्तमः । भुक्तिप्रदो ह्यानन्दो भूबलो वाजिभोजनः" । रा. नि । **गुणाः**—"मुद्गो रूक्षो लघुर्ग्राही कफपित्तहरो हिमः । स्वादुरल्पानिलो नेत्र्यो ज्वरघ्नो वनजस्तथा । मुद्गो बहुविधः श्यामो हरितः पीतकस्तथा । श्वेतो रक्तश्च तेषां तु पूर्वपूर्वो लघुः स्मृतः । सुश्रुतेन पुनः प्रोक्तो हरितः प्रवरो गुणैः । चरकादिभिरप्युक्त एष एव गुणाधिकः" । भा. प्र । पुराणं ग्राह्यम् ॥

**मुद्गदलम्** । चि. ६. मुद्गस्य दाली । मूङ्गकी दाल । म.—मुङ्गा-चें वरण ॥

**मुद्गपर्णी** । चि. ३. मुद्गवत् पर्णं यस्याः सा मुद्गपर्णी । वनमुद्गविशेषः । N. O.—*Leguminosæ* । हिं.—मुगवन, मुगवनी, माठ मुगानी; बं.—मुगानी, वनमाषा; म.—मुगवेल, रानमूग; गु.—जङ्गली मग; तै.—कारुपेसलु, पिल्लपेसरचेट्टु; क.—काहेसरु; त.—नरिप्पयरु, एलि-प्पयरु; सिं.—मुंवेत्र, वल्मू; मल.—काट्टुचेरुपयर् കാട്ടുചെറുപയർ; फ्र.—Haricot a trois lobes; जर्मन्.—Dreilappige bohne; ई.—Wild bean; ल.—*Phaseolus*

*trilobus* । **नामानि**—"मुद्गपर्णी क्षुद्रसहा शिंबी मार्जारगन्धिका। वनजा रिङ्गिणी ह्रस्वा शूर्पपर्ण्यावुभे स्मृते" । ध. नि ।
**गुणाः**—"मुद्गपर्णी हिमा रूक्षा तिक्ता स्वादुश्च शुक्रला । चक्षुष्या क्षतशोथघ्नी ग्राहिणी ज्वरदाहनुत्। दोषत्रयहरी लघ्वी ग्रहण्यर्शोऽतिसारजित्" भा. प्र। मूलं सर्वांशो वा ग्राह्यः ॥

**मुद्गमाषपर्ण्यौ** । सू. १५ etc. मुद्गपर्णी माषपर्णी च ॥

**मुद्गयूषः** । चि. ३. **चतुर्भागांबुसाधितमुद्गरसः** । मूंगकी दालका यूष । Gruel of mudga । "मुद्गयूषो लघुर्ग्राही कफपित्तहरो हिमः। स्वादुर्नेत्र्योऽनिलहरः कुल्माषः शुक्रवर्धनः। रक्तपित्तज्वरहरस्तुवरस्तृप्तिकारकः। सन्निपातज्वरहरो ग्लानिनाशकरः स्मृतः"। द्रव्यगुणः ॥

**मुद्गसूपम्** । सू. ५. **मुद्गस्य दाली** । मुद्गयूषमित्येव चरकपाठः। "दधि मुद्गयूषेण संयुक्तं दद्याद्रक्तानिलापह"मिति ॥

**मुरा** । **गुर्जरदेशे स्वनामप्रसिद्धं द्रव्यम्** । ज्वरचिकित्सायां "नखरास्नामुरवचा' इत्यत्र 'मुरवचा' इत्येव संग्रहपाठः । मुरः गुग्गुलुः। उन्मादप्रतिषेधे 'व्योषं हिंगुजटां मुरां' इत्यत्र 'व्योषं हिंगु सुरां जटा'मित्येव सुश्रुतपाठः । मुरा मुराह्वं, अन्तलोपात्; अन्ये तु इन्द्रसुरा इन्द्रवारुणी, इन्द्रशब्दलोपादिति डल्हणः । मुरा, मुराह्वं देवदार्विति यावदिति हाराणचन्द्रः ॥

**मुरुङ्गी** । शिग्रुः। मुरुगी । मुरङ्गीत्येके । "मुरुङ्गी श्वेतमरिचा मधुशिग्रुः सुतीक्ष्णकः" । स. नि ॥

**मुशली** । उ. ३२. मुष्णा(स्य)ति खण्डयति दोषान् । **तालमूली नाम कन्दशाकः** । मूषकपुच्छाकारशिफा इत्येके। "मुसलं स्याद्योमे च पुंनपुंसकयोः स्त्रियाम्। तालमूल्यामाखुपर्णीगृहगोधिकयोरपि" इति मेदिनी । N. O.—*Amaryllideae* । **हिं.**—मुसली,

मूसली , कालीमुषली , नियामुसि , खिया ; बं.—तालमूली , तालुर ; म.—मुसळी ; गु.—मुसली ; कों.—भूंयिमाड्डि ; तै.—नेलताडिचेट्टु , मुसलि ; द्रखा.—कालीमुषली ; क.—नेलदाळि ; त.—निलप्पनै , तिरक्कत्तारु , तलत्ताडु ; तु.—नेलमुंद ; सिं.—बिन्तल्; मल.—निलप्पना നിലപ്പന ; इं.—Black musale ; ल.—*Curculigo orchioides* । सा श्वेतकृष्णभेदाद्विधा । नामानि—मुसली तालमूली च सुवहा तालमूलिका । गोधापदी हेमपुष्पी भूताली दीर्घकन्दिका" । रा. नि । मूलं ग्राह्यम् । गुणाः—"मुशली मधुरा वृष्या वीर्योष्णा बृंहणी गुरुः । तिक्ता रसायनी हन्ति गुदजान्यानिलं तथा" । भा. प्र । मुसली मधुरा शीता वृष्या पुष्टिबलप्रदा । पिच्छिला कफदा पित्तदाहश्रमहरा परा । मुसली स्याद् द्विधा प्रोक्ता श्वेता चापरसंज्ञका । श्वेता स्वल्पगुणोपेता अपरा च रसायनी" । रा. नि । कन्दो ग्राह्यः ॥

**मुष्ककः** । सू. १५. मुष्णाति रोगान् क्षारकत्वान्मुष्ककः । "मुष्को मोक्षकवृक्षे स्यात् सङ्घाते वृषणेऽपि च" इति मेदिनी । **पलाशवत् पर्वतवृक्षः** । N. O.—*Oleaceæ* । हिं.—मोखा , फरवाह् , मोषा ; बं.—घण्डापारूल ; म.—मोखा , मोखाडा ; गु.—मरखो ; तै.—मूकोडि , मक्कं , मोक्कपुचेट्टु , तोण्टमुक्किडि ; क.—मग्गार्ति , मकार्तिमर , मोखदलाइ ; त.—मोक्कलिङ्क ; सिं.—तेलंबु ; मल.—मलंपिळाशु മലംപിളാശു , मग्ग(क)मरं ; इं.—Weaver's beam tree : ल.—*Schrebera swietenioides* । नामानि—"मोक्षस्तु मोक्षकोपि स्याद् गोलीढो गोलिहस्तथा । क्षारश्रेष्ठः क्षारवृक्षो द्विविधः श्वेतकृष्णकः" । भा. प्र । गुणाः—"मोक्षकः कटुकस्तिक्तो ग्राह्युष्णः कफवातहृत् । विषमेदोगुल्मकण्डूवस्तिरुक्कृमिशुक्रनुत्" । भा. प्र । "मुष्ककः कटुकोऽम्लश्च रोचनः

पाचनः परः । प्लीहगुल्मोदरार्तिघ्नो द्विधा तुल्यगुणान्वितः" । रा. नि । मूलत्वगादि ग्राह्यम् ॥

**मुष्ककः** । सू. ३० कृष्णवर्णपुष्पो मुष्ककवृक्षः ॥

**मुसली** । see **मुशली** ॥

**मुस्तम्** । सू. १० etc. **मुस्ता** ॥

**मुस्तकम्** । उ. २४. महामायूरघृतयोगे मुस्तकमित्यत्र मस्तकमित्यवश्यं पठनीयम् । "तालखर्जूरमस्तकै" । मस्तकं शिरोमज्जा ॥

**मुस्ता** । सू. १५ etc. मुस्यति खण्डयति रोगान् मुस्ता, लक्ष्ये त्रिलिङ्गा स्वनामख्यातसुगन्धकन्दतृणविशेषः । N. O.—*Cyperaceae* । हिं.—मोथा ; बं.—मुथा, मुता ; म.—मोथा, मोथें ; गु.—मोथ, मोथ्य ; तै.—तुङ्गमुस्तलु, तुङ्गमुस्ते ; क.—कोरनारिगड्डे, गेकिनगड्डे, अब्दहुल्लु, तुंङ्गहुल्लु, भद्रमुस्ते ; कों.—भद्रमुष्टि ; त.—कोरैक्किळंकु ; सिं.—वंमुतु, कलान्दुरु ; तु.—तारिपन्ति ; पा.—मुश्कजमीन् ; अ.—शादकोफी ; मल.—मुत्तङ्ङा മുത്തങ്ങ, करिमुत्तङ्ङा ; इं.—Nut-grass ; ल.—*Cyperus rotundus* । नामानि—"मुस्तकं न स्त्रियां मुस्तं त्रिषु वारिदनामकम् । कुरुविन्दश्च संख्यातोऽपरः क्रोडकसेरुकः" । भा. प्र । "मुस्ता चांबुधरो मेघो घनो राजकसेरुकः । भद्रमुस्तो वराहाब्दो गांगेयः कुरुविन्दकः । जीमूतोऽथ वृषध्वांक्षी जलदोऽथ जलावहः । नादेयः पिण्डमुस्तोऽन्यो नागरः परिकीर्तितः" । ध. नि । गुणाः—"मुस्तं कटु हिमं ग्राहि तिक्तं दीपनपाचनम् । कषायं कफपित्तास्रतृड्ज्वरारुचिजन्तुहृत् । अनूपदेशे यज्जातं मुस्तकं तत्प्रशस्यते । तत्रापि मुनिभिः प्रोक्तं वरं नागरमुस्तकम्" । भा. प्र । "मुस्ता तिक्तकषायाऽग्निशिशिरा श्लेष्मरक्तजित् । पित्तज्वरातिसारघ्नी तृष्णाकृमिविनाशनी" । ध. नि । कन्दो ग्राह्यः ॥

**मूती** । उ. १६. पोटलिका । हिं.—गठरी ; मल.—किथि കിഴി ; त.—मूट्टै ; इं.—A small bundle ॥

**मूर्वा** । सू. १० etc. मूर्वति बध्नाति मूर्वा । अत एवास्या विकारो मौर्वी । स्वनामख्यातक्षुपः । कदलीसदृशस्वल्पविटपा । धनुर्गुणोपयोग्या 'दूधउड' इति लोके, अन्ये चोरस्नायुमाहुरिति डल्हणः । यया पूर्वदेशे गुणान् कुर्वन्ति धनुषाम् । "मूर्वाभावे त्वचा ग्राह्या जिङ्गिनीप्रभवा बुधै"रिति । अभावे पिप्पलीमूलमित्येके । N. O.—*Haemodoraceae* । हिं.—चुरनहार , चूर्णहार, मुरहरी, मरोरफली , मुररफली ; बं.—मुरहर , मूर्वा , शोचमुखी ; म.—मोरवेल , मुहुरसी ; गु.—मोरवेल ; तै.—विषमकोण्ट , चाग , साङ्ग ; क.—मरुग , मंजिननारुगिड , सौगवल्ली , हेग्गुरुटिके ; मुहुरसि ; त.—अरलै , मरुळ् ; पेरुंकुरुम्पै ; सिं.—मुरुवा ; मल.—कुरुम्पा കുരുമ്പ , पेरुंकुरुम्पा ; इं.—Bow-string hemp ; ल.—*Sanserieria zeylanica* । **नामानि**—"मूर्वा मधुरसा देवी मोरटा तेजनी स्रवा । मधूलिका मधुश्रेणी गोकर्णी पीलुपर्ण्यपि" । भा. प्र । **गुणाः**—"मूर्वा सरा गुरुः स्वादुस्तिक्ता पित्तास्रमेहनुत् । त्रिदोषतृष्णाहृद्रोगकण्डूकुष्ठज्वरापहा" । भा. प्र । "मूर्वा तिक्ता कषायोष्णा हृद्रोगकफवातहृत् । वमिप्रमेहकुष्ठारिर्विषमज्वरहारिणी" । रा. नि । मूलं ग्राह्यम् ॥

**मूलम्** । चि. ३. पिप्पलीमूलम् । "मूलामलकपौष्करै" रित्यत्र 'पिप्पलीमूलपौष्करै' रित्येव चरकपाठः । न पठन्त्यामलकमित्यत्र चरकविदः ॥

**मूलकम्** । सू. ६ etc. स्वनामख्यातमूलशाकविशेषः । N. O.—*Cruciferae* । हिं.—मूली , सलजम ; शलगम इत्येके ; बं.—मूली , मुला ; म.—मुळा ; गु.—मुला ; कों.—मूलो , मूल-

ङ्गि ; तै.—मुल्लंङ्गि, सूतिदंपा ; क.—मूलङ्गि, मुलङ्गि गड्डे ; त.—मुळ्ळङ्कि ; सिं.—मुल अल, राबु ; मल.—मुळ्ळङ्कि മുള്ളങ്കി, मूलेरि, कनकप्पाला ; पा.—तुर्बे ; अ.—फजल् ; सिन्धी.—मुरो ; जर्मन्.—Rubenrettig ; फ्र.—Raifort cultive; Rave; इं.—Garden radish; Long podded radish, Radish; Turnip इत्येके ; ल.—*Raphanus sativus* ।
**नामानि**—"मूलकं हरिपर्णं च मृत्तिकाक्षारमेव च । नीलकण्ठं महाकन्दं रुचिष्यं हस्तिदन्तकम्" । ध. नि । मूलादिकं ग्राह्यम् ।
**भेदगुणाः**—"मूलकं द्विविधं प्रोक्तं तत्रैकं लघुमूलकम् । शालमर्कटकं विस्रं शालेयं मरुसंभवम् । चाणक्यमूलकं तीक्ष्णं तथा मूलकपोतिका । नेपालमूलकं चान्यत्तद्भवेद्गजदन्तवत् । लघुमूलं कटूष्णं स्याद्रुच्यं लघु च पाचनम् । दोषत्रयहरं स्वर्यं ज्वरश्वासविनाशनम् । नासिकाकण्ठरोगघ्नं नयनामयनाशनम् । महत्तदेव रूक्षोष्णं गुरु दोषत्रयप्रदम् । स्नेहसिद्धं तदेव स्याद्दोषत्रयविनाशनम् । पाचनं लघु रूक्षोष्णं पत्रं मूलकजं नवम् । स्नेहस्निग्धं त्रिदोषघ्नमसिद्धं कफपित्तकृत्" । भा. प्र ॥

**मूलकपोता । चि. ९. बालमूलकम् ॥**

**मूषकः । सू. ६. आखुः ॥**

**मृगः** । सू. ६ मृग्यते व्याधैः । 'मृग अन्वेषणे' । "मृगः पशौ कुरङ्गे च करिनक्षत्रभेदयोः । अन्वेषणायां याच्ञायां मृगी तु वनितान्तरे" इति विश्वमेदिन्यौ । **हरिणः** । हिं.—हिरण ; म.—हरण ; त.—मान् ; सिं.—मुवा ; मल.—मान् മാൻ ; इं.—Deer ॥

**मृगः । चि. ७. कस्तूरी ॥**

**मृगमातृका । सू. ६. लंबोदरमृगः** । A big-bellied deer of

the vaccine shape । **गुणाः**—"शीतासृक्पित्तशमनी विज्ञेया मृगमातृका । सन्निपातक्षयश्वासकासहिक्कारुचिघ्नुत्" । सु. सू. ४६ अ । लघुपृथूदरा इति हेमाद्रिः । "शशतुल्या विजातिश्च रक्ताभा मृगमातृका" इति वैजयन्ती । "मुण्डिनी मृगमातृका" इति मदनपालः । कुरङ्गीत्यर्थेन च डल्हणः । मृगमातृका पृथूदरो गवाकृतिर्बृहदाकारो हरिणभेद इति हाराणचन्द्रः । सुश्रुतज्वरचिकित्सिते 'मृगमात्रिक' इति केषुचित् ग्रन्थेषु दृश्यते । हाराणचन्द्रस्तु 'अत्र मात्रशब्दोऽल्पार्थे' इत्युक्त्वा क्षुद्रो मृग इति व्याख्यायति । कस्तूरीमृग इति केचित् । मान्तामान् इति केरलेष्वेके । मृगमातृक इति पुल्लिङ्गपाठः समीचीन इत्यन्ये ॥

**मृगलिण्डकम्** । **सू. ६. फलविशेषः** । मृगलण्डकं मृगलण्डका मृगलिण्डकं चेति पाठान्तराणि । बृहत्तूतफलमित्येके । विभीतक इति चक्रपाणिदत्तः । 'ओटप्पळं' इति पाठ्यकारः । मृगविट्सदृशं कर्पटाख्यमिति हेमाद्रिः । "गङ्गेरुकं कर्कटकं कारकं मृगलिण्डकम् । तोदनं क्रन्दनं चान्यत् मृगविट्सदृशं तथा" । म. पा ॥

**मृणालम्** । **सू. २** etc. मृण्यते । 'मृण हिंसायाम्' । "मृणालं नलदे क्लीबं पुंनपुंसकयोर्बिसे" इति मेदिनी । **कमलनालम्** । कमलकोमलदण्डम् । मृणालं पद्ममूलात् स्थूलप्ररोहः, अन्ये तु सूक्ष्मं नालमाहुः । बिसांकुरमितीन्दुः । "पद्मनालं मृणालं स्या"दिति । **हिं.**—भसीडा, कमलकी डंडी, भिसें, कमलके नीचकी दण्डी ; **म.**—कमळाची देंठी ; **गु.**—कमळनुं नाल ; **तै.**—तामरकाडा, तामरतुंड ; **क.**—कमळदनूलु ; **त.**—तामरैत्तण्टु ; **सिं.**—नेलुदण्ड ; **मल.**—तामरत्तण्टु താമരത്തണ്ട് ; **इं.**—Stalk of the lotus plant । सूक्ष्मं कमलमूलमित्येके । "बहुकण्टकिनी सूचीकन्दलं नलिनीरुहः । पद्मनालं पद्मदण्डं मृणालमिति चोच्यते"

इति मञ्जरी । पद्ममूलात् स्थूलप्ररोहांकुर इति डल्हण: । स्थूलं सूक्ष्मं वा ग्राह्यम् । **गुणा:**—"मृणालं शीतलं वृष्यं पित्तदाहास्रजिद्गुरु: । दुर्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम् । संग्राहि मधुरं रूक्षं शालूकमपि तद्गुणम्" । भा. प्र ॥

**मृणाली** । उ. १३. **मृणालम्** ॥

**मृत** । चि. २ see **कृष्णमृत्** । सौराष्ट्रमृत्तिकेति केचित । "प्रसादश्चन्दनांभोजसेव्यमृत्भृष्टलोष्टज:" इत्यत्र "उशीरपद्मोत्पलचन्दनानां पङ्कस्य लोध्रस्य च य: प्रसाद:" इत्येव चरकपाठ: ॥

**मृत्कपालम्** । **सू. २७. खर्परम्** । हिं.—मिट्टीका डला ; मल.—मारोटु മാരോട ॥

**मृद्वीकजम्** ! चि. २. "मधुमृद्वीकजांभोजकृतोत्तंसं च तद्गुण" मित्यत्र "मधुमद्विकचांभोजकृतोत्तंस"मित्येव शुद्ध: पाठ: । अंभोजशब्दस्थाने उत्पलमिति सुश्रुत: ॥

**मृद्वीका** । **सू.** ८ etc. सौकुमार्यात् । **द्राक्षा** ॥

**मेदका** । **चि. ३. मेदा** ॥

**मेदा** । **चि**. १ etc. अष्टवर्गप्रसिद्धौषधिभेद: । "मेदा तु स्त्र्योषधीभेदे मेदने ना द्वयो: पुन: । वैदेहकनिषादीजे मत्स्यजात्यन्तरे भवेत्" इति केशवस्वामी । **स्वनामख्यातलताजातशुक्लकन्दविशेष:** । सा च मध्यदेशजाता लघुमेदा इति गौडदेशे प्रसिद्धा । सिं.—मेवनूय । "मेदकर्षभजीवकै"रित्यत्र केषुचित् ग्रन्थेषु "मेदर्षभकजीवकै"रिति पाठो दृश्यते । मेदा स्वल्पपर्णी मेदगन्धोल्पवृक्षसंज्ञक:, स च काष्ठविशेषो नखछेद्यो देशान्तरादवगन्तव्य इति शार्ङ्गधरसंहिताव्याख्यायामाढमल्ल: । मेदे काकोल्यौ जीवकर्षभकाविति राज्ञामपि दुर्लभा:, उत्तरापथे त्वसन्दिग्ध एव इत्येके ।

"मेदाजीवककाकोलीऋद्धिद्वन्द्वेऽपि चासति । वरीविदार्यश्वगन्धा-वाराहीश्च क्रमात् क्षिपेत्" । भा. प्र । "मेदाभावेऽश्वगन्धा स्या"दिति तन्त्रान्तरे । see **महामेदा** । ल—*Gymnema Aurantiacum* । Not yet identified. It is described as "endued with a dry bulbous root, which is capable of being divided by the nails, and which, when so divided, emits a secretion like animal fat. Both Meda and Mahameda are said to grow on the breast of the Himalayas, particularly, in Morung or Nepal" ॥

**मेदाद्वयम्** । चि. ३. एका मेदा मणिच्छिद्रसंज्ञा अन्या महामेदा वृक्षसहासंज्ञा । "मेदाभावे अश्वगन्धा महामेदा तु सारिवा" । अभावे शतावरी ग्राह्येत्येके । see **मेदा** ॥

**मेदायुग्मम्** । चि. ३ etc. **मेदाद्वयम्** ॥

**मेदे** । सू. १० etc. **मेदाद्वयम्** ॥

**मेषः** । सू. ११ etc. मिषति । 'मिष स्पर्धायाम्' । **पशुविशेषः** । अविः ॥

**मेषविषाणः** । उ. २४. मेषस्य शृङ्गः । मेढ़के सींङ्ग ॥

**मेषविषाणी** । उ. १४. अजशृङ्गी ॥

**मेषशृङ्गी** । सू. १५ etc. **अजशृङ्गी** ॥

**मैरेयम्** । सू. ७ etc. मिरादेशजातो आसवः । **सुराविशेषः** । "मैरेयं धातकीपुष्पगुडधान्याम्लसाधितम् । स चातुर्जातकाजाजीम-कुष्ठोषणनागरं" इति वाचस्पतिः । मैरेयो धातकीपुष्पगुडधान्य-क्षसहितमिति माधवकरः । खर्जूरासव इतीन्दुरुरुणदत्तश्च । "आ-सवस्य सुरायाश्च द्वयोरेकत्र भाजने । सन्धानं तद्विजानीयान्मैरेय-मुभयाश्रयं" इति वृद्धशौनकः । धान्यासव इति चन्द्रनन्दनः ।

सुरा पैष्टी, आसवश्च गुडयोनिः, मधु च देयमिति त्रियोनित्वम् । यदि वा पैष्टी मध्वासवो गुडश्चेति सन्धानात्त्रियोनित्वेन मैरेयो द्विविधो भवतीति डल्हणः । "मालूरमूलं बदरी शर्करा च तथैव च । एषामेकत्र सन्धाना मैरेयी मदिरा मता" । भा. प्र । कोद्रवैः सह जायते इतीन्दुरेकत्र । "मैरेयो धान्यजासव" इत्येके । अकलुषं ग्राह्यम् । गुणाः—"तीक्ष्णः कषायो मदकृद्दुर्नामकफगुल्महृत् । कृमिमेदोनिलहरो मैरेयो मधुरो गुरुः" । सु. सू. ४५ अ ॥

**मोचः** । चि. ९. शाल्मली । शिग्रुरिति केचित् ॥

**मोचम्** । सू. ३. त्वक् । "मोचचोचदलैर्युक्तम्" । कदलीफलामलरुणदत्तादयः ॥

**मोचम्** । सू. ६ etc. **कदलीफलम्** । हिं.—केलेके फल ; त.—वाळैप्पळम् ।'

**मोचजः** । उ. ३४. मोचरसः । "समङ्गामोचसर्जजः" ॥

**मोचरसः** । सू. १५ etc. **शाल्मलीवेष्टः** । "निर्यासो यस्तु शाल्मल्याः स मोचरससंज्ञकः" । हिं.—सेमरका गोंद, शेमरका आठा, लबाब, संभलके गूद ; बं.—शिमुलेर आठा ; म.— सांवरी चा डीक ; गु.—शेमलानो गून्द ; त.—इलवम्पिचिन् ; मल.—इलविन्रशा ഇലവിൻപശ । The exudation of the Salmali; Silk cotton tree's gum । **नामानि**—"मोचकः स्यान्मोचरसः शाल्मलीवेष्टकः स्मृतः" । म. पा । **गुणाः**—"मोचरसस्तु कषायः कफवातहरो रसायनो योगात् । बलपुष्टिवर्णवीर्यप्रज्ञायुर्देहसिद्धिदो ग्राही" । रा. नि ।

**मोचा** । सू. १५. शल्लकी । सल्लकीति रोध्रादिगणे सुश्रुतपाठः ॥

**मोदकः** । सू. ८. लड्डुको नाम सुस्वादुखाद्यविशेषः । हिं —

लड्डु; मिठाई इत्येके; बं.—लाडू; मोआ इति केचित्; म.—लाडु; त.—लट्टु; मल.—लड्डु ലഡ്ഡു । "मोदका लड्डुकाः प्रोक्तास्ते चानेकविधा मताः" । म. पा ॥

**मोरटः** । सू. १५ ८८८. मुरति । 'मुर वेष्टने' । **मूर्वाभेदो वृक्षविशेषः** । हिं.—क्षीरचूरीनि, नहाह; बं.—लताकराड; म.—क्षीरमोरवेल; क.—हालुसोगे; मल.—पाल्क्कुरुम्पा പാൽക്കുരുമ്പ । अङ्कोलपुष्प इति डल्हणः । हस्तिकर्णपलाश इत्येके । इक्षुमूलमिति चिकित्सितैकादशाध्यायगतकुशाद्यघृतयोग-व्याख्यायां डल्हणः । **नामानि**—"मोरटः कीर्णपुष्पश्च पीलुपुष्पो मधुस्रवः । तेजिनी दीर्घमूला च पुरुषः क्षीरमोरटः" । ध. नि । मूलं ग्राह्यम् । **गुणाः**—"मोरटः क्षीरबहुलो मधुरः स कषायकः । पित्तदाहज्वरान् हन्ति वृष्यो बलविवर्धनः" । रा. नि ॥

**मोरणम्** । सू. ५. **क्षीरविकृतिविशेषः** । फटे हुए दूधके पानीको मोरण या मोरट कहते हैं । फटे दूधका जल; रबडी; म.—नासलेलें दूध; मल.—पाल्तेलि പാൽതെളി । Milk of seven days standing, that is, when it has lost its milky nature इति A. C. Kaviratna । "सप्तरात्रात् परं क्षीरमप्रसन्नं तु मोरटम् । नष्टदुग्धं भवेन्मस्तु मोरटं जेज्जटोऽब्रवीत्" इति मदनपालः । "क्लीबं तु मोरटम् । इक्षुमूले प्रसूत्यादिसप्ताहादूर्ध्वजे गवाम् । क्षीरे मोरकसंज्ञेऽन्ये पुनर्गोरस ऊचिरे" इति केशवस्वामी । "मोरटं गोर्नवे क्षीरेऽङ्कोटपुष्पेक्षुमूलयोः" इति त्रिकाण्डशेषे । कूर्चिकायाः क्षीरशाकस्य वा घनभागव्यतिरिक्तः द्रवभागो मोरण इति हेमाद्रिः । मोरकं मोरटं चेति पाठौ । "क्षीरतुल्येन तक्रेण युक्तं मोरट ईरितः" इत्येके । मोरटः क्षीरसदृशः किलाटिकापीडन उत्तरापथे प्रसिद्ध इत्यन्ये । प्रसूतिदिनमारभ्य सप्ताहात् परतो यावत् प्रसन्नतां न गच्छति तावन्मोरटमित्युच्यते इति ड-

ल्हणः । गुणाः—"मुखशोषतृषादाहरक्तपित्तज्वरप्रणुत् । लघुर्बलकरो रुच्यो गोरटः स्यात्तिलायुतः" । भा. प्र । ४०० पीयूषः ॥

**मोहनवल्ली** । उ. ५. वृक्षादनी । ब्राह्मी शिरीषश्च इतीन्दुः । वटपत्रिकेति डल्हणः । धुस्तूरपत्रिकाव्यवहारस्तु धुस्तूरेणैव इति हाराणचन्द्रः । मंदाक इत्यरुणदत्तः । रक्तवल्लीति पाठ्यकारः । त्रिपुरमल्लीति शिवदीपिकायाम् । गंजेति कश्चित् केरलीयानुवादकः ॥

**मौक्तिकम्** । सू. ७ ७८. मुक्ता ॥

**मौक्तिकफलम्** । उ. १४. मुक्ता ॥

**मौद्गः** । सू. ६. मुद्गयूषः ॥

**मौलकः** । चि. ५. बालमूलकेण कृतो यूषः ॥

**मौशली** । उ. ३२. मुशली । शाल्मलीत्यरुणदत्तः ॥

---

# य ।

**यकृत्** । दक्षिणकुक्षेरधःस्थशरीरावयवविशेषः । हिं.—जिगार, कलेजा ; मल.—करळ् കരള്, कलीरल् । Liver । तत्स्वरूपं यथा—"अधो दक्षिणतश्चापि हृदयाद्यकृतः स्थितिः । तत्तु रञ्जकपित्तस्य स्थानं शोणितजं मतम् । प्लीहामयस्य हेत्वादि समस्तं यकृदामये । किन्तु स्थितिस्तयोर्ज्ञेया वामदक्षिणपार्श्वयोः" । भा. प्र । "यकृत् नाम बृहत्तमः प्रधानतमश्च ग्रन्थिरीषद्गर्भ आशयो वा शरीरे । स उदरगुहायां दक्षिणानुपार्श्विकदेशे प्रच्छन्नो भूम्ना, प्रसृतश्च हृदयाधारिकदेशे (क्वचिद् वामानुपार्श्विकदेशे च) स्तोकेन । सोऽयं बहिः स्निग्ध-मसृण-संहताकृतिस्त्रिकोणप्रायो ग्रन्थिर्महायतनः, पक्वतालफलवर्णश्च । आच्छादितो भागौ बहिर्भागे प्रायः सर्वत्र प्रतनुना उदर्याच्छकलाभागेन । तस्य च कलाकोषस्य याकृतकोष

इति संज्ञा। दैर्घ्यं तु यकृतो वितस्तिप्रमाणं प्रायेण, प्रस्थं मध्ये षडंगुलं प्रान्तयोस्तु न्यूनम्। गुरुत्वपरिमाणं सार्धशरावं शरावद्वयं वा। तदायतनस्य ह्रासवृद्धी तु रोगकृते" । प्र. शा ॥

**यमानी** । see **यवानी** ॥

**यवः** । **सू. ३** etc. यौति। यूयते वा। **स्वनामख्यात शूकधान्यभेदः। भेदाः**—"यवस्तु सितशूकः स्यान्निःशूकोऽतियवः स्मृतः । तोक्मस्तद्वत्स हरितस्ततः स्वल्पश्च कीर्त्तितः" । भा. प्र । "यवः सशूकनिःशूकहरितभेदैस्त्रिधा मतः" । नि. र । N. O.—*Gramineae* । **हिं.**—जौ, जवे; **बं.**—यव; **म.**—जव, जौं; **कों.**—वाञ्जि; **तै.**—यवलु; **क.**—जवेगोधि, यव; मुंडजयव; **त.**—यवैकोतुमै, पार्लियरिचि; **सिं.**—यवसाल्; **मल.**—यवं ധവം, वाल्कोतम्पं; **पा.**—जओ; **जर्मन.**—Sachszeilige Gerste; **फ्र.**—Orge anguleuse; **इं.**—Barley; **ल.**—*Hordeum vulgare* । **नामानि**—"यवस्तु मेध्यः सितशूकसंज्ञो दिव्योऽक्षतः कंचुकिधान्यराजौ । स्यात्तीक्ष्णशूकस्तुरगप्रियश्च शक्तुर्हयेष्टश्च पवित्रधान्यम्" । **गुणाः**—"यवः कषायो मधुरः शीतलो लेखनो मृदुः । व्रणेषु तिलवत्पथ्यो रूक्षो मेधाग्निवर्धनः । कटुपाकोऽनभिष्यन्दी स्वर्यो बलकरो गुरुः । बहुवातमलो वर्णस्थैर्यकारी च पिच्छिलः। कण्ठत्वगामयश्लेष्मपित्तमेदःप्रणाशनः । पीनसश्वासकासोरुस्तंभलोहिततृट्प्रणुत् । अस्मादतियवो न्यूनस्तोक्मो न्यूनतरस्ततः" । भा. प्र । पुराणं ग्राह्यम् ॥

**यवकः** । **सू. ६** etc. **शूकधान्यविशेषः**। तस्य च यवाकारास्तण्डुलाः इति डल्हणः । यवकः शूकधान्यानामपथ्यतमत्वेनाप्रकृष्टतमो भवति । Yavaka is a kind of paddy that yields a very hard and undigestible rice. Yavaka is not

yava or wheat, but a kind of small grain which the Rishis included in the class called paddy ॥

**यवक्षारः** । चि. ३ etc. **यवभस्मजक्षारः** । हिं.–जवाखार, खार; उर्दु.—यवक्षार, साजी; बं.—यवक्षार; म.—जवाखार; गु.—जवाखार; तै.—यवक्षारमु, यवखार; क.—यवक्षार; त.—चवुक्कारं, मरुप्पु; सिं.—यवकारलुणु; मल.—चवक्कारं ചവക്കാരം; पप्पटक्कारं इत्येके; दखा.—झस-का-नमक; कों.—पापडखार; अ.—जवाखार, खार; इं.—Impure carbonate of potash, Salt of Tartar, Pearl ash; ल.—*Potassium carbonas Impura* । यवशूकोद्भवः 'शीतलिका' 'यवक्षार' इति च लोके इति डल्हणः । It is prepared by reducing to ashes the green spikes of the barley, dissolving the ashes in water, straining the solution through thick cloth and evaporating it over the fire. The resulting salt is a clear amorphous powder with a saline and partly acid taste. Chemically it is carbonate of potash with some impurities. नामानि—"यवक्षारः स्मृतः पाक्यो यवजो यावशूकजः । यवाह्वः शूकजो यव्यो यावशूको यवाग्रजः" । ध. नि । सुसंस्कृतं ग्राह्यम् । गुणाः—"यवक्षारो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः । निहन्ति शूलवातामश्लेष्मश्वासगलामयान् । पाण्ड्वर्शोग्रहणीगुल्मानाहप्लीहहृदामयान् । स्वर्जिकाल्पगुणा तस्माद्विशेषाद् गुल्मशूलहृत्" । भा. प्र । "यवक्षारः कटूष्णश्च कफवातोदरार्तिनुत् । आमशूलाश्मरीकृच्छ्रविषदोषहरः सरः" । रा. नि ॥

**यवविकृतिः** । चि. ११. **यवकृतापूपादिः** । यवान्नमित्येके । see **यावकः** ॥

**यवशाकः** । सू. ६ etc. यवक्षेत्रोद्भूतो **गौडवास्तुविशेषः** । हस्व-

पत्रा चिल्लीति पदार्थचन्द्रिका । "तदेव तु बृहत्पत्रं रक्तं स्याद् गौडवास्तुकम् । प्रायशो यवमध्ये स्याद्यवशाकमतः स्मृतम्" । भा. प्र । चिल्लीसदृशं लघुपत्रमिति हेमाद्रिः । क्षेत्रवास्तुकमिति चक्रपाणिदत्तः । मल.—तोट्टचीरा തൊട്ടച്ചീര । पत्रं ग्राह्यम् ॥

**यवशूकजः** । सू. ६ etc. यवक्षारः ॥

**यवसक्तुः** । उ. ३९ भृष्टयवकृतचूर्णम् । हिं.—जौके सत्तू । गुणाः—"यवानां सक्तवो रूक्षा लेखना वह्निवर्धनाः" । रा. व ॥

**यवसुरा** । सू. ५. यवपिष्टकृतं मद्यम् । हिं.—यवोंसे बनायी हुई सुरा ; म.—जवांचें मद्य । Beer इत्येके । गुणाः—"सुरा समण्डा रूक्षोष्णा यवानां वातपित्तला । गुर्वी जीर्यति विष्टभ्य" इति चरकः ॥

**यवाख्यम्** । चि. १५. यवशाकः ॥

**यवागूः** । चि. १. यूयते पिष्टादिना । विरलद्रवा बहुसिक्था पेयाविशेषः । बं.—याउ ; म.—पातळ भात ; मल.—कञ्ञि കഞ്ഞി । "यवागूः षड्गुणे तोये संसिद्धा विरलद्रवा" इति मदनपालः । "स्वाभ्यस्तखाद्यमात्रायास्तण्डुलैस्तुर्यभागिकैः । षड्गुणेंभभि संसिद्धा यवागू विनिगद्यते" इति नावनीतकात् । see मण्डः । नामानि—"यवागूरुष्णिका श्राणा पिच्छा सा तु घनद्रवा" इति वैजयन्ती । गुणाः—"यवागूर्ज्वरतृष्णाघ्नी लघ्वी वस्तिविशोधनी । अतीसारे ज्वरे दाहे हिता वह्निप्रदीपनी" रा. व ॥

**यवागूमण्डः** । चि. १४. मण्डः ॥

**यवाग्रजक्षारः** । चि. ८. यवक्षारः ॥

**यवानकः** । चि. ८ etc. अजमोदा । तक्रारिष्टयोगे अजमोदेत्येव चरकपाठः ॥

**यवानी** । सू. १४ etc. यमानीति पाठः । यच्छत्यग्निमान्द्यम् । **स्वनामख्यातपण्यद्रव्यम्** । अजमोदाभेदः । N. O.—*Solanaceae* । **हिं.**—खुरासानी अजवायन; अजवा इन, अजमान; **बं.**—खुराशानी योयान, यमानी, जोयानि, बुस्कूल; **म.**—खुरासनी ओवा, ओंवा, खुरसाण; **गु.**—खुरसाणा अजमा, अजमा, जवाइन; **तै.**—कुरासाणि ओमं; खुरसाणवामु; **क.**—कुरासाणि ओम; **त.**—कुराचानि ओमं; **सिं.**—कोरामानि; **मल.**—कुराशाणि, कुरोसाणि; **काश्मी.**—बगारभङ्ग, इस्किरस; **सिरिया.**—अजमलुस; **पा.**—तानरख्वा; तानुख्वा; **अ.**—बुरानी कतिया, कमून मुलूकी, बस्त्रि-उल्-बन्जा; **ग्री.**—Afiyum; **फ्र.**—Jusquiame noire; **इं.**—Henbane; **ल.**—*Hyoscyamus niger* । अजमोदाबीजाद्दीर्घमेवास्य बीजम् । सा चतुर्धा—यमानीवनयमानीपारसीकखोरासानीभेदेन । **नामानि**—“यवानी दीपको दीप्यो यवसाह्वो यवाग्रजः । यवानिकोग्रगन्धा च दीपनीया च दीपनी” । ध. नि । बीजं ग्राह्यम् । **गुणाः**- “यवानी पाचनी रूच्या तीक्ष्णोष्णा कटुका लघुः । दीपनी च तथा तिक्ता पित्तला शुक्रशूलहृत । वातश्लेष्मोदरानाहगुल्मप्लीहक्रिमिप्रणुत्” । भा. प्र ॥

**यवानीकः** । चि. ६. यवानी । कफजहृद्रोगचिकित्सायां “सैलायवानीककणा” इत्यत्र यवानीकस्थाने यवानक इत्येव संग्रहपाठः ॥

**यवान्नम्** । चि. ६. यवकृताहारः । **हिं.**—यवोंका अन्न; **म.**—जवांचा भात; **मल.**—यवच्चोर् യവച്ചോറ് । Barley rice ॥

**यवासः** । चि. ८. यौति यवासः । दीर्घमूलसूक्ष्मपत्रबहुकण्टकः धन्वयासविशेषो मरुजः पृथुक्षुपविशेषः । यासः । N. O.—*Leguminosae* । **हिं.**—जवासा, दुलाह; **बं.**—यवासा, हवा-

सा ; म.—जवासा ; गु.—जवासो ; तै.—पिलरेगटि ; क.—तोरे इंगुल ; त.—पेरुकाञ्चोरि ; सिं.—यवास , वेल्कसाविलिया ; मल.—वेण्कोटित्तूवा ൩വെൺകൊടിത്തൂവ ; पा.—फाराक्युशन् , खार्-ए-शुत्रा ; अ.—अलगुल्हाज ; संकुला-जमाला ; हाजा अक्कुला ; इं.—Camel's thorn, Khorasan thorn ; ल.—*Hedysarum alhagi or Alhagi maurorum* । **नामानि**—"यासो यवासकोऽनन्तो बालपत्रोऽतिकण्टकः । दूरमूलः समुद्रान्तो दीर्घमूलो मरुद्भवः" । ध. नि । मूलं ग्राह्यम् । **गुणाः**—"यासः स्वादुः सरस्तिक्तस्तुवरः शीतलो लघुः । कफमेदोमदभ्रान्तिपित्तासृक्कुष्ठकासजित् । तृष्णाविसर्पवातास्रवमिज्वरहरः स्मृतः" । भा. प्र । वृश्चिकालीति केरलेष्वेके ॥

**यवासकः** । उ. २२. यवासः ॥

**यवोद्भवः** । उ. ३ etc. यवक्षारः ॥

**यवोद्भवक्षारः** । चि. ३. यवक्षारः ॥

**यष्टिमधुकम्** । शा. २. यष्टीमधु ॥

**यष्टी** । सू. १५ etc. यष्टीमधु ॥

**यष्टीमधु** । सू. २१. यष्ट्यां मधु अस्य । **स्वनामख्यातमधुरकाष्ठम्** । N. O.—*Leguminosae* । हिं.—मुलहठी , मीठी लकडी ; मुलैठिका ; बं.—यष्टीमधु ; म.—ज्येष्ठीमध ; गु.—जेठीमध , जेठीमधनोशीरो ; उर्दु.—मिति लकदि , असैल सूस ; तै.—अतिमधुरमु , यष्टिमधुकमु ; कों.—गोडकाष्ठ ; क.—अतिमधुर , ज्येष्ठमधु , यष्टीमधु , शीङ्कट्टगे ; त.—अतिमतुरं ; सिं.—वेल्मी ; मल.—इरट्टिमधुरं ഇരട്ടിമധുരം ; अ.—असलुस सुस , अस्लुस्सिस एमा ; पा.—वेखमहक , औसरेहा

महाका, बिखे महाका; जर्मन्.—Sussholz; फ्र.—Bois doux; इं.—Sweetwood, Liquorice; ल.—*Glycyrrhiza glabra, G. Glandulifera* । नामानि—"मधुयष्टी च यष्टी च यष्टीमधु मधुस्रवा । यष्टीकं मधुकं चैव यष्ट्याह्वं मधुयष्टिका" । ध. नि । मूलं ग्राह्यम् । गुणाः—"यष्टी हिमा गुरुः स्वाद्वी चक्षुष्या बलवर्णकृत् । सुस्निग्धा शुक्रला केश्या स्वर्या पित्तानिलास्रजित् । व्रणशोथविषच्छर्दितृष्णाग्लानिक्षयापहा" । भा. प्र ॥

**यष्टीमधुकम्** । चि. ५. यष्टीरूपं मधुकम् । यष्टीमधु ॥

**यष्ट्याह्वम्** । सू. १५ etc. यष्टीमधु ॥

**यष्ट्याह्वयम्** । उ. ७ etc. यष्टीमधु ॥

**यष्ट्याह्वा** । उ. १८. यष्टीमधु ॥

**यान्त्रिकः** । सू. ५. यन्त्रपीडित इक्षुरसः । हिं.—कोल्हूसे निकाला हुआ ईखका रस; म.—चरकांत काढलेला उंसाचा रस ॥

**यावकः** । शा. ६. चि. १४ etc. यवान्नम् । यवापूप इत्येके । वाट्यसंज्ञकः गृष्टासंज्ञको वेति केचित् । दूतादिविज्ञानीये "यावकाञ्जनभृङ्गारे"त्यत्र 'यावक'स्थाने 'प्रणीताग्नि'रित्यर्थेन 'पावक' इति पठन्ति केचित् । याचक इति पठति चरकप्रसादनी ॥

**यावशूकः** । चि. १ etc. यवक्षारः ॥

**यासशर्करा** । सू. ५. यवासशर्करा । हिं.—तुरंजबीन, म्याना; सीरखेस्ता इत्येके; करंजवीरा इति चरकप्रसादनी; म.—तवराजसाकर, धमाशाची साखर; क.—तवराज । शीरखिस्त इति पारसीकाः । Turanjabin (the manna or the sugary exudation) । यवासशर्करेति सुश्रुतपाठः । यवासक्वाथपाकघनीभावाच्छर्कराकृता यवासशर्करा इति डल्हणः । केचित् ब्रुवन्ति

दुरालभारसेन सा क्रियत इत्येवमिन्दुः संग्रहटीकायाम् । या दुरालभाक्वाथसम्मितेनेक्षुरसेन किंपाकमूलमिन्धनीकृत्य क्रियते सा यासशर्करा इति केरलेषु । किंपाकोऽत्र पारिभद्र इति पाठ्यकारः । अकलुषं ग्राह्यम् । "यवासशर्करा चान्या निर्दिष्टा यासशर्करा । स्वेदनी ह्लादनी रूक्षा कषाया स्वादुपाकिका" । ध. नि । "नार्याश्चासन्नसत्वाया दुर्वलस्य तथा शिशोः । रेचनार्थं प्रयोज्येयं क्षीणस्य स्थविरस्य च" इति ॥

**युक्तरथः** । क. ४. निरूहवस्तिभेदः । "रथेष्वपि च युक्तेषु हर्म्यश्वे चापि कल्पिते । यस्मान्न प्रतिषिद्धोऽयमतो युक्तरथः स्मृतः" इति सुश्रुतः ॥

**युक्ता** । सू. १५ etc. **रास्ना** । युक्तास्थाने फञ्जीति सुश्रुतसंहितायां रोध्रादिगणे ॥

**यूका** । शा. ५ etc. **केशकीटः** । "यूकस्तु शिरसि क्रिमि"रिति वैजयन्ती । हिं.—जूं, जूवें, चीलर; बं.—उकुण ; म.—टाण्या ; सिं.—उकुगा ; त.—पेन् ; मल.—पेन् പേൻ ; इं.—Louse । "यूका तु केशकीटः स्यात् स्वेदजः षट्पदः स्मृतः" । रा. नि ॥

**यूथिका** चि. ९. यूथो जालकमस्याः । **पुष्पक्षुपविशेषः** । "यूथिकाम्लानके पुष्पविशेषेऽपि च योषिति" इति मेदिनी । N. O.—*Jasminaceæ* । हिं.—जूही, यूही ; बं.—जुई ; यूँइ फुल, म.—पांढरी जुई ; तै.—जुइपुष्पलु ; क.—यरडुमोल्ले ; सिं.—बोलिद ; मल.—कुरुमुल्लिमुल्ला കുരുമുല്ലിമുല്ല ; ल.—*Jasminum auriculatum* । **नामानि**—"यूथिका बालपुष्पा तु पुष्पगन्धा गणोज्वला । गणिका चारुमोदा च शिखण्डी स्वर्णपुष्पिका" ।

ध. नि । यूथिका श्वेतस्वर्णभेदेन द्विधा इति भावमिश्रः । सुश्रुतसूत्रषट्चत्वारिंशत्तमाध्यायव्याख्यायामेकत्र, यूथिका वृक्षविशेषः, सा द्विधा (ईषच्छ्वेतपुष्पा) अतिश्वेतपुष्पा, पीतपुष्पा इति डल्हणः । "यूथिका त्रिप्रकारा स्या"दिति निघण्डुरत्नाकरे । "सितपीतनीलमेचकनाम्न्यः कुसुमेन यूथिकाः कथिताः । सर्वासां यूथिकानां तु रसवीर्यादिसाम्यता । सुरूपं तु सुगन्धाढ्यं स्वर्णयूथ्या विशेषतः" । रा. नि । पुष्पं ग्राह्यम् । **गुणाः**—"यूथीयुगं हिमं तिक्तं कटुपाकरसं लघु । मधुरं तुवरं हृद्यं पित्तघ्नं कफवातलम् । व्रणास्रमुखदन्ताक्षिशिरोरोगविषापहम्" । भा. प्र ॥

**यूषः** । सू. ३ etc. यूषति । 'यूष बन्धे' । धान्यक्वाथः मुद्गादिदालिकृतः । "यूषः किञ्चिद्घनः स्मृतः" । हिं.—शोर, जूस; म.—कढण; त.—कुळंबु, रचं; सिं.—झोद; मल.—चार्; इं.—Soup । Yusha is water prepared by boiling pulses in it । see **रसः** । "भृष्टमुद्गदलानां तु पलैकेन विपाचितः । पूतापनीतविदलः तनुर्यूषः कृताकृतः । वृद्धवैद्याः पलं द्रव्यं ग्राहयन्ति जलाढके । भेषजस्यातिबाहुल्यात् कदाचिदरुचिर्भवेत् । पेयामण्डादियोगेषु भेषजं यत् प्रकीर्तितम् । तत्तथैव प्रयोक्तव्यमरुचिर्न भवेद्यथा" । तोडनानन्दोद्धृतनलात् । "वैदलान् वितुषान् भृष्टान् चतुर्भागांबुसाधितान् । निष्पीड्य तोयमेतेषां संस्कृतं यूष उच्यते" इति च दृश्यते । "अष्टादशगुणेनेह वारिणा खलु साधितः । मुद्गादिभिः स्मृतो यूषो निर्यूहश्च स एव वै" इति नावनीतके ॥

**योजनवल्ली** । सू. १५. दूरप्रसरा । योजनं व्याप्य वल्लीव । मञ्जिष्ठा ॥

——oo:o:oo——

# र।

**रक्तः** । सू. ६. शालिधान्यविशेषः । लोहितक इति सुश्रुतपाठः। हिं.—लालरङ्गके शालिचावल; बं.—लालधान; म.—तांबडी साळी; मल.—चेन्नेल्लु ചെന്നെല്ല് । Red paddy । दाऊ दखानी इति मगधदेशे प्रसिद्धः। **नामगुणाः**—"रक्तशालिस्ताम्रशालिः शोणशालिश्च लोहितः। रक्तशालिः सुमधुरो लघुः स्निग्धो बलावहः। रुचिकृद्दीपनः पथ्यो मुखजाड्यरुजापहः। सर्वामयहरो रुच्यो पित्तदाहानिलास्रजित्" । रा. नि । "रक्तशालिर्वरस्तेषु बल्यो वर्ण्यस्त्रिदोषजित्। चक्षुष्यो मूत्रलः स्वर्यः शुक्रलस्तृड्ज्वरापहः। विषव्रणश्वासकासदाहनुद्वह्निपुष्टिदः। तस्मादल्पान्तरगुणाः शालयो महदादयः" । भा. प्र । पुराणं ग्राह्यम्। see **शालिः** ॥

**रक्तचन्दनम्** । सू. १५ etc. **रक्तवर्णो सुगन्धिकाष्ठविशेषः** । "रक्तचन्दनमत्यन्तं लोहितं प्रवरं मतं" इति भावमिश्रः। N. O.—*Leguminosae* । हिं.—लालचन्दन; उर्दु.—सन्दलै सुर्ख; बं.—रक्तचन्दन; म.—रक्तचन्दन; गु.—रतांजली; कों.—रचंदन; तै.—रक्तचन्दनमु, एर्रचन्दनमु, एर्रगंधपुचेक्क, कुचन्दनमु; क.—रक्तचन्दन; त.—चेञ्चन्तनं, चिकप्पु चन्तनं; सिं.—रत्सन्दुन्; मल.—रक्तचन्दनं രക്തചന്ദനം, चेञ्चन्दनं, चुवन्न चन्दनं; मुंबापुर्याम्.—रतांजलि; पा.—सन्दले सुर्ख; अ.—संदले अह्मर; दखा.—लालचन्दन; जर्मन.—Dunkelrothe flugalfrucht; फ्र.—Santal Rouge; इं.—Red Sandalwood or Red sanders; ल.—*Pterocarpus santalinus, P. Lignum* । This small tree is generally met with in the forests of southern India । काष्ठं ग्राह्यम् । **नामानि**—"रक्तचन्दनमप्यन्यल्लोहितं हरिचन्दनम् ।

रक्तसारं ताम्रसारं निर्दिष्टं क्षुद्रचन्दनम्" । ध. नि । **गुणाः**—"रक्तं शीतं गुरु स्वादु च्छर्दितृष्णास्रपित्तहृत् । तिक्तं नेत्रहितं वृष्यं ज्वरव्रणविषापहम्" । भा. प्र । **अन्यच्च**—"रक्तचन्दनमतीव शीतलं तिक्तमक्षिगदास्रदोषनुत् । भूतपित्तकफकासज्वरभ्रान्तिजन्तुवमिजित्तृषापहम्" । रा. नि । **तत्त्रिधा**—"आकृष्णमुत्तमं नूनं रक्तश्वेदश्च मध्यमम् । आरक्तमधमं विद्धि रक्तचन्दनकं त्रिधा" । भै. र । "कषायलेपयोः प्रायो युज्यते रक्तचन्दनम् । रक्तचन्दनकाभावे नवोशीरं विदुर्बुधाः" । भा. प्र ॥

**रक्तपथः** । **शा. ३. आर्तवप्रवर्तनमार्गः** । रक्तवहमिति सुश्रुतपाठः । स्मरातपत्रस्याध आर्तववहं, स्मरातपत्रं भगस्योपरितने भागे । **उक्तं च**—"विपुलपिप्पलपत्रसमाकृतेरवयवस्य शिरस्तलमाश्रितम् । सकलकामसिरामुखचुंबितं निगदितं मदनातपवारणं" इति । स्मरातपत्रमेव भगशिश्निकेति प्रसिद्धा । Clitoris । "भगशिश्निका नाम—भगपीठाधो मध्यरेखायां त्वगन्तर्निगूढो वटप्ररोहवद् नीरन्ध्रोऽवयवः । तस्याग्रभागमात्रं शिश्नमुण्डवत् लघुभगोष्ठसन्धाने दृश्यम् । छाद्यते च तत् स्तोकेन तन्व्या शिश्निकाच्छदाख्यया त्वचा । सेयं भगशिश्निका तनूकृतः शिश्नावशेष इति गर्भव्याकरणविदः" । प्र. शा ॥

**रक्तयष्टिका** । **सू. २१.** रक्तवर्णा यष्टिरस्याः । **मञ्जिष्ठा** ॥

**रक्तवर्त्मककुक्कुभः** । **सू. ६.** कुक्कुभपदस्य विशेषण एव रक्तवर्त्मकः । रक्ते वर्त्मनी यस्य स रक्तवर्त्मक इत्यरुणदत्तः । "कुक्कुभो रक्तवर्णकः इति चरकपाठः । चक्रपाणिदत्तोपि रक्तवर्णकः कुक्कुभविशेषण इति । **उक्तं हि**—"नीलच्छविः कृष्णगलः स्याद् ग्रामचटकाकृतिः । कुकुभः कर्कुभारावः स्थलजो रक्तवर्त्मकः" इति । कर्कुभ इति हेमाद्रिपाठः । "रक्तपद्मककर्कर" इत्येव केरलीया-

नां पौराणिकपाठः । "कुक्कुभो रक्तवर्तक" इति पठन्त्यपरे । रक्तवर्त्मककर्कर" इति च केषांचन पाठः । पदद्वयमित्यन्ये । see **कुक्कुभः** ॥

**रक्तशालिः** । सू. ६ etc. **शालिधान्यविशेषः** । see **रक्तः** ॥

**रक्ता** । चि. १९ etc. **मञ्जिष्ठा** । "रक्ता तु मञ्जिष्ठायां" इति नरहरिः ॥

**रक्तैरण्डः** । सू. ५. **रक्तवर्णैरण्डवृक्षः** । N. O.—*Euphorbiaceæ* । हिं.—लाल अरंड ; बं.—लालभेरेंडा ; म.—तांबडा सुर्ता एरंड ; गु.—रातो एरडो ; तै.—अमिदमुचेट्टु ; त.—चेव्वामणक्कु ; सिं.—रत् एण्डरु ; मल.—चुवन्नावणक्कु ചുവന്നാവണക്ക ; फा.—तुख्मेवेदंजीर ; अ.—हबुल खिरुवा ; इं.—Red castor oil plant । नामानि—"रक्तोऽपरो रुबूकः स्यादुरुबूको रुबुस्तथा । व्याघ्रपुच्छश्च वातारिश्चञ्चुरुत्तानपत्रकः" । भा. प्र । अस्य मूलं तैलञ्च ग्राह्यं । गुणाः—"रक्तो रुबूकस्तुवरो रसे कटुर्लघुः स्मृतः । तिक्तो वातकफश्वासकामकृम्यर्शवर्ध्महा । रक्तदोषं पाण्डुरुजं भ्रान्त्यरोचकनाशनः । प्रायस्त्वन्ये गुणाश्चास्य श्वेतवच्च समीरिताः" । see **एरण्डः** ॥

**रक्तोत्पलम्** । उ. ५. रक्तोत्पलमिव पुष्पमस्त्यस्य । **रक्तकमलम्** । हिं.—लालकमल ; बं.—लालपद्म , कोकनद ; म.—रक्तकमळ , तांबडें लघुकमळ ; गु.—रातो कमल ; क.—केम्पुतावरे ; त.—चेन्तामरै ; सिं.—रत्नेलुं ; मल.—चेन्तामरा ചെന്താമര । Red lotus । लघुरक्तपद्ममिति केचित् । **उक्तं हि**—"रक्तोत्पलं रक्तनाली अम्भिकेतं शशिप्रभम् । श्रीनिकेतं कोकनदमुत्पलं श्रीकरं तथा" । स. नि । पुष्पं ग्राह्यम् । see **कमलम्** ॥

**रक्षोघ्नः** । उ. ५. **श्वेतसर्षपः** । "रक्षोघ्नस्तु पुमाञ्छ्वेतसर्षपे त्रि तु

हन्तरि । अगनुण्ये रक्षसः स्या" दिति केशवस्वामी । ... सिद्धार्थः ॥

**रजतम्** । सू. ५ etc. **रौप्यम्** । **रजतलक्षणम्**—"दाहच्छेदनिकाशेषु सितं स्निग्धं च यद् गुरु । सुवर्णेऽपि च वर्ण्याढ्यमुत्तमं रौप्यमीरितम्" । **अन्यच्च**—"गुरु स्निग्धं मृदु श्वेतं दाहच्छेदघनक्षमम् । स्वर्णादिरहितं स्वच्छं तारं नवगुणं शुभम्" । भा. प्र । हिं.—चांदी, रूपा ; बं.—रूपा, रुपा ; म.—रुपें, चांदी ; गु.—रूपुं ; तै.—वेण्डि ; क.—बेळ्ळि ; कों.—रुपें ; त.—वेळ्ळि ; मल.—वेळ्ळि വെള്ളി ; सिं.—रिदी ; पा.—नुकरा ; अ.—फिद्दा ; बर्मा.—Ngway ; जर्मन्.—Silber ; फ्र.—Arzgent ; इं.—Silver ; ल.—*Argentum* । **नामानि**—"दुर्वर्णं रजतं रूप्यं जातरूपं जनेहितम् । तारं श्वेतं च खर्जूरं कलधौतमिहोच्यते" । स. नि । **गुणाः**—"रूप्यं शीतं कषायाम्लं स्वादुपाकरसं सरम् । वयसः स्थापनं स्निग्धं लेखनं वातपित्तजित् । प्रमेहादिकरोगांश्च नाशयत्यचिराद्ध्रुवम् । तारं शरीरस्य करोति तापं विड्बं घनं यच्छति शुक्रनाशनम् । वीर्यं बलं हन्ति तनोश्च पुष्टिं महागदान् पोषयति ह्यशुद्धम्" । भा. प्र । अन्यच्च—"तारं च तारयति रोगसमुद्रपारं देहस्य सौख्यकरणं पलितं बलिं च । वर्ण्यं विषघ्नममलं हरति प्रसह्य वृष्यं पुनर्नवकरं कुरुते चिरायुः । अपक्वतारं प्रकरोति तापं विड्बन्धनं यच्छति शुक्रनाशम् । अपाटवं वीर्यबलप्रहानिदं महागदान् पोषयति प्रसिद्धम्" । रा. नि । शोधनञ्चास्य स्वर्णवत् ॥

**रजनकः** । सू. १५. श्या. ग. **कम्पिल्लः** । रजनिकेति शिवपुरमुद्रितसंग्रहपाठः ॥

**रजनी** । उ. ३७. हरिद्रा । "रजनी नीलिनीरात्रिहरिद्राजतुकासु च" इति मेदिनी ॥

**रजनीद्वयम्** । उ. ५. निशाद्वयम् ॥

**रजन्यौ** । चि. १९ etc. **निशाद्वयम्** । महातिक्तकयोगे द्विरजनी-ति संग्रहपाठः । हरिद्रैकपदेन सुश्रुतः । अथापि तन्त्रान्तरद-र्शनाद्धरिद्राद्वयं ग्राह्यमिति डल्हणः ॥

**रम्यकम्** । चि. २१. **पटोलमूलम्** । "पटोलं स्याद्राजफलं तस्य मूले तु रम्यकं" इति त्रिकाण्डशेषः । पटोलमूलमित्येव भाष्यकारः । पर्वतनिंब इति डल्हणः । महानिंब इत्यरुणदत्तः । शम्याक इति वह्नः ॥

**रल्लकः** । चि. १. **रोमकंबलः** । Blanket of sheep wool । "समौ रल्लककंबलौ" इति वैजयन्ती । "एकार्था आविकौरभ्र-रल्लकोर्णायुकंबलाः" इति हलायुधः । see **आविकम्** ॥

**रविवल्ली** । see **सूर्यवल्ली** ॥

**रसः** । सू. १ etc. **शरीरस्थसप्तधातुषु प्रथमधातुः** । "सम्यक् पक्वस्य भुक्तस्य सारो निगदितो रसः" । **तस्य स्थानम्**— "सर्वदेहचरस्यापि स्थानं हृदयमेव च । रसस्तु हृदयं याति समा-नमरुतेरितः । स तु व्यानेन विक्षिप्तः सर्वान् धातून् विवर्धयेत्" । भा. प्र । "रसो नाम—चतुर्विधस्य पड्रसस्य द्विविधवीर्यस्याहारस्य सम्यक्परिणतस्य तेजोभूतः सारः सौम्यः । रस गतौ धातुरहर-हर्गच्छतीति रसः । स खल्वाप्यो रसो भुक्तमार्गस्थैरति सूक्ष्मैः स्रोतोभिराकृष्यमाणो यकृत्प्लीहानौ प्राप्य पाकरागानुपैति रक्त-संज्ञाश्चानन्तरं लभते । भवति चात्र—"रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम् । अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते" । (सु. सू. १४ अ.) इति प्रत्यक्षशारीरात् । "रसो गन्धरसे जले । शृङ्गारादौ विषे वीर्ये तिक्तादौ द्रवरागयोः । देहधातुप्रभेदे च पारदस्वादयोः पुमान्" इति मेदिनी ॥

**रसः** । सू. ३ etc. **मांसरसः** ॥

**रसम्** । शा. २ etc. **बोलम्** । see **जातीरसः** । "यष्टीवरारसैः", "पलाशरसकस्तूरीनलिकाजातिकोशकैः" । शारीरे बलातैलयोगे 'रस'स्थाने सर्जरसमित्येव सुश्रुतपाठः ॥

**रसकौदनः** । उ. ३९. **मांसरसयुक्तमाहारम्** । "श्रमोपवासानिलजे हितो नित्यं रसौदनः । उपवासश्रमकृते ज्वरे वाताधिके तथा । दीप्ताग्निं भोजयेत् प्राज्ञो नरं मांसरसौदनम्" । च. द । "रसौदनो गुरुर्वृष्यो बल्यो वातज्वरापहः" । भा. प्र ॥

**रसक्रिया** । **फाणिताकृतिः, काकवीति लोके** । Solid extract ।

**रसक्रियाकल्पना चेयम्**—द्रव्यापेक्षयाऽष्टगुणं षोडशगुणं वा जलं दत्वाऽष्टभागावशेषः षोडशभागावशेषो वा क्वाथः कार्यः, ततः पूतं कषायं पुनस्तावत् पचेद्यावत् फाणिताकृतिः । उक्तं हि—"गृहीत्वा क्वाथकल्पेन क्वाथं पूतं पुनः पुनः । क्वाथयेत् फाणिताकारामेषा प्रोक्ता रसक्रिया" इति । क्षुद्राञ्जनमित्येके ॥

**रसस्कंधः** । उ. १३. **मधुरवर्गः** ॥

**रसाञ्जनम्** । सू. २ etc दारुहरिद्राक्वाथेन कृत्रिमं पीतलोहितम् । "दार्वीक्वाथसमं क्षीरं पादं पक्त्वा यदा घनम् । तदा रसाञ्जनाख्यं तन्नेत्रयोः परमं हितम्" । भा. प्र । अजाक्षीरमिति केचित् । "पीतचन्दननिर्यासं रसाञ्जनमितीरितम् । तत्क्वाथजं वा भवति पीताभं वक्त्ररोगनुत्" इत्येके । "रीत्यान्तु ध्मायमानायां तत्किट्टन्तु रसाञ्जनं" इत्यन्ये । हिं.—रसोत, रशोत्; बं.—रसवत्; म.—रसांजन; गु.—रसवती; सिं.—रसन्दुन्; अ.—हुजूज; इं.—Extract of Indian Barberry ।

**नामगुणाः**—"रसाञ्जनं तार्क्ष्यशैलं रसगर्भञ्च तार्क्ष्यजम् ।

रसाञ्जनं कटु श्लेष्मविषनेत्रविकारनुत् । उष्णं रसायनं तिक्तं छेदनं व्रणदोषहृत् । रसांजनस्याभावे तु सम्यग्दार्वी प्रयुज्यते" । भा. प्र । रसाञ्जनं द्विविधमिति केचित् । "Galena or the sulphide of lead ore is sometimes called 'rasanjana' in Sanskrit and some physicians in Bengal use the lead ore or 'rasanjana', whenever this term occurs in a prescription. In the upper provinces however, 'rasanjana' is invariably translated rasot in the vernacular. This, no doubt, is the correct practice. The mistake on the part of the Bengali physicians, probably occurred from their not being acquainted with rasot, which is the produce of plants indigenous to the Himalayan range." *The materia medica of the Hindus.*

**रसाला** । सू. ३ etc. रसमलति । **शिखरिणी** । "रसाला रसना-दूर्वाविदारीमार्जिकासु च" इति मेदिनी । हिं.—सिखरन, शिखरण; दहीमें खाण्ड और काली मिर्च, जीरा, इलायची आदि मिलाकर रसाला बनती है । म.—श्रीखण्ड । Curds made fragrant by admixture । **तत्साधनविधिः**—"वस्त्रे बद्ध्वाथ गलितं दधि द्विप्रस्थमानकम् । तस्मिन् घृतं माक्षिकञ्च प्रत्येकं च पलं पलम् । निक्षिप्य शर्करां तस्मिन्मानिकाद्वितयं तथा । नागकेशरमेलात्वक्पत्रन्त्वामलमंज्ञकम् । अर्धकर्षं क्षिपेद्विश्वां मरिचाद्विपलं तथा । सर्वमेकीकृतं तत्तु भाण्डे कर्पूरवासिते । गृहीत्वा चैव वस्त्रेण सुधी वद्ध्वाथ गालयेत् । हस्तेनालोड्य यत्नेन सा रसालाभिधा स्मृता । गुणैस्तुल्या मार्जिकायाः शिखरिण्याः स्मृता बुधैः" । वै. नि । अपिच, "शर्करामरिचाक्रान्तं निरंबुमथितं दधि । शुण्ठीजीरकसंयुक्तं रसालेत्यभिधीयते" । अन्यच्च —"अपक्वतक्रं सव्योषचतुर्जातगुडार्द्रकम् । सर्जकं रसालस्यान्मार्जिता

शिखरिण्यपि" इति वैजयन्ती । नामानि- "मर्जिका शिखरिण्युक्ता रसाला सुरभिस्तथा । उल्बणी खाण्डवरसा चातुर्जातकमङ्कता" । रसालाः बहुधा ॥

**रसेन्द्रः** । उ. १३. रसः द्रवीभूतः इन्द्र इव श्रेष्ठत्वात् । पारदः । "असाध्यो यो भवेद्रोगो यस्य नास्ति चिकित्सितम् । रसेन्द्रो हन्ति तं रोगं नरकुञ्जरवाजिनाम्" । भा. प्र ॥

**रसोत्तमम्** । उ. २५. घृतम् । पारद इति बहवः । रसाञ्जनमिति शिवदीपिका ॥

**रसोनः** । सू. १०. पञ्चरसत्वात् । **लशुनः** । "रसोनो लशुनं स्मृतः" इति नरहरिः । "पञ्चभिश्च रसैर्युक्तो रसेनाम्लेन वर्जितः । तस्माद्रसोन इत्युक्तो द्रव्याणां गुणवेदिभिः" । भा. प्र । "लवणरसवियोगादाहुरेनं रसोनं लशुन इति तु संज्ञा चास्य लोकप्रतीता" इति च दृश्यते । see **लशुनः** ॥

**रागः** । सू. ३ etc. **पानकभेदः** । हिं.—शर्बतविशेष । म. मुरांबा, मोरांबे । मधुराम्ललवणं पानकं रागः, मधुराम्ललवणकटुकषायकं खाण्डव इति हेमाद्रिः । रागो—द्राक्षादिमधुरद्रव्यकृतो लोहितप्राय इति पदार्थचन्द्रिका । "सितामध्वादिमधुरा रागास्तत्राच्छकान्तयः । ते साम्लाः खांडवा लेह्याः पेयाश्चांशुकगालिताः" इति तन्त्रान्तरे । **अपि च**—"द्राक्षाक्वाथः शालिसक्तूपपन्नो मध्वांशाढ्यस्सत्रिजातस्सधान्यः । गोलोपेतः शर्करापांसुमिश्रो रागो ज्ञेयः षाडवो डाडिमाम्लः" । "सिताकचकासैन्धूत्थैः सवृक्षाम्लपरूषकैः । जंबूफलरसैर्युक्तो रागो राजिकया कृतः" इति च दृश्यते । रागखाण्डवमेकपदमित्येके । **यदाह बलः** "क्वथितस्तु गुडोपेतं सहकारफलं नवम् । तैलनागरसंयुक्तं विज्ञेयो रागषाडवः" ॥

**राजकोशातकी** । उ. ३७. राजप्रिया कोशातकी । पीतघोषा नाम भागशुक्लश्वेतफला पीतकुसुमा लताविशेषः । "कर्कोटकी कटुफला महाजालिनिरेव च । धामार्गवस्य पर्याया राजकोशातकी तथा" इति चरकः । N. O. *Cucurbitaceæ* । हिं.—घियातरुइ, तोरई, तुरै; बं.—घोषालता; म.—शिरोळी, दोडकी; गु.—धुमसहो; तै.—नारकाय; क.—हीरेबळ्ळि, भारवित रोई; तु.—पीरे, दारेपीरे; कों.—घोसाळे; त.—पीर्कु, पीरक्काथि; मल.—पीचि ०.ी०.ျ।, पीचक, पीरं, वरिप्पीचि; सिं.—वेटकोळु; नेपा.—राम तोरई; सिन्धी.—तुरी; उरिया.—जुन्हि; इं.—Luffa, Ribbed luffa; ल.—*Luffa acutangula*, *Cucumis Acutangulus*; जर्मन.—Scarfeckige Gurke । **नामानि**—"धामार्गवः पीतपुष्पो जालिनी कृतवेधना । राजकोशातकी चेति तथोक्ता राजिमत्फला" । भा. प्र । **गुणाः**—"राजकोशातकी शीता मधुरा कफवातकृत् । पित्तघ्नी दीपनी श्वासज्वरकासक्रिमिप्रणुत्" । भा. प्र । मध्यमफलं ग्राह्यम् ॥

**राजक्षवः** । सू. ६. कृष्णसर्षपः । कृष्णराजिकेति डल्हणः । राजसर्षप इति हाराणचन्द्रः । दुग्धिकेति चक्रपाणिदत्तो हेमाद्रिश्च । बृहत्पत्रः क्षवथुकारक इत्यन्ये । वनतुलसीति पाठ्यकारः । राजशाक इत्यरुणदत्तः ॥

**राजतम्** । सू. ५. रजतपात्रम् । चांदीके पात्र । मल.—वेळ्ळिप्पात्रम् ०ൌൃൈൂ०ൊ० ॥

**राजद्रुमः** । उ. २२. द्रुमाणां राजः । आरग्वधः ॥

**राजमाषः** । सू. ६. माषेषु राजा श्रेष्ठत्वात् । माषविशेषः । यस्य च बीजा वैरानरा लोबिया इत्यादयो भेदाः । "धवलो राजमाषकः" इति मदनपालः । N. O. *Leguminosæ* । हिं.—लोबिया,

रसै , वीड़ा ; बं.—बरवटीकलाय ; म.—साधारणश्वेतचवळ्या , चवळ्या , अळसुंदा ; नील उरीदु इत्यपरे ; गु.—चोला ; तै.—अलचंदलु , दंडुपेसलु , बोबेर्लु , अलसुन्दि ; क.—अलसंदि , तदगाणि , वरवट ; नीलउण्डु इति केचित् ; तु.—लत्तने ; त.—कारामणि ; कोत्तवरैकाय् इत्येके ; सिं.—लीमु , महरुन्डु ; मल.—कुरुत्तोलप्पयर् കുരുത്തോലപ്പയർ ; कोट्टप्पयर् इत्यन्ये ; पेरुंपयर् इति भास्करव्याख्या ; कों.—अलसंदे ; आसाम्.—उरोहि-महोर-पट् ; पा.—लोबिया ; अ.—फरीका ; इं.—Alsandi bean, cow gram; chinese Dolichos: ल.—*Vigna catiang, Dolichos catiang, D. sinensis* । नामानि—"क्षुवः क्षुधाभिजननश्चपलो दीर्घशिंबिकः । सुकुमारो बृहद्बीजो मधुरः क्षवकश्च सः" । रा. नि । "राजमाषो महामाषश्चपलश्चबलः स्मृतः । श्वेतो रक्तस्तथा कृष्णस्त्रिविधः स प्रकीर्तितः" । भा. प्र । पुराणं ग्राह्यम् । गुणाः—"राजमाषः सरो रुच्यः कफशुक्राम्लपित्तकृत् । तत्स्वादुर्वातलो रूक्षः कषायो विशदो गुरुः" । च. सू. २७ । "राजमाषो गुरुः स्वादुस्तुवरस्तर्पणः सरः । रूक्षो वातकरो रुच्यः स्तन्यो भूरिबलप्रदः । यो महांस्तेषु भवति स एवोक्तो गुणाधिकः" । भा. प्र । "क्षुवः कषायमधुरः शीतलः कफपित्तजित् । वृष्यः श्रमहरो रुच्यः पवनाध्मानकारकः" । रा. नि । "कषायभावान्न पुरीषभेदो न मूत्रलो नैव कफस्य कर्ता । स्वादुर्विपाके मधुरोऽलसान्द्रः सन्तर्पणः स्तन्यरुचिप्रदश्च" इति सुश्रुतः । अलसान्द्रो राजमाष इति चक्रादयः । अस्य च विपाके मधुरस्यापि प्रभावादेव बद्धविण्मूत्रवत्त्वं कफहारित्वमवृष्यत्वं चेति गयदासः । अन्ये तु तत्स्वादुरिति माषवत्स्वादुरित्याहुः , ये तु सर इत्यस्य वर्चोभेदार्थत्वं वर्णयन्ति , तन्मते सुश्रुतविरोधोऽपरिहार्य इति शिवदासः ॥

**राजवृक्षः** । चि. १०, etc. वृक्षाणां राजः, रोगराजे वृक्षोऽति वा । आरग्वधः ॥

**राजादनः** । सू. ६ etc राज्ञामदनं प्रियत्वात् । **स्वादुफलवृक्षविशेषः** । N. O. *Sapotaceae* । **हिं.**- खिन्नी, खिरनी, क्षीरी; **बं.** -क्षीरनी, क्षीरिणी, क्षीरखेजूर, खिरखेजूर; **म.**---खिरणी, रांजणी; **गु.** -रायण, रायणी; **क.** -खिरणीमारा, खेणेमारिले, ह्यद्री; **त.**---तिन्निप्पुपालै, पळमुण्णिपालै, पालकेम्बम, पालै, लीनपालै; **सिं.**---किरिपल्लु; **मल.**- पळमुणपाला or(കുളു)ാ, पळमुण्णिप्पाला; **ल.** *Mimusops Hexandra or M. Indica* । **नामानि** "क्षीरी चोक्तस्तु राजन्यः सक्षीरशुक्लको नृपः । राजादनो दृढस्कन्धः कपीष्टः प्रियदर्शनः" । ध. नि । पक्वफलं ग्राह्यम । **गुणाः** "राजादनो रसे स्वादुः पाकेऽम्लः शीतलस्तथा । रुचिकारी सर्वव्याधिनाशनश्च प्रकीर्तितः" । ध. नि । "क्षीरिकायाः फलं वृष्यं बल्यं स्निग्धं हिमं गुरु । तृष्णामूर्च्छामदभ्रान्तिक्षयदोषत्रयास्रजित्" । भा. प्र । "राजादनः पियालद्रौ क्षीरिकायां त्रिपत्रके" इति हैमः ॥

**राजाह्वः** । सू. १५. **राजादनः** । कर्णिकार इत्यरुणाह्नतः । राजादन इत्येव सुश्रुतपाठः ॥

**राजिका** । उ. ३१. **आसुरी** । कृष्णसर्षप इति भावमिश्रः । "आसुरी रक्तिका राजक्षवकः कृष्णवर्णकः । सिद्धार्थकः सितश्चेति सर्षपाश्च ईरिताः" इति दृश्यते । "राजिकाऽपि च केदारे राजसर्षपरेखयोः" इति मेदिनी ॥

**राजी** । सू. ६. **सामुद्रमीनभेदः** । राजीव एव राजी; बह्वायतः स्वनामप्रसिद्ध इति डल्हणः । राज्यः सन्त्यस्य राजीवो वक्राभ इति क्षीरस्वामी ॥

**राटः** । क. १. मदनः । राठ इति पाठः ॥

**राठः** । चि. ८ etc. मदनः ॥

**राठपुष्पम्** । उ. २. मदनपुष्पम् ॥

**राठपुष्पफलम्** । क. १. मदनवृक्षस्य पुष्पाणि फलानि च ॥

**राठमध्यम्** । उ. ३७. बालमदनफलस्य मज्जा ॥

**रामः** । उ. २४. अशोकः । मदन इत्येके । स्त्रीलिङ्गमिति केचित् । उमेति कैरली ॥

**रामठम्** । उ. ३. हिंगु ॥

**रासभः** । चि. ११ etc. रासते रासभः, रासृ शब्दे । गर्दभः । शर्कराचिकित्सिते "रासभास्थी" त्यत्र श्वेतकमलबीजमिति समर्थयति शिवदीपिकाकारः ॥

**रास्ना** । सू. १५ etc. रस्यते रास्ना । स्वनामख्यातनकुलौषधिः । "रास्नाभावे च वन्दाकः" इति भावमिश्रः । N. O. *Orchideae* । हिं.—रासयन, रायसन, रासना ; रहसनी ; बं.—रास्ना ; म.—नावळीच्या मुळ्या, रासना ; गु.—रासना ; तै.—सन्नराष्ट्रमु, किरसिचक्कु, अंतरदामर, रासना, कानपचेट्टु, बादानिके ; क.—रसगड्डे, रसना ; मरबाळे इत्येके ; त.—अरत्तै ; सिं.—अरत्त ; मल.—अरत्ता അരത്ത ; पा.—रासुन ; अ.—जंजबीलशामी ; ल.—*Vanda Roxburghii* । Rasna is an orchid growing on trees in Bengal, Behar, Guzerat, and Concan to Travancore । नामानि—"रास्ना युक्तरसा रस्या सुवहा रसना रसा । एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा" । भा. प्र । मूलं ग्राह्यम् । गुणाः—"रास्नाऽमपाचिनी तिक्ता गुरूष्णा कफवातजित् ।

शोथश्वाससमीरास्रवातशूलोदरापहा । कासज्वरविषाशीतिवाति कामयसिध्महृत्" । भा. प्र । "रास्ना तु त्रिविधा प्रोक्ता मूलं पत्रं तृणं तथा । ज्ञेयं मूलदलं श्रेष्ठं तृणरास्ना च मध्यमा । रास्ना गुरुश्च तिक्तोष्णा विषवातास्रकासजित् । शोफकंपोदरश्लेष्मशमनी पाचनी च सा" । रा. नि ॥

**रीतिपुष्पम्** । उ. १६. रीतिः पित्तलस्य पुष्पमिव । "पित्तले त्वारकूटं स्याद्रागो रीतिश्च कथ्यते" इति । पुष्पाञ्जनम् ॥

**रुचकम्** । शा. ६. ग्रीवाभरणम् । माणिक्यसंज्ञम् । वलयमिति बहवः । रोचिष्क इति लवणार्थेन पठन्ति केचित् । "सौवर्चलं मातुलुङ्गं शिला चन्दनपेषणी । ग्रीवाभरणकं चैषु चतुर्षु रुचकं स्मृतम्" इत्यनेकार्थे ॥

**रुजाकरः** । सू. १५. आर्तगल इति सुश्रुतपाठः । अर्जुनभेद इति केचित् । ककुभः सुगन्धमूलः "कौहा" इति नाम्ना पूर्वदेशे प्रसिद्ध इति डल्हणः । नीलझिंटीति भाष्यकारः । हिताल इत्यरुणदत्तः । रुजाकरस्त्वार्तगल इति पदार्थचन्द्रिका । "रुजाकरस्त्वार्तगलो हिन्तालो भीषणाह्वयः" इति निघण्टौ । भल्लातक इति पाठ्यकारः । द्विपललेति चिकित्साकलिकायाम् ॥

**रुरुः** । सू. ६. रौति रुरुः । कृष्णसारमृगभेदः । बहुशृङ्गो हरिण इति चक्रपाणिदत्तः । बहुविषाण इति हेमाद्रिः । "रुरुर्गौरमुखः प्रोक्तः" इत्येके । "रुरुर्महान् कृष्णसारः" इति वैजयन्ती । "ताम्रकः खरभू रुरुः" इत्यन्ये । बारहसिंघा इति चरकप्रसादनीकारः । "रुरुर्ना मृगदैत्ययोः" इति मेदिनी । "निकटबहुविषाणः शंबराकारदेहः सलिलतटचरस्थाच्छंबरेभ्यो विचित्रः । त्यजति शरदि शृङ्गं रौत्यतोऽसौ रुरुः स्यात् पृथुलमृगविशेषः प्रायशश्चेदिदेशे" इति सुश्रुतटीकायाम् । **मांसगुणाः**—"रुरोर्मांसं समधुरं कषा-

यानुरसं स्मृतम्। वातपित्तोपशमनं गुरु शुक्रविवर्धनम्"। सु. सू. ४६. अ। अन्यच्च—"रुरुकव्यं गुरु स्निग्धं मन्दवह्निबलप्रदम्। रा. नि॥

**रुहा**। उ. ६५. छिन्नापि रोहति। **दूर्वा**। गुडूचीति केचित्। कटुरोहिणीति भावप्रकाशहिन्दीव्याख्याता॥

**रूपिका**। उ. १८ etc. **अलर्कः**। अर्क इति केचित्। महार्कवृक्ष इत्येके। उत्तराष्टत्रिंशाध्याये 'रूषिका' इति पाठो न शुद्धः॥

**रूप्यम्**। सू. २२ etc. **रजतम्**। "रूप्यः स्यात् सुन्दरे त्रिपु। आयतस्वर्णरजते रजते च नपुंसकम्" इति मेदिनी॥

**रूषिका**। उ. २८ see **रूपिका**॥

**रेणुः**। क. ४. **पर्प्पटकः**। "रेणुः स्त्रीपुंसयोर्धूलौ पुंलिङ्गः पर्पटे पुनः" इति मेदिनी। see **पद्मरेणुः**॥

**रेणुकः**। सू. १९ etc. मरिचाकृति सुगन्धिद्रव्यम्। **हरेणु**। **तज्जातिः**—"रेणुको मुद्गतुल्यो यो सद्रः स सम्मतः सताम्। स्थूलो मरिचसङ्काशः गन्धकर्मणि गर्हितः। आनूपदेशसंभूतः मुद्गवच्चातिशोभनः। मिश्रिते मध्यमः प्रोक्तो जांगलस्त्वधमो मतः"। भैष। हिं.—रेणुका, सम्भालुके बीज, सम्भालु बीज; बं.—रेणुक; म.—रेणुकबीज; गु.—रेणुका; त.—अरेणुकं; मल.—अरेणुकं ഭാരേണുകം; ल.—*Piper Aurantiacum*। निर्गुण्डीबिजानि रेणुकाशब्दवाच्यानीत्येके। अपरे नखरअन्याः बीजमिति। **नामानि**—"रेणुका राजपुत्री च नन्दिनी कपिला द्विजा। कपिलोला पाण्डुपत्नी स्मृता कौन्ती हरेणुका"। ध. नि। बीजं ग्राह्यम्। **गुणाः**—"रेणुका तु कटुः शीता खर्जूकण्डूतिहारिणी। तृष्णादाहविषघ्नी च मुखवैमल्यकारिणी"। रा. नि। अपिच—"रेणुका कटुका पाके तिक्ताऽनुष्णा कटुर्लघुः।

पित्तला दीपनी मेध्या पाचनी गर्भपातिनी । बलासवातवैकृत्य-तृट्कण्डूविषदाहनुत्" । भा. प्र ॥

**रेणुका** । नि. ३ etc. **रेणुकः** । "रेणुकापि हरेणौ च जामदग्न्यस्य मातरि" इति मेदिनी । श्वयथुचिकित्सिते शैलेयादितैलयोगे हरेणुकेति संग्रहपाठः । कौन्तीति चरकः ॥

**रोचना** । नि. ९ etc. **गोरोचना** । "रोचना रक्तकह्लारे गोपित्तवारयोषितोः" इति मेदिनी ॥

**रोध्रः** । सू. १५ etc. रुणद्धि व्रणं रोध्रः, रलयोरैक्याल्लोध्रोऽपि । "रोध्रो ना मावरे क्लीबमपराधे च किल्बिषे" इति मेदिनी । **स्वनामख्यातवृक्षः** । लाक्षाप्रसादनः रक्तः । अंबष्ठादिगणे रोध्रः सावररोध्रश्चेति भाष्यकारपाठः । रोध्रस्य विरेचनकत्वादाचार्यडल्हणस्य तत्राभिमतः । N. O. *Styraceae* । **हिं.**—पठानीलोध ; गुलाचीन इत्येके ; **बं** —लोधगाछ , पाटिया लोध ; **म.**—तांबडा लोध्र ; **गु.**—पठाणी लोदर ; **तै.**—तेल्ललोद्दुगचेट्टु , लुड्डुगचेट्टु ; **क.**—बिळिलोद्दुगिनमर , लोध , पाचेट्टु ; **त.**—वेळ्ळिलोत्ति ; **सिं.**—लोत् ; **मल.**—पाच्चोट्टि പാച്ചോറ്റി इत्येके ; **अ.**—मुगाम ; **इं.**—Lodh tree ; **ल.**—*Symplocos Racemosa* । **नामानि**—"लोध्रो रोध्रः शाबरकस्तिल्वकस्तिलकस्तरुः । तिरीटकः काण्डहीनो भिल्ली शबरपादपः" । ध. नि । त्वग् ग्राह्या । स द्विविधः वल्कसामान्यभेदात् । तत्र विशिष्टो वल्करोध्रः । **गुणाः**—"रोध्रो ग्राही लघुः शीतश्चक्षुष्यः कफपित्तनुत् । कषायो रक्तपित्तासृग्ज्वरातीसारशोथहृत्" । भा प्र । "लोध्रयुग्मं कषायं तु शीतं वातकफास्रजित् । चक्षुष्यं विषहृत्तत्र विशिष्टो **वल्करोध्रकः**" । रा. नि । रोध्रासवस्य मध्वासव इत्येव चरकपाठः ॥

**रोध्रकः** । उ. २९. भगन्दरप्रतिषेधाध्याये "मदनसर्जरसामयरोध्रकाः" इत्यत्र "रोध्रक" स्थाने 'लांगली'रित्येव शुद्धः पाठः। रोध्रशब्दोन्यत्रापि विद्यतेस्मिन् पद्ये ॥

**रोध्रद्वयम्** । चि. ८. शाबरकरोध्रः पट्टिकारोध्रश्च । see **रोध्रः** and **श्वेतरोध्रः** ॥

**रोध्रयुग्मम्** । सू. १५ see **रोध्रद्वयम्** ॥

**रोध्रशूकः** । सू. ६. लोध्रशूकः रोध्रपुष्पश्चेति पाठौ । **शूकशालिविशेषः** । रोध्रपुष्पाकाराः शूका यस्य सः रोध्रपुष्पक इति डल्हणः ॥

**रोमकम्** । सू. ६ etc. **शांभरलवणम्** । सूर्यक्षार इति केचित् । हिं.—सांभरनोन, सामरनोन ; बं.—सामरलुण ; म.—सांबरलोण, गडलोण ; गु.—सांभरलून ; क.—गाढलवण, संभरदेशज ; सिं.—रोमलुणु ; मल.—रूमयुप्पु റുമയുപ്പു ; अ. मिलहे अवकीर । Salt from the salt-lake of Ruma near Sambar in Ajmere । शाकंभरीदेशोत्थमिति डल्हणः । रुमासरःसंभवमित्यन्ये । श्वेतलवणमित्येके । पांशुलवणमिति भाष्यकारः । शोधितं ग्राह्यम् । **नामानि**—"रोमकमौद्भिदमुक्तं वसुकं वसु पांशुलवणमूषरजम् । पांशवमौषरमैरिणमौर्वं सार्वसहं रुद्रैः" । रा. नि । **गुणाः**—"रोमकं तीक्ष्णमत्युष्णं कटु तिक्तं च दीपनम् । दाहशोषकरं ग्राहि पित्तकोपकरं परम्" । रा. नि ॥

**रोहिणी** । चि. १० etc. **कटुका** । "रोहिणी कटुरोहिण्यां रोहिणी लोहितागवोः । कण्ठरोगान्तरे भे च सोमवल्के च रोहिणी" इति विश्वः । पित्तग्रहणीचिकित्सिते 'कटुकां रोहिणी'मित्यत्र 'क-

टुकारोहिणी'मथवा 'कटुरोहिणी'मित्येकपदमिति वृद्धवैद्याः । "त्रायमाणाश्वरोहिणी"रित्यत्र 'कटुके'त्येव सुश्रुतपाठः ॥

**रोहिणी । चि. २१.** काश्मर्यो । "रोहिणी सोमवल्के मे कण्ठरोगामयोर्गवि । लोहिताकटुरोहिण्योः" इति हेमचन्द्रः ॥

**रोहिणीतिक्ता । चि. १०** etc. तिक्तरोहिणी । **कटुका** ॥

**रोहितः । मृ. ६.** रक्तत्वात् । रोहीत इति पाठः । हरिणविशेषः । "रोहितं कुंकुमे रक्ते ऋजुशक्रशरासने । पुंसि स्यान्मीनमृगयोर्भेदे रोहितकद्रुमे" इति मेदिनी । लोहितवर्ण इति हेमाद्रिः । रोहितः लोहितवर्णो मृगजातिः, अन्ये तु 'रोहिष' इति पठन्ति व्याख्यानयन्ति च–कच्छशूकर इत्यर्थः, अपरे फलशूकरमाहुरिति डल्हणः । नामानि "रोहिणो रोहितो रोही अश्वगन्धो विषाणिकः" । ध. नि । "रोहितः श्वेतराजिमान्" इति वैजयन्ती । Deer with white stripes ॥

**रोहितः । मृ. ६. मत्स्यविशेषः** । "रोहितः सर्वमत्स्यानां वरः" इति । हिं.—रोहू ; बं. रुइमाछ ; म.—रोही ; तै.—एरगीनु ; मल.—विराल् வரால் , वराल् , ब्राल् , कण्णन् ; इं.—Lamporn ; ल. *Ophiccphalus striatus* । Cypenus denticulatus इति नगेन्द्रनाथसेनः । Cyprinus Rohita इत्यविनाशचन्द्रः । **तल्लक्षणं यथा**—"यस्योदरं मुखं नेत्रं पक्षौ च रक्तवर्णकौ । किं वा पक्षौ कृष्णवर्णौ कुक्षी श्वेता प्रकीर्तिता । अङ्गचर्म भवेत् कृष्णं मुखं च वर्तुलं मतं" इति निघण्टुरत्नाकरे । "कृष्णः शल्को श्वेतकुक्षिस्तु मत्स्यो यः श्रेष्ठोऽसौ रोहितो वृत्तवक्त्रः" इति नरहरिः । "रक्तोदरो रक्तमुखो रक्ताक्षो रक्तपक्षतिः । कृष्णपुच्छो झषश्रेष्ठो रोहितः कथितो बुधै"रिति भावमिश्रः । "र-

कोदरो रक्तमुखो रोहितः मत्स्यपुङ्गव" इति मदनपालः। रोहितो रक्तांगः कृष्णपृष्ठो मत्स्य इति हेमाद्रिः। घनशल्कलः प्रसिद्ध इति डल्हणः। "प्रतिस्रोतोविचारित्वादाकाशप्लवनेन च। रोहितः प्रवरस्तेषां" इति संग्रहे। "शैवालाहारभोजित्वात् स्वप्नस्य च विवर्जनात्। रोहितो दीपनीयश्च लघुपाको महाबलः" इति चरकः। **गुणाः**– "रोहितः सर्वमत्स्यानां वरो वृष्योऽर्दितार्तिजित्। कषायानुरसः स्वादुर्वातघ्नो नातिपित्तकृत्। ऊर्ध्वजत्रुगतान् रोगान् हन्याद्रोहितमुण्डकम्"। भा. प्र॥

**रोहिषः** । चि. १२ etc. **पारिभद्रः** । प्लीहापह इतीन्दुः॥

**रोहिषम्** । चि. १ etc. यत्र तत्र रोहिति। **ध्यामकम्**। "रोहिषं कत्तृणे क्लीबं पुंसि स्याद्धरिणान्तरे" इति मेदिनी॥

**रोहीतकः** । चि. ६ etc. **दाडिमपुष्पको नाम कूटशाल्मलिवृक्षः**। दाडिमपुष्पतुल्यपुष्प इति डल्हणः। स रक्तः श्वेतश्च। **हिं.**–रोहेडा, रोहिडा; **बं.**—रोढा, रयना; **म.**–रक्तरोहिडा; **गु.**—रगत रोहिडो; **तै.**—मुलुमोदुगचेट्टु; **क.**—मलुमुत्तलु; यरडुमलु; चेम्मरं इति केरलेष्वेके; **ल.**—*Amoora rohitaka*। **नामानि**—"रोहीतको रोहितको रोही दाडिमपुष्पकः। कुशाल्मलिः शाल्मलिको रोचनः कूटशाल्मलिः"। ध. नि। **गुणाः**–"रोहितकौ कटुस्निग्धौ कषायौ च सुशीतलौ। कृमिदोषव्रणप्लीहरक्तनेत्रामयापहौ"। रा. नि। "कूटशाल्मलिकास्तिक्तः कटुकः कफवातनुत्। भेत्युष्णः प्लीहजठरयकृद्गुल्मविषापहः। भूतानाहविबन्धास्रमेदःशूलकफापहः"। भा. प्र। मूलत्वक् ग्राह्यम्। पारिभद्र इति केचित्॥

**रोहीतकलता** । चि. १३. रोहीतकवृक्षस्य शाखा॥

**रौध्रः** । चि. २. रोध्रः ॥

**रौप्यमलम्** । नि. १६. तारमाक्षिकम् । ४०० तारयम् । "तारया-द्रिजतुरौप्यायोमलाः" इत्यत्र रौप्यमिति पृथगिति केचित् ॥

**रौहीतकः** । रोहीतकः ॥

---

# ल ।

**लकुचः** । सू. ६ etc. लकयत आस्वादने लकुचः । **डहुकवृक्षः** । N. O. *Urticaceae* । हिं.—बडहर, बडहल, डहु ; बं.—डहुयागाछ, मादार, डेओ ; म.—क्षुद्रफणस, ओंट, वठारफल, पातपणस् ; कों.—पात्पणसाकॄ ; गु.—क्षुद्रफनस, लकुच ; तै.—नकेरेनु, काट्टुपनसचेट्टु ; क.—वाट्टेहुळि, आंजणु, हेच्चलसिनमर ; तु.—रेज ; त.—अंचलि, आयिनि, काट्टुपिला, आंचिनि, ईरप्पला ; सिं.—कोसगोत्रा ; मल.—अयिनि മാഞ്ഞിലി, आयिनि, अञ्जिलि, काट्टुपिलावु, अयिणि ; इं.—Jungle jack tree ; ल.—*Artocarpus hirsuta* । **नामानि**—"लकुचो लिकुचो शालः कषायी दृढवल्कलः । दृढः कार्श्यश्च शूरश्च स्थूलस्कन्धो नवाह्वयः" । रा. नि । आमपक्वफलानि ग्राह्याणि । **गुणाः**—"आमं लकुचमुष्णं च गुरु विष्टंभकृत्तथा । मधुरं च तथाम्लं च दोषत्रितयरक्तकृत् । शुक्राग्निनाशनं चापि नेत्रयोरहितं स्मृतम् । सुपक्वं तत्तु मधुरमम्लं चानिलपित्तहृत । कफवह्निकरं रुच्यं वृष्यं विष्टंभकं च तत्" । भा. प्र ॥

**लक्ष्मणा** । सू. ६ etc. लक्ष्मीरस्त्यस्याः । **स्वनामख्यातकन्दलताविशेषः** । रक्तबिन्दुच्छदा । "पुत्रकाकाररक्ताल्पबिन्दुभिर्ला-

छिंतछदा। लक्ष्मणा पुत्रजननी बस्तगन्धाकृतिर्भवे"दिति। "गो-क्षीरसदृशं पुष्पं रोमवल्लिसमन्वितम्। रक्तबिन्दुसमं पुष्पं लक्ष्मणाकारमुच्यते" इति मदनपाल:। "लक्ष्मणा त्वोषधीभेदे सारस्यामपि योषिति। रामभ्रातरि पुंसि स्यात् सश्रीके चाभिधेयवत्" इति मेदिनी। "लक्ष्मणाया अभावे तु नीलकण्ठशिखा मता" इति भावमिश्र:। N. O.—*Atropaceæ*। हिं.—लक्ष्मणा, भागेनेर; म.—लक्ष्मणा; गु.—हनुमानवेलो; क.—पुरुषगड्डे; सिं.—रसतेल्; पा.—मरदमि, गिअयाब्रुझ; अ.—अब्रुऌक, दस्तम हर्यह्; मल.—तिरुताळि തിരുതാളി इत्येके; मळार्या.—लुफाहत (Lufahat) इं.—Mandrake; ल.—*Mandragora officinalis*। **नामानि**—"लक्ष्मणा पुत्रजननी रक्तबिन्दुछदा तथा। नाशिनी शूलिनी नागवती मर्मक्रमा मता"। स. नि। **गुणा:**—"लक्ष्मणा मधुरा शीता स्त्रीवन्ध्यत्वविनाशनी। रसायनकरी बल्या त्रिदोषशमनी परा"। रा. नि। मूलं ग्राह्यम्। सूत्र-षष्ठाध्यायव्याख्यायां मधुकमिति केचित्। श्वेतकण्टकारीत्यपरे। उत्तरप्रथमाध्याये "द्वितीये लक्ष्मणासिद्धं" इत्यत्र लक्ष्मणा यष्टीत्येके। उक्तं हि—"मधुकं मधुद्रवं स्यान्मधुयष्टी यष्टिका च गन्ध्याह्वम्। यष्टीमधुकं मधु च क्लीतनिका लक्ष्मणा चेति" इति मञ्जरी॥

**लक्ष्मी:**। सू. २९. पद्मा। "लक्ष्मी: सम्पत्तिशोभयो:। ऋद्ध्यौषधे च पद्मायां वृद्धिनामौषधेऽपि च" इति मेदिनी। शमीति डल्हण:। पद्मचारिणीत्यरुणदत्त:। तुलसीति शिवदीपिका। लक्ष्मणेति केचित्। विष्णुकान्ता इत्यन्ये॥

**लघुपञ्चमूलम्**। शा. २ etc. **स्वल्पपञ्चमूली**। शालपर्ण्यादिप-ञ्चक्षुपानां मूलानि। "ह्रस्वं बृहत्यंशुमतीद्वयगोक्षुरकै: स्मृतं" इति। "शालपर्णी पृश्निपर्णी बृहती कण्टकारिका। तथा गोक्षुरकश्चैव

पञ्चमूलमिति स्मृतम्" । ध. नि । **गुणाः**—"पञ्चमूलं लघु स्वादु बल्यं पित्तानिलापहम् । नात्युष्णं बृंहणं ग्राहि ज्वरश्वासाश्मरी-प्रणुत्" । भा. प्र । ६०० **दशमूलम्** । "व्याघ्री बृहत्यतिगुहा स-गुहा श्वदंष्ट्रा संयुक्तमेभिरिति तत् कथितं कनीयः । पित्तानिलोल्ब-णविकारहरं गणाभ्यामाभ्यां भवेदिति गणो दशमूलसंज्ञः" इति चिकित्साकलिकायाम् ॥

**लट्वा** । **सू. ६.** लटति । 'लट बाल्ये' । **पक्षिविशेषः, पेञ्जीतकः** । फेञ्जाको रक्तपुच्छाधोभाग इति चक्रपाणिदत्तः । भरद्वाजभेद इत्येके । ग्राम्यचटक इत्यपरे । लट्टा इत्येव चरकोपस्कारपाठः । 'लाट' इति लोके इति डल्हणः । "लट्वा करञ्जभेदे स्यात् फले वाद्ये खगान्तरे" इति मेदिनी ॥

**लट्वा** । **उ. २२. कुसुंभः** । "लट्वा स्त्री पक्षिभेदे च कुसुंभेऽपि" इति केशवस्वामी । लंबेतीन्दुः ॥

**लट्वाकः** । **सू. ६. पत्रशाकविशेषः** । लोट्टाक इति चरकपाठः । लोट्टमारिष इति चक्रः । गुग्गुलुरितीन्दुः ॥

**लट्वाबीजम्** । **चि. ११.** कुसुंभबीजमित्येव चरकसंग्रहयोः पाठः ॥

**लता** । **शा. २.** लतति । 'लत आघाते' । **प्रियंगुः** । गन्धप्रियंगुरि-त्यरुणदत्तः । श्वेतसारिवेति केचित् । उत्पलसारिवेत्यपरे । "लता प्रियंगुशाखयोः । पृक्काज्योतिष्मतीवल्लीलताकस्तूरिकासु च । माधवीदूर्वयोः" इति मेदिनी ॥

**लता** । **उ. ५. प्रियंगुः** । शतपुष्पेत्येके । शारिबा चेतीन्दुः ॥

**लता** । **उ. २५. प्रियंगुः** । दूर्वेतीन्दुः । नतेति मुद्रितचरकपाठः । प्रियंगुरित्येव चक्रपाणिदत्तः ॥

**लंबा** । **सू. १५.** लम्बते लबि + अच् । **कटुकालाबुः** । इक्ष्वाकुरिति

सुश्रुतपाठः । "इक्ष्वाकुः कटुतुंबी स्या"दित्यमरः । "लंबा पद्मालयागौर्योस्तिक्ततुंब्यामपि स्त्रियाम्" इति मेदिनी ॥

**लवङ्गम्** । चि. ८ etc. लूयते लवङ्गम् । स्वनामख्यातपण्यद्रव्यम् । N. O.—*Myrtaceae* । हिं.—लोंग, लौंग ; बं.—लवङ्ग ; म.—लवङ्ग ; गु.—लविङ्ग ; द्राा.—लवङ्ग ; तै.—लवङ्गलु, लवङ्गमु, करवप्पू ; क.—लवङ्गकलिका ; त.—किरांपू ; सिं.—करावुनेटि ; मल.—करयांपूवु കരയാമ്പൂവ്, करांपू, ग्राम्पू ; पा.—लौंग, मेहक ; अ.—करनफूल, मीखक ; फ्र.—Girofla ; जर्मन.—Gewurznelkev ; इं.—Cloves ; ल.—*Myrtus caryophyllus*, *Caryophyllus aromaticus* । एतत्पुष्पवृन्ताण्यत्र मलाकाद्वीपादेव प्राचुर्येणानयन्ति । **नामानि**—"लवङ्गं देवकुसुमं भृङ्गारं शिखरं लवम् । दिव्यं चन्दनपुष्पं च श्रीपुष्पं वारिसंभवम्" । ध. नि । पुष्पं ग्राह्यम् । **गुणाः**—"लवङ्गं कटुकं तिक्तं लघु नेत्रहितं हिमम् । दीपनं पाचनं रुच्यं कफपित्तास्रनाशकृत् । तृष्णां छर्दिं तथाध्मानं शूलमाशु विनाशयेत् । कासं श्वासञ्च हिक्काञ्च क्षयं क्षपयति ध्रुवम्" । भा. प्र ॥

**लवणम्** । सू. १५ etc. सैन्धवम् ॥

**लवणत्रयम्** । चि. १०. सैन्धवसौवर्चलविडानि । "सैन्धवं रुचकं चैव बिडं च लवणत्रयम्" । ध. नि । विडसैन्धवकाचलवणानीत्येके ॥

**लवणद्वयम्** । चि. ६. सैन्धवं सौवर्चलं च । सेंधालवण और संचरलवण ॥

**लवणपञ्चकम्** । चि. १०. पञ्चलवणम् ॥

**लवणोत्तमम्** । चि. ५ etc. सैन्धवम् ॥

**लशुनः** । सू. ६ etc. लशति छिनत्ति रोगान् । स्वनामख्यात

कन्दशाकः । रसोनः । "कटुकश्चापि मूलेषु तिक्तः पत्रेषु संस्थितः । नाले कषाय उद्दिष्टो नालाग्रे लवणः स्मृतः । बीजे तु मधुरः प्रोक्तो रसस्तद्गुणवेदिभि"रिति भावमिश्रः। N. O. *Liliaceæ* । हिं.—लहसन, लसुन; बं.—रसुन; म.—लसूण; कों.—लसुण; गु.—लसण, शुनण; तै.—तेल्लगड्डु, वेल्लुल्लि; क.—बेळ्ळुळ्ळि; तु.—बोळ्ळुळ्ळि; त.—वेळ्ळैप्पूण्डु, वेळ्ळुळ्ळि; सिं.—सुडुळुनु, सुळ्ळुडुनु; मल.—वेळ्ळुळ्ळि വെളുള്ളി; पा.—सीर; । अ.—सूमइस्कुर्दीयुन; इं.—Garlic; ल.—*Allium sativum* । नामानि—"लशुनस्तु रसोनः स्यादुग्रगन्धो महौषधम् । अरिष्टो म्लेच्छकन्दश्च यवनेष्टो रसोनकः" । भा. प्र। कन्दो ग्राह्यः । गुणाः—"रसोनो बृंहणो वृष्यः स्निग्धोष्णः पाचनः सरः । रसे पाके च कटुकस्तीक्ष्णो मधुरको मतः । भग्नसन्धानकृत्कण्ठ्यो गुरुः पित्तास्रवृद्धिदः । बलवर्णकरो मेधाहितो नेत्र्यो रसायनः । हृद्रोगजीर्णज्वरकुक्षिशूलविबन्धगुल्मारुचिकासशोफान् । दुर्नामकुष्ठानलसादजन्तुसमीरणश्वासकफांश्च हन्ति । मद्यं मांसं तथाम्लञ्च हितं लशुनसेविनाम् । व्यायाममातपं रोषमतिनीरं पयो गुडम् । रसोनमश्नन् पुरुषस्त्यजेदेतान्निरन्तरम्" । भा. प्र । ४०० रसोनः ॥

लशुनकन्दम् । चि. १४. लशुनस्य कन्दम् ॥

लसीका । मांसान्तरगतरसविशेषः, जलसदृशी । पित्तेन स्विन्नमांसात् स्रवदुदकं 'लसीका' इत्युच्यते । "यत्तु मांसत्वगन्तरे उदकं तल्लसीकाशब्दं लभते" इति चरकः । "तस्य च रक्तस्य पाञ्चभौतिकस्यापि द्विविधमुपादानं प्राधान्येन आप्यं पार्थिवञ्च । तयोराप्यं जलवद् तरलं—लसीका नाम" इति प्रत्यक्षशारीरात् । Lymp । पुल्लुतिर इति केरलभु । "लसीका लसिका" इति वैजयन्ती ॥

**लाक्षा** । सू. २१ etc. लक्ष्यतेऽनया । रंजकद्रव्यविशेषः । "लाक्षा च नूतना ग्राह्या मृत्तिकादिविवर्जिता" इति । हिं.—लाख, लाही; बं.—लाहा, गाला, ला; म.—लाख; गु.—लाख; कों.—लाख; तै.—लक्का, लाका, लत्तुक; क.—अरगु; त.—कोम्परक्कु; अरक्कु; सिं.—लाकड; मल.—कोलरक्कु കോലരക്ക, अरक्कु; पा.—लाक; अ.—लुक, लुकमकबुल; इं.—Shell lac, lac; ल.—*Coccus Lacca* । **नामानि**—"लाक्षा पलंकषा रक्ता दीप्तिश्च कृमिजा जतु । क्षतघ्नी रङ्गमाता च द्रुमव्याधिरलक्तकः" । ध. नि । **गुणाः**—"लाक्षा तु तिक्ता तुवरा भग्नसन्धानकारिका । स्निग्धा लघ्वी च बल्या च शीता वर्णप्रदा मता । कफं पित्तं च शोषं च विषं रक्तविकारकम् । हिक्कां कासं ज्वरं चैव विषमं च विनाशयेत् । उरःक्षतं च वीसर्पनासारोगकृमींस्तथा । कुष्ठं व्रणं च त्वग्दोषं दाहं चैव विनाशयेत्" । नि. र । शोधितं ग्राह्यम् । अतीसारचिकित्सिते "लाक्षानागरवैदेही" अत्र 'लाक्षा'स्थाने द्राक्षेत्येव चरकपाठः ॥

**लाक्षारसः** । शा. १. लाक्षानिःसृतो रसः द्रवः । लाक्षाजलं क्वाथो वा । हिं.—लाखके रस; मल.—चेम्पञ्ञिन्नीर् ചെമ്പഞ്ഞിച്ചാർ, अरक्किन्नीर् । **तत्साधनविधिः**—"षड्गुणेनांभसा लाक्षा दोलायन्त्रे ह्युपस्थिता । त्रिसप्तधा परिस्राव्य लाक्षारसमिदं विदुः" ॥

**लाङ्गलिका** । सू. ३० etc. लाङ्गलं पुष्पविशेषोऽस्त्यस्याः । लाङ्गली ॥

**लाङ्गलिकी** । शा. १ etc. लाङ्गली । "अग्निज्वाला लाङ्गलिकी" इति वाचस्पतिः ॥

**लाङ्गली** । चि. ८ etc. लांगलवच्छेदनात्, लांगलाकारः पुष्पमस्य-

स्याः इति वा । गर्भपातिनी । N. O.—*Liliaceae* । हिं.—कलिहारी, कलियारी, करिहारी, कलहिंस; बं.—ईशलाङ्गला, विषलाङ्गला, विषलांगुटि; म.—कळलावी, वागचवका, खड्यानाग, नागकरिया, करियानाग; गु.—कलगारी, खड्यानाग; कों.—वागानाङ्कटा, शिवशक्ति; दखा.—नटका-बचनाग; तै.—अग्निशिख, लांगलि, अटविनाभि; क.—कोळिकुटुम, नांगुलिक, शिवशक्ति, तोटिल्, शिवरक्तिवळ्ळि, करडिकणिनगड्डे, राडागारी; त.—कान्तळ्, अक्किनिचिलं; कार्त्तिकैप्पू, कार्त्तिकैक्किळंकु, तोंदि, वेन्तोन्रि, कलप्पैक्किळंकु; सिं.—नियङ्गला; तु.—बलिपपू, केंकणुरपू; मल.—मेत्तोन्नि മേത്തോന്നി, कान्तळ्; इं.—Gloriosa, Superb lily; Wolf's bane, Glory lily; ल.—*Gloriosa or methonica superba* । The poisonous root of this elegant climbing plant is used generally by poor women for suicide in Kerala । Its bulb is one of the seven minor poisons of Sanskrit writers । नामानि—"लाङ्गल्यग्निशिखा सीरी हलिनी गर्भपातिनी । विद्युल्लता विशल्या च विषा रक्तेन्दुपुष्पिका" । स. नि । मूलं ग्राह्यम् । गुणाः—"कलिहारी सरा कुष्ठशोफार्शोव्रणशूलजित् । सक्षारा श्लेष्मजित्तिक्ता कटुका तुवरापि च । तीक्ष्णोष्णा कृमिहृल्लघ्वी पित्तला गर्भपातिनी" । भा. प्र । "पौष्करप्रभावतः कुष्ठं तथा लाङ्गल्यप्रभावतः" इति भावमिश्रः ॥

**लाजचूर्णम्** । क. ३. सक्तुः ॥

**लाजतर्पणम्** । चि. १ etc. पानीयालोडितलाजचूर्णम् । उक्तं हि—"द्रवेणालोडितास्ते स्युस्तर्पणं लाजसक्तवः" इति ॥

**लाजपेया** । चि. १. अल्पलाजाकृतपेया । मल.—मलर्क्कञ्ञि മലർക്കഞ്ഞി । खीलोंकी पेया, लाजासे बनाया हुआ मण्डरूपपेया ॥

**लाजसक्तुः** । चि. २ etc. खधिचूर्णम् । धानकी खीलके सत्तू । म.—लाह्यां चें पीठ ॥

**लाजा** । सू. ६ etc. लज्यन्ते लाजाः, 'लज भर्जने' । "खदिका लाजाः" इति त्रिकाण्डशेषे । "लाजः स्यादार्द्रतण्डुले । नपुंसक-मुशीरेऽथ स्त्रियां पुंभूम्नि चाक्षते" इति मेदिनी । भृष्टानां शालीनां तण्डुलाः । **खधिका** । हिं.—खील, धानकी खील, लावा; बं.—खइ; म.—साळीच्या लाह्या; त.—नेल्पोरि: सिं.—पोरि, विलन्द; मल.—मलर् മലർ, पोरि; ई.—Fried paddy । *Laja* is paddy fried in a sand bath । The husks open out and the rice swells into a light spongy body । "शालयः सतुषा भृष्टाः प्रस्फुटितास्तुषीकृताः । लाजाख्या" इति । अपि च—"येषां स्युस्तण्डुलास्तानि धान्यानि सतुषाणि च । भृष्टानि स्फुटितान्याहुर्लाजा इति मनीषिणः" इति भावमिश्रः । "लाजाः पुंभूम्नि परिवारकः" इति वैजयन्ती । सद्यस्कं ग्राह्यम् ॥

**लावाक्षः** । सू. ६. व्रीहिधान्यविशेषः । व्रीहेर्हीनगुणः । लावाक्षि-सदृशतण्डुलः । लावाख्यः लावाक्ष इति पाठौ । कुक्कुटाण्डकाद्धीन-गुणः । पुराणं ग्राह्यम् ॥

**लावः** । सू. ६ etc. लाति (लावयति) लूयते वा । स्थलचरपक्षि-विशेषः । "लावको लघुजङ्गल" इति त्रिकाण्डशेषः । हिं.—लवा; बं.—लाउया भाँटा, लाओया पाखी; म.—पाकोळी, लावुगे; सिं.—ऑलेयियो; मल.—पविन्पक्षि കിലാറ്റിപ്പക്ഷി, चीवल्, मेवल्; नारायणपक्षि इत्येके; त.—वानम्पाटि इति केचित्; ई.—Swallow; ल.—*Hirundo javanica* । Perdix chinensis इत्यविनाशचन्द्रः । चित्रयोधीति हेमाद्रिः । "लावा

विष्किरवर्गेषु ते चतुर्था मता बुधैः । पांशुलो गौरकोन्यस्तु पौण्ड्रको दर्भरस्तथा" इति भावमिश्रः । गौरक इत्यत्र गैरिक इत्येव केषांचिन्न पाठः । गैरिकपांशुलौ प्रसिद्धौ, पौण्ड्रकदर्भरौ देशान्तरे लोकादवगन्तव्यौ इति डल्हणः । **नामानि**—"लावा तु लावकः प्रोक्तो लावः स च लवः स्मृतः" । रा. नि । **गुणाः**—"लावा वह्निकराः स्निग्धा गरघ्ना ग्राहिका हिताः । पांशुलः श्लेष्मलस्तेषु वीर्योष्णोनिलनाशनः । गौरो लघुतरो रूक्षो वह्निकारी त्रिदोषजित् । पौण्ड्रकः पित्तकृत् किञ्चिल्लघुर्वातकफापहः । दर्भरो रक्तपित्तघ्नो हृदामयहरो हिमः" । भा. प्र । "पक्षिणाञ्च महाश्रेष्ठो लावको जाङ्गलात्मकः । संग्राही दीपनः प्रोक्तः कषायो मधुरो लघुः । तथा विपाके मधुरः सन्निपातेऽतिपूजितः" । अत्रि ॥

**लावाक्षः** । see **लाबाक्षः** ॥

**लिक्षा** । नि. १४. **वस्त्रोत्थयूकाभेदः** । हिं.—लीख ; बं.—लिखि ; म.—लिखा ; सिं.—लेढ्रिया ; मल.—कूरप्पेन् ക്കുറപ്പേൻ, शील्प्पेन्, कोट्टेरुमा ; इं.—Cloth-louse, body-louse, Wood-louse । **नामानि**—"श्वेतयूकाङ्गवस्त्रोत्था लिक्षा यूकाण्डवल्कके" । रा. नि ॥

**लूता** । सू. ५ etc. लूयते लूता । **विषात्मिका अष्टपात् नाम क्षुद्रवृत्तजन्तुः** । "लूता तु रोगे पिपीलिकोर्णनाभयोः" इति हेमचन्द्रः । हिं.—मकड़ी ; बं.—माकड़सा ; मल.—ऊराम्पुलि ഊറാമ്പുലി, चरुमाम्पुलि, चेट्टुयान् । Tarantula । "बहूपद्रवरूपा तु लूतैकैव विषात्मिका" इति दृश्यते । विषात्मिकायाः पादषट्कमिति केचित् । "लूतास्तीक्ष्णविषा हन्युः सप्ताष्टनवभिर्दिनैः । एकादशाहात् परतो विषं यासां तु मध्यमम्" इत्यलंबायनः ॥

**लेलीतकवसा** । चि. १९ etc. **गन्धकः** । गन्धकतैलमिति बहवः ।

गंधकका तेल इति शिवदीपिका । गन्धकविशेष इत्येके । "वटसौगन्धिको गन्धो गन्धको गन्धमादनः । लेलीनो गन्धपाषाणो लेलीतश्च निकृन्तकः" । रा. नि । see **गन्धपाषाणः** । गन्धक एवेति मदनपालः । पाषाणभेदः औत्तरापथिक उच्यत इति निघण्टौ इति चक्रपाणिदत्तः । लिलीहक इति पाठः । उक्तं हि—"आसीद्दैत्यो महाबाहुर्लिलिहानो महासुरः । योजनानां त्रयस्त्रिंशत् कायेनाच्छाद्य तिष्ठति । विष्णुचक्रेण संछिन्नो पपात धरणीतले । वसा तस्य समाख्याता लिलीहक इति क्षितौ" इति । उत्तरापथे रसरूपा प्रसिद्धा इतीन्दुः । अजगरवसा इत्येव केरलीयपौराणिकाभिप्रायः । सौवर्चललवणतैलमित्यरुणदत्तः । अपचीव्रणघ्नमित्यजगरवसां वृद्धवाग्भटः पठति ॥

**लोणिका** । चि. ९. लोणीका ॥

**लोणीका** । सू ६. पत्रशाकविशेषः । N. O.—*Portulaceae* । हिं.—नोनिया, नोनिया, कुल्फा, लुणियाशाक, खुरका ; सलूनक इति शिवदीपिका ; बं.—लुनी ; म.—घोळ, भूईघोळी ; गु.—लुणी झिणी, लोनी ; तै.—पइलकुर, पेद्द पविलकुरा ; क.—गोळी, दुद-गोरेयु, नुच्चुगोळीपल्य, दोड्डगोणिसोप्पु ; त.—परप्पुकीरै, उप्पुकीरै, पचिरि ; मल.—मणालि ഉ-ണലി, उप्पुचीरा ; उरिया.—पुरुणी शाग् ; पश्चा.—लोनक ; पा.—खुरफा ; अ.—खुरफा, बल्कतुलहुमका ; इं.—Common Indian parselane ; ल.—*Portulaca Oleracea* । नामानि—"लोणा लोणी च कथिता बृहल्लोणी तु घोट्टिका" इति भावमिश्रः । पत्रं ग्राह्यम् । गुणाः—"लोणी रूक्षा स्मृता गुर्वी वातश्लेष्महरी पटुः । अर्शोघ्नी दीपनी चाम्ला मन्दाग्निविषनाशिनी । भा. प्र ॥

**लोध्रः** । see **रोध्रः** ॥

लोध्रशूकः । रोध्रशूकः ॥

लोपाकः । सू. ६ etc. लाङ्गलकमृगो नाम महालांगूलो ह्रस्वशृगालः । "लोपाको लोमशः स्मृतः" इति । लोआ इति लोके । हिं.—लोमडी ; मल.—कुरुनरि കുറുനരി, चेरुकुरुक्कन् ; म.—लोगडाख्य शृगालभेद ; त.—नरि ; इं.—Fox ; ल.—*Vulpes bengalensis* । The fox has the size and shape of a middle-sized dog, but its head is pointed and its legs are shorter than those of the dog. The tail is long and bushy with a black tip and the fur of a grayish colour । स्वल्पशृगालो महालांगूल इति चक्रपाणिदत्तः । लोपाकः शृगालभेदः 'लाङ्गलक' इति लोके इति डल्हणः । जंबुकसदृश इति हेमाद्रिः । पृथुजंबुक इति वैजयन्ती । लोपाश इति पाठः ॥

लोमशम् । चि. २२. तमालपत्रम् । मांसीत्येके ॥

लोमशा । चि. २ etc. लोमानि बाहुल्येन सन्त्यस्याः । मांसी । "लोमशो मुनिमेषयोः । लोमान्विते स्त्रियां काकजंघामांसीवचासु च । शूकशिंबिमहामेदाकाशीशे डाकिनीभिदि" इति मेदिनी ॥

लोलनम् । नि. २. चालनं, इतस्ततोऽऽनयनम् । लोठनमिति मुद्रितचरकपाठः ॥

लोष्टम् । सू. २. मृत्पिण्डः । कपालमित्येव चरकसुश्रुतयोः पाठः । घटादीनां खर्परम् । शिरोस्थ्यर्थेन Skulls इति चरकांग्लेयानुवादकः । see मृत्कपालम् ॥

लोहम् । चि. ४ etc. अगुरु । "लोहं तैजसपात्रे च मरिचे हेम्न्ययस्यपि । गन्धद्रव्येऽप्यगुर्वाख्ये" इति केशवस्वामी । कफनाशकधूमपानयोगे 'लोध्र'मिति पठति चरकः । तस्मिन्नेवाध्याये जीवन्त्यादिचूर्णयोगे वातशोणितचिकित्सिते मधुयष्ट्यादितैलयोगे चागर्वित्येव चरकपाठः ॥

**लोहम्** । उ. ११. लोहति, लुह्यते, वा । 'लुह गार्ध्ये' । **स्वनामख्यातधातुः** । अयस् । "लोहोऽस्त्री शस्त्रके लोहे जोंगके सर्वतैजसे" इति मेदिनी । तद्धि स्थावरमप्ययस्कान्तसान्निध्यात् चलति । **हिं.**—लौहा, लोओया; **बं.**—लोहा, लोया; **म.**—लोखंड; **गु.**—लोढुं; **उर्दु.**—लोहचन; **दखा.**—लोहा; **कों.**—लोखंड; **तै.**—इनुमु; **त.**—इरुम्पु, अयं; **सिं.**—यकड; **मल.**—इरुम्पु ഇരുമ്പ്; **मलायी.**—बासि; **बर्मा.**—थान; **अ.**—हदीद; **पा.**—आहन; **इं.**—Iron; **लॅ.** *Ferrum* । **नामानि**—"लोहं शस्त्रं घनं पिण्डं तीक्ष्णं पारशवं शिवम् । अयः कृष्णायसं वीरं भ्रमरं कृष्णलोहकम्" । ध. नि । शोधितमारितं ग्राह्यम् । मुण्डतीक्ष्णभेदेन सामान्यतस्तद्द्विविधम् । **गुणाः**—"लोहं तिक्तं सरं शीतं मधुरं तुवरं गुरु । रूक्षं वयस्यं चक्षुष्यं लेखनं वातलं जयेत् । कफं पित्तं गरं शूलं शोथार्शःप्लीहपाण्डुताः । मेदोमेहक्रमीन् कुष्ठं तत्किट्टं तद्वदेव हि" । भा. प्र । **अशुद्धलोहदोषाः**—"षण्ढत्वकुष्ठामयमृत्युकारी हृद्रोगशूलौ कुरुतेऽश्मरीञ्च । नानारुजानां च तथा प्रकोपं कुर्याच्च हृल्लासमशुद्धलोहम्" । भा. प्र । **शोधनविधिः**—"पत्तलीकृतपत्राणि लोहस्याग्नौ प्रतापयेत् । निषिञ्चेत्तप्ततप्तानि तैले तक्रे च कांजिके । गोमूत्रे च कुलत्थानां कषाये च त्रिधा त्रिधा । एवं लोहस्य पत्राणां विशुद्धिः संप्रजायते" । भा. प्र । "कूष्माण्डं तिलतैलञ्च माषान्नं राजिकां तथा । मद्यमम्लरसं चापि त्यजेल्लोहस्य सेवकः" । भा. प्र ॥

**लोहितगैरिकम्** । उ. १३. **स्वर्णगैरिकम्** । पदद्वयमिति केचित् । लोहितं पत्तङ्गमिति । कुंकुममित्यपरे ॥

**लोहितयष्टिका** । चि. १९ ८७. **मञ्जिष्ठा** । "नलदनालदकलोहितयष्टिका" इत्यत्र मञ्जिष्ठेत्येव सुश्रुतपाठः ॥

लोहिता । चि. २१ etc. मञ्जिष्ठा ॥

लोहितिका । क. ४. मञ्जिष्ठा ॥

लौहम् । see लोहम् ॥

## व ।

वंशः । सू. १७ etc. वमति । 'टुवम उद्गिरणे' । वनति, वन्यते वा । 'वन शब्दे' । "वंशः पुंसि कुले वेणौ पृष्ठावयववर्गयोः" इति मेदिनी । पुष्पघातको नाम पत्रशाकवृक्षः । N. O.—*Gramineaceae* । हिं.—बांस, भासा; बं.—बांश; म.—बांबू, वंश, वेळू, वासा, भरीव वेळू; गु.—वांश, वांस; तै.—वेदुरु; क.—बिदिरु, बिदुरु, गळ; कों.—वासो; दखा.—बांस; तु.—बेट्र; त.—मूंकिल्; सिं.—उनगस्; मल.—मुळा മുള, मूङ्किल्, इल्लि; पा.—कसब; फ्रा.—Bambou-commun; जर्मन.—Gemeiner Bambos; इं.—Common prickly Bamboo, Bamboo; ल.—*Bambusa Arundinaceae* । नामानि—"वंशो वेणुर्यवफलः कार्मुकस्तृणकेतुकः । त्वक्सारः शतपर्वा च मस्करः कीचकस्तथा" । रा. नि । गुणाः—"वंशः सरो हिमः स्वादुः कषायो वस्तिशोधनः । छेदनः कफपित्तघ्नः कुष्ठास्रव्रणशोथजित्" । भा. प्र । स द्विधा सामान्यो रन्ध्रवंशश्च । मूलं ग्राह्यम् ॥

वंशः । शा. ४. पृष्ठवंशः । मल.—तण्टेल्लु തണ്ടെല്ല് । Backbone, Spine ॥

वंशकरीरः । सू. ६ etc. वंशमूलांकुरः । वंशो वेणुः करीरोंकुरः । हिं.—बाँसका कल्ले, बांसके छडका; बं.—कोँड; म.—वेळूचें

कोंब; क.—बिदिरकलिल ; सिं.—किलिल्ल् ; मल.—मुळया-
ण्टल्ल् മുളയാണ്ടല്, इल्लिक्कूम्पु ; इं.—Young shoot of the
bamboo । नामानि—"वंशाग्रं तु करीरः स्याद्वंशांकुरपरः
स्मृतः" । ध. नि । गुणाः—"वंशकरीराः श्लेष्मघ्नाः सकषायविदाहिनः" । रा. व । "तत्करीरः कटुः पाके रसे रूक्षो गुरुः
सरः । कषायः कफकृत्स्वादुर्विदाही वातपित्तलः" । भा. प्र ।
उत्तरद्वादशाध्याये "तालवंशकरीरज"मित्यत्र पदद्वयमिति केचित् ॥

**वंशजः** । उ. १२. वंशकरीरः ॥

**वंशजो यवः** । वंशयवः ॥

**वंशत्वक्** । उ. १८. वंशनिर्लेखः । बांसके छिलके, बांसकी
छाल, छली ; मल.—मुळमोरि മുളമൊരി ॥

**वंशनिर्लेखः** । उ. ३७. वंशत्वक् ॥

**वंशबीजः** । उ. ३६. वंशयवः ॥

**वंशयवः** । सू. ६. वंशवृक्षजातो यवाकारः द्रव्यविशेषः । वेणुजधान्यम् । हिं.–बांसके चावल ; म.–वेळूचें बीज ; तै.–वेदुरुबियमु ;
क.—बिदरकी ; बं.—बांशेर धान ; त.—मूङ्गिलरिचि ; मल.—
मुळयरि മുളയരി ; इं.—Seed of the bamboo । नामानि—
"वेणुजो वेणुबीजश्च वंशजो वंशतण्डुलः । वंशधान्यं च वंशाह्वो
वेणुवंशद्विधायवः" । रा. नि । पुराणं ग्राह्यम् । गुणाः—"तद्यवास्तु सरा रूक्षाः कषायाः कटुपाकिनः । वातपित्तकरा उष्णा बद्धमूत्राः कफापहाः" । भा. प्र । "शीतः कषायो मधुरस्तु रूक्षो मेहक्रिमिश्लेष्मविषापहश्च । पुष्टिं च वीर्यं च बलं च दत्ते पित्तापहो वेणुयवः प्रशस्तः" । रा. नि । मेदोहरमिति चरकः । तच्च देशभेदाद्बहुविधम् ॥

**वक्रम्** । उ. १६ ७८. नगरम् । नगरमित्येव संग्रहपाठः । "वक्रो

ता विण्णावपि शरभयं । अङ्गारके च क्लीबं तु गन्धद्रव्यान्तरे विदुः । तगराख्ये" इति केशवस्वामी । मूषिकाविषप्रतिषेधे" शिरीषरजनीवक्रकुंकुमामृतवल्लिभि"रित्यत्र 'वक्र'स्थाने कुष्ठमिति सुश्रुतपाठः ॥

**वङ्गम्** । उ. १३. वङ्गति । 'वगि गतौ' । रङ्गधातुः । "वङ्गं सीसकरङ्गयोः । नार्ङ्गेऽपि च कार्पासे पुंभूम्नि नीवृदन्तरे" इति मेदिनी । "वङ्गः कार्पासे वृन्ताके वङ्गा जनपदान्तरे । वङ्गं त्रपुणि सीसे च" इति हैमः । "खुरकं मिश्रकं चेति द्विविधं वङ्गमुच्यते । खुरकं च गुणैः श्रेष्ठं मिश्रकं नरसेवितं" इति । तच्छोधनविधिर्यथा,—"रङ्गनागौ प्रतप्तौ च गलितौ तौ निषेचयेत् । त्रिधा त्रिधा विशुद्धिः स्याद्रविदुग्धेऽपि च त्रिधा" । अशोधितवङ्गदोषा यथा,—"वङ्गं विधत्ते खलु शुद्धिहीनं तथाह्यरक्तञ्च किलासगुल्मौ । कुष्ठानि शूलं किल वातशोथं पाण्डुं प्रमेहञ्च भगन्दरञ्च । विशेषमं रक्तविकारवृन्दं क्षयञ्च कृच्छ्राणि कफं ज्वरञ्च । मेहाश्मरीविद्रधिमुख्यरोगान् नागोऽपि कुर्यात् कथितान् विकारान्" । हिं.—रांगा, कथीर, कथल, वङ्ग ; बं.—रांग, वंगा ; म.—कथील, कल्हायी ; गु.—कथीर, कलई ; दखा.—कथिल ; तै.—वेन्दि, तगरमु ; क.—तवरे, तवर ; कों.—तवरे ; त.—वेळ्ळीयं, तकरं ; सिं.—सुदु ईयं ; मल.—वेळ्ळीयं ൦൦ള്ളീയ൦, वेळुत्तीयं ; बर्मा.—खायि-माफ्यन् (Khai-maphyn) अ.—रसास्, रसास्, अब्रुस ; पा.—जरबीज, उर्झिझ ; इं.—Tin, Pewtercalx ; ल. *Stannum* । **नामानि**—"श्वेतसीसं ज्वलं तूलं राजार्हं मरसं त्रपु । रङ्गं वङ्गं च शुभ्रं च वङ्गपर्यायवाचकः" । म. नि । शोधितमारितं ग्राह्यम् । **गुणाः**—रङ्गं लघु सरं रूक्षमुष्णं मेहकफक्रिमीन् । निहन्ति पाण्डुं सश्वासं चक्षुष्यं पित्तलं मनाक् । सिंहो यथा हस्तिगणं निहन्ति तथैव वङ्गोऽखिलमेहवर्गम् । देहस्य सौख्यं प्रबलेन्द्रियत्वं नरस्य पुष्टिं विदधाति नूनम्" । भा. प्र ॥

**वचा** । सू. १० etc. वक्त्यनया वचा, वाक्पाटवकृत् । स्वनामख्यातपण्यद्रव्यम् । "वचः कीरे वचौषधौ । सारिकायाञ्च वाग्वाचे भारत्यां वचने स्त्रियौ" इति मेदिनी । N. O.—*Aroideæ* । हिं.—बच, घोरवच ; बं.—बच ; म.—वेखंड ; गु.—गोडवज, वज ; कों.—एखंड ; तै.—वस, वडज, नल्लवस ; क.—बजेगिड, नारुबेरु, वच ; द्रखा.—वच ; तु.—वजे ; त.—वचंपु, चटकोतन्, चाटिनं ; सिं.—वद्कह ; मल.—वयम्पु വയമ്പ ; पा.—सोसनजर्द ; अ.—उद्लबुज ; इं.—Sweet-flag root ; Orris root इत्येके ; ल.—*Acorus calamus* । "अत्युग्रापि सरागापि ग्रन्थिलापि परा भवेत् । अन्तःशुचित्वमात्रेण वचा कर्मणि गर्हिता" । गोमूत्रे पञ्चपल्लवोदके पक्त्वा पश्चात् सुगन्धजलेन स्वेदनात् वचा हरिद्रा च शुद्धा भवति । **नामानि**—"वचोग्रगन्धा षड्ग्रन्था गोलोमी शतपर्विका । क्षुद्रपर्णी च मङ्गल्या जटिलोग्रा च लोमशा" । भा. प्र । मूलं ग्राह्यम् । **गुणाः**—"वचोग्रगन्धा कटुका तिक्तोष्णा वान्तिवह्निकृत् । विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी । अपस्मारकफोन्मादभूतजन्त्वनिलान् हरेत्" । भा. प्र । **वचाद्भुतगुणाः** "अब्दियीं पयसाज्येन मासमेकं तु सेविता । वचा कुर्यान्नरं प्राज्ञं श्रुतिधारणसंयुतम् । चन्द्रसूर्यग्रहे पीतं पलमेकं पयोन्वितम् । वचायास्तत्क्षणं कुर्यान्महाप्रज्ञान्वितं नरम्" । हृद्रोगचिकित्सायां "यवानीलवणक्षारवचाजाज्यौषधै"रित्यत्र 'वचा'स्थाने 'द्विवचा' इत्येव चरकपाठः । कल्पचतुर्थाध्याये "सुरदारुवचारास्ने"त्यत्र 'वचा'स्थानेऽवश्यं 'वरा' इति पठितव्यं सुश्रुतमतानुसारिणा । तस्मिन्नेव पद्ये वचार्थेन 'षड्ग्रन्था'मपि दृश्यते ॥

**वज्रः** चि. १९. भेदकत्वात् । **स्नुही** । "वज्रः स्नुक्स्त्री स्नुही गुडा" इत्यमरः ॥

**वज्रम्** । उ. ३६. महारत्नान्यतमं रत्नम् । **हीरकम्** । "वज्रोऽस्त्री हीरकास्त्रयोः" इति वैजयन्ती । हिं.—हीरा ; बं.—हिरे ; म.—हिरा ; गु.—हिरो ; क.—वज्र ; सिं.—दियमन्ति ; मल.—वैरक्कल्लु ; पा.—इल्माश ; इं.—Diamond ; ल.—*Adamos* । नामानि—"वज्रो वज्रमणिर्वज्रा वज्रमाणिक्यकं मतम्" । स. नि । अशुद्धहीरकदोषाः—"अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथां तथा । पाण्डुतां पंगुलत्वं च तस्मात् संशोध्य मारयेत्" । मारितस्य वज्रस्य गुणाः—आयुः पुष्टिं बलं वीर्यं वर्णं सौख्यं करोति च । सेवितं सर्वरोगघ्नं मृतं वज्रं न संशयः" । भा. प्र । अन्यच्च—"हीरकः सारकः शीतः कषायो मधुरस्तथा । चक्षुष्यो वान्तिकृत् पापालक्ष्मीनाशकरो धृतः" ॥

**वज्रप्रोक्ता** । उ. ५. स्नुही । सुधेतीन्दुः । वज्रकन्द इति डल्हणः । ऋष्यप्रोक्तेति शतावरीत्यर्थेन हाराणचन्द्रः । श्वेतकुश इति शिवदीपिकायाम । अस्थिशृंखलेति पाठ्यकारः ॥

**वंजुलः** । सू. १५. अशोकः । "वञ्जुलः पुंसि तिनिशे वेतसाशोकयोरपि" इति मेदिनी । वेतस इति डल्हणारुणदत्तप्रभृतयः । दीर्घपत्रो वेतस इत्येके । न्यग्रोधादिगणे वेतसादशोक एव सर्वथा समीचीनः । भाष्यकारोपि तन्मतमनुसरति ॥

**वटः** । सू. २४ etc. वट(य)ति वेष्टयति मूलैर्वटः । **न्यग्रोधो नाम छायावृक्षविशेषः** । "वटी त्रिपु गुणे पुंसि स्यान्न्यग्रोधकपर्दयोः" इति मेदिनी । N. O.—*Urticaceae* । हिं.—बड़ , बर , बर्गट , बरगद ; बं.—बट ; म.—वड ; गु.—वड ; उत्.—बोर ; कों.—गोइलिरुकु , वोडरुकु ; तै.—मरिचेट्टु , पेद्दमरि ; क.—आलदमर , गोळीमर ; तु.—गोळिदमर ; त.—आलमरं , एकवाचं ; सिं.—नुग ; मल.—पेराल् പേരാല്, आल्मरं ;

बर्मा.—पियि-न्यौङ्ग ; फ्र.—Figuier due Bengal ; इं.—Banyan tree ; ल.—*Ficus Bengalensis, F. Indica* । नामानि—"वटो रक्तफलः शृङ्गी न्यग्रोधः स्कन्धजो ध्रुवः । क्षीरी वैश्रवणावासो बहुपादो वनस्पतिः" । ध. नि । गुणाः—"वटः कषायो मधुरः शिशिरः कफपित्तजित् । ज्वरदाहतृषामोहव्रणशोफापहारकः" । रा. नि । "वटः शीतो गुरुर्ग्राही कफपित्तव्रणापहः । वर्ण्यो विसर्पदाहघ्नः कषायो योनिदोषहृत्" । भा. प्र । त्वगादिकं पक्वफलं च ग्राह्यम् ॥

**वटप्ररोहः** । चि. २, वटस्य शाखाधोभागनिःसृतकोमलारुणतनुदीर्घमूलम् । म.—पारंबी ; वडाच्या पारंब्या ; मल.—पेराल् वेटु പേരാലിവേട് । वटारोहा इति लोके इत्याढमल्लः । वटावरोह इति चरकपाठः ॥

**वटशुङ्गा** । शा. १ etc. वटवृक्षस्य प्रथमोद्भूतमुकुलितपल्लवप्रायतरुणदलविशेषः । मल.—पेराल्मोट्टु പേരാലിമൊട്ട് ; हिं.—वटके नवीनकोमलपत्ते ; तोतेके चोंचके समान निकलने वाली वटकी कोंपल इति शिवदीपिका । वटस्य कोमलपल्लवमित्याढमल्लः । शुङ्गा नूतनपत्रांकुर इति डल्हणः । अविकसितनववटपल्लव इति चक्रपाणिदत्तः । प्रथमोद्भिन्नपत्रांकुरमितीन्दुः । पित्तजच्छर्दिचिकित्सायां "जंब्वाम्रपल्लवोशीरवटशुङ्गावरोहजः" इत्यत्र "जंब्वाम्रपल्लवोशीरवटाश्वत्थांकुरोद्भवः" इत्येव संग्रहपाठः ॥

**वडवा** । शा. ६. तुरङ्गमस्त्री हिं.—घोड़ी ; म.—घोडी ; त.—पेण्कुतिरै ; मल.—पेण्कुतिरा പെൺകുതിര ; इं.—*Mare* । "अम्यश्वा वडवार्वती" इति वैजयन्ती । "वडवा द्विजयोषिति । अश्वायां कुंभदास्यां च नारीजात्यन्तरेऽपि च" इति मेदिनी ॥

**वड्रैला** । उ. ६ see **भद्रैला** ॥

**वत्सकः** । सू. १० etc. वस्ते त्वचम् । **कुटजः** । "**वत्सः संवत्सरे** वृक्षभेदे कुटजसंज्ञके । ऋषिभेदे च" इति केशवस्वामी ॥

**वत्सकबीजम्** । चि. ९ etc. **कुटजफलम्** ॥

**वत्साख्यम्** । उ. ३५. **वत्सनाभो नाम कन्दविषभेदः** । "ग्रीवास्तंभो वत्सनाभे पीतविण्मूत्रनेत्रता" इति सुश्रुतः । "सिन्दुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा । यत्पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः" इति ॥

**वध्रम्** । सू. २५, नि. १४. वध्रीति पाठः । **वरत्रा, चर्मरज्जुः** । "वध्रं त्रपुवरत्रयोः" इति मेदिनी । A leathern strap or thong । **मल.—तोल्नाटा** തോൽനാട, तोल्वार् ; **हिं.—तसमा**, चमडेकी पट्टी ; **सिं.—वरपट** ; **म.—वादी** ; **त.—तोल्वार्** । केरलेषु केचिदसिरिति सप्रमादं व्याख्यायन्ति । **वध्र इत्येव चरकपाठः** । मांसपेशीति चक्रपाणिदत्तः । **चर्मलतेति चरकोपस्कारे** । "वध्री नध्री वरत्रा च" इति वैजयन्ती ॥

**वनतिक्तकः** । सू. ६. **किराततिक्तः** । किराततिक्त इत्येव सुश्रुतपाठः । किराततिक्तकमिति हेमाद्रिः । कुटज इति बहवो व्याख्यातारः । कासघ्नी नाम बृहतीभेद इति केरलेष्वेके । पथ्यसुन्दरमिति चक्रपाणिदत्तः । तद्धरीतकीति समर्थयति केचित् । नलखण्डक इतीन्दुः । उत्पलशाकमित्यपरे ॥

**वनमहिषः** । उ. ३९. **वनसञ्चारी महिषः** । **मल.—काट्टुपोत्तु** കാട്ടുപോത്ത ; **इं.**—Gaur, or Bison ; **ल.**—*Bos gaurus* ॥

**वनितपयः** । उ. ३०. **स्तन्यम्** ॥

**वन्यम्** । सू. १५ etc. **परिपेलवम्** । श्वयथुचिकित्सिते शैलयादितैलयोगे प्लव इति चरकपाठः । शिरोरोगप्रतिषेधे "वन्यामरतरुभ्यां वा" इत्यत्र "भद्रदारुकुटन्नटाभ्यां वा" इति संग्रहपाठः ॥

**वमनी** । चि. १९. शणपुष्पी । अर्क इति पाठ्यकारः ॥

**वयस्था** । चि. ४ etc. रसायनत्वात् । **आमलकः** । "वयस्था तु स्त्रियां ब्राह्मी गुडूच्यामलकीषु च । सूक्ष्मैलायाञ्च काकोल्यां पथ्यायां तरुणे त्रिषु" इति मेदिनी । महापैशाचिकघृतयोगे वयस्थेत्यत्र ब्राह्मीति केचित् । सूक्ष्मैलेति चक्रपाणिदत्तः । क्षीरकाकोलीत्येके । see **महापुरुषदन्ता** ॥

**वयस्था** । चि. ६, उ. ५. **गुडूची** । क्षीरकाकोलीत्येके । आमलकीत्यरुणदत्तः । हृद्रोगचिकित्सायां "शुण्ठीवयस्थालवणकायस्थाहिंगुपौष्करैः । पथ्यया चे"त्यत्र 'वयस्थाकायस्था' इति पदद्वयस्थाने 'वयःकयस्था' इत्येव चरकपाठः । वयःकयस्थेत्यत्र गुडूचीस्वरसग्रहणमिति चक्रपाणिदत्तः । उत्तरपञ्चमाध्याये "वज्रप्रोक्ता वयस्था च" इत्यत्र हरीतकीति हाराणचन्द्रः ॥

**वयस्या** । चि. ४. आमलकः ॥

**वरम्** । सू. १०. लवणश्रेष्ठत्वात् । **सैन्धवम्** ॥

**वरकः** । सू. ६ etc. **तृणधान्यविशेषः** । स्थूलप्रियंगुः । षष्टिकभेद इति केचित् । वरको वरटिका शाकंभरीभूमौ प्रायशः । हिं.—वटी, चीनाभेद ; बं.—चीनाविशेषः, बोरो ; म.—वऱ्या ; गु.—वऱ्यो ; मल.—वनृतिना വരിത്തിന ; करिंकुरुवा इति भास्करव्याख्या ; इं.—Great millet । **नामगुणाः**—"वरकः स्थूलकंगुश्च रूक्षः स्थूलप्रियंगुकः । वरको मधुरो रूक्षः कषायो वातपित्तकृत्" । रा. नि । पुराणं ग्राह्यम् ॥

**वरणः** । सू. ६ etc. **वरुणः** । "वरणो वरणद्रुमे । प्राकारे वरणं वृत्यां" इति हैमः । "वरणे वरुणः सेतुस्तिक्तशाकः कुमारकः" इत्यमरः । वरणो माल इति सुन्दरापदार्थचन्द्रिके । तमाल इति

वरुणवृक्षस्यापि पर्यायो विद्यते । सेतुवृक्ष इति हेमाद्रिः । वरुण इत्येव सुश्रुतपाठः" ॥

**वरलवणम्** । उ. १३. सैन्धवम् ॥

**वरा** । सू. १४ etc. **त्रिफला** । शारीरप्रोक्तबलातैलयोगे सुश्रुत-संहितायां त्रिफलार्थो यत्र कुत्रापि न विद्यते । अणुतैलयोगे वरेत्यत्र वरीति पाठः समीचीनश्चरकमतानुसारिणाम् ॥

**वराङ्गम्** । चि. ५ etc. वरमङ्गं त्वग्रूपमस्य । **त्वक्** । "वराङ्गं योनिमातङ्गमस्तकेषु गुडत्वचि" इति मेदिनी ॥

**वराहः** । सू. ६ etc. वराय अभीष्टाय मुस्तादिलाभाय आहन्ति खनति भूमिम् । **शूकरः** । "वराहो नाणके किरौ । मेघे मुस्ते गिरौ विष्णौ" इति हैमः । हिं.—सूअर; बं.—शूकर; म.—डुक्कर; त.—पन्रि; सिं.—ऊरा; मल.—पन्नि ചന്നി; इं.—Pig, hog, boar; ल.—*Sus cristatus* । **नामानि**—"शूकरो रोमशः पोत्री कोलो घोणिः किरिः किटिः । दंष्ट्री क्रोष्टु-स्तूष्वरोमा भूदारश्च वराहकः" । म. पा । स ग्राम्यवन्यभेदाद्विवि-धः । "अन्यस्तु विड्वराहः स्याद् ग्रामीणो ग्रामसूकरः । ग्राम्य-क्रोडो ग्राम्यकोलो विघ्नाशी दारकश्च सः" । रा. नि । **गुणाः**—"वराहमांसं गुरु वातहारि वृष्यं बलस्वेदकरं वनोत्थम् । तस्माद्-गुरु ग्रामवराहमांसं तनोति मेदोबलवीर्यवृद्धिम्" । रा. नि । अन्यच्च—"सौकरं पिशितं स्वादु बल्यं वातापहं गुरु । स्निग्धो-ष्णं शुक्रलं रुच्यं निद्रास्थूलत्वदार्ढ्यकृत्" । ध. नि । "स्वेदनं बृंहणं वृष्यं शीतलं तर्पणं गुरु । श्रमानिलहरं स्निग्धं वाराहं बल-वर्धनम्" । सु. सू. ४६ ॥

**वरी** । शा. २ etc. **शतावरी** ॥

**वरुणः ।** वृणोति वरुणो वरणश्च पर्णिकवृक्षत्वात् । **तिक्तशाकद्रुमः ।** "वरुणस्तरुभेदेऽप्सु पश्चिमाशापतावपि" इति मेदिनी । N. O.—*Capparidaceae* । **हिं.**—बरना, बरुन, तपिया, बिलासि, बिलि; **बं.**—बरुणगाछ, तिकोशाक; **म.**—वायवरणा, भाटवर्णा; **गु.**—वायवारणो; **तै.**—उरुमट्टि, जाजिचेट्टु, उलिमिरिचेट्टु, उसकिया; **क.**—नारुंबेळे, मवलङ्ग, होळेनेक्कि, नीर्वालमर; मद्वसले इत्येके; **कों.**—नारवाला; भाटवरणा; **त.**—माविलिंकु, अतिचारणं, माविलिङ्कै; **सिं.**—लुणुवरण; **तु.**—तुदेनेक्कि; **मल.**—नीर्मातळं നീർമാതളം, नीर्वाल्; **इं.**—Three leaved caper; **ल.**—*Crataeva nurvala*, *C. Religiosa* । वरण इति पाठः । **नामानि**—वरुणः श्वेतपुष्पश्च तिक्तशाकः कुमारकः । श्वेतद्रुमो गन्धवृक्षस्तमालो मारुतापहः" । ध. नि । त्वगादिकं ग्राह्यम् । **गुणाः**—"वरुणः कटुरुष्णश्च रक्तदोषहरः परः । शीर्षवातहरः स्निग्धो दीप्यो विद्रधिवातजित्" । रा. नि । "वरुणः पित्तलो भेदी श्लेष्मकृच्छ्राश्ममारुतान् । निहन्ति गुल्मवातास्रक्रमींश्चोष्णोऽग्निदीपकः । कषायो मधुरस्तिक्तः कटुको रूक्षको लघुः" । भा. प्र ॥

**वर्तकः ।** **सू.** ६ etc. वर्तत इति वर्तकः । **पक्षिविशेषः ।** वर्तीरादल्पः । वर्तीरभेद इति डल्हणः । "वर्तकस्तु खुरेऽश्वस्य विहगे वर्तिका द्वयोः" इति मेदिनी । **हिं.**—बटेर; **बं.**—बाटेर; भारुइ इत्येके; **म.**—गांजीणपक्षी; **त.**—काटै; **सिं.**—वटु; **मल.**—काटा കാട; **इं.**—Quail; **ल.**—*Coturnix* । Partridge इति केचित् । **नामानि**—"वर्तको वर्तिको वर्तिगांखिकायश्च कथ्यते" । रा. नि । **गुणाः**—"वर्तको विशदो वृष्यो यथा लावस्तथैव च" । अत्रि । "मेध्योऽग्निवर्धनो वृष्यो ग्राही वर्णप्रसाद-

कृत् । वर्तिकः कटुकः पाके कषायो वातजिल्लघुः" । ध. नि ।
वट्टही ख्याता इति चक्रपाणिदत्तः । "वर्तीको वर्तकश्चिन्नस्ततोल्पा
वर्तका मता" इति च दृश्यते ॥

**वर्तिका** । मृ. ६. **वर्तकसदृशः पक्षिविशेषः** । न वर्तकस्य योषित् ।
द्रमिडभाषायां 'विच्चुळिळ' इति केचित् । वर्तिकावर्तकावाकार-
तारतम्येन 'बारइ' इति 'भारइ' इति च शब्दितौ द्वौ पक्षिणाविति
हाराणचन्द्रः । "वर्तिका विष्णुलिङ्गी स्या"दिति त्रिकाण्डशेषे ॥

**वर्तीकः** । मृ. ६. **स्वल्पप्रमाणो पक्षिविशेषः** । वातीक इति चरक-
पाठः । वातिक इति शिवपुरमुद्रितसंग्रहपाठः । वनचटक इति
हेमाद्रिः । स्वल्पः संघातचारी चटकभेदः वगेडा इति लोके इति
डल्हणः । टिट्टिभ इति केरळेष्वेके । "वार्तीको वर्तिचटको वार्ती-
कश्चैव स स्मृतः" इति भावमिश्रः ॥

**वर्तीरः** । मृ. ६. **क्षुद्रपक्षिविशेषः** । कपिञ्जलादल्पो वर्तीकात्
किञ्चिन्महान् वर्तिकसदृश एवेति डल्हणः । कपिञ्जलभेद इति
चक्रपाणिदत्तः । घरघरा इत्याख्यायते इति हाराणचन्द्रः । वातीर
इति पाठः ॥

**वर्मिः** । मृ. ६ etc. **उरगाकृतिर्दीर्घो मत्स्यविशेषः** । हिं.—
बांभी ; बं.—बाइम ; म.—वावी ; मल.—मलिञ्ञीन् മലിഞ്ഞീൻ, मनिञ्ञिल् ; इं.—Eel; Ban fish इत्येके ; ल.—
*Muroenidoe* । The Eel has an elongated snake-like
body and a flattened tail, bordered by a fin-band ।
**गुणाः**—"वर्मिमत्स्यो गुरुर्वृष्यः कषायो रक्तपित्तहा" । राज.
व । अपिच,—"वर्मिमत्स्यो हरेद्वातं पित्तं रुचिकरो लघुः" ।
भा. प्र । सर्पाकारो मत्स्य इति डल्हणः । "मयूरवर्मिकूर्माश्च"
इत्यत्र चरकपाठे "रोहितो मत्स्यानां" इति वचनात् वर्मिः रोहित

इत्येके । 'आरल्मीन्' इति पाश्चात्यकारः । तत्र । 'वर्मिमत्स्यवद्राय-ता' इत्येकत्र सुश्रुतसंहितायाम् । वर्मिमत्स्येषु, वर्मी रोहितक इत्येके, "रोहितो मत्स्यानां" इति चरकवचनात्, अन्ये सर्पाकारमत्स्य-माहुः, श्रीब्रह्मदेवस्तु वर्मी महाशकलो रोहितभेदोऽत्र न पुनः सर्पाकारमत्स्य इत्याहुरिति डल्हणः सुश्रुतषट्चत्वारिंशत्तमाध्याय-व्याख्यायाम् । "काकांस्तित्तिरिशब्देन वर्मिशब्देन चोरगान्" इत्या-दिचरकचिकित्सिताष्टमाध्यायवाक्यान्यत्रावश्यमनुस्मरणीयानि ॥

**वर्षाभूः** । चि. १ etc. वर्षासु भवति । **रक्तपुनर्नवा** । "भेकयां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्" इति यादवः । उदरचिकित्सि-ताध्याये "वर्षाभूधान्यकुष्ठाश्च" इत्यत्र "वर्षाभू"स्थाने भूतीकेति चरकपाठः । see **पुनर्नवा** ॥

**वर्षाभ्वौ** । **सू. ६. ह्रस्वमहत्यौ रक्तश्वेतपुनर्नवे** । "श्वेतमूलो वर्षके-तुर्महावर्षाभुरुच्यते" इति ॥

**बलाका** । **सू. ६** etc. बलाहकान् कायति बलेनाकति याति वा बलाका । बिसकण्ठिका । **श्वेतवर्णविशिष्टो बकभेदः** । "बलाका तूदिता सर्वैर्बिसकण्ठ्याख्यपक्षिणि" इति केशवस्वामी । बगुली इति लोके इति डल्हणः । 'कानाचकी इत्येके । **मल.**—वेळ्ळको-क्कु വെള്ളക്കൊക്ക । **इं.**—Common crane; small crane इत्यन्ये; **ल.**–*Grus communis* । **नामानि**—"बलाका बिस-कण्ठी स्याच्छुक्लांगी दीर्घकन्धरा" । रा. नि । एतद्गुणाः प्रवमां-सवदिति सुश्रुतः ॥

**वल्गुजबीजम्** । **चि. २०. वाकुची** ॥

**वल्लः** । **सू. ७** etc. **निष्पावः** । व्रणप्रतिषेधे "सकोलतिलवल्लोमा" इत्यत्र 'वल्ल'स्थाने निष्पाव इत्येव संग्रहपाठः ॥

**वल्लकः** । निष्पावः ॥

**वल्लूरम्** । नि. १३ etc. आतपादिना शुष्कं मांसम् । हिं.—सूखे मांस; मल.—उणक्कियिरच्चि ഉണക്കയിറച്ചി; Dried meat । "वल्लूरा त्रिषु संशुष्कमांसशूकरमांसयो"रिति मेदिनी । "धानावल्लूरसमशनमथ" इत्यत्र "धानावल्लूरं समशनमथ" इत्यवश्यं पठनीयम् । "धानावल्लूरमशनमथ" इति मुद्रितचरकसंहितायामप्यशुद्ध एव पाठः । तस्मिन्नेव पद्ये "स्वप्नं रात्रौ" इत्यत्र "स्वप्नं चारात्रा'विति च शोधनीयम् ॥

**वशिरः** । चि. ११. वसिरवसीराविति पाठौ । अपामार्गः । "काण्डकण्टः शैखरिको मर्कटी दुरभिग्रहः । वशिरश्च पराक्पुष्पी कण्टी मर्कटपिप्पली" । रा. नि । समुद्रलवणमित्यरुणदत्तः । मर्कटसंज्ञस्तृणजातिविशेषः, सूर्यावर्तभेद इत्यन्ये इति डल्हणः । सूर्यावर्त इति भाष्यकारः । गजपिप्पलीति केचित् ॥

**वसा** । सू. ३ etc. शुद्धमांसभवस्नेहः । "शुद्धमांसस्य यः स्नेहः सा वसा परिकीर्तिता" इति सुश्रुतः । वसा तनुमेदोरूपा क्वथितमांसस्योपरिगतोऽच्छस्नेहभाग इति केचित् । वसा तु—मांसान्तरनुप्रविष्टः स्नेहस्तस्या मेदस्यनुप्रवेशस्तुल्योपादानत्वात् । प्र. शा । हिं.—चर्बी ; म.—चरबी ; क.—कोब्बु; त.—कोळुप्पु; तै.—कोवु ; मल.—कोळुप्पु കൊഴുപ്പ്, नेय्वला ; इं.—Fat, Omentum, Caul । नामानि—"वस्ना वसा पीतधरा मेदोमांससमुद्भवा । सर्वस्नेहप्रधाना च वसाऽस्थिजननी तथा" । ध. नि । "विद्धभग्नाहतभ्रष्टयोनिकर्णशिरोरुजि । पौरुषोपचये स्नेहे व्यायामे चेष्यते वसा" इति चरकः ॥

**वसिरः** । see **वशिरः** ॥

**वसुकः** । चि. ११. वस्ते छादयति । बकपुष्पवृक्षः । see **बूकः** ।

ईश्वरमल्लिकेत्यरुणदत्तः । केदारगिरौ 'बगहुल' इति प्रसिद्ध इति डल्हणः । शकुलादनीत्येके ।

**वस्तिः** । सू. १२ etc **मूत्राशयः** । Bladder । "वस्तिर्मूत्राशये नाभेश्चाधोदेशे" इति केशवस्वामी । "वस्तिर्मूत्राशयो वा नाम–क्षुद्रालाबुफलसमाकारो मूत्राधारो वस्तिगुहायां भगास्थिसन्धिपृष्ठतोऽवस्थितः, स पुंसो गुदनलकस्य पुरोवर्ती स्त्रियास्तु योनेर्गर्भाशयस्य च । आच्छाद्यते चासौ ऊर्ध्वं पश्चिमतश्च उदरधराख्यया कलया । संबध्यते च वस्तेरूर्ध्वं तनुशिखराकारा कलामयी प्रबन्धनी आनाभिप्रसृता, सा वस्तिशीर्षिका नाम । सेयं प्राचां "वस्तिशिरः-संज्ञा" इति प्रत्यक्षशारीरात् ॥

**वस्त्रकाञ्चनम्** । उ. ५. **सुवर्णसूत्राञ्चलवस्त्रम्** । सुनहरे वस्त्र । **मल.**—कसवुवस्त्रम् കസവുവസ്ത്രം । Gold laced cloth । धौतवस्त्रोपरिन्यस्तमाभरणमिति केचित् । काञ्चनश्रीरीति केरलेष्वेके ॥

**वस्त्रचुंभलः** । चि. ११. **वस्त्रकृतो वलयविशेषः** । वस्त्रनारक इति सुश्रुतपाठः । विडा इति वङ्गेषु । वस्त्रमयमासनमितीन्दुः । चुंभलस्तृणमयो घटादीनां चलनरक्षणार्थमाधारविशेषो यः क्रियते स उच्यते इत्यरुणदत्तः । **मल.**—तिरिका തിരിക, तिरिकटा, तिरोटा, तिरिया, वळयल् । A ring-like pad of cloth, generally used as a stand to keep earthenware vessels etc. from shaking.

**वह्निः** । चि. ८ etc **चित्रकः** । "चित्रको वह्निसंज्ञकः" इत्यमरः ॥

**वांशिकः** । सू. ५. **वंशाकारो इक्षुविशेषः** । Sugarcane resembling bamboo । **मल.**—मुळक्करिम्पु മുളക്കരിമ്പ് । नीलेक्षुरिति हेमाद्रिः । वंशक इति सुश्रुतपाठः । 'खागड़ी' इति प्राकृताः । 'बडी पोई वाला' इत्येके । "दीर्घपोरः सुकठिनः सक्षारो वंशकः स्मृतः" इति भावमिश्रः । **गुणाः**—"सुशीतो मधुरः

स्निग्धो बृंहणः श्लेष्मलः सरः । अविदाही गुरुर्वृष्यः पौण्ड्रको भीरुकस्तथा । आभ्यां तुल्यगुणः किंचित्सक्षारो वंशको मतः । सु. सू. ४५ ॥

**वांशी** । चि. ३. त्वक्क्षीरी ॥

**वांसी** । त्वक्क्षीरी ॥

**वाकुची** । चि. १९. वातं संकोचयतीति निर्वचनाद्वाकुची । सोमराजीक्षुपः । N. O.—*Leguminosae* । हिं.—बावची, बुकची, बकुची, बावची, बायची, बापची, भावज; उ.—बवनूचा, बावची; बं.—हाकुच्, सोमराज; म.—बांवचा, बाउची; गु.—बावची; तै.—भवञ्चि वित्तुलु, बोगि वित्तुलु, बवनूचलु; तिप्पतीगे इत्येके; नेलवयलिये इत्यपरे; क.—बाउचिगे, बवुचिगे; त.—कार्पोकरिचि, आदुलांकोटि; सिं.—बोदि एट; मल.—कार्कोकिल् കാർകോകിൽ, कार्पोकिल्; इं.—Babchi seeds, Esculant Flacourtia; ल.—*Psoralea corylifolia* । अस्याः भाषान्तराण्यन्यथा च दृश्यन्ते । यथा—N. O.—*Compositae* । तै.—अडविजीलकर; विषकण्टकलु; क.—काडजीरिगे, काळजीरिगे; कों.—काळजीरे; तु.—काळजीर्दैरि; त.—काट्टुचीरकं; सिं.—पन्निनायिगं; वल्दुरु; मलायी.—जुस्तान्हुटन्; मल.—काट्टुजीरकं കാട്ടുജീരകം; इं.—Purple Fleabane; ल.—*Vernonia anthelmintica, Serratula anthelmintica* । "अभावे सोमराज्यास्तु प्रपुन्नाटफलं मतं" इति भावमिश्रः । नामानि—"वाकुची सोमराजी तु सोमवल्ली सुवल्ल्यपि । अवल्गुजा कृष्णफला सैव पूतिफला मता । चन्द्रलेखेन्दुलेखा च शशिलेखा मता च सा । पूतिकर्णी कालमेषी दुर्गन्धा कुष्ठनाशिनी" । ध. नि । बीजं ग्रा-

ह्वम् । गुणाः—"बाकुची कटुतिक्तोष्णा कृमिकुष्ठकफापहा । त्वग्दोषविषकण्डूतिखर्जूप्रशमनी च सा" । रा. नि । "बाकुची मधुरा तिक्ता कटुपाका रसायनी । विष्टंभहृद्धिमा रुच्या सरा श्लेष्मास्रपित्तनुत् । रूक्षा हृद्या श्वासकुष्ठमेहज्वरकृमिप्रणुत्। तत्फलं पित्तलं कुष्ठकफानिलहरं कटु । केश्यं त्वच्यं वमिश्वासकासशोथामपाण्डुनुत्" । भा. प्र ।

**वाजिगन्धा** । चि. ४ etc. अश्वगन्धा ॥

**वाजिस्थानम्** । उ. २५. मन्दुरा । हिं.—तबेला, अस्तबल, घुड़साल; त.—कुतिरैकळ् कट्टुमिटं; म.—घोडशाळा; मल.—कुतिरप्पन्ति കുതിരപ്പന്തി । A Horse-stable । "वाजिशाला तु मन्दुरा" इति हलायुधः ॥

**वाजी** । सू. २८ etc. अश्वः । "वाजी बाणाश्वपक्षिषु" इति मेदिनी ॥

**वाट्यः** । चि. ६ etc. यवकृतो पेयाविशेषः । मल.—यवक्कञ्ञि യവക്കഞ്ഞി । भुने हुवे जौका माँड । Barli Kanji; Gruel made of barley । "सुकण्डितैस्तथा भृष्टैर्वाट्यमण्डो यवैर्भवेत्" इति शार्ङ्गधरः । "वाट्यमण्डो यवैश्चाष्ट्रैर्मुनिभिः परिकीर्तितः" । नि. र । भृष्टयवकृतो भक्ष्य इति हाराणचन्द्रः । ईषद्भृष्टयवमण्ड इति तृष्णाचिकित्सितव्याख्यायां चक्रपाणिदत्तः । यवौदन इतीन्दुः । यवगोधूमादिभिर्दलितैः कृत इति डल्हणः । "वाट्यश्चामयवैः शीतः शर्करामाक्षिकान्वित" इति च दृश्यते । गुणाः—"वाट्यमण्डो विबन्धघ्नः शूलानाहविनाशनः । रोचनो दीपनो हृद्यः पित्तश्लेष्मानिलापहः । राज. व ॥

**वाट्याभिधानम्** । चि. १४. पुष्करमूलम् । बलेत्येके ॥

**वाट्याह्वम्** । चि. १४. पुष्करमूलम् । बलेति केरलेष्वेके ॥

**वातघ्नः** । उ. २४ etc. **भद्रदार्वादिगणः** । "वातघ्नदशमूलादि-सिद्धक्षीरेण सेचनम्" ॥

**वातामम्** । मू. ६. **फलविशेषः** । स्निग्धमधुरमज्जं दीर्घाकारं फलम् । N. O.--*Rosaceae* । हिं.--बादाम ; बं.—बादाम ; म.—बदाम ; गु.—बदाम ; तै.—बेदम , बादामवित्तुलु ; क.—बादामु ; त.—वातुमै , वातांकोट्टै ; सिं.—अनोदा ; मल.—बदां ബദാം ; पा.—बदामशीरीं , बादामतल्खा ; अ.—लोज-लहलु , लोजलमुर ; इं.—Almond ; ल.—*Prunus amygdalus*, *Amygdalus communis* । **नामानि**—"वातादो वातवैरी स्यान्नेत्रोपमफलस्तथा" इति भावमिश्रः । पक्वफलं ग्राह्यम् । **गुणाः**—"वाताद उष्णः सुस्निग्धो वातघ्नः शुक्रकृद् गुरुः । वातादमज्जा मधुरो वृष्यः पित्तानिलापहः । स्निग्धोष्णः कफकृन्नेष्टो रक्तपित्तविकारिणाम्" । भा. प्र ॥

**वानरः** । मू. ६ etc. वानं वनसंबन्धिफलादिकं राति गृह्णाति । वने रमते वनरस्तस्यायं वानरः, पक्षे नरो वा इति क्षीरस्वामी । **कपिः** ॥

**वान्तादः** । मू. ६. वान्त आदरो येन । One who swallows his vomit । **कुक्कुरः** । वान्ताद इत्येव चरकपाठः । "कुक्कुरे दीर्घसुरतो वान्तादरसनालिहौ" इति त्रिकाण्डशेषः । see **श्वा** ॥

**वाप्यम्** । चि. १९. वाप्यां भवम् । **कुष्ठम्** । व्याप्यमित्यके ॥

**वायसः** । मू. ६ etc. वय एव वायसः, वयते वा । **काकः** । "वायसोऽगुरुवृक्षे च श्रीवासध्वांक्षयोः पुमान्" इति मेदिनी ॥

**वायसजंघा** । चि. १९. **काकजंघा** ॥

**वायसी** । उ. ३९. **काकमाची** । "काकोदुंबरिकायां च काकमाच्यां च वायसी" इति मेदिनी ॥

**वायसीशाकम्** । चि. ३. काकमाच्याः पत्रम् ॥

**वारङ्गम्** । सू. २८. शस्त्रमुष्टिः, शस्त्रनालम्, शल्यवृन्तम् । Hilt । मल.—पिटि പിടി, कटा ; हिं.—मूठ, खबुजा ; म.—मूठ । Loop-handle इत्येके । शस्त्रमस्तके शिखाकारोऽत्रयव इति हेमाद्रिः ॥

**वारटा** । सू. ६. पक्षिविशेषः । वरटा, वारटः, वरटः, वारडः, वराहा चेति पाठान्तराणि । हंससदृश इति हेमाद्रिः । हंसीति केचित् । खञ्जन इति पाठ्यकारः ॥

**वारणः** । सू. ६ etc. गजः । "वारणं प्रतिषेधे स्याद्वारणस्तु मतंगजे" इति मेदिनी ॥

**वारणदन्तः** । उ. २५. गजस्य दन्तः । मल.—आनप्पल्लु ആനപ്പല്ലു । हिं.—हाथीके दान्त । Elephant's tooth ॥

**वारणमौक्तिकम्** । उ. ३६. वारणस्य मस्तकोद्भूतं मौक्तिकम् ॥

**वाराहम्** । सू. ७. सूकरमांसम् । हिं.—सुअरका गोश्त ; म.—डुकराचे मास ; सिं.–ऊरुमस् ; मल.–पन्निमांसं പന്നിമാംസം । Pork, the flesh of swine । see वराहः ॥

**वाराही** । चि. ११ etc. महाकन्दशाकविशेषः । मानकन्दाकारः कन्दविशेष इत्येके । "वाराही मातृभेदे स्याद्विष्वक्सेनप्रियौपधौ" इति मेदिनी । N. O.—*Dioscoreaceae* । हिं.—गेठी, मिर्बोलीकन्द ; बं.—चामालु, चामारआलु, चुवडि आलु ; म.—डुकरकन्द, वाराही कन्द ; गु.—डुकरकन्द ; तै.—ब्राह्मदंडिचेट्टु, पाचितोके, नेलताडिचेट्टु ; क.—कुन्तगेणसु, हंदिगड्डे ; त.—मुळ्किळंकु, मरुळ्किळंकु ; सिं.—ऊरल ; मल.—मु(ळ्)किळङ्ङु മു(ള്)കിഴങ്ങ് ; ले.—*Dioscorea sativa* । **तल्लक्षणं यथा**—"ताम्बूलसदृशैः पत्रैर्ग्रन्थिभिः समलंकृता । सर्जार्जुननिभैः

पुष्पै: शोभते च सुगन्धिभि: । वराहच्छविवर्णेन पिच्छलेन सुवर्च-
सा । कन्देन कटुतिक्तेन नीलोत्पलसुगन्धिना । जायते सा गिरौ
रम्ये विन्ध्ये श्रीपर्वते तथा" इति । **वृन्दे तु**—"वराहमूर्ध्ववत्-
कन्दो वाराहीकन्दसंज्ञित: । भिषजां तदभावे च चर्मकारालुको
मत:" । इति । "वाराहीकन्दसंज्ञस्तु पश्चिमे गृष्टिसंज्ञक: । वारा-
हीकन्द एवान्यैश्चर्मकारालुको मत: । अनूपसंभवे देशे वराह
इव लोमवान्" इति भावमिश्र: । **नामानि**—"गृष्टिर्विष्वक्सेनका-
न्ता वाराही गृष्टिका च सा । माधवी सौकरी कान्ति: कान्ता च
वनमालिनी" । ध. नि । कन्द: ग्राह्य: । **गुणा:**—"वाराही ति-
क्तकटुका विषपित्तकफापहा । कुष्ठमेहक्रिमिहरा वृष्या बल्या रसा-
यनी" । रा. नि । "वाराही पित्तला बल्या कट्वी तिक्ता रसा-
यनी । आयु:शुक्राग्निकृन्मेहकफकुष्ठानिलापहा" । भा. प्र ॥

**वारुणी** । सू. ५ etc. प्रसन्ना नाम मद्यविशेष: । श्वेतसुरेति हेमाद्रि: ।
प्रसन्नेत्युच्यते इति पदार्थचन्द्रिका । "वारुणी गण्डदूर्वायां प्रतीची-
सुरयो: स्त्रियाम्" इति मेदिनी । कतोलीति प्रसिद्धा इति डल्हण: ।
Varuni is the fermented juice of the palm and date
trees etc । "यत्तालखर्जूररसैराश्रुता सैव वारुणी" । इति ।
पुराणं ग्राह्यम् । **गुणा:**—"श्रमज्वरातुरे शोषे शोफपाण्ड्वामये क्षये ।
मते: क्रमेऽपस्मारे च पक्षाणाञ्च भ्रमेषु च । श्रान्ते वा विषपीते
वा सर्पदष्टे जलोदरे । रक्तपित्ते तथा श्वासे वारुणी न हिता मता ।
शुद्धस्फटिकसंकाशा सुस्निग्धा चैव वारुणी" । अत्रि । "पुनर्नवा-
शालिपिष्टैर्वारुणी विहिता स्मृता" इति केचित् । भूरिजलाल्प-
क्षौद्रांशकृतमद्यविशेष इति केरलेष्वेके ॥

**वारुणीमण्डम्** । चि. ४. अच्छसुराविशेष: । प्रसन्ना । मदिरेति
चरकपाठ: ॥

**वार्ताक:** । सू. ६ etc. वार्ताकी । वर्तुलफल: वंङ्गण इति लोके

इति डल्हणः । "वार्तिगणस्तु वार्तागो वार्ताकः शाकबिल्वकः" इति रभसः ॥

**वार्ताकिनी** । उ. ३४. वार्ताकी । कण्टकारीत्येके । बृहतीतीन्दुः ॥

**वार्ताकी** । चि. ५ etc. वार्तमारोग्यमाकयति । 'अक कुटिलायां गतौ' । **स्वनामख्यातफलशाकविशेषः** । N. O.—*Solanaceæ* । हिं.—बैंगन, भैंगन, भंटा ; बं.—बेगुन ; म.—वांगें, वायिंगे ; गु.—रिङ्गणी, बैगना ; कों.—वायिङ्गणा ; दखा.—भंटा ; तै.—वंकायि ; क.—बदने, कार्बीगिड ; तु.—बदने ; त.—कत्तरि, वलुतलै ; सिं.—वंबटु ; मल.—वलुतिना വഴുതിന, कात्तिरि ; पा.—बादंगान् ; अ.—बादंजान् ; इं.—Brinjal, Egg plant, Aubergine ; ल.—*Solanum melongena* । **नामानि**—"वार्ताकी कण्टवृन्ताकी कण्टालुः कण्टपत्रिका । निद्रालुर्मांसलफला वृन्ताकी च महोटिका । चित्रफला कण्टकिनी महती कटुफला च सा । मिश्रवर्णफला नीलफला रक्तफला तथा । शाकश्रेष्ठा वृत्तफला नृपप्रियफलस्मृतिः" । रा. नि । मध्यमफलं ग्राह्यम् । **गुणाः**—"वृन्ताकं स्वादु तीक्ष्णोष्णं कटुपाकमपित्तलम् । ज्वरवातबलासघ्नं दीपनं शुक्रलं लघु । तद्बालं कफपित्तघ्नं वृद्धं पित्तकरं लघु । वृन्ताकं पित्तलं किञ्चिदङ्गारपरिपाचितम् । कफमेदोऽनिलामघ्नमत्यर्थं लघु दीपनम् । तदेव हि गुरु स्निग्धं सतैलं लवणान्वितम् । अपरं श्वेतवृन्ताकं कुक्कुटाण्डसमं भवेत् । तदर्शःसु विशेषेण हितं हीनं च पूर्ववत्" । भा. प्र । "निद्राकरं प्रीतिकरं गुरु स्यात् सवातलं कासविकारकारि । श्रेष्ठं सुदीर्घं कफवर्धनञ्च सश्वासकासारुचिवर्धनञ्च" । अत्रि ॥

**वार्तीकः** । see **वर्तीकः** ॥

**वार्तीरः** । सू. ६ see **वर्तीरः** ॥

**वालम्** । सू. २९. चामरम् । वालव्यजनमिति सुश्रुतपाठः ॥

**वालकम्** । सू. १० etc. वालयति । 'वल संवरणे' । 'बालो ना कुन्तलेऽश्वस्य करिणश्चापि वालधौ । नारिकेले हरिद्रायां मल्लिकाभिश्चापि स्त्रियाम् । वाच्यलिङ्गोऽर्भके मूर्खे ह्रीबेरे पुंनपुंसकम् । अलंकारान्तरे मध्ये बाली बाला त्रुटौ स्त्रियाम्" इति मेदिनी । **ह्रीबेरम्** । N. O.—*Malvaceæ* । हिं.—सुगन्धबाला, गन्धबाल; नेत्रबाला; बं. गन्धबाला, बाला; म.—वाळा, काला वाळा; गु.—वाळो घोलो; मुंबापुर्याम्.—कालो वालो; तै.—वाट्टिवेल्लु, मुत्तुपलगमु, एर्र कुटि; क.—खसमुष्टिवाल, वालदवेरू, वाला रक्कसिगिड; त.—कुरुवेर्, वेट्टिवेर्, इरुवेलि, अविपत्तं; पेरामुट्टै इत्येके; सिं.—इरिवेरिय; मल.—इरुवेरि, इरुवेलि இருவேலி; पा.—असारं; फा.—Pavonia Odorante; ल.—*Pavonia odorata* । उक्तं हि—"सूक्ष्ममूलो वरः केशोऽनूतनः सरलस्तथा । नूतनः स्थूलमूलश्च वर्जनीयः प्रयत्नतः" इति । नामानि—"वालकं वारि तोयं च ह्रीबेरं जलमंबु च । केश्यं वज्रमुदीच्यं च पिङ्गमाचमनं कचम्" । ध. नि । पत्रादिकं ग्राह्यम् । गुणाः—"बालं ह्रीबेरबर्हिष्ठोदीच्यं केशांबुनाम च । वालकं शीतलं रूक्षं लघु दीपनपाचनम् । हृल्लासारुचिवीसर्पहृद्रोगामातिसारजित्" । भा. प्र ॥

**वालचामरम्** । शा. ६. चामरम् । "वालव्यजनमोजस्यं मक्षिकादिनिवारणम् । व्यजनस्यानिलः शोषमूर्छास्वेदश्रमापहः" । म. पा ॥

**वासा** । सू. ६ etc. वासयति, वस्ते आच्छादयति वा । वाशा इति पाठः । "वासो गृहेऽप्यवस्थाने वासा स्यादटरूषके" इति रुद्रः । "येन केन प्रकारेण वासकः कासनाशकः" । इति वैद्यकम् । स्वनामप्रसिद्धकामहरवृक्षः । आटरूषः । N. O.—*Acantha-*

ceae । हिं.—अरुसा, अरूषा, आरूषा, अडूसा, अडुलसा, अरडूसा, वसूटा, वांसा, विसोंटा, वसौटा; उर्दु.—आडतोडा; बं.—वासक, बासक; म.—अडूळसा; गु.—अडूरसो; दखा.—अदरसा; कों.—आडुसोगे; पा.—बान्सा; तै.—अड्डसरमु, अडम्पकु; पेद्दमानु इत्येके; क.—आडुसोगे, अडुसर, अडुलस, स्यालदमर; शोणा, शोडीलमर इत्येके; तु.—येड्डु मुट्टंदि तप्पु; त.—आटातोटै, वाचै; सिं.—आडतोडा; वंएपल; मल.—आटलोटकम् ആടലോടകം; इं.—Malabar nut; ल.—*Adhatoda Vasika* । नामानि—"वासकः सिंहपर्णी च वृषो वाशाऽथ सिंहिका । आटरूषः सिंहमुखी भिषग्माताऽटरूषकः" । ध. नि । मूलादिकं ग्राह्यम् । गुणाः—"वासको वातकृत् स्वर्यः कफपित्तास्रनाशनः । तिक्तस्तुवरको हृद्यो लघुशीतस्तृडर्तिहृत् । श्वासकासज्वरच्छर्दिमेहकुष्ठक्षयापहः" । भा. प्र । "वासा तिक्ता कटुः शीता कासघ्नी रक्तपित्तजित् । कामलाकफवैकल्यज्वरश्वासक्षयापहा" । रा. नि ॥

**वास्तुकः** । सू. ६ etc. वसन्त्यस्मिन् गुणाः । वास्तूक इति पाठः । पत्रशाकविशेषः । हिं.—वथुआ, बाथू; जङ्गली वथुआ इत्येके; बं.—बेतुया; म.—चाकवत; गु.—वथवो, बाथरो; क.—चक्रवर्त; त.—चक्करवरत्तिक्कीरै; सिं.—हेल तंपला; मल.—चीरा ചീര; वास्तुचीरा, वीट्टुचीरा; कुप्पचीरा इत्येके; पा.—मुसेलेसा, सरमक; अ.—रोक्बतुल् बजामेल, कुतुफ; इं.—White goosefoot; ल.—*Chenopodium album* । टङ्कवास्तुक इति डल्हणः । नामानि—"वास्तूकं वास्तुकं च स्यात् क्षारपत्रं च शाकराट् । तदेव तु बृहत्पत्रं रक्तं स्यात् गौडवास्तुकम् । प्रायशो यवमध्ये स्याद्यवशाकमतः स्मृतम्" । भा. प्र । गुणाः—"वास्तूकद्वितयं स्वादु क्षारं पाके कटूदितम् । दीपनं पाचनं रुच्यं

लघु शुक्रबलप्रदम् । सरं प्लीहास्रपित्तार्शःकृमिदोषत्रयापहम्" ।
भा. प्र । पत्रं ग्राह्यम ॥

**विकङ्कतः** । चि. ३. विकङ्कते प्रसरति । कंटकीवृक्षः । N. O.—*Flacourtiaceae* । हिं.—कंटाई, वेहकल, बिलांगरा, वञ्ज, किङ्किणी, रामबबूर; कटेर इत्येके; बं.—बइँचि गाछ, वैंची, बुंच: म.—वेहेकळ, गुलघोंटी; गु.—विकळो; उत्.—वइच-कुडि; तै.—कानवेगुचेट्टु; क.—हलुमाणिका, हलसानिका; पञ्जा.—कुकाया; कों.—जाफरन; उरिया.—बैञ्चो; मुंबापुर्याम्.—केकुन; त.—नरुमुरुक्कै; सिं.—बोरलुदमनु; मल.—वय्यङ्कतकु வய்யங்கதை, मोतिरक्कण्णि; इं.—Mauritius plum; ल.—*Flacourtia Ramontchi* । **नामानि**—"विकङ्कतः स्रुवावृक्षः ग्रन्थिलः स्वादुकण्टकः । स एव यज्ञवृक्षश्च कण्टकी व्याघ्रपादपि" । भा. प्र । वृक्षकण्टकारिकेति प्रसिद्धा, 'कांइक' इति लोके इति डल्हणः । मूलत्वग्पक्वफलादिकं ग्राह्यम् । **गुणाः**—"विकङ्कतोऽम्लो मधुरः पाकेऽतिमधुरो लघुः । दीपनः कामलाघ्नः पाचनः पित्तनाशनः" । रा. नि । "विकङ्कतफलं पक्वं मधुरं सर्वदोषजित्" । भा. प्र ॥

**विकसा** । चि. ५. विकसति दूरम् । मञ्जिष्ठा ॥

**विकाणिका** । उ. ५. क्षीरकाकोली । मेषशृङ्गीत्येके । श्वेतगुंजेति केरलेषु केचित् ॥

**विकेशिका** । सू. २९. व्रणान्तःप्रवेशयोग्या वर्तिः । तिलकल्कमधुघृताक्तवस्त्रस्य सूत्रस्य वा वर्तिर्विकेशिका, सा च सपूतिमांसोत्सङ्गगतिपूयगर्भेषु व्रणेषु निक्षिप्यते । उक्तं हि—"तिलकल्काज्यमधुभिर्यथास्वं भेषजेन तु । दिग्धां वर्तिं ततो दद्यात्तैरेवाच्छादयेच्च तं" इति । अन्तर्वर्तिरितीन्दुः ॥

**विजया** । चि. ३ etc. विशिष्टो जयोऽस्याम् । "विजयस्तु जये पुंसि तथा मध्यमपाण्डवे । खड्गे च स्त्री तु विजया हरीतक्यां" इति केशवस्वामी । "यस्माद्विजयते व्याधीन् समग्रान् विजया हि तत्" इति संग्रहे । हरीतकी । अर्शोचिकित्सिते "कुलीरशृङ्गी विजया" इत्यत्र विजया 'भांग' इति शिवदीपिका । हृद्रोगचिकित्सायां "विजयाशठिपौष्करै"रित्यत्र "पलाशशठिपौष्करै"रित्येव चरकसंग्रहादिपाठः ॥

**विडम्** । see **बिडम्** ॥

**विडङ्गम्** । सू. १४ etc. बिलति भिनत्ति विडङ्गं विलङ्गति वा । **कृमिघ्नपण्यद्रव्यविशेषः** । "विडङ्गस्त्रिष्वभिज्ञे स्यात् क्रिमिघ्ने पुंनपुंसकं" इति मेदिनी । N. O.—*Myrsineae* । **हिं.**—वायविडङ्ग, वायभिरङ्ग, बाबेरङ्ग, वाविरां, वाविराङ्; **बं.**—विडङ्ग; **उर्दु.**—बायबिडङ्ग; **म.**—वावडिङ्ग; **गु.**—वावडङ्गि; कार्कणनी इत्येके; **मुंबापुर्याम्.**—अम्टि, अंबट्, वाय्वरङ्ग; **नेपा.**—हिमालचेरि; **तै.**—वायुविडङ्गलु; **क.**—वायुविडङ्ग; **त.**—वाय्विटङ्कं; **सिं.**—वलङ्गसाल्; **मल.**—विषालरि വിഴാലരി, वियालरि; **पा.** & **अ.**—बिराङ्गि-इ-कबुलि, वरङ्गकावली; **इं.**—Babreng; **ल.**—*Embelia ribes* । **नामानि**—"पुंसि क्लीबे विडङ्गः स्यात् कृमिघ्नो जन्तुनाशनः । तण्डुलश्च तथा वेल्लममोघा चित्रतण्डुला" । भा. प्र । बीजं म ह्यम् । **गुणाः**—"विडङ्गं कटु तीक्ष्णोष्णं रूक्षं वह्निकरं लघु । शूलाध्मानोदरश्लेष्मकृमिवातविबन्धनुत्" । भा. प्र । "विडङ्गा कटुरुष्णा च लघुर्वातकफार्तिनुत् । अग्निमान्द्यारुचिभ्रान्तिकृमिदोषविनाशनी" । रा. नि ॥

**विडङ्गतण्डुलम्** । चि. २० etc. **विडङ्गसारः** ॥

**विडङ्गमूलम्** । चि. १९. विडङ्गसार इत्येव संग्रहपाठः ॥

**विडङ्गसारः** । चि. १९. विडङ्गफलबीजम् । see **विडङ्गम्** ॥

**विडालः** । चि. १. विशन्–आलात्याखून् विडालः, विलालो वा, बिलान्यलति पर्याप्नोति वा, बिलति भिनत्ति-आखून् वा, विड् आलमस्या शुचित्वाद्वा, विड आक्रोश इत्यस्माद्वा । **मार्जारः** । see **बिडालः** ॥

**विडालकः** । see **बिडालकः** ॥

**वितुन्नकम्** । चि. २२. जलमुस्ता, कैवर्तमुस्तकम् । see **परिपेलवम्** । धातकीफलमित्तरन्दुः । मधुयष्ट्यादितैलयोगव्याख्यायां वितुन्नकं धान्यकमिति चक्रपाणिदत्तः ॥

**विदलम्** । शा. ५ etc. दालिः । "मसूरविदलप्रख्या" । see **दलम्** ॥

**विदलितम्** । उ. २६. सद्योव्रणभेदः । पिच्चितमिति सुश्रुतपाठः ॥

**विदारिगन्धा** । चि. २ etc. विदार्याः भूमिकूष्माण्डस्येव गन्धो यस्याः । शालपर्णी । वृश्चिकविषचिकित्सायां "विदारिगन्धासिद्धेन" इयत्र लघुपञ्चमूलार्थेन 'विदारिगन्धादिगणसिद्धेन' इत्यवश्यं ग्रहणीयम् ॥

**विदारिवर्गः** । चि. १३. विदार्यादिगणः ॥

**विदारी** । सू. ६ etc. विदार्य भक्ष्यते विदारी । **महाकन्दशाकविशेषः** । "विदारी शालपर्ण्या च रोगभेदेऽश्रुगन्धयोः" इति मेदिनी । N. O.—*Convolvulaceæ* । हिं.—बिलाईकन्द ; बं.—भूंई कुमडा, भुंइ कुम्हडा ; उर्दु.—बिलायिकन्द ; कों.—भुईकोहला, पट्टाना, भुयिन्कुवाळे ; म.—भूयकोहोळ, भुइकोहळा ; गु.—भोंकोलु, फगवेलानो कन्द ; उत्.—भूइकखारु ; तै.—

नेलगुम्मुडु, भूचक्रगड्डु, मट्टपलतिग; क.—नेलकुंबळ, गुड्डगेण-सु, बुजगुंबला; तु.—नेलकुंबुड; त.—निलप्पुचिनिक्किळंकु, पल्मोतिका; सिं.—चदु; मल.—मुतुक्कु മുതക്ക, मुतलाक्किळ-ङ्ङु; ल.—*Ipomoea Digitata, I. Paniculata* । नामानि—"विदारी स्वादुकन्दा च सा तु क्रोष्ट्री सिता स्मृता । इक्षुगन्धा क्षीरवल्ली क्षीरशुक्ला पयस्विनी । वराहवदना गृष्टिर्वरदेत्यपि कथ्यते" । भा. प्र । गुणाः—"विदारी मधुरा स्निग्धा बृंहणी स्तन्यशुक्रदा । शीता स्वर्या मूत्रला च जीवनी बलवर्णदा । गुरुपित्तास्रपवनदाहान् हन्ति रसायनी" । भा. प्र । विदारी विषादिकक-न्दः कोहलाकारो लोहितकुसुमः, स च द्विविधः—दीर्घकन्दो बहुक्षीरः, हस्तिपादको महाल्पक्षीर इतीति डल्हणः । कन्दः ग्राह्यः ॥

**विदारीगन्धा** । चि. २ etc. **शालपर्णी** । रक्तपित्तचिकित्सिते स्थिरेति चरकपाठः ॥

**विदारीवर्गः** । चि. १३. विदार्यादिगणः ॥

**विदुलः** । सू. १५ etc. विदोल्यते वेगेन विदुलः । **जलवेतसः** । "विदुलो जलवेतसः" इत्यभिधानः । see **निचुलः** । "विदुलस्तु पुमानंबुवेतसे वेतसेऽपि च" इति मेदिनी ॥

**विद्रुमः** । नि. ७ etc. **प्रवालः** । "विद्रुमः पादपे च स्याद् प्रवालेऽप्यजयः पुनः । ब्रूते किसलये चापि तथैव मणिभूरुहे" इति केशवस्वामी ॥

**विभीतकः** । सू. ५ etc. विगतं भीतं रोगभयमस्मात्; विशिष्टं भीतमस्माद्वा, भूतकल्योराश्रयत्वात् । **प्रसिद्धवृक्षविशेषः** । N. O.—*Combretaceae* । हिं.—बहेडा, बहेरा, भैरा, बहेडे, तिनास, बरडा; उ.—बह्ला; बं.—बेहूरो, बहेडा, बयड़ा;

कों.—गोटिङ्ग ; म.—बेहेडा, बेहडा, बहेडा, घाटीङ्गवृक्ष ; गु.—बेहेडा, वेडां, बेरङ्ग ; तै.—ताडि, वह्रा, विभीतकमु ; तान्द्रकाय, तांडेचेट्टु ; क.—तरि, तारि, शान्तिमर, तोरे ; तु.—तांदिमर, शान्तिमर ; त.—तान्रिमरं, अक्कण्टं, अंपलत्ति ; सिं.—बुलु ; मल.—तान्नि താന്നി, तान्निक्का ; पा.—बलेले ; अ.—बलेलज ; इं.—Beleric myrobalan ; ल.—*Terminalia belerica* । नामानि—"विभीतकास्त्रिलिङ्गः स्यात्राक्षः कर्षफलस्तु सः । कलिद्रुमो भूतवासस्तथा कलियुगालयः" । भा. प्र । पक्वफलं ग्राह्यम् । गुणाः—"विभीतकं स्वादुपाकं कषायं कफपित्तनुत् । उष्णवीर्यं हिमस्पर्शं भेदनं कासनाशनम् । रूक्षं नेत्रहितं केश्यं कृमिवैस्वर्यनाशनम् । विभीतमज्जा तृट्छर्दिकफवातहरो लघुः । कषायो मदकृच्चाथ धात्रीमज्जापि तद्गुणः" । भा. प्र ॥

**विमर्दकः** । उ. ३९. निमर्दकः । घृतसुक्तकान्वितद्रव्यमिति केचित् ।

**विमार्गः** । चि. १४. "विमार्गाजपदादर्शैर्यथालाभं प्रपीडयेत्" इत्यत्र "विमार्गजं यदा पश्येद्यथालाभं प्रपीडये"दित्येवावश्यं पठनीयः । अनुयन्त्रविशेषेण विमार्ग इति पदच्छेदं कृत्वा "मोचकानां चर्मणि रेखाकरणं काष्ठमयमितीन्दुः । दारुमयः शलाकाकृतिर्वस्तुविशेषश्चर्मकारसंबन्धीत्यरुणदत्तः ॥

**विरला** । सू. १७. तिन्दुकः । तिन्दुकीत्येव सुश्रुतपाठः । डिंबरूयणि इति लोके इति डल्हणः ॥

**विरूढकम्** । सू. ६ etc. अंकुरितधान्यम् । हिं.—अंकुर, कोंपल ; म.—कोंब, मोड ; त.—मुळै ; सिं.—रिकिल ; मल.—मुळा, कूम्पु ; इं.—Shoot, Sprout । विरूढकं तालाश्वि-

मज्जेति गौडः,—वयं तु क्षेत्रोद्भू(द्रु)तस्य फलमूलादेः सेकान्नवो- द्भिन्नानंकुरान् विरूढान् मन्यामहे इत्यमरकोशोद्घाटने क्षीरस्वामी । तालबीजांकुरास्थिमज्जादीति क्षीरस्वामी ॥

**विलेपी** । सू. ६ etc विलिंपति । **यवागूविशेषः, बहुसिक्था** । म.—आटवल; गिलहथी इत्येके; सिं.—तलप; मल.—कट्टि- क्काञ्ञि കട്ടിക്കഞ്ഞി । "चतुर्गुणे तु संसिद्धा विलेपी घनसिक्थ- का" इति मदनपालः । **गुणाः**—"विलेपी दीपनी वृष्या हृद्या संग्राहिणी लघुः । व्रणाक्षिरोगिणां पथ्या तर्पणी तृड्ज्वरापहा । आमशूलहरा स्वादुः दीपनी रुचिपुष्टिकृत्" । नै. नि । see मण्डः ॥

**विल्वः** । see **बिल्वः** ॥

**विशल्या** । **सू. १५. अर्का. ग** etc. विगतं शल्यं तत्प्रहारवेदना यस्याः । **लांगली** । इन्द्रपुष्पीति सुश्रुतपाठः । कण्टकी कृष्णपुष्प- करंज इति डल्हणः । लाङ्गलिकेति भाष्यकारः । "सुवर्चलां विश- ल्यां वे"त्यत्र पाटलेति डल्हणः । गुडूचीति हाराणचन्द्रः । उन्मा- दप्रतिषेधाध्याये "रास्नां विशल्यां लशुन"मित्यत्र गुडूचीति डल्ह- णहाराणचन्द्रौ । लाङ्गलीत्यरुणदत्तः । गर्भपातनीतीन्दुः । "वि- शल्या लाङ्गलीदन्तीगुडूचीत्रिपुटासु च । शल्येन रहितायां च प्रि- यायां लक्ष्मणस्य च" इति हेमचन्द्रः ॥

**विशाला** । सू. १० etc. **महेन्द्रवारुणी नाम तिक्तलताभेदः** । N. O.—*Cucurbitaceae* । हिं.—बडी इन्द्रायण; म.—मोठी इन्द्रवारुणी, थोर इन्द्रावण; क.—हिरियहामेके, काकेमंदलि, अ- वगूदे, कागेमारेबळ्ळि; बं.—बडवाकाल, माकाल; कों.—कवं- डळ; गु.—मोटो इन्द्रायणां; तै.—पापरबुडमा, अल्वगूर, का- किदोण्ट, आवबुव; त.—कुरट्टै, चवरि; द्रम्ना.—गुडपाण्ड;

अ.—अंबघोला , हन्सल-ए-अहमारा , हंजलम्हर ; पा.—हन्सल-इ-सुर्खा ; मल.—वलिय पेक्कुम्मट्टि വലിയ പേക്കുമട്ടി (काट्टुवेळ्ळरि) ; काक्कतोण्डि इत्येके ; इं.—Bitter apple ; ल.—*Trichosanthes palmata* । नामानि—"अन्ये-द्रवारुणी प्रोक्ता विशाला च महाफला । आत्मरक्षा चित्रफला त्रपुसी त्रपुसा च सा" । ध. नि । "वारुणी च पराग्पुष्पा सा विशाला महाफला । श्वेतपुष्पा मृगाक्षी च मृगैर्वारु मृगादनी" । भा. प्र । गुणाः—"महेन्द्रवारुणी ज्ञेया पूर्वोक्तगुणभागिनी । रसे वीर्ये विपाके च किंचिदेषा गुणाधिका" । रा. नि । see इन्द्रवारुणी । छर्दनगणे मृगर्वारुकीति सुश्रुतपाठः । अयश्चुचिकित्सिते "विशाला त्रिफला रात्रे"त्यत्र विशालास्थाने दशपत्रिकेति पठति वृद्धवाग्भटः । "विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति" इति मेदिनी ॥

**विशाले द्वे** । चि. १२. इन्द्रवारुणी महेन्द्रवारुणी च । गुणाः—"गवादिनीद्वयं तिक्तं पाके कटु सरं लघु । वीर्योष्णं कामलापित्तकफप्लीहोदरापहम् । श्वासकासापहं कुष्ठगुल्मग्रन्थिव्रणप्रणुत् । प्रमेहमूढगर्भासगण्डामयविषापहम्" । भा. प्र । गोधामवे "द्वे विशाले" इत्यत्र 'विशाला इन्द्रभाह्वा' चेति पदद्वयमेव चरकेनावतारितम् ॥

**विश्वम्** । चि. १०. विशति । 'विश प्रवेशने । शुण्ठी । "विश्वा त्वतिविषायां स्त्री जगति स्यान्नपुंसकम् । न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु" इति मेदिनी । बिल्वमिति मुंबापुरमुद्रितसंग्रहपाठः ॥

**विश्वभेषजम्** । चि. १ etc. विश्वेषां भेषजम् । अनेकदोषजित् । शुण्ठी ॥

**विश्वौषधम्** । चि. ३. विश्वेषु रोगेषु वा औषधम् । शुण्ठी ।

मज्जेति गौडः,—वयं तु क्षेत्रोद्भू(द्भ)तस्य फलमूलादेः सेकान्नत्रोद्भिन्नानंकुरान् विरूढान् मन्यामहे इत्यमरकोशोद्घाटने क्षीरस्वामी। तालबीजांकुरास्थिमज्जादीति क्षीरस्वामी॥

**विलेपी** । सू. ६ etc विलिंपति । **यवागूविशेषः, बहुसिक्था** । म.—आटवल; गिलहथी इत्येके; सिं.—तलप; मल.—कट्टिकाञ्ञि കട്ടിക്കഞ്ഞി। "चतुर्गुणे तु संसिद्धा विलेपी घनसिक्थका" इति मदनपालः। **गुणाः**—"विलेपी दीपनी वृष्या हृद्या संग्राहिणी लघुः। व्रणाक्षिरोगिणां पथ्या तर्पणी तृड्ज्वरापहा। आमशूलहरा स्वादुः दीपनी रुचिपुष्टिकृत" । नै. नि। see **मण्डः**॥

**विल्वः** । see **बिल्वः**॥

**विशल्या** । सू. १५. अर्क. ग etc. विगतं शल्यं तत्प्रहारवेदना यस्याः। **लांगली** । इन्द्रपुष्पीति सुश्रुतपाठः। कण्टकी कृष्णपुष्पकरंज इति डल्हणः। लाङ्गलिकेति भाष्यकारः। "सुवर्चलां विशल्यां वे"त्यत्र पाटलेति डल्हणः। गुडूचीति हाराणचन्द्रः। उन्मादप्रतिषेधाध्याये "रास्नां विशल्यां लशुन"मित्यत्र गुडूचीति डल्हणहाराणचन्द्रौ। लाङ्गलीत्यरुणदत्तः। गर्भपातनीतीन्दुः। "विशल्या लाङ्गलीदन्तीगुडूचीत्रिपुटासु च। शल्येन रहितायां च प्रियायां लक्ष्मणस्य च" इति हेमचन्द्रः॥

**विशाला** । सू. १० etc. **महेन्द्रवारुणी नाम तिक्तलताभेदः** । N. O.—*Cucurbitaceae* । हिं.—बडी इन्द्रायण; म.—मोठी इन्द्रवारुणी, थोर इन्द्रावण; क.—हिरियहामेके, काकेमंदलि, अवगूदे, कागेमारेबळ्ळि; बं.—बडवाकाल, माकाल; कों.—कर्मडळ; गु.—मोटो इन्द्रायणां; तै.—पापरबुडमा, अञवगूद, काकिदोण्ट, आवबुव; त.—कुरट्टै, चवरि; द्रस्वा.—गुडपाण्डू;

अ.—अंबबोला, हृन्सल-ए-अह्मारा, हंजलम्हर; पा.—हन्सल-इ-सुर्खा; मल.—वलिय पेक्कुम्मट्टि വലിയ പേക്കുമ്മട്ടി (काट्टुवेळ्ळरि); काकतोण्टि इत्येके; इं.—Bitter apple; ल.—*Trichosanthes palmata* । नामानि—"अन्ये-द्रवारुणी प्रोक्ता विशाला च महाफला । आत्मरक्षा चित्रफला त्रपुसी त्रपुसा च सा" । ध. नि । "वारुणी च परापुष्टा सा विशाला महाफला । श्वेतपुष्पा मृगाक्षी च मृगैर्वारु मृगादनी" । भा. प्र । गुणाः—"महेन्द्रवारुणी ज्ञेया पूर्वोक्तगुणभागिनी । रसे वीर्ये विपाके च किंचिदेषा गुणाधिका" । भा. नि । see इन्द्रवारुणी । छर्दनगणे मृगर्वारुकमिति सुश्रुतपाठः । अथश्चिकित्सिते "विशाला त्रिफला रोध्रं" त्यत्र विशालास्थाने दशपत्रिकेति पठति वृद्धवाग्भटः । "विशाला त्विन्द्रवारुण्यामुज्जयिन्यां तु योषिति" इति मेदिनी ॥

**विशाले द्वे** । चि. १२. इन्द्रवारुणी महेन्द्रवारुणी च । गुणाः—"गवादिनीद्वयं तिक्तं पाके कटु सरं लघु । वीर्योष्णं कामलापित्तकफप्लीहोदरापहम् । श्वासकासापहं कुष्ठगुल्मग्रन्थिव्रणप्रणुत् । प्रमेहमूढगर्भोसगण्डामयविषापहम्" । भा. प्र । गोध्रामवे "द्वे विशाले" इत्यत्र 'विशाला इन्द्रसाह्वा' चेति पदद्वयमेव चरकेनावतारितम् ॥

**विश्वम्** । चि. १९. विशति । 'विश प्रवेशने' । शुण्ठी । "विश्वा त्वतिविषायां स्त्री जगति स्यान्नपुंसकम् । न ना शुण्ठ्यां पुंसि देवप्रभेदेष्वखिले त्रिषु" इति मेदिनी । बिल्वमिति मुंबापुरमुद्रितसंग्रहपाठः ॥

**विश्वभेषजम्** । चि. १ etc. विश्वेषां भेषजम् । अनेकदोषजित् । शुण्ठी ॥

**विश्वौषधम्** । चि. ३. विश्वेषु रोगेषु वा औषधम् । शुण्ठी ।

"शुण्ठी महौषधं विश्वं नागरं विश्वभेषजम् । विश्वौषधं शृङ्गवेरं कटुभद्रं तथाऽऽर्द्रकम्" । ध. नि ॥

**विषम्** । उ. ३०. **स्थावरविषभेदः** । वत्सनाभः । "चत्वारि वत्सनाभानि" इति सुश्रुतः । N. O.—*Ranunculaceae* । **हिं.**—बचनाग , मीठाविष ; **बं.**—काटविष ; **म.**—वचनाग ; **गु.**—विष , वछनाग , छिङ्गडियो ; **तै.**—नाभी ; **क.**—वशनबी ; **त.**—नापि ; **सिं.**—वच्छनाभि ; **मल.**—वत्सनाभि വത്സനാഭി ; **अ.**—बिष ; **पा.**—जहर , बिषनाग ; **फ्रा.**—Char-de-Venus ; **इं.**—Aconite, a poisonous plant like monk's hood ; **ल.**—*Aconitum ferox* । Root of the Aconite ferox brought from Nepal । **लक्षणं यथा**—"सिन्दुवारसदृक्पत्रो वत्सनाभ्याकृतिस्तथा । यत्पार्श्वे न तरोर्वृद्धिर्वत्सनाभः स भाषितः" । ध. नि । **नामानि**—"अमृतं स्याद्वत्सनाभो विषमुग्रं महौषधम् । गरलं मरणं नागं स्तोककं प्राणहारकम्" । ध. नि । **गुणाः**—"वत्सनाभोऽतिमधुरः सोष्णो वातकफापहः । कण्ठरुक्संनिपातघ्नः पित्तसंशोषणोऽपि च" । रा. नि । **मूलं** शोधितं ग्राह्यम् । शारीरान्तिमाध्याये "छत्रादर्शविषाभिपं" इत्यत्रापि विषशब्दस्य वत्सनाभ इत्यरुणदत्तः ॥

**विषग्रन्थिः** । चि. ३. **मृणालपर्वन** । बिसग्रन्थिरिति चरकपाठः ॥

**विषघ्ना** । उ. ६. विषं हन्ति । **हरिद्रा** । विषघ्नीति सुश्रुतपाठः । 'निर्विषी' इति प्राच्यैरुपदिश्यते इति हाराणचन्द्रः । सोमराजीतीन्दुः । अतिविषेत्यरुणदत्तः । श्वेतवचेति कैरली । निर्गुण्डीत्येके ॥

**विषमुष्टिः** । सू. १५. **कारस्करः** । कुचिला इत्यरुणदत्तः । स्वनामप्रसिद्धस्तदभावे कुचिला इति प्रसिद्धबीजव्यवहार इति भाष्यकारः । केशमुष्टिरिति पदार्थचन्द्रिका । द्रेका राजनिंब इति

प्रसिद्धः, बृहद्दलंबुषामपरे, कर्कोटीमित्यन्ये इति डल्हणः । N. O. *Loganiaceae* । हिं.—कुचिला, कुचला, जहर; बं.—कुंचिलागाछ; म.—कुचला, काजरा; गु.—झेरकोचला; तै.—मुसिडि, मुष्टिचेट्टु, काचोराल्लु; क.—कासर्क, कासरकायि, हेम्मुष्टि, नंजिन कोरडिनमर; कों.—काज्र्यांकुडु; त.—एट्टिमरं, विषमुट्टि, काकोडि; सिं.—गोडकदुरु; तु.—कायेमेर; मल.—काञ्ञिरं കാഞ്ഞിരം; पञ्जा.—कागफल; बर्मा.—खाबौंग; अ.—हुब्-उल्-जरब्; फा.—इफराकी; फ्र.—Noix Vomique; जर्मन.—Gemeiner Brechnussbaum; इं.—Vomitnut, Poison nut, Strychnine tree, Nux-vomica; ल.—*Strychnos nux-vomica* । **नामानि**—"कारस्करस्तु किंपाको विषतिन्दुर्विषद्रुमः । गरद्रुमो रम्यफलः कुपाकः कालकूटकः" । रा. नि । पत्रमूलफलादिकं ग्राह्यम् । **गुणाः**—"कुचिलुः शीतलस्तिक्तो वातलो मदकृल्लघुः । परं व्यथाहरो ग्राही कफपित्तास्रनाशनः" । भा. प्र । "कारस्करः कटूष्णश्च तिक्तः कुष्ठविनाशनः । वातामयास्रकण्डूतिकफकार्श्यव्रणापहः" । रा. नि ॥

**विषमूषिका** उ. ३६. विषहरद्रव्यविशेषः । विषमार्गणेरिति चक्रपाणिदत्तः । विषक्कल्लु इति केरलेष्वेके । तन्नामधेयो परमौषधिरितीन्दुः । विषमुष्टिकेति पाठः ॥

**विषा । चि. २१. लाङ्गली** । "भल्लिप्रयाऽतिविषया विषया" इत्यत्र अतिविषाभेद इति केचित् ॥

**विषा । उ. ५. वचेष्टि विषा । अतिविषा** । काकोलीत्यरुणदत्तः । "विषं जलेऽतिविषायां स्त्रियां क्ष्वेडे तु न स्त्रियां" इति मेदिनी ॥

**विषाख्या । सू. १५. अतिविषा** । मुस्तादिगणे अतिविषेत्येव सुश्रुतपाठः ॥

**विषाख्या** । उ. ५. लाङ्गली (इन्दुः) । अतिविषेत्यरुणदत्तः ॥

**विषाणिका** । सू. १५ etc. **अजशृङ्गी** । अजशृङ्गीति पठति सुश्रुतः । सुश्रुतसंहितायां वरुणादिगणे मेषशृङ्गी अजशृङ्गी चेति पदद्वयं विद्यते । तत्र मेषशृङ्गी कर्कटशृङ्गीति डल्हणः । कर्कटकः विषाणिका चेति कलिकापाठः । कर्कटकः कर्कटशृङ्गी , विषाणिका अजशृङ्गी उत्तरवारुणीति लोके विख्याता इति चन्द्रटाचार्यः । "लेपोजगन्धातिविषाविशल्यासविषाणिकाः" इत्यत्र ऋषभक इतीन्दुः ॥

**विषाणी** । सू. २. महिषादिशृङ्गयुक्तजन्तवः ॥

**विषाणी** । उ. ६. **ऋषभकः** । "वीराद्विमेदाकाकोलीकपिकच्छु-विषाणिभि"रित्यत्र "वीराद्विमाषकाकोलीस्व(यं)गुप्तर्षभकर्द्धिभि" रित्येव चरकपाठः ॥

**विषाद्वयम्** । उ. ३९. अतिविषा प्रतिविषा च । एका शुक्लकन्दा अन्या पीतवर्णा ॥

**विष्किरः** । सू. ६ etc. **पक्षिवर्गभेदः** । विकीर्य यः धान्यादिकं भक्षयति स विष्किरः । "वर्तका लाववर्तीरकपिञ्जलकतित्तिराः । कुलिङ्गकुक्कुटाद्याश्च विष्किराः समुदाहृताः । विकीर्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किराः" । रा. नि । "लावतित्तिरिकपिञ्जल-वर्तीरवर्तिकावर्तकनप्तृकावार्तीकचकोरकलविङ्कमयूरक्रकरोपचक्रकुक्कुटसारङ्गशतपत्रकुतित्तिरिकुरुवाहकयवालकप्रभृतयस्त्वयाहला विष्किराः इति सुश्रुतः । A bird which take its food after tearing or scattering it as cocks, peacocks quails, partridges etc । ये जीव कुरेद कुरेदकर खाते हैं इससे इनकी विष्किर संज्ञा है । see **जाङ्गलम्** ॥

**त्रिष्ठा** । चि. ४. see **शमलम्** ॥

**विसग्रन्थिः** । see **त्रिमग्रन्थिः** ॥

**वीरणकः** । सू. १७. वरुणः । वरुण इत्येव संग्रहपाठः । वारुण इति पठति चरकः । वारणक इति पाठ्यकारपाठः । कण्टककरंज इति हेमाद्रिः ॥

**वीरणमूलम्** । उ. ४०. उशीरम् । 'वीरणस्य तु मूलं स्यादुशीरं नलदञ्च तत् । अमृणालञ्च सेव्यञ्च समगन्धिकमित्यपि" इति भावमिश्रः । "स्याद्वीरणं वीरतृणं मूलेऽस्योशीरमस्त्रियां" इति वैजयन्ती ॥

**वीरा** । सू. ६ etc. **काकोली** । "अभीरुवीराजीवन्ती" इत्यत्र "वीरा"स्थाने 'मेदा' इत्येव चरकपाठः ॥

**वीरा** । चि. ३ etc. **क्षीरकाकोली** । भूम्यामलकीति केचित् ॥

**वीरा** । क. ४. उ. ४०. **क्षीरविदारी** । "वीरा रसविशेषे पुंस्युत्तरे सुभटे त्रिषु । स्त्री सुराक्षीरकाकोलीतामलक्येलवालुके । पतिपुत्रवतीरंभागंभारीदुग्धिकासु च । मलयूक्षीरविदार्य्योः क्लीबं शृंग्यां नलेऽपि च" इति मेदिनी ॥

**वृकः** । सू. ६ etc. ईहां वर्कते—ईहावृक एवैकदेशेन वृक इत्युक्तः । कुक्कुराकारो हरिणघातकः क्षुद्रव्याघ्रविशेषः । हिं.—हुण्डार, भेडिया; बिग इत्येके ; बं.—घोष ; म.—लांडगा ; क.—तोळ ; त.—ओनाय् ; मल. चेन्नाय् ചെന്നായ്; इं.—Lupus, Wolf; जर्मन.—Lykos ; ल. *Canis lupus* । The wolf resembles somewhat a sheep-dog, but reaches the height of a bull-dog and bears a grey or blackish fur which is thicker and longer in those of northern countries than in those of the south. It is met with

throughout northern Europe and Asia. A smaller species is found throughout the Indian peninsula ।
**नामानि**—"ईहामृगस्तु कोकः स्याद्वृको वत्सादनोऽविभुक्" । ध. नि । "अरण्यश्वा बुधैर्ज्ञेयः कोक ईहामृगो वृकः" इति हलायुधः ॥

**वृक्कः** । सू. ६ etc. **कटिपार्श्वस्थमूत्रप्रभवकोशविशेषः** । बुक्क इति केषांचन पाठः । "मेदःशोणितयोः साराद्वृक्कयोर्युगलं भवेत् । तौ तु पुष्टिकरौ प्रोक्तौ जठरस्थस्य मेदसः" । भा. प्र । "वृक्कौ नाम—महाशिंबिबिजिसमाकारे मुख्ये मूत्रप्रजनन-यन्त्रे स्त्रीपुंसयोस्तुल्ये । तयोरवस्थानमुदरगुहायां कटिप्रदेशे पृष्ठवंशमुभयत एकादश-द्वादशपर्शुकयोरुपकण्ठे । तत्र दक्षिणवृक्कस्य स्थितिर्वामवृक्कात् स्तोकेन निम्नतरा, दक्षिणपार्श्वे यकृदवस्थानात् । उदर्या कला च वृक्कयोः पुरस्थैव (न परितश्छादनी)" इति प्रत्यक्षशारीरात् । Kidneys । हिं.—गुर्दे ; मल.—मूत्रपरिप्पा മൂത്രപ്പ । ॥

**वृक्षकः** । सू. ३० etc. **कुटजः** । क्षारविध्यां कुटज इत्येव सुश्रुतपाठः ॥

**वृक्षादनी** । सू. १५ etc. जन्मवृक्षमत्ति नाशयति । **वन्दा** । "वृक्षादनी तु वन्दायां विदारीकन्दकेऽपि च" इति विश्वमेदिन्यौ । N. O.—*Loranthaceae* । **हिं.**—बान्दा , बन्दाल ; **बं.**—परगाछा , वांदरा , वान्दडा ; **म.**—बादांगुळ , बांदे ; **गु.**—गुन्दी , वान्दो ; **तै.**—बाजिनीके , वन्दा ; **क.**—वंदनिगे ; **त.**—पुल्लुरुवि ; **मल.**—इत्तिक्कण्णि ഇത്തിക്കണ്ണി , पुल्लुण्णि ; **इं.**—Parasite ; **ल.**—*Loranthus coriaceus* । **नामानि**—"वन्दका स्याद्वृक्षरुहा शेखरी कामरूपका । वृक्षादनी तरुरुहा कामिनी पद्मरूपिणी" । ध. नि । सर्वांशो ग्राह्यः । **गुणाः**—"वन्दाकः स्याद्धिमस्तिक्तः कषायो मधुरो रसे । माङ्गल्यः कफ-

वाताश्नरक्षोव्रणविषापहः" । भा. प्र । कवलेख इति लोके इति डल्हणः ॥

**वृक्षाम्लः** । सू. ६ etc. **अम्लफलविशिष्टो वृक्षविशेषः** । N. O.—*Guttiferae* । हिं.—कोकम, विषांविल, महादा ; बं.—महादा ; म.—आमसोल ; गु.—कोंकम, बिरंटेल रतंबा ; कों.—बीरुंटा ; गोवा.—भ्रिण्टौ ; क.—मुर्गिनहुळिमर ; तु.—पुणरपुळि ; त.—मुर्कल्मरं ; मल.—पिणम्पुळि പിണമ്പുളി, पुनम्पुळि ; मरप्पुळि इत्येके ; इं.—Mate mangosteen, Kokam butter tree, Red mango ; ल.—*Garcinia purpurea, G. Indica* । An acid jungle-fruit used for tamarind । तिन्तिडीकमिति हेमाद्रिः । महार्द्रकमितीन्दुश्चक्रपाणिदत्तश्च । **नामानि**—"वृक्षाम्लं तिन्तिडीकं च शाकाम्लं रक्तपूरकम् । अम्लवृक्षोऽम्लशाखः स्यादपरोऽम्लमहीरुहः" । ध. नि । **गुणाः**—"वृक्षाम्लमाममम्लोष्णं वातघ्नं कफपित्तलम् । पक्वन्तु गुरु संग्राहि कटुकं तुवरं लघु । अम्लोष्णं रोचनं रूक्षं दीपनं कफवातकृत् । तृष्णार्शोग्रहणीगुल्मशूलहृद्रोगजन्तुजित्" । भा. प्र । आमफलं पक्वफलं च ग्राह्यम् । चिञ्चेति सरस्वतीनिघण्टुः । अम्लवेतस इत्येके ॥

**वृक्षाम्लकः** । उ. २२. वृक्षाम्लः ॥

**वृद्धपञ्चमूलम्** । उ. ३. महत्पञ्चमूलम् ॥

**वृद्धिः** । सू. १५ etc. स्वनामख्यातौषधिः । **कन्दविशेषः** । "वृद्धिस्तु वर्धने योगेऽप्यष्टवर्गौषधान्तरे" इति मेदिनी । **गुणाः**—"वृद्धिर्गर्भप्रदा शीता बृंहणी मधुरा स्मृता । वृष्या पित्तास्रशमनी क्षतकासक्षयापहा" । भा. प्र । "अथ वृद्धिर्योधनीया महाश्रावणिका बुधा" इति वैजयन्ती । "वृद्ध्यभावे महाबला" इति पौराणि-

काः। वाराही वा ग्राह्या । वृद्ध्यभावे पञ्चसालमिति केचित् । see ऋद्धिः ॥

**वृद्धिर्द्धिः** । चि. १७. वृद्धिर्द्धिरिति पाठः समीचीनः। वृद्धिरृद्धिश्च। श्रावणीयुगमित्येके ॥

**वृश्चिकः** । चि. ७ etc. वृश्चति । कीटविशेषः । हिं.—बिच्छू, वीछी ; बं.—विछा ; म.—विंचू ; सिं.—गोनुस्सा ; त.—तेळ् ; मल.—तेळ् തേൾ ; इं.—Scorpion ; ल.—*Scorpionina* । "वृश्चिको द्रुण आलिः स्या"दिति बोपालितः । "वृश्चिकस्तु द्रुणे राशौ शूककीटौषधीभिदोः" इति मेदिनी ॥

**वृश्चिकाली** । सू. १५ etc. वृश्चिक इवालति पर्याप्नोति स्पर्शने वेदनायै अच् । स्वनामख्यातक्षुपविशेषः । कण्टकितमेषशृङ्ग-तुंगाकारफला पाठापत्रा ईषद्रोमशा श्वेतपुष्पगुच्छा दक्षिणावर्तवल्ली मेषशृङ्गीभेद इति डल्हणः । मेषशृङ्गीभेद इत्येव मदनपालः । "अन्या तु दक्षिणावर्ता वृश्चिकाली विषाणिका" इति । चरकसूत्रा-ष्टादशाध्याये "अहितपत्रलतागुल्मसंस्पर्शनै"रित्यत्र "अहितपत्रल-तागुल्माः वृश्चिकाल्याद्याः" इति चरकोपस्कारकारः वृश्चिकालीद-लस्पर्शनमात्रकण्डूशोथोदयादीननुस्मारयति । वृश्चिकाल्येव हस्ति-शुण्ठीति केरलेष्वेके । N. O.—*Euphorbiaceae* । हिं.—बिछवाघास, बहॆण्टा ; बं.—बिछुटी, विछाती ; दखा.—काञ्च-कुरि ; कों.—खाजकोटली ; खाजकुली ; म.—खोजकोलती ; आग्या, विचवा ; गु.—खाजवणी ; तै.—दूलगोण्टि, तेलुम-णिचेट्टु ; क.—दूलगोण्टि, तुरचिबळ्ळि, हलिगिलु ; त.—कांचोरि ; तु.—पचेरेङ्गि, तुतुसु, तुतुसे ; मल.—कोटित्तूवा കൊടിത്തൂവ, चोरिङ्ङणं, चोरियणं ; इं.—Nettle ; ल.—*Tragia involucrata* । नामानि—"वृश्चिकाली विषाणी च

विषघ्नी नेत्ररोगहा । अग्निकाऽप्यलिपर्णी च दक्षिणावर्तकी तथा" । रा. नि । **गुणाः**—"वृश्चिकाली कटुस्तिक्ता सोष्णा हृद्वक्त्रशुद्धिकृत् । रक्तपित्तहरा बल्या विबन्धारोचकापहा" । रा. नि।- मूलं ग्राह्यम् ॥

**वृश्चीवः** । **सू.** १५ etc. **श्वेतपुनर्नवा** । वृश्चीरवृश्चिकाविति पाठौ । "श्वेतायां वृश्चिकोऽल्पायां दीर्घपत्री विटाटिका" इति वैजयन्ती । **हिं.**—सफेद पुनर्नवा, विषखपरा ; **बं.**—श्वेतपुण्या ; **म.**—वेंदुळी पांढरी ; **गु.**—धोळी साटोडो ; **तै.**—गाल्जरु ; **क.**—बिलियदुेल्लडकिलु ; **त.**—वेळ्ळेचारटै ; **सिं.**—पिटसुदुसारण ; **मल.**—वेळुत्त तलुतामा ; **इं.**—White spreading hog-weed । **नामगुणाः**—"पुनर्नवा श्वेतमूला शोथघ्नी दीर्घपत्रिका । कटुः कषायानुरसा पाण्डुघ्नी दीपनी परा । शोथानिलगरश्लेष्महरी व्रण्योदरप्रणुत्" । भा. प्र । **अन्यच्च**—"श्वेता पुनर्नवा सोष्णा तिक्ता कफविषापहा । कासहृद्रोगशूलास्रपाण्डुशोफानिलार्तिनुत्" । रा. नि । मूलं ग्राह्यम् ॥

**वृषः** । **सू.** ६ etc. वर्षति मधु । **वासा** । "वृषो गव्याखुधर्मयोः । पुंराशिभेदयोः शृङ्ग्यां वासके शुक्रलेऽपि च । श्रेष्ठे स्यादुत्तरस्थश्च" इति हैमः । महातिक्तकघृतयोगे आटरूषक इत्येव सुश्रुतपाठः । यास इति मुद्रितचरकग्रन्थेषु दृश्यते । वासैव यास इति मुद्रणस्खालित्यात् प्रमादाद्वा परिवर्तित इति मन्ये, धन्वयवास इति तत्रापरशब्ददर्शनाच्च ॥

**वृषः** । **सू.** १५. **अपामार्गः** । वीरतरादिगणे वृषशब्दस्थाने 'वसिर' इत्येव सुश्रुतपाठः । मर्कटमञ्जरीति वृद्धवाग्भटः पठति । तत्र मुस्तकमञ्जरीति केषांचन पाठः । गजपिप्पलीति केचित् । अपामार्ग इति डल्हणः । सूर्यावर्तभेद इत्यपरे ॥

**वृषः** । उ. ६. बलीवर्दः । "वृषो धर्मे बलीवर्दे शृंग्यां पुंराशिभेदयोः । श्रेष्ठे स्यादुत्तरस्थश्च वासामूषिकशुक्रले । तथा वास्तुस्थानभेदे पुमानयं प्रकीर्तितः" इति मेदिनी । हिं.—बैल ; म.—बैल ; तै.—यद्दू ; त.—एरुतु ; सिं.—गोना, हरका ; मल.—मूरि ഉഠി, കാള ; इं.—Bull, Ox । **नामानि**—"बलीवर्दस्तु वृषभ ऋषभश्च तथा वृषः । अनड्वान् सौरभेयोपि गौरुक्षा भद्र इत्यपि" । भा. प्र । **तन्मूत्रगुणाः**—"वृषमूत्रञ्च शोफघ्नं क्रिमिदोषविनाशनम् । कामलाग्रहणीपाण्डुनाशनञ्चाग्निदीपनम्" । अत्रि । see **गौः** । "शृगालशल्यकोलूकजलूकावृषबस्तजै"रित्यत्र "शृगालशल्यकोलूकमार्जारवृकबस्तजै"रिति पाठस्समीचीनश्चरकाहितत्वात् ॥

**वृषकः** । चि. ११ etc. वसुक इति पाठः समीचीनः । पाषाणभेदक इत्यरुणदत्तः । "पाषाणभेदं वृषकं श्वदंष्ट्रा" इत्येकत्रैव चरकपाठदर्शनात्तत्र साधुः । "वृषकं त्रपुसैर्वारुलट्वाबीजानी"त्यत्र 'वृषक' स्थाने 'वसुक' इति समर्थयन्ति बहवः ॥

**वृषकः** । चि. २१. वासा ॥

**वृषकर्णी** । सू. १५. आखुकर्णी । उन्दुरुकर्णिकेति पठति सुश्रुतः । द्रवन्तीमाहुरन्ये, अपरे दन्तिनीमाहुरिति डल्हणः । दन्तीभेद इति भाष्यकारः । सुदर्शनेति शिवदीपिका ॥

**वृषदंशः** । उ. ३ etc. वृषानाखून् दशति । **मार्जारः** । वनमार्जार इत्येके । वृकदंश इति पाठो न शुद्धः ॥

**वृषपर्णी** । चि. १७. आखुकर्णी । मूषिकपर्णीति संग्रहपाठः । वृषकर्णीतीन्दुः । पुञ्जीपत्रेति प्रसिद्धा इति चक्रपाणिदत्तः ॥

**वृषभः** । उ. ७. "वृषभर्क्षगवामपी"त्यत्र "पृषतर्क्षगवामपी"त्येव सुश्रुतसंग्रहयोः पाठ इत्यनुस्मारयामि ॥

**वेणी** । क. १. देवदाली । "वेणी केशस्य बन्धने । नद्यादेरन्तरे देवताडे" इति मेदिनी ॥

**वेणुः** । सू. १९ etc. वेणन्ति व(वि)यन्ति वानेन वेणुः । **वंशः** । "वेणुर्नृपान्तरे । त्वक्सारेऽपि च पुंसि स्या"दिति मेदिनी ॥

**वेतसः** । चि. ६ etc. वेत्यम्भोनुवर्तते वितस्यत वा वेतसः। **शाक-लताविशेषः** । N. O. *Palmeae* । हिं.—बेंत ; बं.—बेंत्र, बेत ; म.—वेत ; गु.—नेतर ; कों.—वेत ; तै.—पेमु, पेप, वेतसमु ; जीतयुरकुली इत्येके ; क.—बेत्त ; त.—पिरंपु ; सिं.—वे ; तु.—सूरोल्, तूरोलुबेत्त ; मल.—चूरल् ചൂരൽ, पिरम्पु ; वञ्जि इत्येके ; इं.–Rattan, Cane ; ल.–*Calamus rotang* । मूलं शाखाग्रञ्च ग्राह्यम् । **नामानि**–"वेतसो नम्रकः प्रोक्तो वानीरो वंजुलस्तथा । अभ्रपुष्पश्च विदुलो रथशितश्च कीर्तितः" । भा. प्र । **गुणाः**—"वेतसः कटुकः स्वादुः शीतो भूतविनाशनः । पित्तप्रकोपनो रुच्यो विज्ञेयो दीपनः परः" । रा. नि । **अन्यच्च**—"वेतसः शीतलो दाहशोथार्शोयोनिरुक्व्रणुत् । हन्ति वीसर्पकृच्छ्रास्रपित्ताश्मरिकफानिलान्" । भा. प्र । see **निचुलः** ॥

**वेतसाम्लः** । चि. १४. **अम्लवेतसः** ॥

**वेत्रः** । चि. १. **महान् वेतसः** । हिं.—बडा बेंत । see **वेतसः** ॥

**वेत्रलता** । **वेतसः** ॥

**वेत्राग्रम्** । सू. ६. **वेत्रस्य अग्रम्** । हिं.—वेंतकी कोंपल ; म.—वेताचे कोंब ; मल.—चूरल्क्कुरुत्तु । The soft sprouts of the Calamus Rotang । वेतसप्रान्तमिति पदार्थचन्द्रिका । **वेत्रकरी-रमित्येव सुश्रुतपाठः** । **गुणाः**—"वेत्राग्रं दीपनं रुच्यं तिक्तं पित्तकफापहम्" । रा. व । नाडीशाकविशेष इत्येके ॥

**वेल्लम्** । सू. १५ etc. वेल्लति । **विडङ्गम्** । "अथ वेल्लं कृमिघ्नतण्डुलौ इति रभसः ॥

**वेल्लन्तर:** । सू. १५. बिल्वान्तरवृक्ष: । वीरतरुरिति सुश्रुतपाठ: । वीरतर इति वृद्धवाग्भट: । जाङ्गलदेशे नर्मदातटे चर्मण्वतीनदी-समीपे च स्वनाम्ना प्रसिद्ध: । तल्लक्षणं यथा—"वेल्लन्तरो जगति वीरतरु: प्रसिद्ध: श्वेतासितारुणविलोहितपीतपुष्प: । स्याज्जाति-तुल्यकुसुम: शमिसूक्ष्मपत्र: स्यात् कण्टकी विजलदेशज एव वृक्ष:" इति भावमिश्र: । N. O.—*Leguminosae* । हिं.—बम्बेल, ब-रबेल, बिल्वांतर; बं.—बिल्वांतर, वीरतरु; म.—वेलतूर, सेगुम्कटि; गु.—वेलतूर, गलतोरो; तै.—वेणुतुरु, वेलुतुरु; क.—एडतरि, वदविन, वडुवारदमर, ओडण्डू; त.—विटत्तेरै; वि-टत्तेर्, विटत्तलै, विटत्तालि; सिं.—अनूदर; राजपुटाना.—खैरि; मल.—विटत्तल् വിടത്തല്‍; मुळुमरं इत्येके; ल.—*Dichrostachys cinerea; Mimosa cin* । नामानि—"वेल्लन्तरो दीर्घपत्रो वीरद्रुर्बहुवारक:" । म. पा । त्वगादिकं ग्राह्यम् । गुणा:—"वेल्लन्तरो रसे पाके तिक्तस्तृष्णाकफापह: । मूत्राघा-ताश्मजिद्ग्राही योनिमूत्रानिलार्तिजित्" । भा. प्र । अर्जुनवृक्ष इति हाराणचन्द्र: । शवर इति डल्हण: ॥

**वेशवार:** । see **वेसवार:** ॥

**वेश्मधूम:** । उ. ३०. गृहधूम: ॥

**वेसवार:** । सू. ६ etc. मांसव्यञ्जनविशेष: । वेसवारं विशिष्टसं-स्कारसंस्कृतं मांसं खानिष्कापरपर्यायम् । "वेसवार: पिष्टमांसे" इति वैजयन्ती । "मांसं निरस्थि सुस्विन्नम् पुनर्दृषदि चूर्णितम् । पिप्पलीशुण्ठिमरिचगुडसर्पि:समन्वितम् । एकत्र पाचयेत् सम्य-ग्वेसवार इति स्मृत:" इति सुश्रुत: । स्विन्नं पिष्टं धान्यकनागरा-जाजिलवणहिंगुघृतादिसंस्कृतं मांसमित्येके । नागरधनिकाआज्या-दिसंस्कृतं सूक्ष्मछिन्नं मांसमितीन्दु: । चटनी इति भाषेति डल्हण: ।

नुण्णरावि इति केरलेषु केचित् । "निरस्थि पिशितं पिष्टं स्विन्नं घृतगुडान्वितम् । कृष्णामरिचसंयुक्तं वेशवार इति स्मृत" इति चरकोपस्कारटीकायाम् । अपि च —"त्र्यूषणं जीरकद्वन्द्वं शतपुष्पा च धान्यकम् । त्वगेलापत्रकं नागकेशरं च तिलान् तथा । दाडिमत्वक्कुलिशकासमर्दपत्राणि हिंगुकम् । रूक्षं चार्द्रं नारिकेलं सिद्धार्थैरण्डमूलकम् । बृहद्रकं च मरिचं द्वाविंशं बाफलीफलम् । एते सर्वे यथायोग्यं घृते भर्ज्यं विचूर्ण्य च । यथायोग्यं मेलिताश्चेद्वेसवारः स वातहा । यस्मिन् पदार्थे दत्तोयं सोमेर्वीर्यस्य वर्धकः" । नि. र । कासमर्द इति च पर्यायो दृश्यते । "हिंग्वार्द्रमरिचं जीरं हरिद्रा धान्यकं तथा । क्रमेण वर्धितं सर्वं वेसवारमिदं शुभम् । स्तोकेन वारिणा सर्वं वण्टितं वस्त्रगालितम् । मात्रया व्यञ्जने देयं कासमर्दं च तत् स्मृतं" इति क्षेमकुतूहले ॥

**वैकंकतः** । उ. ३७. विकङ्कतः ॥

**वैगंधिकः** । उ. ३६. गन्धकः । ४०० गन्धपाषाणः । त्रिजातकश्चतुर्जातको वा इति जेज्जटः । शंखविषमित्येके ॥

**वैजयन्ती** । उ. ३. अग्निमन्थः । "वैजयन्त्यां तु तर्कारी नादेयी च जयन्त्यपि" इति वैजयन्ती । "वैजयन्ती पताकायां जयन्तीपादपे स्त्रियां" इति मेदिनी ॥

**वैडूर्यम्** । उ. ३६. विदूरभूमिजो कृष्णपीतवर्णो विडालनेत्राभो मणिभेदः । "वैडूर्यं वालवायजं" इति वैजयन्ती । "सितञ्च धूम्रसङ्काशमीषत्कृष्णासितं भवेत् । वैडूर्यनाम तद्रत्नं रत्नविद्भिरुदाहृतं" इति युक्तिकल्पतरुः । उक्तं हि भोजेन —"अस्ति शैलो विदूराख्यः पर्यन्ते तत्र काचन । मही रत्नाकरीभूता वैडूर्यं तत्र जायते । मेघशब्देन जायन्ते तत्र रत्ननवांकुराः । क्रमात् परिणतास्ते स्युर्भोगभोगी राजपूजिताः" इति । "एकं वेणुपलाशपेशलरुचा मा-

यूरकण्ठत्विषा मार्जाररेक्षणपिङ्गला च विदुषा ज्ञेयं त्रिधा छायया । यद्गात्रे गुरुतां दधाति नितरां स्निग्धं तु दोषोज्झितं वैदूर्यं विमलं वदन्ति सुधियः स्वच्छं च तच्छोभनं" इति तन्त्रान्तरे । हिं.—वैडूर्यमणि, लहसुनिया; बं.—वैदूर्य; म.—वैडूर्यरत्न; लसण्या; गु.—लसणीयो; सिं.—वैरोडी; मल.—वैडूर्यक्कल्लु വൈഡൂര്യക്കല്ല്; इं.—Turquois, Beryl, Catseye: ल.—*Beryllus, Lapis lazuli* । **नामानि**—"वैदूर्यं दूरजं रत्नं स्यात् केतुग्रहवल्लभम्" । **उत्तमवैदूर्यलक्षणम्**—"वैदूर्यं श्यामशुभ्राभ्रं समस्वच्छम् गुरु स्फुटम् । अमच्छभ्रान्तरीयेण गर्भितं शुभमीरितम्" । **गुणाः**—"वैडूर्यमुष्णमम्लं च कफमारुतनाशनम् । गुल्मादिदोषशमनं भूषितं च शुभावहम्" । रा. नि ॥

**वैदूर्यम्** । शा. ५. वैडूर्यम् ॥

**वैदेहिका** । उ. ३९. पिप्पली । पिप्पलीति चरकपाठः ॥

**वैदेही** । चि. ३ etc. विदेहदेशे भवा । पिप्पली । "वैदेही पिप्पली प्रोक्ता वैदेही जनकात्मजा" इति शाश्वतः । "वैदेही रोचनासीतावणिक्स्त्रीपिप्पलीपु च" इति मेदिनी । उत्तरैकादशाध्याये "कुर्यान्मरिचवैदेहीशिरीषफलसैन्धवै"रित्यत्र वैदेहीस्थाने पिप्पलीति सुश्रुतपाठः ॥

**वैभीतकी** । विभीतकबीजमज्जाकृतं मद्यम् । विभीतकवल्कलयुक्तशालिपिष्टकृता इति हेमाद्रिः । आक्षिकीति चरकपाठः । बन्धनीति प्रसिद्धेति शिवदासः । बहेड़ोंसे बनायी हुई सुरा ॥

**व्यजनम्** । सू. २७ etc. **तालवृन्तम्** । हिं.—बेना, पंखा ॥

**व्यञ्जनम्** । सू. ७ etc. **तेमनम्** । "व्यञ्जनं तेमने चिह्ने श्मश्रुण्यवयवेऽपि च" इति मेदिनी । मल.—कूट्टान् കൂട്ടാൻ, करि;

म.—कढी, तोंडीं लावणें; हिं.—चटनी; इं.—Sauce, Condiment। "व्यंजनं सूपशाकादि मिष्टान्नं तेमनं स्मृतम्। उपदंशो विदंशः स्यात् संधानो रोचकश्च सः"। रा. नि॥

**व्याघ्रः** । सू. ६ etc. व्याजिघ्रति। 'घ्रा गन्धोपादाने'। व्याजिघ्रन् हन्तीति वा। **प्रसहजातीयमृगविशेषः**। "व्याघ्रः स्यात् पुंसि शार्दूले रक्तैरण्डकरञ्जयोः। श्रेष्ठे नरागुत्तरस्थः कण्टकार्यां तु योषिति" इति मेदिनी। **हिं.**—बाघ, बघेरा; **बं.**—पुण्डरीक, बाघ; **म.**—बाघ; **तै.**—पुलि; **क.**—हुलि; **त.**—पुलि; **सिं.**—कोटिया; **मल.**—कटुवा കടുവ, वरियन्, वलिअनरि, पुलि; **इं.**—Tiger; **ल.**—*Felis tigris*। The Royal Tiger inhabits Southern and Eastern Asia. The red or yellow colour of its fur is tinted with black transverse stripes. It is not inferior to the lion either in size or strength, while in ferocity and fearlessness it surpasses the "king of beasts"। विकृतमुखो निद्रालुः हिंस्र इति डल्हणः। **नामानि**—"व्याघ्रो मृगारिरुशार्दूलो हिंसारुश्चन्द्रकी मृगात्" इति वैजयन्ती। "सिंहशार्दूलयोर्मांसमुष्णं वाक्षिरोगजित्"। see **प्रसहः**॥

**व्याघ्रनखम्** । सू. १५ etc. व्याघ्रस्य नखो ऽस्त्यस्य आकारे अच्। **नखी नाम गन्धद्रव्यम्**। हिं.—नखी; बं.—छोट नखी; म.—वाघनख; गु.—नखली; क.—वाघनख; त.—पुलियुकिर्; मल.—नाकुणं നാകുണം। बृहन्नख इति एलादिगणव्याख्यायां डल्हणः। अश्वखुराकारा नखी इति भाष्यकारः। **नामानि**—नखमन्यद्व्याघ्रनखं पुटं व्याघ्रायुधं मतम्। अक्तं व्याघ्रतलं पादं कूटस्थं चक्रकारकम्"। ध. नि। **गुणाः**—"ग्रहभूतोपशमनं पवित्रं द्वीपिजं नखम्। व्याघ्रनखस्तु तिक्तोष्णः क-

षायः कफवातजित् । कण्डुकुष्ठव्रणघ्नश्च वर्ण्यः सौगन्ध्यदः परः" । ध. नि । see नखम् ॥

व्याघ्री । चि. १ etc. हिंस्रत्वात् । कण्टकारी । "व्याघ्री तु कण्टकार्यां स्त्री"रिति केशवस्वामी । पाषाणभेदादिघृतयोगे व्याघ्रीस्थाने बृहतीद्वयमित्येव संग्रहपाठः । बृहती कण्टकारिका चेति सुश्रुतसंहितायाम् ॥

व्याघ्री । चि. १. व्याघ्रस्त्री । "हिंगुसमा व्याघ्रीवसा" ॥

व्याघ्र्यौ । सू. १०. बृहतीद्वयम् ॥

व्याधिघातः । सू. १५ etc. व्याधिं हन्ति । आरग्वधः । श्यामादिगणे राजवृक्ष इति सुश्रुतपाठः । "पूतीकार्कव्याधिघातस्नुहीनां मूत्रे पिष्टाः पल्लवा जातिजाश्च" इत्यत्र "पूतीकार्कस्नुग्नरेन्द्रद्रुमाणां मूत्रैः पिष्टाः पल्लवाः सौमनाश्च" इत्येव सुश्रुतः ॥

व्यालः । सू. २. नि. ६. दुष्टगजः । दुष्टगजादिरिति हेमाद्रिः । "स बालः कलभो ज्ञेयो दुर्दान्तो व्याल उच्यते" । ध. नि । "व्यालस्तु चित्रकव्याघ्रसिंहदुष्टद्विपादिषु" । रा. नि । सिंहादय इति पदार्थचन्द्रिका । दुष्टः क्षुद्र इतीन्दुः ॥

व्यालः । सू. ६ etc. अहिः । "व्याललालादिदूषितम्" । "व्यालो दुष्टगजे सर्पे श्वापदे च पुमान्" इति वैजयन्ती ॥

व्योषम् । सू. १४ etc. त्रिकटु । "व्योषं स्यात् त्रिकटुद्रव्ये करिभेदे पुमानयम्" इति मेदिनी ॥

व्रणकृत् । उ. ३९. व्रणं करोति । भल्लातकः ॥

व्रीहिः । चि. १. प्रावृट्कालजाशुधान्यम् । "व्रीहयस्त्वाशवः ख्याताः प्रावृट्कालसमुद्भवाः" इति । "क्षुण्णासितः स्मृतः शाली रक्तो व्रीहिरुदाहृतः" इत्येके । व्रीहयः षष्टिकादय इति केचित् ।

"वार्षिकाः कण्डिताः शुक्ला व्रीहयश्चिरपाकिनः" इति भावमिश्रः। **तद्भेदा यथा**—"कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि। शालामुखो जतुमुख इत्याद्या व्रीहयः स्मृताः" इति । अन्यच्च—"कृष्णव्रीहिशालामुखजतुमुखनन्दीमुखलावाक्षकत्वरितककुक्कुटाण्डकपारावतकपाटलप्रभृतयो व्रीहयः" इति सुश्रुतः । गुणाः—"व्रीहयः कथिताः पाके मधुरा वीर्यतो हिमाः । अल्पाभिष्यन्दिनो बद्धवर्चस्काः षष्टिकैः समाः । कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे" । भा. प्र । मल. विरिप्पु വിരിപ്പു, पुञ्च-नेल्लु इति भास्करव्याख्या । see **शालिः** । Crop, different kinds of paddy sown in April and reaped in August । "व्रीहिः सामान्यधान्ये स्यादाशुधान्ये तु पुंस्ययं" इति मेदिनी ॥

# श ।

**शकुनाहृतः** । शालिधान्यभेदः । Brought by birds from a distant country । कुशलाहृतशकुलाहृताविति पाठौ । शकुनाहृतो यो मगधेषु बुद्धोत्पादकाले उत्तरकुरुभ्यो हंसैरानीतो मृगारिमात्रा विशाखाख्यया वापितो विस्तरं गतः । अत एव शकुनाहृत इत्यन्वर्थास्य संज्ञेत्यरुणदत्तः । "द्वीपान्तरात् समानीतो गरुडेन महात्मना । शकुनाहृतः स शालिर्गरुडापरनामकः" इति सुश्रुतटीकायां डल्हणः । अवन्तीनगर्यां वक्रनाम्ना प्रसिद्धः । मगधेषु पाशक इति । तृणकाद्धीनगुणः ॥

**शकुलादनी** । सू. ६. शकुलैरद्यते । जलपिप्पली । N. O.—*Verbenaceae* । हिं.—जलपीपल, पनिसिगा, गङ्गतिरिया, भुयिओकरा; बं.—कांचडा घास; म.—जलपिंपळी, वेकन; गु.—रतबेलियो; तै.—बोकेना; त.—तलैपोटस्, पोदुतलै;

क.—नेलहिप्पलि, केरेहिप्पलिसोप्पु, होमुगुळु; पा.—पीपल आवी; अ.—फिलफिलमाय; मल.—नीर्त्तिप्पलि നീർതിപ്പലി, आनक्कोलुप्पा इत्येके; इं.—Purple Lippa; ल.—*Lippia Nodiflora*। नामानि—"जलपिप्पल्यभिहिता शारदी शकुलादनी। मत्स्यादनी मत्स्यगन्धा लाङ्गलीत्यपि कीर्तिता"। गुणाः—"जलपिप्पलिका हृद्या चक्षुष्या शुक्रला लघुः। संग्राहिणी हिमा रूक्षा रक्तदाहव्रणापहा। कटुपाकरसा रुच्या कषाया वह्निवर्धिनी"। भा. प्र। सर्वांशो ग्राह्यः। कंचटशाक इति चरकप्रसादनी। कटुकेति बहवो व्याख्यातारः। "शकुलादनी स्त्रियां कृष्णभेदाकचटशाकयो"रिति मेदिनी॥

शक्रयवः। चि. १ etc. इन्द्रयवः॥

शक्राह्वयः। नि. ५ etc. कुटजः। "शक्रः पुमान् देवराजे कुटजार्जुनभूरुहो"रिति मेदिनी॥

शंखः। सू. ६ etc. सामुद्रकोपस्थजन्तुविशेषः। "शंखः कंबौ न योषिन्ना भालास्थिनिधिभिन्नखे" इति मेदिनी। "शंखश्च विमलः श्रेष्ठश्चन्द्रकान्तिसमप्रभः। अशुद्धो गुणदो नैव शुद्धश्च स गुणप्रदः"। Class:—*Mollusca*। हिं.—शंख, शाकुच; बं.—शाँक, शंख; तै.—शंखमु; सिं.—सकृय; मल.—शंखं ശംഖം, चंकु; इं.—Conch; ल.—*Tritonium*। नामानि—"शंखो वारिभवः कंबुर्जलजो दीर्घनिस्वनः। सुस्वरो दीर्घनादश्च धवलः श्रीविभूषणः"। ध. नि। गुणाः—"शंखकूर्मादयः स्वादुरसपाका मरुन्नुदः। शीताः स्निग्धा हिताः पित्ते वर्चस्याः श्लेष्मवर्धनाः"। सु. सू. ४६॥

शंखः। उ. १. शंखपुष्पी। "हेममत्स्याक्षकः शंखः" इत्यत्र "मत्स्याक्षकः शंखपुष्पी मधुसर्पिः सकाञ्चनं" इत्येव सुश्रुतपाठः॥

**शंखकुसुमा** । उ. ३९. शंखपुष्पी ॥

**शंखनाभिः** । सू. १० etc. शंखः ॥

**शंखपुष्पी** । चि. ३ etc. शंख इव पुष्पमस्याः । ऊषरभूमिजातो शंखाकारकुसुमो भूलग्नक्षुद्रलताविशेषः । विष्णुक्रान्ताभेदः । N. O. *Gentianaceae* । हिं.—शंखाहुली, सुंखाहुली, कौडीयाला, कोडिल्ला, कौडिल्ला; बं.—शंखाहुली, शंखाली, डानकुनी; म.—शंखोली, सांखवेल; गु.—शंखावली; क.—शंखपुष्पी; सिं.—स्त्रदेहि; पञ्जा.—भूनभारक; मल.—शंखमूली ശംഖുപുഷ്പം, शंखमलरी; ल.—*Canscora decussata* । मूलं पत्रं च ग्राह्यम् । सर्वांशो वा ग्राह्यः । **नामानि**—"शंखपुष्पी सुपुष्पी च शंखाह्वा कंबुमालिनी । सितपुष्पी कंबुपुष्पी मेध्या वनविलासिनी । चिरिण्डी शंखकुसुमा भूलग्ना शंखमालिनी । इत्येषा शंखपुष्पी स्यादुक्ता द्वादशनामभिः" । रा. नि । **गुणाः**—"शंखपुष्पी सरा मेध्या वृष्या मानसरोगहृत् । रसायनी कषायोष्णा स्मृतिकान्तिबलाग्निदा । दोषापस्मारभूताश्रीकुष्ठक्रिमिविषप्रणुत्" । भा. प्र । "शंखपुष्पी हिमा तिक्ता मेधाकृत्स्वरकारिणी । ग्रहभूतादिदोषघ्नी वशीकरणसिद्धिदा" । रा. नि । श्वेतारुणनीलपुष्पभेदेन शंखपुष्पी त्रिविधा । नीलवर्णकुसुमैव विष्णुक्रान्तेति प्रसिद्धा । उक्तं हि—"विष्णुक्रान्ता हरिक्रान्ता नीलपुष्पाऽपराजिता । नीलक्रान्ता सतीना च विक्रान्ता छर्दिका च सा" । रा. नि । अद्रिकर्णीत्येव केरलेष्वेके ॥

**शंखिनी** । सू. १५. यवतिक्ता नाम लताभेदः । श्वेतबुह्मीति केचित् । "शंखिनी श्वेतबुह्मायां चोरपुष्प्यां वधूभिदि" इति मेदिनी । N.O.—*Cucurbitaceae* । हिं.—शंखिनी, वंखवेल; बं.—यवेची, श्वेतवोना; म.—यवोची, टिटवी, शंखवेल; गु.—शंखवेल; तै.—पोट्टि-

बुडमु, कूदुरुबुडा ; क.—मणीतोण्टे, काडपावट्टबळ्ळि ; तु.—तुत्तोंङ्कि ; कों.—ह्मयिसिकाट्ट ; मल.—मुक्का(ल्)प्पीरं മുക്കാ(ല്) പ്പീരം ; कीरिवळ्ळि इत्येके ; ल.—*Mukia scabrella, Bryonia scabrella* । **नामानि**—"यवतिक्ता शंखिनी तु दृढपादा विसर्पिणी । नाकुली चाक्षपीडा च नेत्रमीला यशस्करी" । ध. नि । मूलादिकं ग्राह्यम् । **गुणाः**—"यवतिक्ता सतिक्ताम्ला दीपनी रुचिकृत्परा । कृमिकुष्ठविषामास्रदोषघ्नी रेचनी च सा" । रा. नि । **अन्यच्च**—"यवतिक्ता महातिक्ता साग्निकृद्बलवर्धिनी । तिक्ता ज्वरातिसारघ्नी बालानां शुभदा सदा" । अ. सं । काळांजनीसदृशा श्वेतपुष्पा इति हेमाद्रिः । यवतिक्ताभेदः सुदुग्धा बृहत्पत्रेति डल्हणः । शंखनीह यवतिक्ता 'कालमेघ' इत्याख्यायते इति भाष्यकारः । शंखपुष्पीत्येके ॥

**शटी** । **सू.** ६ etc. शटति । 'शट रुजादौ' । हरिद्रापत्राकृतिः प्रसिद्धा । N. O.—*Scitamineæ* । हिं.—कचूर, कालीहल्दी ; गन्धमस्ति ; बं.—कर्चूर, शठी, एकाङ्गी ; उ.—कचोर ; दखा.—कट्चूर ; कों.—कचोरा ; म.—कचोरा ; गु.—कचूरा ; तै.—कचोरालु, कच्चूरमु, कचोरमु ; क.—शटि, कचोर, सप्पकुङगिड ; त.—कच्चूरं, कश्चोलं, किच्चिलिक्किळंकु, पूळक्किळंकु ; कस्तूरिमञ्चळ् इत्येके ; सिं.—स्रिकुरुपियलि ; मल.—कच्चूरं കച്ചൂരം, कच्चोलं ; बर्मा.—थानु-क्वेन् ; अ.—एरकुलकाफुर ; पा.—जरंबाद, जद्वार खता ; इं.—Long zedoary, Round zedoary ; ल.—*Curcuma Zedoaria or Zerumbet* । **नामानि**—"कर्चूरो गन्धमूलश्च द्राविडः कार्श्य एव च । वेधमुख्यो दुर्लभश्च कस्यचित् संमतः शटी" । ध. नि । मूलं ग्राह्यम् । **गुणाः**—"शटी तिक्ता च कटुका चोष्णा तीक्ष्णाग्निदीपनी । सुगन्धिरुचिरा लघ्वी मुखस्वच्छकरी मता । कोप-

नी रक्तपित्तस्य गलगण्डादिरोगहा । कुष्ठार्शोव्रणकासघ्नी श्वासगुल्मकफापहा । त्रिदोषक्रिमिवातघ्नी ज्वरप्लीहादिनाशकृत्" । नि. र. । "कर्च्चूरो दीपनो रुच्यः कटुकस्तिक्त एव च । सुगन्धिः कटुपाकः स्यात् कुष्ठार्शोव्रणकासनुत् । उष्णो लघुर्हरेच्छ्वासं गुल्मवातकफक्रिमीन्" । भा. प्र ॥

**शठी** । मू. ६ etc. see **शटी** ॥

**शणः** । चिं. ९ etc. **स्वनामख्यातक्षुपः** । N. O.—*Leguminosae* । **हिं.**—सन ; **बं.**—शण ; **द्रखा.**—जनब ; **म.**—ताग ; **गु.**—शण ; **कों.**—सोणवु ; **तै.**—गिलिगिच्च , जनपनार ; **क.**—सणबुगिड ; **त.**—चणल् , कुत्तिरं ; **सिं.**—सन ; **मल.**—चणा ചണ , वयल्वक्कु ; **इं.**—Sun or Bengal hemp, Sunn hemp plant, Indian hemp ; **फ.**—Crotalaire jonciforme ; **ल.**—*Crotalaria juncea*, *C. Bengalensis* । **नामानि**—"शणस्तु माल्यपुष्पः स्याद्वमनः कटुतिक्तकः । निशावनो दीर्घशाखस्त्वक्सारो दीर्घपल्लवः" । रा. नि । मूलं त्वक् च ग्राह्यम् । **गुणाः**—"शणस्त्वम्लः कषायश्च मलगर्भास्रपातनः । वान्तिकृद्वातकफनुज्ज्ञेयस्तीव्रांगमर्दजित्" । रा. नि ॥

**शणपुष्पी** क. १. शणस्येव पुष्पाण्यस्याः । शणसदृशविटपो क्षुपः, परिपाके सस्वनफला । N. O.—*Leguminosae* । **हिं.**—शणहुली , झुनझुनिया , पटसन , बनसन , वनशण , घागरी ; **बं.**—झनझने , वनशणई , शोणोर गाछ ; **पा.**—छाद्ना ; **म.**—रानताग , खुळखुळा ; **गु.**—खुळखुळा ; **तै.**—घेलाघेरिण्टा , शणमतुवेञ्ज , रेञ्जचेट्टु ; **क.**—गिलिगिजि , गिजट्टे , गिजिगिजि , तम्रेलेवुलुक गिड ; **तु.**—गिजिगिजिदे ; **त.**—वेळ्ळैकिलुकिलुप्पै , नरिमुरुट्टि , चिट्टु ; **सिं.**—अण्डनहिरिय ; **मल.**—किलुकिलुप्पा കിലുകിലുപ്പ , तन्तलकोट्टि ; **इं.**—Flax hemp ; **ल.**—

*Crotalaria verrucosa*, *C. Angulosa* । **नामानि**—"शणपुष्पी बृहत्पुष्पी सा चोक्ता शणघण्टिका । महाशणा माल्यपुष्पी वमनी कटुतिक्तका" । ध. नि । बीजादिकं ग्राह्यम् । **गुणाः**—"शणपुष्पी रसे तिक्ता कषाया कफवातजित् । अजीर्णज्वरदोषघ्नी वामनी रक्तदोषनुत्" । रा. नि । **अन्यच्च**—"शणपुष्पी स्मृता घण्टा शणपुष्पसमाकृतिः । शणपुष्पी कटुस्तिक्ता वामिनी कफपित्तजित्" । भा. प्र ॥

**शतपत्रम्** । उ. ३२. शतं बहूनि पत्राण्यस्य । कमलम् । "शतपत्रः शिखण्डिनि । दार्वाघाटे सारसे च कमले तु नपुंसकं" इति मेदिनी ॥

**शतपर्विका** । सू. ७. शतं पर्वाणि ग्रन्थयो यस्याः । वचा । "शतपर्विका दूर्वायां वचायामपि योषिति" इति मेदिनी ॥

**शतपुष्पा** । शा. १ etc. शतं पुष्पाणि यस्याः । बहुपुष्पा । शताह्वा । N. O.—*Umbelliferae* । **हिं.**—सोया, सोआ, सोये, सुवा; **बं.**—शुलफा; **म.**—बाळंतशोप, शेपु; **गु.**—शूवादाणा; शुवानी भाजी, सुवा-नु-बि; **पञ्जा.**—सोया; **दख.**—सोयि; **काश्मी.**—शोयि-बिओल्; **बर्मा.**—समिन्; **मलायी.**—अडस्पुडुस्; **पा.**—शूत्, तुख्मे शूत्; **अ.**—शिब्वत् बजरूल, सीब्वत; **तै.**—शतकुपि, सदापचेट्टु; **क.**—सब्बसिगे, सलुफगिड; **त.**—चतकुप्पि, चतकुप्पै; **सिं.**—यहवतु; **मल.**—चत(तु)कुप्पा ചത(ു)കുപ്പ, शतकुप्पा; **फ्र.**—Persil des marais; **जर्मन्.**—Garter dill; **इं.**—Dill seed; **ल.**—*Peucedanum graveolens* । **नामानि**—"शतपुष्पा मिशिर्घोषा पोतिका माधवी शिफा । अतिछत्रा त्ववाक्पुष्पी शताह्वा कारवी स्मृता" । ध नि । **गुणाः**—"शताह्वा तु कटुस्तिक्ता स्निग्धा

श्लेष्मातिसारनुत् । ज्वरनेत्रव्रणघ्नी च वस्तिकर्मणि शस्यते" । रा. नि । बीजं ग्राह्यम् । "शतपुष्पा लघुस्तीक्ष्णा पित्तकृद्दीपनी कटुः । उष्णा ज्वरानिलश्लेष्मव्रणशूलाक्षिरोगहृत्" । भा. प्र । शतपुष्पा वातपित्तहरेति राजवल्लभः । त्रिदोषघ्नीति भगवानात्रेयः ॥

**शतपोनकः** । उ. २८. चालनी । बहुच्छिद्रो शस्यादिचालनसाधनः पदार्थः । हिं.—चलनी ; पिसी चीज़ छानने का बर्तन । म.—चाळणी ; सिं.—पेनेरय ; त.—चल्लदै ; मल.—अरिप्पा ൈരിപ്പ , चल्लटा , पेनेरा ; इं.—Sieve । अश्वपुच्छवालरचितं शताक्षकमित्यन्ये । "क्षुद्रच्छिद्रशतोपेतं चालनं तितउः स्मृतः" इति काल्यः ॥

**शतवीर्या** । चि. ५. शतं वीर्याणि यस्याः । शतावरी । श्वेतदूर्वेत्येके ॥

**शतावरी** । सू. ६ etc. शतमावृणोति आ+वृ-अच् गौं ङीष् । मधुरवर्गीयमूलविशेषः । महदल्पभेदेन शतावरी द्विविधा । "शतावरी तु शत्यां स्यादिन्दीवर्यामपि स्त्रियां" इति मेदिनी । N. O.—*Liliaceae* । हिं.—शतावर, सतावर, सद्बोरि ; उ.—सफेद मूसली ; बं.—शतमूली ; काश्मी.—सेजहाना ; म.—लघुशतावरी , शतमूळी ; आसवळी ; गु.—शतावरी , सेमूखा , शापनाशुत्रा ; तै.—शतावरि , पिल्लिपेसर , पिल्लिपीचर , चल्ल , चल्लगड्डलु ; क.—आषाडि , किरिय आसडी , शतमूलि , हलुमक्कळतायिबळ्ळि , हलवुमक्कलतायिबेरु ; कों.—सितेचवरि ; तु.—उदुरिबूरु ; त.—तण्णीर् वि(मु)ट्टान् किळंकु , चतावरि , पणियनाक्कु ; सिं.—सातावारिय ; मल.—शतावरी ശതാവരി; अ.—गुर्जदस्ती ; पा.—शकाकुलमिश्री ; ल.—*Asparagus racemosus*, *A. Sarmentosus* । नामानि—"शतावरी बहु-

सुताऽभीरुरिन्दीवरी वरी । नारायणी शतपदी शतवीर्या च पीवरी । महाशतावरी चान्या शतमूल्यूर्ध्वकण्टका । सहस्रवीर्या हेतुश्च ऋष्यप्रोक्ता महोदरी" । भा. प्र । मूलं ग्राह्यम् । **गुणाः**—"शतावरी गुरुः शीता तिक्ता स्वाद्वी रसायनी । मेधाग्निपुष्टिदा स्निग्धा नेत्र्या गुल्मातिसारजित् । शुक्रस्तन्यकरी बल्या वातपित्तास्रशोथजित्" । भा. प्र । **अन्यच्च**—"शतावरी हिमा तिक्ता रसे स्वादुः क्षयास्रजित् । वातपित्तहरा वृष्या रसायनवरा स्मृता" । ध. नि ॥

**शताह्वा** । सू. १७ etc. शतं आह्वा यस्याः । **शतपुष्पा** ॥

**शफरी** । सू. ६. शफान् राति शीघ्रगत्वाच्छफरी । "प्रोष्ठी तु शफरी स्मृता" इति नरहरिः । **प्रोष्ठी नाम क्षुद्रमत्स्यः** । **हिं.**—पुंठी ; **बं.**—पुँटी ; **मल.**—करुमत्स्यं കരുമത്സ്യം ; **ल.**—*Cyprinus Sophore* इत्येके । **गुणाः**—"प्रोष्ठी तिक्ता कटुः स्वादुः शुक्रला कफवातजित्" । इति राजवल्लभः । "श्लेष्मकारी तु शफरी" इत्यत्रिः ॥

**शबरदेशजः** । उ. १६. **श्वेतरोध्रः** ॥

**शबरोद्भवः** । उ. ३७. **श्वेतरोध्रः** ॥

**शमलम्** । उ. ३५. **शकृत्, विष्ठा** । Excrements । Faeces । "उच्यते वर्च उच्चारो वर्चस्कोऽवस्करः शकृत् । गूथं कीटं च विट् विष्ठा पुरीषं शमलं मलं" इति हलायुधः ॥

**शमी** । सू. ६ etc. शमयति दोषान् शमी शिवत्वात् । "शमी सक्तुफलायाश्च शिबिकायाश्च वल्गुलौ" इति मेदिनी । "शमी तु स्यात् सक्तुफलासंज्ञवृक्षान्तरे स्त्रियां" इति केशवस्वामी । **स्वनामख्यातसकण्टकवृक्षः** । "शमीरः सालिपका स्मृता" इति भावमिश्रः । **हिं.**—समी, छिकुर, छोठकर, सफेद कीकर; जंड इति

शिवदीपिका ; गुयाबाव्ला इति हाराणचन्द्रः ; बं.—शाँइ , शांई ; म.—शमी ; गु.—खीजडि ; तै.—शमीचेट्टु ; उत्.—शुमी ; क.—बन्नि , काबन्नि ; त.—वन्निमरं ; सिं.—सूम ; मल.—वन्निमरं വന്നിമരം ; इं.—Sponge tree ; ल.—*Prosopis spicigera* । **नामानि**—"शमी शंकुफला तुङ्गा केशहन्त्री शिवाफला । ईशानी शंकरी लक्ष्मीर्मङ्गल्या पापनाशिनी" । ध. नि । मूलत्वक् पक्वफलं च ग्राह्यम् । **गुणाः**—"शमी तिक्ता कटुः शीता कषाया रेचनी लघुः । कफकासभ्रमश्वासकुष्ठार्शःक्रिमिजित् स्मृता । तत्फलं पित्तलं रूक्षं मेध्यं केशविनाशनम्" । भा. प्र । "शमी रूक्षा कषाया च रक्तपित्तातिसारजित् । तत्फलं तु गुरु स्वादु रूक्षोष्णं केशनाशनम्" । रा. नि । "नखकेशनुत्" इति च पाठः ॥

**शंबरः** । सू. ६. शं वृणोति । मृगविशेषः । "शंबरं सलिले पुंसि मृगदैत्यविशेषयोः" इति मेदिनी । हिं.—साबर , बारहसिंगा ; बं.—शंबर ; म.—सांबर ; सिं.—गोना ; मल.—कलमान् കലമാൻ ; (मरिमान् इत्येके) ; इं.—Sambar ; ल.—*Cervus unicolor* । विकटबहुविषाण इति हेमाद्रिः । "शंबरो गवयाकृतिः" इति भावमिश्रः । "शंबरो गवयो महान्" इत्येके । "शंबरः शोण उच्यते" इति केचित्" । वैजयन्ती तु "शंबरः स्वल्पहरिण" इति ॥

**शंबुकः** । उ. २८. शंबूकः । आवर्तयुक्तो मत्स्यविशेष इतीन्दुः ॥

**शंबूकः** । सू. ६. जलजन्तुविशेषः । आवर्तकोशः । "शंबूको गजकुंभाग्रे घोंघे च शूद्रतापसे । जलजन्तुविशेषे च" इति मेदिनी । हिं.—घोंघी ; जलकी छोटी सीप इत्येके ; सीझे हुये शंख इति

केचित् । बं.—शामुक ; म.—क्षुद्रशंख ; त.—नत्तै ; सिं.—बेल्लोय ; मल.—चवणिग्क्का ഞവണിക്ക , चमाञ्चि , नत्तग्क्का ; इं.—Snail ; ल.—*Gastropoda* । **नामानि**—"क्षुल्लकः क्षुद्रशंखः स्याच्छंबूको नखशंखकः" इति नरहरिः । **गुणाः**—"क्षुल्लकः कटुकास्तिक्तः शूलहारी च दीपनः" । रा. नि ॥

**शम्याकः । सू.** १५ etc. शमीं शिंबीमकति शम्याकः । आरग्वधः । "सम्पाकस्तार्किके धृष्टे त्रिषु ना चतुरंगुले" इति मेदिनी । "शम्याकाशोकयोरपी"त्यत्र "रम्यकाशोकयोरपी"ति पठनीयः । सुश्रुतसंग्रहयोरपि "तिलकविधिरेवाशोकरम्यकयोर्द्रष्टव्यः" इति स्फुटतया प्रतिभाति ॥

**शरः । सू.** ६ etc. शृणाति पारुष्यात् । **स्वनामख्याततृणः** । "शरस्तेजनके बाणे दध्यग्रे ना शरं जले" इति मेदिनी । N. O.—*Gramineæ* । हिं.—कांडा , रामशर , शरपत् , सरपत , मूंज ; बं.—सरपत , शरगाछ , मुंज ; म.—तिरकांडें ; पञ्जा.—गभगण्ड , कंड , ककाना , पालावार ; तै.—बेल्लुपोनिक् , काकिवेदुरु ; क.—अंबलिनगणे ; त.—नालल् , चिरुमूङ्गिल् ; सिं.—रणहुन ; मल.—अमा അമ , अम्पोट्टल् ; इं.—Penreed grass ; ल.—*Saccharum sara* । स द्विविधः स्थूलसूक्ष्मभेदेन । **नामानि**—"शरो बाण इषुः काण्ड उत्कटः सायकः क्षुरः । स्थूलोऽन्य इक्षुकः प्रोक्त इक्षुरश्चापि नामतः" । ध. नि । मूलं ग्राह्यम् । **गुणाः**—"शरद्वयं स्यान्मधुरं सतिक्तं कोष्णं कफभ्रान्तिमदापहारि । बलं च वीर्यं च करोति नित्यं निषेवितं वातकरं च किञ्चित्" । ध. नि । "मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा । दाहतृष्णाविसर्पास्रमूत्रकृच्छ्राक्षिरोगजित् । दोषत्रयहरं वृष्यं मेखलासूपयुज्यते" । भा. प्र । "शरेक्षुकुशकाशाना"मित्यत्र वाजीकरणाध्याये "शरमूलेक्षुमूलानि काण्डेक्षुः सेक्षुवा-

लिका" इत्येव चरकपाठः । शरः काण्डेक्षुरितीन्दुश्चरकसंहितायाम-त्रैवापरकाण्डेक्षोरदर्शनाद्वा स्खलितवान् ॥

**शरकाण्डः** । शा. २. शरो नाम तृणविशेषस्तस्य काण्डस्तंबः । Penreed stick । हिं.—सरपतेकी सींक ; मल.—अमत्तण्टु അമത്തണ്ടു ॥

**शरपुंखः** । उ. ३०. शरस्येव पुंखो यस्य । क्षुपविशेषः । स श्वेत-पीतभेदेन द्विधा । N. O. —*Leguminosae* । हिं.—सरफोंका, बं.—बननीलगाछ ; म.—उन्हाळी, रानटी नीळ ; गु.—झिला, शरपुंखा, शरपंखो ; तै.—वेम्पालि, पांपाराचेट्टु ; द्खा.—उन्हाली, जंलिकुलथि ; क.—फंकि, वन्नदनीलिगिड, कगिग ; येरडुकोगिग ; त.—काट्टुकोळिञ्चिल, कोळ्ळुक्काय्वेळै ; सिं.—पिला ; मल.—कोळिञ्ञिल् കൊഴിഞ്ഞിൽ Kozhinjil ; पञ्जा.—बनमा ; इं.—Purple Tephrosia ; ल.—*Tephrosia purpurea, Galega purpurea* । **नामगुणाः**—"शरपुंखा प्लीहशत्रुर्नीलीवृक्षाकृतिश्च सः । शरपुंखो यकृत्प्लीहगुल्मव्रणविषापहः । तिक्तः कषायः कासास्रश्वासज्वरहरो लघुः" । भा. प्र । मूलं ग्राह्यम् ॥

**शरपुंखा** । उ. ३८. शरपुंखः ॥

**शरभः** । सू. ६. शृणाति । 'शॄ हिंसायाम्' । "शरभः सिंहशत्रौ स्यादष्टपात्संज्ञके मृगे । मृगान्तरे च रभसः करभे चोक्तवानमुम्" इति केशवस्वामी । "उत्पादकस्तु शरभः शार्दूलोऽष्टापदश्च सः" इति त्रिकाण्डशेषे । "शरभस्तु पशोर्भिदि । करभे वानरभिदि" इति मेदिनी । **महासिंहो नाम काश्मीरदेशीयो हरिणविशेषः** । "अष्टपादूर्ध्वनयन ऊर्ध्वपादचतुष्टयः" इति । स उग्रो विशालशृङ्गश्च । **तल्लक्षणं** हथा—"काश्मीरदेशे शरभोऽष्टपात् स्यादुत्साह-

युक्तश्चतुरूर्ध्वपादः । उष्ट्रप्रमाणः स महाविषाणः ख्यातो वनस्थः स मृगो महाख्यः" इति मदनपालः । लटीसरा इत्येके । एट्टटिमान् इति केरलेषु । नामानि—"महाशृङ्गस्तु शरभो मेघस्कन्दो महामनाः । अष्टपादो महासिंहो मनस्वी पर्वताश्रयः" । रा. नि । A fabulous animal ॥

**शरारिः** । सू. २६. शृणान्त्येनां शरारिः । शरालिरिति पाठः । धवलस्कन्धो दीर्घचञ्चुः स्वनामख्यातप्लवजातीयपक्षी । शरारिराटिः पक्षिविशेष इति सर्वाङ्गसुन्दरा । शरारिर्नाम पक्षी 'सरल' इति विज्ञायते इति भाष्यकारः । शरारी द्विधा धवलस्कन्धो रक्तशीर्षश्च , धवलस्कन्धस्य शरारीति संज्ञा इति डल्हणः । "आडिः शरालिराटिश्च विचित्रजलचारिणी" इति मदनपालः । **गुणाः**—"शरारिमद्गुकादंबबलाकाः पवनापहाः । स्निग्धाः सृष्टमला वृष्या रक्तपित्तहरा हिमाः" । रा. व । see **आटिः** । A species of water-fowl that is supposed to drive away all other fowl from the tank in which it lives and to eat up all the fish in it. "A. C. Kaviratna" ॥

**शर्करा** । सू. २. शिलाचूर्णखण्डः । उत्कर इत्येव चरकसुश्रुतयोः पाठः । कङ्कर इति लोके ख्याता इति चरकोपस्कारकारः । अवकर इत्यर्थेन Sweepings and rubbish इत्यनुवादयत्यविनाशचन्द्रः । "शर्करा खण्डविकृतावुपलाकर्परांशयोः । शर्करान्वितदेशेऽपि रुग्भेदे शकलेऽपि च" इति मेदिनी ॥

**शर्करा** । सू. ३ etc. शीर्यते । सिता ॥

**शलाटुः** । क. १. **बालफलम्** । "आमे फले शलाटुः स्या"दित्यमरः । हिं.—ताजे कच्चे फल ; तै.—पिण्डे ; म.—कोंवळें फळ ; क.—कसुगायि ; त.—पिञ्चुकाय् ; मल.—इळय काय ഇളയ കായ ; इं.—Young fruit ॥

**शल्यकः** । चि. ४ etc. शलति शल्यानि किरति वा । बृहद्गोधाकारमृगविशेषः । हिं.—साहिल ; बं.—शजारु ; म.—खवलें मांजर ; सिं.—कबल्लूवा ; मल.—इत्तिळ्प्पन्नि ഇത്തിൾ-പ്പന്നി , इत्तल्मुळ्ळन् , कुरुमुळ्ळन् , उरुम्पुतीनि , अळ्ळान् , अळ्ळुवन् ; इं.—Hedgehog; Manis, Armadillo ; ल.—*Erinaceus* । It is provided with a prickly armour covering the upper portion of its body. On the approach of danger it rolls itself together into a ball, the head, the legs and the under side of the body, which are without spines, are drawn inside covered by the spiny skin of the back ; thus the animal can present a thousand tiny spears towards its assailants । **नामगुणाः**—"शल्यकः स्याच्छल्यमृगो वज्रशुक्तिर्बिलेशयः । शल्यमांसं गुरु स्निग्धं दीपनं श्वासकासजित्" । रा. नि । "शल्यकः स्वादुपित्तघ्नो लघुः शीतो विषापहः" । सु. सू. ४६ । वज्रशकलो बृहद्गोधानुकारी 'साला' इति लोके इति डल्हणः । शल इति ख्यात इति चक्रपाणिदत्तः ॥

**शल्लकी** । सू. २९ etc. सत्कृत्य लक्यते स्वाद्यते गजैः सल्लकी । सल्लकीति पाठः । निंबसदृशपत्रो त्रिरेखफलवान् बृहद्वृक्षविशेषः । अस्या निर्यास एव कुन्दुरकः । शालविशेष इत्येके । गजभक्ष्या साल इति लोके इति डल्हणः । "शल्लकी पशुवृक्षयोः" इति मेदिनी । N. O.—*Burseraceae* । हिं.—सालई , सलई , शलाइ , लोभन ; बं.—शलई , लुबान , कुन्द्रे ; म.—साळयी , पहाडिधूप , विशेषधूप ; गु.—शालेडुं , धूपगुगलि ; कों.—विशेषधूंपु ; दखा.—कुन्दुर ; मुंबापुर्याम्.—गन्धबिरोझ ; तै.—पराङ्किसाम्राणि ; क.—विशेषधूप , मादिमर , गुग्गुल ; त.—कुन्तुरुक्कं , चांपिराणि , यानैकोन्दि , यानैवणङ्कि ; मल.—साम्प्राणिमरं

സാമ്പ്രാണിമരം, कुन्दुरुकं, परङ्किसाम्प्राणि, उलुवान्; इन्तु इत्येके; इं.—Benzoin, Indian olibanum or Frankincense; फ्र.—Boswellie-dentelee; जर्मन.—Indischer-weihrauch-baum; ल.—*Boswellia thurifera, B. Glabra or B. Serrata* । **नामानि**—"शल्लकी गजभक्ष्या च सुवहा सुरभी रसा । महेरुणा कुन्दुरुकी वल्लकी च बहुस्रवा" । भा. प्र । **गुणाः**—"शल्लकी तुवरा शीता पित्तश्लेष्मातिसारजित् । रक्तपित्तव्रणहरी पुष्टिकृत्समुदीरिता" । भा. प्र । मूलत्वगादिर्ग्राह्या ॥

**शशः । सू. ६** etc. शशति प्लुत्वा गच्छति । **बिलेशयमृगभेदः** । **हिं.**—खरगोश, खरहा, चौगड़ा; **बं.**—खरगोश; **म.**—ससा; **क.**—मला; **तै.**—चेवुलपिल्लि; **त.**—मुयल्; **सिं.**—सावा, हावा; **मल.**—मुयल് മുയല്; **इं.**—Rabbit; **ल.**—*Lepus cuniculus* । **नामानि**—"लंबकर्णः शशः शूली लोमकर्णो बिलेशयः" । भा. प्र । **मांसगुणाः**—"शशः शीतो लघुर्ग्राही रूक्षः स्वादुः सदा हितः । वह्निकृत्कफपित्तघ्नो वातसाधारणः स्मृतः । ज्वरातीसारशोषास्रश्वासामयहरश्च सः" । भा. प्र ॥

**शशघ्नी । सू. ६. श्येनसहजातीयपक्षिभेदः** । चिल्लाकारः महाचरणनखः प्रहारेण शशाहरणशीलः शशघ्नीति प्रसिद्धः । शशघाती इति चरकसुश्रुतयोः पाठः । शशारिरिति डल्हणः । शशघाती शशादः पीनः श्येन इति यावत्, श्येनस्तु ततो हीनः, तावुभौ भेदेन 'वाज' इत्याख्यायेते इति सुश्रुतसूत्रसप्तमाध्यायव्याख्यायां भाष्यकारः । पाश्चिरिति चक्रपाणिदत्तः । **हिं.**—शिकरा; **बं.**—बाजी; **म.**—बहिरी ससाणा; **सिं.**—उकुस्सा; **मल.**—प्राप्पिटियन् പ്രാപ്പിടിയൻ, वेट्टन्, एरिवेळ्ळाटन्, इरवुळ्ळाळन्; **इं.**—Hawk, Kestrel; **ल.**—*Tinnunculus alaudarius* । Literally, the animal that kills rabbits ॥

**शशाङ्ककिरणः** । सू. ३ etc. खण्डखाद्यविशेषः । कर्पूरपांसुना सुरभीकृतः खण्डविशेष इति केचित् । शशाङ्कः कर्पूरः कीर्यते विक्षिप्यते येषु ते शशाङ्ककिरणाः—कर्पूरनलिकादय इति हेमाद्रिः । कर्पूरनलिकालक्षणं यथा—"घृताढ्यया समितया कृत्वा लंबपुटं ततः । लवङ्गोषणकर्पूरयुतया सितयान्वितम् । पचेदाज्येन सिद्धैषा ज्ञेया कर्पूरनालिका । संयावसदृशी ज्ञेया गुणैः कर्पूरनालिका" इति । अन्यथाप्युक्तमस्ति—"प्रक्षिप्य शर्करां क्षीरे पक्वेऽतिघनतां गते । निर्वर्तिता ये भक्ष्यास्ते शशाङ्ककिरणाह्वयाः" इति पाठ्यकारः ॥

**शशाङ्कलेखा** । चि. १९. वाकुची ॥

**शशी** । चि. ७. कर्पूरम् । शशिबोधितं नाम पानकमितीन्दुः ॥

**शष्कुली** । शा. ६. अपूपविशेषः । चणकादिपिष्टकृता सतिला तैलभृष्टा शष्कुलीत्युच्यते इति डल्हणः । हिं.—खस्तापूरी ; पुडी इत्येके ; बं.—पुली ; म.—करञ्या , कानवले । "सुधौतानां तण्डुलानां पिष्टं सूक्ष्मं विधाय च । तत् प्रमाणं तत्र जलं स्थाप्यं चुल्यां तु तत् पचेत् । अल्पमल्पं विकीर्याथ मेलयित्वा घनं पचेत् । घनीभूते ततोऽत्तार्य तत्-पर्पट्यां सुयुक्तितः । पूरणञ्च विधायाथ सिताश्रीफलजं तथा । त्रिवृत्प्रान्तामर्धचन्द्रसमानां कारयेत् सुधीः । एवं शष्कुलयः कार्याः पाच्याः स्वेदनयन्त्रके । एतश्च मोदकाः कार्यास्ते वृष्या गुरवो मताः । वातपित्तप्रशमनाः मलावष्टंभकारकाः । कफदा गुरवः प्रोक्तास्तथा तृप्तिकरा मताः" । वै. नि । अन्यच्च—"तिलजीरकसंयुक्तैः पिष्टैर्या तण्डुलादिभिः । कृता तु हस्तयन्त्राभ्यां सुभृष्टा च तिलोद्भवे । पाशमण्डलसंकाशा शष्कुली सा प्रकीर्तिता" इति केरलीयाः । मल.—पिरि ഛീരി , मुक्कु ॥

**शस्त्रः** । शा. ३. आयुधविशेषः । खड्गार्थेन निस्त्रिंश इति सुश्रुतः ।

**शाकः** । सू. १५ etc. **मसृणकर्कशोदरपृष्ठबृहद्दलो वृक्षविशेषः** । "शाको द्वीपान्तरेऽपि च । शक्तौ द्रुमविशेषे च पुमान् हरितकेऽस्त्रियां" इति मेदिनी । N. O.—*Verbenaceae* । हिं.—सागवन, सागोन, सागौन, शगुण; बं.—शेगुनगाछ; म.—साग; उत्.—सिंगुरु; गु.—साग; कों.—सागवानिरूक्कु; द्खा.—सागवान; तै.—टेक्कु, तेकु; क.—तेगिनमर, सागुवानि, सागोनिमर, जड्डि, तेगु, नेगु; तु.—तेक्कि; त.—तेक्कु; सिं.—तेक; मल.—तेकु ഭതക്ക; बर्मा.—Ky-won क्य-वोन; पा.—फिलगोस, साल्; अ.—फिलजोश, उजनुलफिल, सज्; इं.—Teak tree; ल.—*Tectona grandis* । **नामानि**—"शाकः क्रकचपत्रः स्यात् खरपत्रोऽतिपत्रकः । महीसहः श्रेष्ठकाष्ठः स्थिरसारो गृहद्रुमः" । रा. नि । त्वग् ग्राह्या । **गुणाः**—"शाकस्तु सारकः प्रोक्तः पित्तदाहश्रमापहः । कफघ्नं मधुरं रूक्षं कषायं शाकवल्कलम्" । रा. नि । "भूमीसहस्तु शिशिरो रक्तपित्तप्रसादनः" इति भावमिश्रः ॥

**शाकम्** । सू. ७ etc. **पत्रपुष्पादि** । Potherbs, Greens । तत् षड्विधम्—"पत्रं पुष्पं फलं नालं कन्दं संस्वेदजं तथा । शाकं षड्विधमुद्दिष्टं गुरु विद्याद्यथोत्तरं" इति भावमिश्रः । "शाकं चतुर्विधं प्रोक्तं पत्रं पुष्पं फलं तथा । कन्दं चापि समुद्दिष्टं वक्ष्याम्येतत् पृथक् पृथक्" इत्यत्रिः । "मूलपत्रकरीराग्रफलकाण्डाधिरूढकम् । त्वक् पुष्पं कवकं चैव शाकं दशविधं स्मृत"मिति केचित् । मूलं मूलकादेः, पत्रं वास्तुकादेः, करीरं वंशांकुरं, अग्रं वेत्रादेः, फलं कूष्माण्डादेः, काण्डमुत्पलादेर्नालं, त्वक् मातुलुङ्गादेः, पुष्पं तिन्तिडीकोविदारादेः, कवकं छत्राकं—इति मुकुटः । **दोषाः**—

"प्रायः शाकानि सर्वाणि विष्टंभीनि गुरूणि च । रूक्षाणि बहुवर्चांसि सृष्टविण्मारुतानि च । शाकं भिनत्ति वपुरस्थि निहन्ति नेत्रं वर्णं विनाशयति रक्तमथापि शुक्रम् । प्रज्ञाक्षयं च कुरुते पलितं च नूनं हन्ति स्मृतिं गतिमिति प्रवदन्ति तज्ज्ञाः" । भा. प्र । "शाकेषु सर्वे निवसन्ति रोगास्ते हेतवो देहविनाशनाय । तस्माद्बुधः शाकविवर्जनन्तु कुर्यात्तथाऽम्लेषु स एव दोषः" । एतानि शाकनिन्दकानि वचनानि साम्यानि ॥

**शाकफलम्** । चि. ११. शाकवृक्षस्य फलम् ॥

**शाकवरः** । उ. ३७. जीवन्तः ॥

**शाट्वलः** । चि. ४. दूर्वा । शाड्वल इति पाठः ॥

**शाण्डाकी** । सू. ५. आसुतविशेषः । A kind of well-tasting gruel । हिं.—चटनी ; म.—कापलेल्या वस्था ; त.—पच्चटि , चट्नि ; मल.—पच्चटि ചമ്മന്തി । चूण्टाङ्कि इति पाठ्यकारः । शिण्डाकी , सिण्डाकी , सण्डाकी , चाण्डाकी चेति पाठान्तराणि । "शिण्डाकी राजिकायुक्तैः स्यान्मूलकदलद्रवैः । सर्षपस्वरसैर्वापि शालिपिष्टकसंयुतैः" इति भावमिश्रः । मूलकादिशाकं क्वथितासुतं कालजीरकराजिकासु भावितं अम्लतीक्ष्णं शिण्डाकीशब्देन उच्यते , सा तीरभुक्तौ प्रसिद्धा इति चरकोपस्कारे । "शाण्डाकी कन्दमूलादिमुद्गादिवटकैः कृता" इत्येके । "मूलकच्छेदसंधानं शाण्डाकी स्याद्बहुद्रवा" इति हेमाद्रिः । "मूलकच्छदसंधानं शिण्डाकी स्वादुसुद्रवा" इति वैजयन्ती । मूलकादिशाकमेव किंचित् स्विन्नं क्षुण्णं सुगन्धि-कटुकद्रव्यान्वितं वटकीकृतं सुह्मेषु 'सिण्डाकी'त्युच्यते ; सा द्विविधा—आर्द्रा , शुष्का च ; शुष्का वटकान्तर्गता , आर्द्रायास्त्वयमेव गुणनिर्देशः इति डल्हणः । अन्ये तु शाकसिक्थमण्डासुतिः सिण्डाकीत्याहुः । "सण्डाकी साधिता ज्ञेया मूलकैः

सर्षपादिभिः" इति शार्ङ्गधरः । "जंबीरपर्यालुलिते पिण्याके श्यानतां गते । कैडर्यपत्रसंयुक्ता लशुनेन च मूर्छिता । सर्षपैर्जीरकैश्चैव संस्कृता घनतां गता । चाण्डाकी नाम सा ज्ञेया पिष्टपिण्याकसंभवा" इति पाथ्यकारः । शाकमुद्गादिवटकसंधानमित्यपरे । शाकान्यासुत्य क्रियते या सेतीन्दुः । "सिद्धार्थकखलीप्रस्थं सुधौतं निस्तुषं जले" इत्याद्युक्तलक्षणा, विस्तरतस्त्वामवातचिकित्सिते चक्रपाणिसंग्रहे द्रष्टव्या इति हाराणचन्द्रः । **गुणाः**—"सिण्डाकी वातला सान्द्रा रुचिष्याऽनलदीपनी" इति सुश्रुतः ॥

**शाण्डाकीवटकम्** । **सू. ६. शाण्डाक्यां स्थापितं मुद्गादिवटकम्** ।
हिं.—काञ्जीके बड़े इत्येके ; म.—कांजिवडे । येन वटकेन शाण्डाकी क्रियते तच्छाण्डाकीवटकमिति हेमाद्रिः ॥

**शातपर्वकः** । **सू. ५. इक्षुविशेषः** । जिसमें बहुत पोईहों । **मल.**—कुरुमुट्टन् करिम्पु കുറുമുട്ടൻ കരിമ്പ । कम्पकरिम्पु इति भास्करव्याख्या । ह्रस्वबहुपर्वा इति हेमाद्रिः । मुँडी इति प्राकृताः । शतपोरकश्वेतपोरकाविति पाठौ । **गुणाः**—"शतपर्वा भवेत् किञ्चित् कोशकारगुणान्वितः । विशेषात् किञ्चिदुष्णश्च सक्षारः पवनापहः" । भा. प्र । see **इक्षुः** ॥

**शाद्वलः** । **नि. ८** etc. **दूर्वा** । **उक्तं हि**—"नीलदूर्वा स्मृता शष्पं शाद्वलं हरितं तथा" । ध. नि ॥

**शाबरः** । **सू. २२** etc. **श्वेतरोध्रः** । "शाबरी शूकशिम्ब्यां स्यात् पुंसि पापापराधयोः । लोध्रे च" इति मेदिनी ॥

**शाबरकः** । **उ. १३. श्वेतरोध्रः** ॥

**शाबरकन्दकम्** । **उ. १८. लशुनः** । विदारीति कैरली ॥

**शाबरकलोध्रः** । **सू. १५. श्वेतरोध्रः** । अक्षिभेषजापरसंज्ञ इत्यरुणदत्तः । श्वेतस्थूलत्वगिति डल्हणः ॥

**शाबररोध्रः** । चि. २. **श्वेतरोध्रः** । लोध्र इत्येव चरकपाठः ॥

**शारदः** । सू. ६. **शरत्कालीनशालिधान्यभेदः** । अयं षष्टिकाद्धीनगुणः । षष्टिकभेद इत्येके ॥

**शारपदः** । सू. ६. सारपद इति पाठः । **महान् पक्षिविशेषः** । कंकसदृशश्चारुगतिरिति हेमाद्रिः । मल्लकङ्कभेद इति शिवदासः । शारपदेन्द्राभ इत्येकपदमिति चक्रपाणिदत्तः । **मल.**—ञ्चाणिञ्कल्पोट्टन् इति मन्ये ; ञमिञ्जिल्लोटन् ॥

**शारामुखः** । **सारामुखः** ॥

**शारिका** । see **सारिका** ॥

**शारिवा** । सू. १५ etc. शीर्यन्तेनया दोषाः शारिवा । अनन्तमूला । **सुप्रसिद्धलताविशेषः** । जंबूपत्रा दुग्धगर्भा वल्ली । शारिवा द्विविधा श्वेता कृष्णा चेति । शुक्ला जंबूवत्पत्रा व्रततिः, कृष्णा कलहंसवत्पत्रा सुगन्धा इति शार्ङ्गधरसंहिताव्याख्यायामाढमल्लः । N. O.—*Asclepiadeæ* । **हिं.**—अनन्तमूल, गौरीसर, गुर्जीसर, गौरियाँसाउ, सालसा, गौरी साँव, सरिवन, सरियाई, गोग्रारिया सागु, हिन्दी सालसा ; उपलसरी ; **उर्दु.**—नन्नारि ; **बं.**—अनन्तमूल ; **उत्.**—गुयापानमूल ; **कों.**—दुदवाली ; शेंव वेल, पांढरी उपरसाळ ; **म.**—श्वेतउपलसरी, पांढरी कावळी, दुधसालि ; **गु.**—धोळी उपलसरी, कपूरी ; **तै.**—पालसुगन्धि, सुगन्धिपाल, नीलतिग ; **क.**—सुगन्धिबळिळ, नामदबेरु, सोगदेबेरु, केंपुगन्धि ; **तु.**—कन्याबूरु ; **त.**—नन्नारि, किरुट्टिगवल्लि ; नीरुण्टि ; **सिं.**—इरमुसु, हेलाहिरमुसु ; **मल.**—नन्नारि ഩന്നാരി, नरुनीण्टि ; **पञ्चा.**—अनन्तमूल ; **पा.**—यमबिर्न बरीर, औषबहे-हिन्दी ; **अ.**—औयना, औसाबा लुन्नारा ;

**शालनिर्यासः।** चि. ४. शालवृक्षस्य निर्यासः। सर्जरसः॥

**शालपर्णी।** चि. ९ etc. सालः पर्णमस्याः। सालशब्दस्य सालपर्णसदृशे लक्षणा। सालस्येव पर्णान्यस्याः। सालपर्णी शालिपर्णी चेति पाठौ। अंशुमती नाम क्षुपविशेषः। N. O.—*Leguminosae*। हिं.—सरिवन, शरिवन, शालवन, शालपत्ता, सालपत्ता; बं.—शालपानि, सालपाणि, छालानी; म.—सालवण, रानगांजा; गु.—शालिपर्णी, समेरवो; कों.—सालवन; उत्.—शारपणि; तै.—सप्ताकुपोवा, शियाकुपन्ना; क.—मुरुलुवोने; त.—पिरुमल्लिकै; मेमल्लि इत्येके; सिं.—अस्वेन्न, शालपर्णी; मल.—मूविला മൂവില; ल.—*Desmodium gangeticum, Hedysarum gangeticum*। नामानि—"शाल(लि)पर्णी स्थिरा सौम्या त्रिपर्ण्यतिगुहा ध्रुवा। विदारिगन्धांशुमती दीर्घमूला सुपत्रिका"। ध. नि। मूलादिकम् ग्राह्यम्। गुणाः—"शालपर्णी गुरुस्तिक्ता स्वादुवृष्या रसायनी। विषमज्वरवातघ्नी पुष्टिदोष्णा क्रिमिप्रणुत्। मेहार्शःशोथसन्तापज्वरश्वासविषापहा। त्रिदोषशोषच्छर्दिघ्नी क्षतकासातिसारजित्"। नि र॥

**शालामुखः।** see **सारामुखः**॥

**शालिः।** सू. ३ etc. हैमन्तिकधान्यम्। Saly paddy is that which grows in a damp soil or a field covered with water, reaps in December and January। मल.—मुण्टोन् മുണ്ടോൻ, मुण्टकं। "कण्डनेन विना शुक्ला हैमन्ताः शालयः स्मृताः" इति भावमिश्रः। "शालयः श्वेततण्डुलाः" इति वैजयन्ती। देशभेदेन तस्य नानाभेदा दृश्यन्ते। ते च यथा—"तत्र लोहितशालिकलमकर्दमकपाण्डुकसुगन्धकशकुनाहृतपुष्पाण्डकपुण्डरीकमहाशालिशीतभीरुकरोध्रपुष्पकदीर्घशूकका ... हिप-

महाशूकहायनकदूषकमहादूषकप्रभृतयः शालयः" इति सुश्रुतः । अन्यच्च—"रक्तो महान् सकलमस्तूर्णकः शकुनाहृतः । सारामुखो दीर्घशूको रोध्रशूकः सुगन्धकः । पुण्ड्रः पाण्डुः पुण्डरीकः प्रमोदो गौरशारिवौ । काञ्चनो महिषः शूको दूषकः कुसुमाण्डकः । लांगला लोहवालाख्याः कर्दमाः शीतभीरुकाः । पतङ्गास्तपनीयाश्च ये चान्ये शालयः शुभाः" इति संग्रहे । पुराणं माह्यम् । गुणाः—"शालयो मधुराः स्निग्धा बल्या बद्धाल्पवर्चसः । कषाया लघवो रुच्याः स्वर्या वृष्याश्च बृंहणाः । अल्पानिलकफाः शीताः पित्तघ्ना मूत्रलास्तथा । शालयो दग्धमृज्जाताः कषाया लघुपाकिनः । सृष्टमूत्रपुरीषाश्च रूक्षाः श्लेष्मापकर्षणाः । कैदारा वातपित्तघ्ना गुरवः कफशुक्रलाः । कषायाश्चाल्पवर्चस्का मेध्याश्चैव बलावहाः" । भा. प्र । "शालय इति अकण्डितशुक्ला हैमन्ताः; अन्ये तु कण्डितशुक्ला अकण्डितशुक्लाश्च हैमन्ताः शालयः, ग्रैष्माः षष्टिकाः, प्रायेण गर्भपाकाः, षष्टिकाः इत्यन्ये; वार्षिकास्तु व्रीहयः, कण्डितशुक्लास्तु व्रीहय इत्यन्ये । अत्र लोहितशाल्यादयस्तेषु तेषु देशेषु तैस्तैर्नामभिः प्रसिद्धाः; एकमेव हि द्रव्यं नानादेशेषु नानाशब्दैरभिधीयते; यथा—बह्वोऽन्नं भक्तमाहुः, दाक्षिणात्यास्तु कूरमिति; तत्र दाक्षिणात्येषु भक्तसंज्ञा चे(ये)व प्रसिद्धा तदितरेषु पुनः कूरसंज्ञेति; तस्मात्तु शूकशमीकुधान्यानि नानादेशकृषीवलेभ्यो ज्ञेयानि, मृगास्तु नानदेशीयव्याधेभ्यः, शाकुनिकेभ्यः पक्षिणः, कन्दमूलफलाशिभ्यो वनेचरतपस्विभ्यः कन्दमूलफलानि, शाकानि तु ग्राम्यारण्यवासिभ्यः, कृतान्नानि तु सूदेभ्यः, भेषजद्रव्याणि पुनः क्रय्याणि वणिग्भ्यः, अक्रेयाणि पुनर्मूलादीनि तापसवनेचरेभ्य इति" डल्हणः । "शालिस्तु कलमादौ च गन्धमार्जारके पुमान्" इति मेदिनी ॥

**शालिपर्णी** । चि. १, etc. शालपर्णी ॥

**शालियवः** । चि. ९ शालिर्यवश्च । शाल्यन्नमिति केचित् । तन्न साधु । "शालियवस्य च" इत्यत्र "यवानां मुद्गमाषाणां शालीनां च तिलस्य च" इति पृथक्कया पठति चरकः ॥

**शालूकम्** । सू. ६ etc. शल्यते, शलति वा । 'शल चलनसंवरणयोः' । पद्मकन्दम् । "पद्ममूलं तु शालूकं" इति धन्वन्तरीयनिघण्टौ । "शालूकं पद्मकन्दे स्या"दिति नरहरिः । हिं. कमलकन्द ; बं.—पद्मेर गेण्डों ; म.—कमळकन्द ; त.—तामरैक्किळङ्कु ; मल.—तामरक्किळङ्कु താമരക്കിഴങ്ങ് । The bulbous root of the lotus । "पद्मादिकन्दः शालूकं करहाटश्च कथ्यते । मृणालमूलं भिस्साण्डं जलालूकश्च कथ्यते" इति भावमिश्रः । अक्लिन्नं ग्राह्यम् । उत्पलमूलमित्यरुणदत्तः । सौगन्धिकादीनां कन्द इत्येके । "शालूकं तूत्पलादिनः । कन्दे स्यात्" इति केशवस्वामी । "शालूकमेषां कन्दः स्या"दित्यमरः । **गुणाः**—"शालूकं शीतलं वृष्यं पित्तदाहास्रहृद्गुरु । दुर्जरं स्वादुपाकञ्च स्तन्यानिलकफप्रदम् । संग्राहि मधुरं रूक्षं भिस्साण्डमपि तद्गुणम्" । भा. प्र ॥

**शाल्मली** । शा. २ etc. शालते दैर्घ्याच्छलति वा । "षष्टिवर्षसहस्राणि वने जीवति शाल्मली" इति । "शाल्मलिस्तरुभेदे स्याद्द्वीपभेदेपि च द्वयोः" इति मेदिनी । N. O.—*Malvaceæ* । हिं.—सेमल, शेम्बल, सेमर, शेमुर, तुरमा ; उर्दु.—खीकर ; बं.—सिमुलगाछ ; उत्.—बोनरी ; म.—सांवरी, शेवरी ; गु.—शेमलो ; कों.—सावरीरूक्कु ; दखा.—लाल कात्यन् ; तै.—बूरुग, मुण्टलबूरुगचेट्टु, पूरु, पत्ति ; क.—एलव, अपूरणि, केंपुबूरुगदमर ; तु.—मुळ्ळालदमर ; त.—इलवैमरं, इलवु, पूरणि, मुळ्ळिलवु ; सिं.—इंबुल ; मल.—इलवु ഇലവ്, मुळ्ळिलवु, पूळा ; इं.—Silk cotton tree,

Red cotton tree; ल.—*Bombax malabaricum* | नामानि—"शाल्मली पूरणा मोचा पिच्छिला रक्तपुष्पिका । कण्टमाली तूलफला स्थिरायुश्च दुरारुहा" । स. नि । मूलादिकं ग्राह्यम् । गुणाः—"शाल्मलिः पिच्छिलो वृष्यो बल्यो मधुरशीतलः । कषायश्च लघुः स्निग्धः शुक्रश्लेष्मविवर्धनः । तद्रसस्तद्गुणो ग्राही कषायः कफनाशनः । पुष्पं तद्वच्च निर्दिष्टं फलं तस्य तथाविधम्" । रा. नि । अन्यच्च—"शाल्मली शीतला स्वाद्वी रसे पाके रसायनी । श्लेष्मला पित्तवातास्रहारिणी रक्तपित्तजित्" । भा. प्र ॥

**शाल्मलीपिच्छा** । उ. ३४. शाल्मलीतरोः शुष्कनिर्यासः । शाल्मलीवेष्टमिति चरकपाठः । see **मोचरसः** ॥

**शाल्योदनम्** । चि. ३ etc. **शालितण्डुलसिद्धमोदनम्** । शालिचावलोंका भात ॥

**शिंशपा** । सू. १५ etc. **मण्डलपत्रिका नाम तरुविशेषः** । "शिंशपा युग्मपत्रिका" इति त्रिकाण्डशेषे । शिंशिपेति पाठः । N. O.—*Leguminosae* । **हिं.**—सीसम, शीसव, शिशु, शीसइ, शीशव, सिसव, शिशइ; **बं.**—शिशुगाछ; **म.**—काळा शिसव; **गु.**—शिशम; **कों.**—बीट्टिरूक्कु; **तै.**—जिटङ्कि, इट्टिगि; जिट्टरेगुचेट्टु इत्येके; शिशुकर्र इति केचित्; **क.**—बीट्टिमर; हंबादावु इत्यन्ये; **त.**—एरुवट्टि, इट्टि; **मल.**—वीट्टिमरं വീട്ടിമരം, ईट्टि; **पञ्जा.**—तालि सफेदर; **अ.**—सीसम; **इं.**—Blackwood, Rosewood; **ल.**—*Dalbergia latifolia, D. Sisu or sissoo* । **नामानि**—"शिंशपा तु महाश्यामा कृष्णसारा च धूम्रिका । तीक्ष्णसारा च धीरा च कपिला कृष्णशिंशपा" । रा. नि । त्वग्ग्राह्यम् । **गुणाः**—"शिंशिपा कटुका तिक्ता कषाया शोफहारिणी । उष्णवीर्या हरे-

न्मेदःकुष्ठार्शश्छित्रवामिक्रिमीन् । वस्तिरुग्व्रणदाहास्रबलासान् गर्भपातिनी" । भा. प्र । सा त्रिधा कृष्णश्वेतपीतभेदेन । उक्तं हि--
"शिंशपात्रितयं वर्ण्यं हिमशोफविसर्पजित् । पित्तदाहप्रशमनं बल्यं रुचिकरं परम्" । रा. नि ॥

**शिंशिपा** । उ. ३०. शिंशपा ॥

**शिखरी** । सू. १५. स्नुही । सुधा इत्येव सुश्रुतपाठः । अपामार्ग इति हेमाद्रिररुणदत्तश्च ॥

**शिखी** । सू. ६ etc. शिखाऽस्त्यस्य । मयूरः । "शिखी वह्नौ बलीवर्दे शरे केतुग्रहे द्रुमे । मयूरे कुक्कुटे पुंसि शिखावत्यन्यलिङ्गकः" इति मेदिनी ॥

**शिखी** । चि. ८, उ. ३०. चित्रकः । "चित्रकस्त्वग्निसंज्ञक" इति वैजयन्ती ॥

**शिग्रुः** । सू. ६ etc. शिनोति तैक्ष्ण्याच्छिग्रुः । स्वनामख्यातपत्रशाकवृक्षः । पीतकुसुमविशिष्टो शोभांजनः । "शिग्रुर्ना शाकमात्रे च शोभाञ्जनमहीरुहे" इति मेदिनी । N. O.—*Moringeæ* । हिं.—सहिंजना, सहिंजिना, सहजना; सुहांजना, सोंहिंजना, सेग्वा, शाज्न; दखा.—मुंगे का झाड; पञ्जा.—सोहांजना; बं.—सजिनागाछ, सजिने; म.—शेगवा, शेगट; गु.—सरघवो; कों.—मशिंग झाड, मशिंगु; तै.—मुनगा, मोचकमु; क.—नुग्गे, मोचकमर; तु.—नुग्गें; त.—मुरुङ्गै, ऊकटन्, चुळिकै; सिं.—मुरुङ्गा; मल.—मुरिङ्ङा മുരിങ്ങ; बर्मा.—दण्डलोन्बिन्; मलायी.—काय्लोर्, रमूङ्गिप; फ्र.—Moringa a grainestriptcres; इं.—Horse-radish, Drumstick tree; ल.—*Moringa pterygosperma*, *Hyperanthera moringa*, *Guilandina moringa* । नामानि—

"शोभांजनः शिग्रुतीक्ष्णगन्धकाक्षीवमोचकाः । तद्बीजं श्वेतमरिचं मधुशिग्रुः सलोहितः" । भा. प्र । गुणाः—"शिग्रुः कटुः कटुः पाके तीक्ष्णोष्णो मधुरो लघुः । दीपनो रोचनो रूक्षः क्षारस्तिक्तो विदाहकृत् । संग्राही शुक्रलो हृद्यः पित्तरक्तप्रकोपणः । चक्षुष्यः कफवातघ्नो विद्रधिश्वयथुक्रिमीन् । मेदोऽपचीविषप्लीहगुल्मगण्डव्रणान् हरेत् । चक्षुष्यं शिग्रुजं बीजं तीक्ष्णोष्णं विषनाशनम् । अवृष्यं कफवातघ्नं तन्नस्येन शिरोऽर्तिनुत्" । भा. प्र । शिग्रुश्चतुर्भेदः श्वेतपीतनीलरक्तभेदेन । मूलादिकं ग्राह्यम् ॥

**शिग्रुकः** । चि. १५. शिग्रुः ॥

**शितिवारकः** । चि. ११. सुनिषण्णः । करंज इत्यरुणदत्तः ॥

**शिंबी** । ४०० शिंबीधान्यम् ॥

**शिंबीधान्यम्** । चि. २. धान्यविशेषः । शिंबीनिगूढमुद्गमकुष्टकादि । "शिंबी मुद्गश्चणो माषः सतीनः सकलायकः । मसूरश्चकमकुलत्थो मकुष्टत्रिपुटादयः" इति मदनपालः । "माषादयः शमीधान्ये" इति वैजयन्ती । मल.—पयर् പയർ ; क.—हेसरु ; तै.—पेसलु । *Beans, Leguminous pulses* । Common name of any pulse or grain growing in pods as masha, etc । फलीमेंसे निकले हुए धान्य । "नामानि—"शमीजाः शिंबिजाः शिंबीभवाः सूप्याश्च वैदलाः" । भा. प्र । गुणाः—"वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः । वातलाः कफपित्तघ्ना बद्धमूत्रमला हिमाः । ऋते मुद्गमसूराभ्यामन्ये त्वाध्मानकारिणः" । भा. प्र । "शिंबा तु विविधा रूक्षा वातला स्वादुशीतला । विष्टंभिनी कषायाऽग्निविद्शुक्रकफनाशिनी" । रा. व । "धान्यानां कञ्चुके शिंबी बीजगुप्तिश्च सा भवेत् । तद्गुप्तानि च धान्यानि शिंबीधान्यानि चक्षते" । रा. नि ॥

**शिरीषः** । **सू. १०** etc. शिरसीष्यते शिरीषः, शीर्यते वा सौकुमार्यात् । **स्वनामख्यातवृक्षः** । N. O.—*Leguminosae* । हिं.—सिरस, सेरसा, सिरिस, शिरिष, लसूरीन्, कल्सिम्, सिरिन, झिउणी ; बं.—शिरीषगाछ ; म.—शिरसी ; सिरस ; गु.—सरसडियो, पितोसरशियो ; तै.—दिरसनचेट्टु, सिंदुवचेट्टु, गिरिशमु ; क.—शिरीष, बागे, कटबे, सिर्सलमर, सिरसु ; त.—वाकै, चिरीटं ; तु.—बागेदमर ; सिं.—महरि ; मल.—वाका വാക, नेन्मेनिवाका, विलुवाकि ; पा.—दरख्तेजकरिया ; अ.—सुलतानुल् असजार ; इं.—Sirissa tree ; ल.—*Albizzia lebbec*, *Acacia speciosa*, *A. Lebbec*, *Mimosa sirissa* । **नामानि**—"शिरीषो भण्डिलो भण्डी भण्डीरश्च कपीतनः । शुकपुष्पः शुकतरुर्मृदुपुष्पः शुकप्रियः" । भा. प्र । त्वगादिकं ग्राह्यम् । **गुणाः**—शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः । दोषशोथविसर्पघ्नः कासव्रणविषापहः" । भा. प्र । **अन्यच्च**—"शिरीषः कटुकः शीतो विषवातहरः परः । पामाम्रकुष्ठकण्डूतित्वग्दोषस्य विनाशनः" । रा. नि ॥

**शिरीषफलम्** । उ. ११. शिरीषबीजमिति सुश्रुतपाठः । सिरीषके बीज ॥

**शिरोधरा** । शा. ५, चि. ८, ग्रीवा । मल.—कऴुत्तु കഴുത്ത । Neck । "शिरोधरा कंधरा गलः कण्ठः" इति हलायुधः ॥

**शिला** । चि. १९ etc. मनःशिला । "शिला तु प्रस्तरे मता । तथा मनःशिलायां च द्वाराधःस्थितदारुणि" इति मेदिनी ॥

**शिलाजम्** । चि. ११ etc. शिलाजतु ॥

**शिलाजतु** । सू. १४ etc. शिलाजातं जतु । शिलानिसृतगिरिजधातुविशेषः । तच्च स्वर्णादीनां मलभेदाद्धेमरजतताम्रकृष्णायस

संभवाच्चतुर्धा । तदुक्तं यथा—"निदाघे घर्मसंतप्ता धातुसारं धराधराः । निर्यासवत् प्रमुञ्चन्ति तच्छिलाजतु कीर्तितम् । सौवर्णं राजतं ताम्रमायसं तच्चतुर्विधं" इति । तेषु सौवर्णं जपापुष्पाभं, राजतं श्वेतवर्णं, ताम्रवर्णं मयूरकण्ठाभं, आयसञ्च जटायुपक्षनिभं श्रेष्ठञ्चेति यथाक्रमं वातपित्तश्लेष्मकफहरम् । "श्रेष्ठं शिलाजतु ज्ञेयं प्रक्षिप्तं न विशीर्यते । तोयपूर्णे कांस्यपात्रे प्रतानेन विवर्धते" इति भावमिश्रः । हिं.—शिलाजीत, सालयहुदि ; बं.—शिलाजत्, शिलाजित ; म.—शिलाजित ; क.—कलुवेचरु, कल्लंटु ; त.—कलमतं ; सिं.—गलमद ; मल.—कन्मदं കന്മദം, कन्मदं ; अ.—हजर-उल-मुसा ; पा.—मोमिए फाक्युरुल यहुद ; इं.—Bitumen, Jew's pitch, Stone juice, Aspholt ; ल.—*Asphaltum Panjabinum* । **नामानि**—"शिलाजं शैलनिर्यासं शिलाजतु शिलाह्वयम् । गिरिजं पार्वतं चाश्मजतु धातु च अद्रिजम्" । म. नि । शोधितं ग्राह्यम् । शोधनविधिर्यथा—"शिलाजतु समानीय सूक्ष्मं खण्डं विधाय च । निक्षिप्यात्युष्णपानीये यामैकं स्थापयेत्सुधीः । मर्दयित्वा ततो नीरं गृह्णीयात् वस्त्रगालितम् । स्थापयित्वा च मृत्पात्रे धारयेदातपे बुधः । उपरिस्थं घनं यत् स्यात् तत् क्षिपेदन्यपात्रके । एवं पुनः पुनर्नीतं द्विमासाभ्यां शिलाजतु । भवेत् कार्यक्षमं वह्नौ क्षिप्तं लिङ्गोपमं भवेत् । निर्धूमञ्च ततः शुद्धं सर्वकर्मसु योजयेत्" इति । मतान्तरं यथा—"गोदुग्धत्रिफलाभृङ्गद्रवैः पिष्टं शिलाजतु । दिनैकं लौहजे पात्रे शुद्धिमायात्यसंशयम्" । सा. कौ । अशुद्धशिलाजतुदोषः—"अशुद्धं दाहमूर्च्छायभ्रमपित्तास्रशोणितम् । शिलाजतु प्रकुरुते मान्द्यमग्नेश्च विड्ग्रहम्" । **गुणाः**—"शिलाजं कटु तिक्तोष्णं कटुपाकं रसायनम् । छेदि योगवहं हन्ति कफमेदोऽश्मशर्कराः । मूत्रकृच्छ्रं क्षयं श्वासं वातार्शांसि च पाण्डुताम् । अपस्मारं तथोन्मादं शोथ-

कुष्ठोदरक्रिमीन्" । भा. प्र । तत्सेविनो निषिद्धमाह—"शिलाजतुप्रयोगेषु विदाहीनि गुरूणि च । कुलत्थांश्च विशेषेण सर्वकालं विवर्जयेत्" इति नावनीतके ॥

**शिलाह्वम्** । चि. ६ etc. शिलाजतु ॥

**शिलाह्वयम्** । चि. १९. शिलाजतु । मनःशिलेति पाठ्यकारः॥

**शिलोद्भवम्** । चि. १२. शिलाजतु ॥

**शिलोद्भेदम्** । उ. ३४. शिलाजतु । पाषाणभेदक इति जेज्जटः ।

**शिवा** । उ. ३९. हरीतकी । "शिवतया शिवा" इति संग्रहे । "शिवा झाटामलौषधौ । अभयामलकीगौरीफेरुसक्तुफलास्वपि" इति मेदिनी ॥

**शिवाटिका** । चि. ३. पुनर्नवा ॥

**शिशिरद्वयम्** । सू. १५. सारि. ग. चन्दनद्वयम् । चन्दनं कुचन्दनं चेति सुश्रुतपाठः ॥

**शिशुमारः** । सू. ६. शिशून् मारयति । नादेयजलजन्तुविशेषः । नदीवराहः । "शिशुमारोऽम्बुसंभूतजन्तौ तारात्मकाच्युते" इति मेदिनी । "शिशुमारो हतेस्तुल्य" इति मदनपालः । हत्याकारोऽन्तर्वक्त्रो बहिर्निश्वाससमुक्, सोपि द्विविधो वर्तुलदीर्घभेदेन, दीर्घफाणित इति लोकाः प्राहुः, स एवात्र गृह्यते पादित्वादिति डल्हणः । हस्त्याकार इति चरकोपस्कारे । गोतुण्डनक्र इति चक्रपाणिदत्तः । "शिशुमारस्त्वंबुकपिरुष्णवीर्यो महावसः" इति वैजयन्ती । हिं.—शुसु, सूंस, शिरस, सिनसुमार; बं.—शुशुक; म.—शिरस, सुसर; सिं.—दिय ऊरोय; मल.—नीर्पन्नि ന്റോട്ടുണ്ണി, एटि; इं.—Gangetic porpoise; ल.—*Delphinus gangeticus* ।

नामानि—"शिशुकः शिशुमारः स्यात् स च ग्राहो वराहकः" । रा. नि । गुणाः—कूर्मवत् । सु. सू. ४६ ॥

**शीतम्** । सू. १५. मि. ग. चन्दनम् । चन्दनं कुचन्दनं चेति सुश्रुतपाठः । चन्दनं रक्तचन्दनं, कुचन्दनं मलयाद्रिचन्दनं चेति डल्हणः । कुचन्दनं रक्तचन्दनभेद इति हाराणचन्द्रः ॥

**शीतपाकी** । सू. १५. गुंजा । श्वेतपाकीति केचित् । "चूडामणिः शीतपाकी शिखण्डी कृष्णला मता । कृष्णा कांबोजिका गुंजा रक्तिका काकसाह्वया" । इति ॥

**शीधुः** । ४०० सीधुः ॥

**शीर्णवृन्तम्** । सू. ६. पाकावस्थायां यस्य वृन्तं शटितं भवति तच्छीर्णवृन्तम् । "शीर्णवृन्तं सुवासकं त्रपुसभेदः, अन्ये तु शीर्णवृन्तं कर्बुरमाहुः, एके तु शीर्णवृन्तं पाकावस्थायां यस्य वृन्तं शटितं भवतीत्यर्थः, अपरे तु कर्बुरभेदं खुदपुत्रकमाहु"रिति डल्हणः । सुवासकं फुटी इति लोके । कालिङ्गार्थेनैव हाराणचन्द्रः । अरुणदत्तचन्द्रनन्दनप्रभृतयः कर्चरमिति । "कालिङ्गैर्वारुचिर्भट"मित्युक्त्वाऽनुपदमेव पुनरपि कालिंगार्थेन शीर्णवृन्तमवतारयति यद्यसांप्रतमिति मन्ये । शीर्णवृन्तस्य त्रपुसविशेषार्थोऽपि विद्यते । "सुखवासे शीर्णवृन्त उग्रगन्धस्सुवासक" इति वैजयन्ती । "शीर्णवृन्तं चित्रफलं विचित्रं पीतवर्णकं" इति नृसिंहः । "बालं पित्तहरं शीतं विद्यात् पक्वमतोऽन्यथा" इति पूर्ववचनात्तदनन्तरप्रयुक्तशीर्णवृन्तपदस्य सम्यक्पक्वार्थ एव । "सक्षारं मधुरं चैव शीर्णवृन्तं कफापहम् । भेदनं दीपनं हृद्यमानाहाष्ठीलनुल्लघु" इति सुश्रुतः पठति यत्तद्वाक्यमेव "शीर्णवृन्तं तु सक्षारं पित्तलं कफवातजित् । रोचनं दीपनं हृद्यमष्ठीलानाहनुल्लघु" इति वाग्भटेन परिवर्तितम् । वल्लीबन्धनस्थानं शुष्कं यस्य, यत्पाकमतिक्रम्य वर्तते तदितीन्दुः ।

शीर्णवृन्तशब्देन सम्यक्पक्वत्वं लक्ष्यते, सम्यक्पक्वस्य हि वृन्तं शीर्यते इति हेमाद्रिः ॥

**शीसम्** । सू. १०. सीसम् ॥

**शुकः** । सू. ५ etc. नीलत्वात् । शवतीत्येके । पक्षिविशेषः । "शुको व्याससुते कीरे रावणस्य च मन्त्रिणि । शिरीषपादपे पुंसि ग्रन्थिपर्णे नपुंसकं" इति मेदिनी । हिं.—तोता, सुआ, सुग्गा; बं.—टिया पाखी; म.—पोपट, राघू; क.—गिळि, हत्तिगिणि; त.—किळि; सिं.—गिरवा, पेत्ता; मल.—तत्ता തത്ത, पैङ्किळि, किळि; इं.—Parrot, Paroquet; फ्र.—Pierrot; ल.—*Palaeornis torquatus* । **नामानि**—"शुकः कीरो रक्ततुण्डो मेधावी मञ्जुपाठकः । अन्यो राजशुकः प्राज्ञः शतपत्रो नृपप्रियः" । रा. नि । **गुणाः**—"शुकमांसं कषायाम्लं विपाके रूक्षशीतलम् । शोषकासक्षयहितं संग्राहि लघु दीपनं" इति चरकः ॥

**शुकतरुः** । उ. ५ etc. शुकप्रियस्तरुः । शिरीषः ॥

**शुकनासा** । उ. ३४. शुकस्य नासेव पुष्पाण्यस्याः । पुल्लिङ्गमिति बहवः । स्योनाकः । शिरीष इति कैरली । चर्मकारजंभूप्रभासिका इति मालवीया वदन्ति । चर्मकारवट इत्येके । काश्मर्यादिधूमयोगे शुकनासास्थाने काकनासिकेव चरकपाठः ॥

**शुकाख्यः** । उ. ३८. शिरीषः ॥

**शुकाख्या** । उ. ३८. शिरीषः । स्योनाक इत्येके । ग्रन्थिपर्णमिति भाष्यकारः ॥

**शुकाह्वः** । उ २२. शिरीषः । स्योनाक इत्यपरे ॥

**शुक्तम्** । सू. ५ etc. सन्धानकविशेषः । "शुक्तं यन्मधुरं कालवशादम्लत्वमागतं" इति । हिं.—सिरका; मल.—भिन्नाविरि

ചൊറുക്ക , चोरुक्का । Vinegar । "कन्दमूलफलादीनि सस्नेहलवणानि च । यत्र द्रव्येऽभिपूयन्ते तच्छुक्तमभिधीयते" इति भावमिश्रः । **गुणाः**—"शुक्तं तीक्ष्णोष्णलवणं पित्तकृत् कटुकं लघु । रूक्षं क्रिम्युदरानाहशोथार्शोविषकुष्ठनुत्" । चुक्रमिति लोके इति डल्हणः । see **चुक्रम्** ॥

**शुक्तिः** । सू. ३. लघुपानपात्रम् । चषकविशेषः । A small drinking vessel । see **चषकः** ॥

**शुक्तिः** । सू. ६ etc. **मुक्तागृहम्** । "शुक्तिः कपालशकले शंखे शंखनखेऽपि च । नख्यश्चावर्तदुर्नाममुक्तास्फोटेषु च स्त्रियाम्" इति मेदिनी । **हिं.**—सीप ; **बं.**—झिनुक ; **म.**—शिंप ; **गु.**—छीप ; **क.**—सिंपु ; **मल.**—मुत्तुच्चिप्पि മുത്തുച്ചിപ്പി ; **त.**—मुत्तुच्चिप्पि; **इं.**—Pearl oyster; **ल.**—*Avicula* । **नामानि**—"मुक्तास्फोटोऽब्धिमण्डूकी शुक्तिर्मुक्ता तु मौक्तिकं" इति वैजयन्ती । **गुणाः**—"मुक्ताशुक्तिः कटुः स्निग्धा श्वासहृद्रोगहारिणी । शूलप्रशमनी रुच्या मधुरा दीपनी परा" । रा. नि ॥

**शुक्तिः** । सू. १५. ए. ग. शुक्त्याकृतिः । **नखम्** । अल्पनख इति डल्हणः । बदरपत्राकारा इति भाष्यकारः । "अपि शुक्तिः खुरश्शंखो नखं कोलदलं समाः" इति वैजयन्ती ॥

**शुक्लोत्कटा** । उ. २४. "लोहशुक्लोत्कटा" इयत्र "लोहे शुक्तोत्कटा" इति शुद्धः पाठः । शुक्लोत्कटा श्वेतगुञ्जेति शिवदीपिकाकारः ॥

**शुङ्गा** । चि. ३. चि. ८. पुल्लिङ्ग इति केचित् । **वटशुङ्गः** । अग्रपल्लवः । "शुङ्गा त्रयी पल्लवस्य कोश्यां वृक्षस्य" इति केशवस्वामी । नूतनपत्रांकुरः । प्रथमोद्भिन्नं किसलयमितीन्दुः । "पर्णं बर्हं पतत्रं

च त्रयी शुङ्गाऽस्य कोशिका" इति वैजयन्ती । हिं.—नई कोंपलें । Sheath or calyx of a bud ॥

**शुण्ठी** । सू. १० etc. शुण्ठति शुष्यति । शुष्कार्द्रकम् । N. O.—*Scitamineae* । हिं.—सोंठ, सौंठ, शुंठी, सूंठ, सोंट, संधि; उर्दु.—सोण्ट; बं.—शुंठ, शुँट, सुंठ; म.—सुंठ; गु.—सूंठ, शुण्ठ्य; कों.—सूंटि; दखा.—सोंठ; पञ्जा.—सोंठ; काश्मी.—शो-ओण्ट; बर्मा.—गिन्सि-खियाव; मलायी.—हुल्या-क्रिङ्; तै.—शुण्ठि, शोंठि, शौंठि; क.—शुण्ठि, सोंटि; त.—चुक्कु, वेर्कोम्पु; तु.—सूंटि; सिं.—सिद्दिंगुरु; मल.—चुक्कु ചുക്ക; पा.—संजबील, जंजबील; अ.—संजेबिलारातावा; फ्र.—Gingembre; जर्मन्.—Ingwer; इं.—Dry ginger, ginger; ल.—*Zingiber officinalis* । नामानि—"शुण्ठी विश्वा च विश्वं च नागरं विश्वभेषजम् । ऊषणं कटुभद्रं च शृङ्गवेरं महौषधम्" । भा. प्र । शुष्कार्द्रकं ग्राह्यम् । गुणाः—"शुण्ठी रुच्यामवातघ्नी पाचनी कटुका लघुः । स्निग्धोष्णा मधुरा पाके कफवातविबन्धनुत् । वृष्या स्वर्या वमिश्वासशूलकासहृदामयान् । हन्ति श्लीपदशोथार्शआनाहोदरमारुतान् । आग्नेयगुणभूयिष्ठं तोयांशपरिशोषि यत् । संगृह्णाति मलं तत्तु ग्राहि शुण्ठ्यादयो यथा । विबन्धभेदनी या तु सा कथं ग्राहिणी भवेत् । शक्तिर्विबन्धभेदे स्याद्यतो न मलपातने" । भा. प्र । अर्शोऽधिकारे पिप्पल्याद्यनुवासनतैलयोगे "कुष्ठं शुण्ठी"मित्यत्र "कुष्ठं शटी"मित्येव पठनीयं चरकमतानुसारिणा ॥

**शुल्बम्** । उ. १३. ताम्रम् ॥

**शुष्कमूलकम्** । शा. १ etc. रौद्रशोषितमूलकम् । "त्रिदोषशमनं शुष्कं विषदोषहरं लघु । विष्टंभि वातलं शाकं शुष्कमन्यत्र मूलकात्" । सु. सू. ४६ ॥

**शुष्कशाकम्** । शा. ६ etc. शुष्कं शाकम् । सब तरहके सूखे शाक । *Dried potherbs* । Vegetables dried and salted as condiment । शुष्कपत्रादीत्येके । रूक्षदेशजं शाकमित्यपरे । शुष्कवार्ताककर्चरिकादीति हेमाद्रिः ॥

**शूकरः** । सू. ६. सूकर इति पाठः । **व्रीहिविशेषः** । पारावतकाञ्चीनगुणः । पुराणं ग्राह्यम् ॥

**शूकरः:** । सू. ६. शू इत्यव्यक्तं शब्दं करोति । यद्वा शूकोऽस्त्यस्य । खररोमत्वात् । **वराहः** ॥

**शूकरी** । उ. ६. शूकर आक्रामकत्वेनास्त्यस्याः । **वाराही** । वृद्धदारक इत्यरुणदत्तः । ब्राह्मी गुडूची वेति केचित् । see **महापुरुषदन्ता** ॥

**शूकशिंबीजम्** । सू. ६. शूकधान्यं शिंबीधान्यं च । "शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकम् । शिंबीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम् । शालयो रक्तशाल्याद्या व्रीहयः षष्टिकादयः । यवादिकं शूकधान्यं मुद्गाद्यं शिंबिधान्यकम् । कंग्वादिकं क्षुद्रधान्यं तृणधान्यं च तत् स्मृतं" इति । गुणाः—"शूकधान्यं शिंबिधान्यं परिसंवत्सरोषितम् । लघु पथ्यतमं प्रोक्तं गुर्वपथ्यतमं मतं" इति ॥

**शूकशिंबीभवं धान्यम्** । चि. २ see **शूकशिंबीजम्** ॥

**शूर्पम्** । शा. ६. धान्यादिस्फोटको वंशमयपात्रः । प्रस्फोटनम् । "प्रस्फोटनं शूर्पमस्त्री" इति वैजयन्ती । हिं.—सूप, छाज; अन्न फटकने का पात्र; बं.—कुला; त.—मुरं; मल.—मुरं ๑००; इं.—Winnowing fan ॥

**शूर्पपर्णी** । शा. २ etc. शूर्पं इव पर्णान्यस्याः । सूप्यपर्णीति पाठः । **मुद्गपर्णी** । शारीरस्थानप्रोक्तबलातैलयोगे शूर्पपर्णीद्वयेन मुद्गपर्णी

माषपर्णी चेति प्रयुक्तवान् वृद्धवाग्भटः । वातव्याधिचिकित्सिते बलातैलयोगे सूप्यपर्णीचेव चरकपाठः । माषपर्णी मुद्गपर्णी चेतीन्दुः । महाकल्याणकघृतयोगे शूर्पपर्णीस्थाने 'द्विमाष'मिति चरकः। द्विमाष इति माषराजमाषयोर्ग्रहणमिति चक्रपाणिदत्तः। नावनीतके मुद्गपर्णी माषपर्णी चेत्येव दृश्यते ॥

**शूर्पपर्णीद्वयम्** । सू. ६. मुद्गपर्णी माषपर्णी च ॥

**शूर्पपर्ण्यौ** । सू. १५ etc. शूर्पपर्णीद्वयम् ॥

**शूल्यम्** । सू. ७ etc. शूलप्रोतमङ्गारविपाचितं मांसम् । हिं.-- कबाब । Roasted meat । "कालखण्डादिमांसानि ग्रथितानि शलाकया । घृतं सलवणं दत्वा निर्धूमे दहने पचेत् । तत्तु शूल्यमिदं प्रोक्त"मिति भावमिश्रः । "हिंगूदके परिक्षिप्तं शूले निष्पीडितं ततः । सिक्त्वा सिक्त्वाऽम्बुधाराभिर्विधूमेऽग्नौ प्रतापयेत् । फलाम्लेनाऽपि यत् पक्वं शूल्यं तत् सौरभान्वितं" इत्येके । "अङ्गारेषु विपक्वं मांसं भूतिभेरूटकं भृष्टम् । उल्यमुख्यमांससिद्धं शूले शूल्यं भटित्रं च" इति हलायुधः । गुणाः—"मांसं तु शूलिकाप्रोतमङ्गारेण विपाचितम् । ज्ञेयं गुरुतरं वृष्यं दीप्ताग्नीनां सदा हितं" इति राजवल्लभः ॥

**शूषा** । सू. ६. सूषेति पाठः । **कासमर्दः** । छोटे पत्रकी चौलाई इति शिवदीपिका । शुषेति मुद्रितचरकपाठः । तुषेति चरकप्रसादनी । श्रूषेति पौराणिककेरलपाठः । "श्रूषायां कासमर्दकः" इति वैजयन्ती । पूषेति च पाठो दृश्यते । भूशिरीष इति भास्करव्याख्या ॥

**शृगालः** । शा. ३ etc. असृगालाति । सृजति मायामिति वा । जंबुकः । "शृगालो वञ्चके दैत्ये शृगालं डमरे विदुः" इति हैमः ॥

**शृगालविन्ना** । उ. ३. शृगालैर्विद्यते । **पृश्निपर्णी** । शालपर्णीति कैरली ॥

**शृङ्गम्** । उ. ५. वृषभस्य विषाणम् । बैलगा सीङ्ग ॥

**शृङ्गवेरम्** । सू. ३ etc. शृङ्गमिव वेरमवयवो यस्य । **शुण्ठी** । "नागरमूषणभार्यं कटुकं कटुकायनं महौच्छत्रम् । शुण्ठी कोलं विश्वं विश्वौषधमौषधं महास्कन्धम् । महौषधं महावीर्यं सिहलं विश्वभेषजम् । तीक्ष्णं कटु च कासघ्नं शृङ्गवेरमिति स्मृतं" इति मञ्जरी । उत्तरद्वितीयाध्याये "शृङ्गवेरनिशाभृङ्ग"मित्यत्र आर्द्रकमिति कैरली । "आर्द्रकं शृङ्गवेरं स्या"दित्यमरः ॥

**शृङ्गवेरांबु** । सू. ३. शुण्ठ्या क्वथितं जलम् । हिं.—सोंठसे सिद्धकिया जल । मल.—चुक्कुवेळ्ळम् ചുക്കുവെള്ളം ॥

**शृङ्गाटकम्** । सू. ६ etc. त्रिकोणफलजलजकन्दः । N. O.—*Onagraceæ* । हिं.—सिंघाडे, सिंघाड़ा, सिंगाडे; बं.—पानिफल; म.—सिंगाडे; गु.—सिंगोडां; तै.—परिकेगड्डु; क.—सिंघाडे; सिं.—पानिफल; मल.—चिरवप्पु ചിറവപ്പു, वेळ्ळवट्टक्किळङ्ङु, वन्कोट्टा; पञ्जा.—गौनरि; जर्मन्.—Gemeine Wassernuss; फ.—Noix aquatique corniole; इं.—Water caltrap, Indian water chestnut, Waternut; ले.—*Trapa bispinosa, T. Bicornis* । It is an aquatic plant found commonly floating on the surface of lakes, tanks and pools in Kashmir and also other parts of India and Ceylon. In Kashmir the water-nuts form a staple farinaceous food । जलमध्ये त्रिकण्टकं सिंघाड़ा इति लोके इति डल्हणः । त्रिकोणाकृति जलोद्भवं कन्दमित्यरुणदत्तः । नामानि—"शृङ्गाटकं जलफलं त्रि-

कोणफलमित्यपि" । भा. प्र । कन्दः ग्राह्यः । **गुणाः**—"शृङ्गाटकं हिमं स्वादु गुरु वृष्यं कषायकम् । ग्राहि शुक्रानिलश्लेष्मप्रदं पित्तास्रदाहनुत्" । भा. प्र । **अन्यच्च**—"शृङ्गाटकः शोणितपित्तहारी लघुः सरो वृष्यतमो विशेषात् । त्रिदोषतापश्रमशोफहारी रुचिप्रदो मेहनदार्ढ्यहेतुः" । रा. नि । अमृतप्राशयोगे शृङ्गाटकीति चरकपाठः । "शृङ्गाटकं भवेद्वारिकण्टके च चतुष्पथे" इति विश्वः ॥

**शृङ्गी** । सू. १५ etc. **कर्कटशृङ्गी** । "शृङ्गी स्याद् भेषजान्तरे । यस्य कर्कटशृङ्गीति संज्ञा" इति केशवस्वामी । भूतप्रतिषेधाध्यायव्याख्यायां "शृङ्गी मोहनवल्ल्यपि" इत्यत्र शृङ्गी अतिविषेत्यरुणदत्तः । "शृङ्गी विषायामृषभे स्वर्णमीनविशेषयोः" इति विश्वः ॥

**शृङ्गी** । उ. ३५. **कन्दविषभेदः** । "शृङ्गीविषेणांगसाददाहोदरविवृद्धयः" इति सुश्रुतः । "यस्मिन् गोशृङ्गके बद्धे दुग्धं भवति लोहितम् । स शृङ्गिक इति प्रोक्तो द्रव्यतत्त्वविशारदैः" इति ॥

**शृङ्गीकम्** । चि. ३. **कर्कटशृङ्गी** ॥

**शृङ्गीधात्रीफलम्** । चि. ३ etc. **आमलकीफलविशेषः** । विशिष्टमामलकमिति केचिदित्यरुणदत्तः । ह्रस्वधात्रीफलमिति पाठ्यकारः । कर्कटशृङ्गी धात्रीफलं चेति पदद्वयमित्येके ॥

**शेफालिका** । उ. ९. शेरते इति शेफाः अलयो यत्र कप् वा । **परुषपत्ररक्तवृन्तपुष्पवृक्षः** । "शाकशेफालिकादिखरपत्रसमुद्रफेनशुष्कगोमयादीनी"ति संग्रहसूत्रस्थानेऽनुशस्त्रनिरूपणेऽप्युक्तमस्ति । जपेति कैरली । जपायाः कोरकस्यैव खरत्वं, न तु पत्रस्य । रक्तवृन्ता शारदकुसुमा इति डल्हणः । "शेफालिका रक्तमाली सुवहा ताम्रवृन्तिका" इति सरस्वतीनिघण्टुः । "निशिपुष्पा तु शेफाली" इति त्रिकाण्डशेषे । N. O.—*Oleaceae* । **हिं.—हारसिङ्गार**,

हारशृङ्गार, हरशिङ्गार, हर, हरसिंघार, सिओलि, सिहरु; बं.—शिउलि गाछ, हरसिङ्गर, सेओलि, सिंघर; पञ्जा.—कुरि, लादुरि; म.—पारिजात, प्राजक्त, पारतका, खुरासलि; गु.—शीयाळी, हारशणगार; कों.—पारिजातक, पारदिक; तै.—पगडमल्ले, श्वेतसुरस, कृष्टि; क.—पारिजातमर; त.—चूतं, पवळमल्लिकै; सिं.—सेपालिका; मल.—पविळमुल्ला പവിഴമുല്ല, मञ्ञप्पूमरं, पारिजातं; इं.—Night jasmine, Weeping Nyctanthes; ले.—*Nyctanthes arbor-tristis* । It is a small tree with its fragrant flowers found wild in the forests of Central India and Sub-Himalayan regions; it is commonly cultivated in gardens in many parts of India. The limb of the corolla is white, but its tube is orange-coloured. The flowers open at night and fall off very freely early morning. Native women and children collect them and separating the orange-coloured tubes from the white petals, dry them in the sun and preserve them for dyeing their clothes a beautiful buff or orange colour । नामानि—"प्राजक्तः पारिजातश्च हारशृङ्गारपुष्पकः। नालकुंकुमको रागपुष्पी च खरपत्रकः" । इति । पत्रपुष्पादिकं ग्राह्यम् । गुणाः—"रसः प्राजक्तपत्रस्य ज्वरघ्नस्तिक्तकः स्मृतः। पर्णखण्डसमायुक्तस्त्वचा कासविनाशनः" ॥

शेफाली । उ. १३. शेफालिका । सोहला इति शिवपुरमुद्रितसंमतपाठः। "सोहला दधिशमी ज्ञेया ज्ञेया सैवापराजिता" इतीन्दुः। कलंबुरिति केरलेष्वेके ॥

शेलुः । चि. ९ etc. सेलुरिति पाठः। बहुवारवृक्षः। N. O.—*Boragineae* । हिं.—लिसोडा, लिहसोडा, लसोरा, निसोरे, बहुआर; बं.—चालता, बहुयार; म.—भोंकर, शेलवट;

गु.—गुंदी, गुन्दन, वरगुन्द; कों.—शरूपळा; उत्.—अत; तै.—पेद्दनक्केरु, विरिगिकाय, बिंकाचेट्टु, बोतुकु; क.—मण्णडिके, चळ्ळे, सोळ्ळेमर, दोडुचळ्ळु; गोंदिणी; त.—नरुविलि, अकुलि; सिं.—लोलु; मल.—नरुवरि നറുവരി, नव्वेरि, आवि, मूक्कुट्टप्पळमरं; तु.—चळ्ळङ्गागि; अ.—दिबका, दबक, सेफिस्तान, मुखितहा; पा.—सपिस्तान, शुगपिस्तन्; इं.—Sepistan plum, Sobeston plum or fruit; ल.—*Cordia myxa, C. Latifolia* । **नामानि**—"बहुवारस्तु शीतः स्यादुद्दालो बहुवारकः। शेलुः श्लेष्मातकश्चापि पिच्छिलो भूतवृक्षकः" । भा. प्र । त्वगादिकं पक्वफलं च ग्राह्यम्। **गुणाः**—"बहुवारो विषस्फोटव्रणवीसर्पकुष्ठनुत्। मधुरस्तुवरस्तिक्तः केश्यश्च कफपित्तहृत्। फलमामन्तु विष्टंभि रूक्षं पित्तकफास्रजित्। तत् पक्वं मधुरं स्निग्धं श्लेष्मलं शीतलं गुरु"। भा. प्र ॥

**शैग्रवम्** । सू. १५. शिग्रुबीजम्। सुहांजनेके बीज ॥

**शैरीषम्** । सू. १५, शिरीषबीजम् ॥

**शैलसंभवम् जतु** । चि. १७. शिलाजतु ॥

**शैलेयम्** । सू. २१ etc. गन्धद्रव्यविशेषः। "शैलेयं तालपर्ण्यां च सैन्धवे। शैलजे ना तु मधुपे शिलातुल्येऽन्यलिङ्गकम्" इति मेदिनी। N. O.—*Parmaliaceae* । हिं.—भूरिछरीला, पत्थरका फूल, छरेला; बं.—शैलज; म.—दगडफूल; गु.—छडीलो, पत्थरफूल, घबिलो; क.—कल्लुहूवु; तै.—शैलेयमने द्रव्यमु; सिं.—गलसेवेल्; मल.—कल्पूवु കൽപ്പൂവ്, पूप्पायल्, चेलेयं; पा.—दहाल; अ.—आशीना, हिन्ना-इ-कोरिशा; जर्मन.—Wandschildflechte; फ्र.—Parmelia

des murs ; ल —*Parmelia perlate* । These are species of the lichen order, found on trees, old planks, walls and on rocks on the Himalayas, Punjab, Persia etc. These lichens contain a yellow crystalline stuff, gum, sugar extractive lichenin and chrysophanic acid । **नामानि**—"शैलेयं पलितं वृद्धं जीर्णं कालानुसार्यकम् । स्थविरं च शिलाददुः शिलापुष्पं शिलोद्भवम्" । ध. नि । शोधितं ग्राह्यम् । **गुणाः**—"शैलेयं शीतलं हृद्यं कफपित्तहरं लघु । कण्डू-कुष्ठाश्मरीदाहविषहृद् गुदरक्तहृद्" । भा. प्र । उत्तरसप्तविंशतितमाध्याये गन्धतैलयोगे 'शैलेय'मित्यत्र 'सैरेयक'मित्येव सुश्रुतपाठः । शिलाजतु इतीन्दुः ॥

**शैलेयकम्** । उ. १६. शैलेयम् । शिलाजतु इत्येके ॥

**शैवलम्** । सू. २६ etc. शैवालम् । "शेवलश्चैव शेवालः शैवलो जलनीलिका" इति वाचस्पतिः । "सशैवलोग्रदंष्ट्रा चे"त्यत्र "ससैन्धवोग्रदंष्ट्रे"त्येव मुंबापुरमुद्रितसंग्रहपाठः ॥

**शैवालम्** । सू. ५ etc. जले शेते तिष्ठति । जलनीली । N. O.—*Lemnaceae* । हिं.—सिवार ; बं.—शेओला , शेओयाला ; म.—शेवाळ ; गु.—शेवाळ ; तै.—नाचु ; क.—अन्तरगंगे , हांवळ, नीराता ; त.—कटेंचि , नीर्प्पाचि , वेलंपाचि ; सिं.—दियसेवेल् ; मल.—चण्टि ചണ്ടി, करिंपायल् , पाम्मि ; नीराद्दुवळ्ळि ; पा.—पसमेंदरा ; अ.—तुह्लब ; इं.—Duckweed, Vallisneria; ल.—*Lemna globsa, Blyxa octandra* इत्येके । **नामानि**—"शैवालं जलनीली स्याच्छैवलं जलजं च तत्" । रा. नि । सर्वांशो ग्राह्यः । **गुणाः**—"शैवालं तुवरं तिक्तं मधुरं शीतलं लघु । स्निग्धं दाहतृषापित्तरक्तज्वरहरं परम्" । भा. प्र ॥

**शोभाञ्जनः** । चि॰ १५. शिग्रुः ॥

**शोभाञ्जनकः** । सुष्ठु भनक्ति मुखम् । शिग्रुः । कृष्णशिग्रुरित्येके ॥

**श्यामा** । सू॰ १५ etc. कृष्णमूलत्रिवृता । हिं॰—कालानिसोथ, काली निशोथ, काला निशोत, श्याम पनिलर ; बं॰—काल तेउडी ; म॰—काळें निशोत्तर ; गु॰—काली नसोत्तर ; क॰—करे तिगडे ; तै॰—नेल्ल तेगडा ; त॰—करिंचिवतै ; सिं॰—कलु तिरिस्सवालु ; मल॰—नाल्कोलश्कोन्ना നാല്ക്കോല്പ്പക്കൊന്ന, करुत्त तृकोल्पकोन्ना ; इं॰—Black turpeth । श्याममूला त्रिवृदिति भाष्यकारः । see त्रिवृत् । नामानि—"श्यामा त्रिवृन्मालविका मसूरविदला च सा । कालाऽर्धचन्द्रा कालिन्दी सुषेणी कालमेष्यपि" । ध॰ नि । मूलत्वक् ग्राह्या । गुणाः—"श्यामा त्रिवृत्ततो हीनगुणा तीव्रविरेचनी । मूर्च्छादाहमदभ्रान्तिकण्ठोत्कर्षणकारिणी" । भा॰ प्र । कल्पचतुर्थाध्याये "विडङ्गातिविषाश्यामा" इत्यत्र श्यामाशब्दस्य वृद्धदारुक इति डल्हणः । अपस्मारप्रतिषेधाध्याये "श्यामापामार्गकारंजबीजैस्तैलं विपाचये"दित्यत्र बिल्वार्थेन श्यामास्थाने 'श्र्याह्व' इति भाति शिवपुरमुद्रितसंग्रहपाठः । चरकोपि श्यामा इत्येवात्र पठति । "श्यामा स्त्री शारिवौषधौ । अप्रसूताङ्गनायाश्च प्रियङ्गावपि वागुजौ । यमुनायां त्रियामायां कृष्णत्रिवृतिकौषधौ । नीलिकायां" इति मेदिनी ॥

**श्यामाकः** । सू॰ ६ etc. श्यामं वर्णमकति । 'अक गतौ' । तृणधान्यविशेषः । "श्यामाको नीलपुष्पः स्या"दिति वैजयन्ती । "श्यामाकः श्यामको भवे"दिति हलायुधः । N. O.—*Graminaceae* । हिं॰—समा, सांवा, सौंक, सामक, सामखिया ; बं॰—शामाधान, श्यामाघास ; पा॰—शामाख ; म॰—सावें ; गु॰—सामो ; तै॰—श्यामालु ; क॰—सामे, सावि ; त॰—

चामै; सिं.—मेनेरि; मल.—चामा ചാമ, पुल्लरि; इं.—Millet; ल.—*Panicum frumentaceum* । नामानि—“श्यामाकस्तृणबीजश्च मुनिभक्ष्यो गवां प्रिय: । सुकुमारो राजधान्यं तृणबीजोत्तमश्च स:” । ध. नि । पुराणं ग्राह्यम् । गुणा:—“श्यामाक: शोषणो रूक्षो वातल: कफपित्तहृत्” । भा. प्र । “सकोरदूष: श्यामाक: कषायमधुरो लघु: । वातल: कफपित्तघ्न: शीतसंग्राहिशोषण:” । च. सू. २७ । श्यामाकस्त्रिविध:—श्यामाक:, उष्ट्रश्यामाक:, हस्तिश्यामाकश्चेति; श्यामाकशब्देन तोयश्यामाक उच्यते, उष्ट्रश्यामाक: स्थूलश्यामाक:, हस्तिश्यामाक: श्यामिकेति लोके इति डल्हण: । श्यामाकतोयश्यामाकहस्तिश्यामाका इति त्रिधैव संग्रहे ॥

**श्यामा त्रिवृत् । चि. ८** etc. **कृष्णमूलत्रिवृता** । see **श्यामा** ॥

**श्येन: । सू. ६** etc. श्यायते । **प्रसहजातीयपक्षिविशेष:** । “श्येन: पत्रिणि पाण्डुरे” इति मेदिनी” । हिं.—बाज; बं.—बाज; म.—ससाणा; सिं.—कुरुलुगोया; क.—सिश्चण; त.—परुन्तु, करुटन्; मल.—परुन्तु പരുന്ത്, करिंपरुन्तु, चक्किप्परुन्तु, कूत्ता; इं.—Kite, falcon, glede; ल.—*Milvus Govinda* । नामानि—“श्येन: शशाद: क्रव्याद: क्रूरो वेगी खगान्तक: । कामान्धस्तीव्रसन्तापस्तरस्वी ताक्ष्यनायक:” । ध. नि । काकसमगुण: । “श्येने पत्रिशशादनौ” इत्यमरमाला । see **शशघ्नी** ॥

**श्योनाक: ।** see **स्योनाक:** ॥

**श्रावणी । चि. ३. रक्तमुण्डीरी नाम क्षुपविशेष:** । N. O.—*Compositae* । हिं.—छोटी मुंडी, मुंडी; बं.—मुंडीरी, मुड्डरी, थुलकुडी, हैलमुल, मुंइकदम; मुरमुरिया इत्येके;

म.—मुंडी , धाकटी मुंडी , बोंडथरा , बरसबोंडी ; गु.—महा-नी मुंडी ; तै.—बोडतरपुचेट्टु ; क.—करण्डे , मूडुगाट्टिन गिड , बोड्डुकडले सोप्पु ; किरिय बोंडथर , मुंडीकस ; तु.—कर्ण्टे ; कों.—कळओ ; त.—विट्टुणुकरन्तै , कोट्टैकरन्तै , तिरिलोकि ; सिं.—मुडमहण ; मल.—अटक्कामणियन् അട ക്കാമണിയൻ ; अ.—कमासरियुस , कमादरयुस ; पा.—सखिमि-इ-ह्यत् ; इं.—East Indian globe-thistle ; ल.—*Sphæranthus hirtus, S. Indicus* । It is a kind of prostrate weed found mostly in southern India, growing plentifully in the fields in the cold weather। "अरत्निमात्रक्षुपका पत्रैर्द्व्यंगुलसम्मितैः । पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः । श्रावणी महती ज्ञेया कनकाभा पयस्विनी । श्रावणी पाण्डुराभा सा महाश्रावणिलक्षणा" इति सुश्रुतः । नामानि—"मुण्डी भिक्षुरपि प्रोक्ता श्रावणी च तपोधना । श्र-वणाह्वा मुण्डतिका तथा श्रवणशीर्षका । महाश्रावणिकाऽन्या तु सा स्मृता भूकदंबिका । कदंबपुष्पिका च स्यादव्यथाऽतितपस्वि-नी" । भा. प्र । सर्वांशो ग्राह्यः । गुणाः—"मुण्डी तिक्ता कटुः पाके वीर्योष्णा मधुरा लघुः । मेध्या गण्डापचीकृच्छ्रक्रिमियोन्यर्ति-पाण्डुनुत् । श्लीपदारुच्यपस्मारप्लीहमेदोगुदार्तिहृत् । महामुण्डी च तत्तुल्या गुणैरुक्ता महर्षिभिः" । भा. प्र ॥

**श्रावणीयुगम्** । सू. १०. श्रावणी महाश्रावणी च । महाश्रावणी श्वेतमुण्डेरी । अलंबुषेति चक्रपाणिदत्तः । ४०० **श्रावणी** ॥

**श्रीकुक्कुटः** । चि. १२. तिलसर्षपपिष्टशाकजो मालवदेशप्रसिद्धः अम्लखड्कविशेषः ॥

**श्रीनिवासः** । श्रीवासकः ॥

**श्रीपर्णी** । चि. ९ ८७८. श्रीयुक्तानि पर्णान्यस्याः । **काश्मरी** । "श्रीपर्णी काश्मरीकुम्भ्योः" इति मेदिनी ॥

**श्रीफलः** । चि. १. श्रीयुक्तं फलमस्य । **बिल्वः** । बिल्व इत्येव चरकपाठः । "श्रीफलः पुंसि मालूरे धात्रीनीलिकयोः स्त्रियां" इति मेदिनी ॥

**श्रीवासः** । उ. ३. **श्रीवासकः** । "श्रीवासो वृकधूपे स्यात् पङ्कजे मधुसूदने" इति मेदिनी ॥

**श्रीवासकः** । सू. १५. श्रियै वासः सौरभमस्य । **नवनीतखोटी नाम सरलवृक्षनिर्यासः** । "श्रीवासो भद्रकः प्रोक्तो मलकाष्ठविवर्जितः" इति । गुग्गुलीति लोके इति डल्हणः । हिं.—सरलका गोंद, गन्धविरोज, गन्दा बिरोजा, चन्द्रस, तारपीनका तेल; लोबान इति भावप्रकाशहिन्दीव्याख्याता; बं.—टर्पिन तेल, गन्धबिरजा, टारपिन्, नवनीतखोटी; म.—मगला डीक, चंद्रुस; गु.—चन्द्रस, जनार्जन, गंधवरीजो; क.—श्रीवेष्टक; सिं.—सिरिवदु, होरमेलियं; मल.—तिरुवट्टप्पशा ത്രിവെട്ടപ്പശ, चरळप्पशा; साम्प्राणीति केचित्; पा.—संदरूस, काहरुबा; अ.—संदरूस; इं.—Turpentine । **नामानि**—"श्रीवेष्टको धूपवृक्षः क्षीरशीर्षः खरद्रुमः । श्रीवासः सरलांगश्च क्षीरस्रावस्तथा दृष्टिः" । ध. नि । निर्यासो ग्राह्यः । **गुणाः**—"श्रीवासो मधुरस्तिक्तः स्निग्धोष्णस्तुवरः सरः । पित्तलो वातमूर्धाक्षिस्वररोगकफापहः । रक्षोघ्नः स्वेददौर्गन्ध्ययूकाकण्डूव्रणप्रणुत्" । भा. प्र ॥

**श्रीवेष्टः** । चि. १९. श्रियै वेष्ट्यतेऽसौ । **श्रीवासकः** । श्रीनिकेत इति सुश्रुतपाठः ॥

**श्रीवेष्टकः** । सू. २१. श्रीवासकः ॥

**श्रूषा** । "श्रूषा तु शाकभेदे स्त्रियामियम् । वैजयन्त्यां कासमर्दे स्मा-ह" इति केशवस्वामी । see **शूषा** ॥

**श्रेयसी** । चि. ६. रास्ना ॥

**श्रेयसी** । उ. २. गजपिप्पली । "श्रेयसी करिपिप्पल्यामभयापाठयोरपि" इति मेदिनी । हरीतकीत्येके ॥

**श्रेष्ठा** । शा. १ etc. त्रिफला । "श्रेष्ठया चैणहरिणशशशोणितयुक्तया" इत्यत्र "शशहरिणपृषतरुधिरयुक्तया वा त्रिफलया" इत्येव संग्रहपाठः । चरकसंहितायामपि तद्वदेव दृश्यते ॥

**श्लेष्मातकः** । सू. ६ etc. श्लेष्माणमतति शीतवीर्यत्वात् । शेलुः ॥

**श्वदंष्ट्रा** । शा. २ etc. शुनो दंष्ट्रेव हिंस्रत्वाच्च दंष्ट्रा । गोक्षुरः । "श्वदंष्ट्रा गोक्षुराभिख्यस्तंबे यन्त्रान्तरेपि च । परिखाया बहिर्भूमौ राज्ञां दन्तान्तरे शुनाम्" इति केशवस्वामी ॥

**श्वन्(श्वा)** । शा. ३ etc. कुक्कुरः । हिं.—कुत्ता ; बं.—शुनक ; म.—कुत्रा ; तै.—कुक्का ; क.—नाई ; त.—नाय् ; सिं.—बल्ला ; मल.—नाया നായ ; इं.—Dog ; ल.—*Canis familiaris* । नामानि—"कुक्कुरः शुनकः श्वा स्यात् कौलेयः सुनखः शुनः । सारमेयः कृतज्ञश्च भषको मृगदंशकः" । म. पा । "श्वा पुमान् कुक्कुरे ख्यातः स्थानभेदे च वास्तुनः" इति मेदिनी ॥

**श्वाविध्** । सू. ६ etc. श्वानं विध्यति । सूचीसदृशरोमा । सेढिका । हिं.—सेह, साही ; म.—साळई ; क.—एलयमृग ; त.—मुळ्ळंपन्रि ; सिं.—इत्तेवा, इत्तूवा ; मल.—मुळ्ळन्पन्नि മുള്ളൻപന്നി, एय्पन् ; इं.—Porcupine ; ल.—*Hystrix leucura* । "शल्योऽन्यः श्वाविदित्युक्तः शली च शललो च सः ।

शल्यलोम्नि तु विज्ञेया शललं शलं शलं" इति नरहरिः । नामानि—"शल्लूलः शललं श्वावित सेधा स्यात् सूचिनाखरा" । ध. नि । अयं बिलेशयगुणः । सूचीसदृशरोमयुक्ता 'सिह्रा' इति लोके इति डल्हणः ॥

**श्वेतकटभी** । उ. ५ etc. **अद्रिकर्णी** । श्वेतगुंजा इत्येके । सुषवीतीन्दुः ॥

**श्वेतकरवीरः** । चि. १९. शुक्लपुष्पकरवीरवृक्षः । हिं.—सफेद कनेर ; बं.—श्वेतकरवी ; म.—पांढरी कण्हेर ; गु.—धोली कणेर ; क.—वाकणालिंगे ; मल.—वेलुत्त कणवीरं വെളുത്ത കണവീരം । see **करवीरः** ॥

**श्वेतकांबोजिका** । उ. ३४. श्वेतगुञ्जा । see **उच्चटा** । "अपरा श्वेतकांबोजी श्वेतगुंजा भिरीटिका । काकादनी काकपीलुर्वक्त्रशल्या सितोच्चटा" । रा. नि । "श्वेतकांबोजिकांकुरान्" इत्यत्र "श्वेतकांबोजिपल्लवाः" इति सुश्रुतपाठः । श्वेतः श्वेतश्चन्द्रः, कांबोजिका कूविका, गयी तु माषपर्णीमाह इति डल्हणः । कांबोजी श्वेतखदिर इति हाराणचन्द्रः । श्वेतपाकीतीन्दुः ॥

**श्वेतगोवालमरिचम्** । उ. १३. श्वेतमरिचं नाम शिग्रुबीजम् । see **सितमरिचम्** । श्वेतवर्णं मरिचमित्येके । श्वेतशारिबा मरिचं चेति पदद्वयमिति पाठ्यकारः । श्वेतकपिलायाः वालो मरिचं चेति शिवदीपिकाकारः ॥

**श्वेतपत्रम्** । उ. ५. सितकमलम् । पुण्डरीकम् । "पुण्डरीकं श्वेतपत्रम् सिताब्जं श्वेतवारिजं" इति नरहरिः । "वेळ्ळियिला" इति पाठ्यकारः । see **कमलम्** ॥

**श्वेतबृहती** । शा. १. सितपुष्पकण्टकारिका । सफेद फूलकी कटेली । see **कण्टकारी** ॥

**श्वेतमरिचम्** । उ. १६. श्वेतं मरिचमिव । **शोभाञ्जनबीजम्** । see **सितमरिचम्** ॥

**श्वेतरोध्रः** । उ. ९. रोध्रविशेषः । हिं.—सफेद लोध ; बं.—शुक्लोध ; म.—थोरलोध्र ; क.—बिलिय लोध ; त.—वेळ्ळि-लोत्ति ; सिं.—सवरलोत् ; मल.—वेलुत्त पाच्चोत्ति വെളുത്ത പാച്ചോററി ; वेळ्ळिला इत्येके । **नामानि**—शाबरः श्वेतरोध्रश्च मार्जनो बहलत्वचः । पट्टी लाक्षाप्रसादश्च वल्कलो बाणभूरुहः" । रा. नि । त्वक् पुष्पं च ग्राह्यम् । see **रोध्रः** ॥

**श्वेतवचा** । उ. १. शुक्लवचा । हिं.—सफेद वच, खुरासानी वच ; बं.—श्वेतवच, खोरासानी वच ; म.—पांढरें वेखंड ; गु.—धोळां वज, दुधिया वज, खुरसाणी वच ; तै.—तेल्लवस ; क.—बिले बजे ; त.—वेळ्ळै वचम्पु ; सिं.—हेळवदकसा ; मल.—वेळ्वयम्पु വെൾവയമ്പു ; इं.—White sweet flag root । **नामानि**—"मेध्या श्वेतवचा त्वन्या षड्ग्रन्था दीर्घपत्रिका । तीक्ष्णगन्धा हैमवती मङ्गल्या विजया च सा" । रा. नि । मूलं ग्राह्यम् । **गुणाः**—"श्वेतवचाऽतिगुणाढ्या मतिमेधायुःसमृद्धिदा कफनुत् । वृष्या च वातभूतक्रिमिदोषघ्नी च दीपनी च वचा" । रा. नि ॥

**श्वेतवाहः** । सू. १५. अर्जुनः । ककुभवृक्षः । अर्जुन इत्येव सुश्रुतपाठः ॥

**श्वेता** । सू. २१ etc. **अद्रिकर्णी** । कटभीति पदार्थचन्द्रिका । किणिहीति हेमाद्रिः । वचेति केरलेष्वेके । "श्वेता वराटिकाकाष्ठपाटलाशंखिनीषु च" इति मेदिनी ॥

**श्वेता** । उ. २२. **श्वेतवचा** ॥

**श्वेताख्या** । उ. ३६. श्वेतवचा ॥

**श्वेताद्रिकर्णिका** । उ. ५. शुक्लगिरिकर्णिका । see **अद्रिकर्णी** ॥

**श्वेतायुग्मम्** । सू. १५. अद्रिकर्णी महाश्वेता च । अपराजिताद्वयम् । सफेद फूलकी कोयल और काले फूलकी कोयल। एका श्वेता किणिही, द्वितीया श्वेता कटभी कुमार्यान्या महाश्वेता इति पदार्थचन्द्रिका । एका किणिहीसंज्ञा अन्या महाश्वेता पालिन्दीसंज्ञा इत्यरुणदत्तः । श्वेतायुग्मस्थाने क्षुद्रश्वेता महाश्वेता चेत्येव सुश्रुतपाठः । क्षुद्रश्वेता श्वेतस्यन्दा श्वेतपुष्पा 'सेफन्द' इति लोके ; महाश्वेता नीलपुष्पः सेफन्दः ; वन्ध्याकर्कोटिकेत्यन्ये इति डल्हणः । क्षुद्रश्वेता अतिविषा , महाश्वेता श्वेतापराजिता इति हाराणचन्द्रः । श्वेताऽपराजिता , महाश्वेता तद्भेदः कटभी वा इति चक्रपाणिदत्तः। वचा श्वेतवचा चेति केरलेष्वेके ॥

## ष ।

**षट्चरणः** । चि. २१. षड्धरण इति पाठः । पथ्याकुटजबीजकटुकातिविषाचित्रकपाठाः । "चित्रकेन्द्रयवे पाठा कटुकाऽतिविषाऽभया । वातव्याधिप्रशमनो योगः षड्धरणः स्मृतः" इति सुश्रुतः। "षड्धरण इति षण्णां चित्रकादीनां धरणा मानविशेषा यत्र योगे स षड्धरणो योगः । तत्र धरणप्रमाणं मध्यमैरेकविंशतिभिर्निष्पावैर्भवति । सुखांबुना ईषदुष्णांबुनेत्यर्थः । षड्धरणानि कथं सप्तदिनान्युपयुज्यन्ते ? उच्यते,—एकस्मिन् दिने कर्षयोगः, स चाष्टादशनिष्पावैर्भवति , तत्र षड्धरणेभ्यः प्रतिदिनं त्रयस्त्रयो निष्पावा उच्छ्रिता भवन्ति , ततः षड्भिस्त्रिकैरष्टादशनिष्पावाः , तैरष्टादशभिः सप्तमं दिनं पूर्यते ; अथवा संज्ञैषा षड्धरण इति" इति डल्ह-

णः । 'कटुकाऽतिविषा क्षपा' इति केचित् पठन्ति । "दार्वीकलिंगकटुकातिविषाग्निपाठा मूत्रेण सूक्ष्मरजसो भरणप्रमाणाः । पीता जयन्ति गुदजोदरगुल्ममेहकोष्ठानिलाढ्यपवनग्रहणीप्रदोषान्" इति वृद्धवाग्भटोऽभयास्थाने दारुनिशां निवेश्य विवर्तितवान् । कुष्ठचिकित्सितेऽष्टाङ्गहृदयेपि तद्योगोऽन्यथा दृश्यते, यथा—"पाठादार्वीवह्निघुणेष्टाकटुकाभिर्मूत्रं युक्तं शक्रयवैश्चोष्णजलं च" इति ॥

**षड्ग्रन्था** । सू. २९ etc. षड् ग्रन्थयः पर्वाण्यस्याः षड्ग्रन्था । **वचा** । "षड्ग्रन्था तु स्त्रियामियम् । भेषजे पिप्पलीमूलसंज्ञे स्यादपरे पुनः । आहुः शुक्लवचायां तां वचामात्रे परे विदुः" इति केशवस्वामी । "षड्ग्रन्था तु वचायां स्त्री स्यात् करञ्जान्तरे पुमान्" इति मेदिनी । कल्पचतुर्थाध्याये "शक्वाथो मधुषड्ग्रन्थे"त्यत्र शठीति शिवदीपिकाकारः । तस्मिन्नेव पद्ये "सुरदारुवचाग्न्ये"त्यत्र 'वचा'स्थाने 'वरा' इत्येव संशुद्धः पाठ इत्यप्यनुस्मारयामि ॥

**षड्धरणः** । see **षट्चरणः** ॥

**षष्टिकः** । सू. ४ etc. षष्टिदिनपक्वव्रीहिधान्यविशेषः । षष्टिको मागधदेशे प्रसिद्धः । A rice that ripens within 2 months. "शालयो हैमनास्तत्र षष्टिका ग्रैष्मिका अपि" इति । तस्य लक्षणम्—"गर्भस्था एव ये पाकं यान्ति ते षष्टिका मताः । एतेऽपि व्रीहयः प्रोक्ता व्रीहिलक्षणदर्शनात्" । षष्टिको व्रीहिभेद एव, 'षष्टिको व्रीहिषु श्रेष्ठ' इत्युक्तत्वात्; किं तु व्रीहिश्चिरपाकी षष्टिकस्तु शीघ्रपाकी । "यो व्रीहिः षष्टिरात्रेण पच्यते स तु षष्टिकः" इति । हिं.—सांठी धान, साटी, सट्टी; बं.—षटे धान्; पाटिया; म.—साठे साळी; त.—कुरुवै; सिं.—सेट दावि; मल.—नवरा നവര, नविरा । स कृष्णगौरभेदाद्द्विधा । नामानि—"षष्टिकः षष्टिशालिः स्यात् षष्टिजः स्निग्धतण्डुलः । षष्टि-

वासरजः सोयं ज्ञेयो मासद्वयोद्भवः" । रा. नि । "षष्टिको गर्भपाकी स्यात् प्रवरश्शालियष्टिकः" इति वैजयन्ती । पुराणं ग्राह्यम् । गुणाः—"गौरो नीलः षष्टिकोऽयं द्विधा स्यादाद्यो रुच्यः शीतलो दोषहारी । बल्यः पथ्यो दीपनो वीर्यवृद्धिं दत्ते चास्मात् किञ्चिदूनो द्वितीयः । रा. नि । अन्यच्च—"षष्टिका मधुराः शीता लघवो बद्धवर्चसः । वातपित्तप्रशमनाः शालिभिः सदृशा गुणैः" । भा. प्र । तद्भेदाः – "षष्टिकः शतपुष्पश्च प्रमोदकमुकुन्दकौ । महाषष्टिक इत्याद्याः षष्टिकाः समुदाहृताः" । भा. प्र । "षष्टिककांगुकमुकुन्दकपीतकप्रमोदककाकलकासनपुष्पकमहाषष्टिकचूर्णककुरवककेदारप्रभृतयः षष्टिकाः इति सुश्रुतः । "धान्यं श्रेष्ठं षष्टिकं राजभोग्यं मांसं त्वाजं तैत्तिरं लावकीयम् । पानीयं स्यात् कृष्णमृत्स्नासमुत्थं क्षीराज्यादौ गव्यमाजं प्रशस्तम्" । रा. नि । see शालिः ॥

षाडवः । पानकविशेषः । see खाण्डवः । "षाडवो गानरसयोः" इति मेदिनी । "षाडवस्तु पुमानयम् । गीतिप्रभेदे स्यादम्लमधुरोऽभिमिश्रिते रसे" इति केशवस्वामी ॥

---

# स ।

संसर्गी । चि. ९ etc. विरेकानन्तरिकः पेयादिक्रमः । अन्नसंसर्जनक्रमः ॥

संसर्जनम् । चि. ३ see संसर्गी ॥

सक्तुः । सू. ३ etc. यवतण्डुललाजादिचूर्णम् । "सक्तुश्चूर्णक" इति त्रिकाण्डशेषे । भृष्टानां निस्तुषयवानां चूर्णं सक्तव इति हेमाद्रिः । "यवतण्डुललाजानां चूर्णं सक्तुः प्रकीर्तितः" इति । "धा-

न्यानि भ्राष्ट्रभृष्टानि यन्त्रपिष्टानि सक्तवः" इति भावमिश्रः । हिं.—सत्तु ; बं.—छातु ; म.—भाजलेल्या धान्यांचें पीठ, सातु ; सिं.—बेदि सहल्ल ; मल.—मलर्प्पोटि മലർപ്പൊടി ; इं.—Fried grain powdered, flour of fried grain । "मेषादौ सक्तवो देयाः" इति स्मृतिः । गुणाः—"तृड्छर्दिदाह-घर्मार्तिनुदस्ततं सक्तवो मताः । रक्तपित्तहराश्चैव दाहज्वरविनाशनाः" । सु. सू. ४६ । उदरचिकित्सिते "विडंगं चित्रकं सक्तून्" इत्यत्र 'सक्तु'स्थाने 'शुण्डी'त्येव चरकपाठः ॥

**सठी** । see **शटी** । शाकवर्गान्तर्गतसठीशब्दस्य पुनर्नवेत्यर्थ इत्येके ॥

**सतीनः** । सू. ६ etc. **कलायः** । वर्तुलकलाय एवेति डल्हणः सुश्रुतसूत्रषट्चत्वारिंशत्तमाध्याये शाकवर्गव्याख्यायाम् । अष्टाङ्गहृदयसूत्रषष्ठाध्याये शाकवर्गव्याख्यायां विष्णुक्रान्तेति हेमाद्रिः । लाल चौलाई इति शिवदीपिका । "वर्तुलस्तु सतीनः स्यात् हरेणुः स्वल्पवर्तुल" इति मदनपालः ॥

**सदापुष्पी** । क. १. सदा पुष्पमस्याः । **अर्कः** । "सदापुष्पो रविद्रुमे" इति नरहरिः ॥

**सदाफलः** । सू. १५. सदा फलमस्य । **उदुंबरः** । "सदाफलः स्कन्धफले नारिकेलेऽप्युदुंबरे" इति मेदिनी ॥

**सन्तानम्** । सू. २९. तन्तु ॥

**सन्तानिका** । शा. ३. क्षीरस्योपरि स्थानो भागः । **क्षीरसरः** । हिं.—दूधकी मलाई ; बं.—छाना ; म.—साई, मलई ; सिं.—किरियोदे ; मल.—पल्प्पाटा പാൽപ്പാട ; इं.—Cream of the milk । Thin upper part of milk ; पा.—किमाक् (Qimaq) । Cream is the oily part of milk which is very nutritive and agreeable but not easily digestible ।

"सन्तानिनी क्षीरसर" इति वैजयन्ती "सन्तानिकं परं रूक्षं शृतदुग्धोपरि स्मृतम्" इति मदनपालः । गुणाः—"सन्तानिका गुरुः शीता वृष्या पित्तास्रवातनुत् । तर्पणी बृंहणी स्निग्धा बलासबलशुक्रला" । भा. प्र ॥

**सप्तकंबलम्** । चि. ५. राजयक्ष्मणः सप्त उपद्रवव्याधयः । पूर्वोक्तस्वरसादशिरःपार्श्वांसशूलकासश्वासज्वरादयः । "तेषामुपद्रवान् विद्यात् कण्ठोध्वंसमुरोरुजम् । जृंभांगमर्दनिष्ठिववह्निसादास्यपूतिताः" इत्येके । "पीनसश्वासकासांसमूर्धस्वररुजोरुचिः" इत्यरुणदत्तादयः॥

**सप्तछदः** । सू. १५ etc. सप्त सप्त छदाः प्रतिपत्रं यस्य । **सप्तपर्णः** ॥

**सप्ततिः** । चि. ६. हृद्रोगचिकित्सिते "सप्ततिदारुबीजाह्वविजयाशठिपौष्करै"रित्यत्र "सपतिदारुबीजाह्वपलाशशठिपौष्करै"रित्येव संग्रहपाठः । चरकसंहितायामप्येवमेव दृश्यते । पतिदारुस्थाने पूतिदारु इत्येके । सप्ततिः सप्तपर्ण इति शिवदीपिकाकारः ॥

**सप्तपर्णः** । सू. २९ etc. सप्त सप्त पर्णान्यस्य प्रतिपर्णम् । स्वनामख्यातवृक्षः । शाल्मलीसदृशपर्णो गजमदगन्धपुष्पः शरदि विकसनशीलः उच्चैर्वृक्षः 'सातवन' इति लोके इति डल्हणः । N. O.—*Apocynaceae* । हिं.—सतौना, सतवन, छेतीवन, छातियान्, छतवती, हितवन, छतिवन, दात्युनि ; बं.—छातिमगाछ, छेतेन ; म.—सातविण, सात्वीण, सातवणा, सात्विन ; गु.—सात्विन ; कों.—सांत्विरूक्कु, काडुसळे रूक्कु ; तै.—एडाकुलरिटिचेट्टु, एडाकुला, पालागरुड ; क.—हाले, एळेलेबाळे, पाळे, जन्तले, कोडालेमर ; तु.—पाले, पालेंबु ; त.—एळिलैंपालै, एळिलैप्पालै ; सिं.—रुक् अत्तन ; मल.—एळिलम्पाला ഏഴിലംപാല, दैवप्पाला, मङ्गलप्पाला, पाला ;

इं.—Dita bark; ल.—*Alstonia scholaris*, *Echites scholaris* | नामानि—"सप्तपर्णः शुक्तिपर्णश्छत्रपर्णः सुपर्णकः। सप्तच्छदो गूढपुष्पस्तथा शाल्मलिपत्रकः" | ध. नि | गुणाः—"सप्तपर्णस्तु तिक्तोष्णस्त्रिदोषघ्नश्च दीपनः। मदगन्धो निरून्धेऽयं व्रणरक्तामयाक्रिमीन्" | रा. नि | अन्यच्च—"सप्तपर्णो व्रणश्लेष्मवातकुष्ठास्रजन्तुजित्। दीपनः श्वासगुल्मघ्नः स्निग्धोष्णस्तुवरः सरः" | भा. प्र | त्वगादिकं ग्राह्यम् ॥

**सप्तला** | सू. ६. सप्त मनोबुद्ध्यन्तानीन्द्रियाणि लाति सप्तला। सपति समवैति वा। सातला नामारण्यरीटाकरञ्जः। "अथ सप्तला। नवमालाचर्मकषागुञ्जासु पाटलौ स्त्रियां" इति मेदिनी। "सप्तला चर्मसाह्वा च बहुफेनरसा च सा। शंखिनी तिक्तला चैव यवतिकाऽक्षिपीडकः। ते गुल्मगरहृद्रोगकण्ठप्लीहोदरादिषु" इत्यात्रेयः। स्नुहीभेदः सेहुण्ड इति च डल्हणः। यवतिकाभेद इति जेज्जटः। N. O.—*Leguminosae* | हिं.—सातला, कोचि; बं.—सिजविशेष, वनरीठा; दखा.—सिकि, चिकेकइ; म.—शिकेकाई; गु.—साथेर; कों.—सिकायि; तै.—चीकाय, शीकाय, गोगु; क.—शीगेबळिळ; बडीलसौनुली इत्येके; तु.—सीगे; त.—चीय्काय्, चिकैकाय्; मल.—चीक्कायि ചീക്കക്കായി, चीयक्का(यि), चीनिक्का, चीयङ्का, सान्नूनकायि; पा.—एशन्; अ.—सातर; इं.—Soapnut acacia; ल.—*Acacia concinna*, *Mimosa abstergens* | नामानि—"सातला सप्तला सारी विदुला विमलाऽमला। बहुफेना चर्मकषा फेना दीप्ता मरालिका" | ध. नि | गुणाः—"सातला शोधनी तिक्ता कफपित्तास्रदोषनुत्। शोफोदराध्मानहरा किञ्चिन्मारुतकृद्भवेत्" | ध. नि | "सातला कफपित्तघ्नी लघुतिक्तकषायिका। विसर्पकुष्ठविस्फोटव्रणशोफनिकृन्तनी" | रा. नि | मूलनिर्यास-

त्वगादिकं ग्राह्यम् । महाराष्ट्रे तु 'काळा दाना' इति समाख्य-स्यापि व्यवहारो दृश्यते इति भाष्यकारः ॥

**समाह्वः** । नि. ११ etc. समपर्णः ॥

**समङ्गा** । शृ. १५ etc. समंगतीत्यङ्गति । 'अगि गतौ' । **स्पर्शरोद-निका** । N. O.—*Leguminosae* । हिं.—लज्जावंती, शर्मानी, छुईमुई, लजारू; बं.—लज्जावती, लाजवती, लाजुक; म.—लाजाळु, लाजरी, संकोरणी; गु.—रिसामणी, लजामणी; कों.—लाजरी; तै.—मुनुगुदामरमु, मुत्तवपुलगमुचेट्टु; क.—नाचिके गिड, मुट्टलमुरिके, मुट्टुगुदावरे, मुट्टिदरे मुनिव, लज्जा-वतिगिड; त.—तोट्टाट्चुरुङ्कि, तोट्टाल्वाटि; सिं.—नितिकुंप; तु.—नाचिकेदे; मुंबापुर्यांमु.—लज्जावती; मल.—तोट्टाल्वाटि തൊട്ടാൽവാടി, तोण्टावणि; फ्र.—Sensitive commune; Herbepudique ou Vive mimuese; जर्मन.—Shaamhafte Sinnplanze; Fuhlplanze; इं.—Sensitive plant, Hu-mble plant; ल.—*Mimosa pudica* । अंजलिकारिका 'ल-ज्जालु' इति लोके इति डल्हणः । **नामानि**—"लज्जालुः स्याच्छ-मीपत्रा समङ्गाऽञ्जलिकारिका । रक्तपादी नमस्कारी स्पर्शसंकोच-पर्णिका" । भा. प्र । सर्वांशो ग्राह्यः । **गुणाः**—"लज्जालुः शी-तला तिक्ता कषाया कफपित्तजित् । रक्तपित्तमतीसारं योनिरोगान् विनाशयेत्" । भा. प्र । अन्यच्च—"रक्तपादी कटुः शीता पित्ता-तीसारनाशनी । शोफदाहश्रमश्वासव्रणकुष्ठकफास्रनुत्" । ध. नि । प्रियंग्वादिगणव्याख्यायां वराहक्रान्तेति भाष्यकारः । पुष्यानुग-चूर्णयोगे मञ्जिष्ठेतीन्दुः ॥

**समङ्गा** । उ. ५. मञ्जिष्ठा (इन्दुः) ॥

**समस्तगन्धम्** । उ. २७. सर्वगन्धम् ॥

**समुद्रफेनः** । उ. ११. जलजन्तुभेदस्याऽस्थिविशेषः । हिं.—समुद्रझाग, दरया-का-कफ्; बं.—समुद्रफेन; म.—समुद्रफेण; गु.—समुद्रफीण, समदरफीण; तै.—सामुद्रनालिगे, सोरु पेंका, समुद्रपुनुरगु; क.—कटलनागले; त.—कटल्नुरै; सिं.—मुहुदुपेन; मल.—कटल्नाक्कु കടൽനാക്ക; पा.—कफेदरिया; अ.—जुबदुलबहेर; इं.—Cuttle-fish bone; ल.—*Sepia offisinalis; Os sepie*; जर्मन्.—Kuttel-fishbeim । The Cuttle-fish is an inhabitant of the sea. It is found abundantly everywhere on the coasts of India and of other countries. It possesses a large head with a number of so-called "arms," which surround the mouth, and are on their inner side covered with numerous suckers. The head bears a large eye on each side. The body is flattened and carries a fin on each side. On the dorsal side the mantle encloses a flat, porous shell, the cuttle-bone, often found lying on the seashore. It is 1 to 3 inches in width and 5 to 10 inches in length । नामानि—"समुद्रफेनः फेनश्च डिंडीरोऽब्धिकफस्तथा" । भा. प्र । शोधितं ग्राह्यम् । गुणाः—"समुद्रफेनः शिशिरः कर्णपाकनिवारणः । लेखनो नेत्ररोगाणां हिमो विषविनाशनः । चक्षुष्यो रक्तपित्तघ्नो गुल्मप्लीहहरः स्मृतः" । ध. नि । घनीभूतसागरोत्थफेनपुञ्ज इत्येके ॥

**समुद्रशुक्तिः** । चि. १५. शुक्तिः ॥

**संदंशः** । सू. २५. यन्त्रभेदः । हिं.—चिमटा; बं.—साँड़ाशी; म.—चिमटा, सांडस, सांडशी; त.—चावणं; मल.—चवणा ചവണ, चविणा । Pincers, Nippers । "संदंश:

स्यात् कंकमुखः" इति वैजयन्ती । सनिबन्धनो निर्निबन्धनश्च संदंशौ द्वौ षोडशांगुलौ भवतः इति वृद्धवाग्भटः । सनिग्रहसंदंशयन्त्रं सम्प्रति आङ्ग्लभाषायां Artery or Disscetion forceps with catch इति नाम्ना प्रसिद्धं , अनिग्रहसंदंशयन्त्रं च Disscetion forceps without catch इति नाम्ना प्रसिद्धम् ॥

**सरकः** । चि. ७. स्रियते । 'सृ गतौ' । **पानपात्रविशेषः** । 'शराव' इति लोके । गयी तु सरकं कांस्यताम्रादिभाजनमिति । पानपात्राकारः क्षुद्रशराव इत्येके । "सरकं वा नानुतर्षो ना" इति रत्नकोषः । "सरकः शीधुपानेक्षुशीधुनोर्मद्यभाजने" इत्यजयः । "इक्षुशीधौ शीधुपाने सरकं मद्यभाजने" इति शाश्वतः । see **चषकः** ॥

**सरटः** । शा. ६. सरति सरटः । **कृकलासः** ॥

**सरलः** । सू. १५ etc. **देवदारुविशेषः** । "सरलः पूतिकाष्ठे नाऽथोदारावक्रयोस्त्रिषु" इति मेदिनी । पीडाख्यं देवदारुसदृशमेवेतीन्दुः । "सरलं स्निग्धमत्यर्थं सुगन्धि च गुणावहं" इति भावमिश्रः । N. O.—*Coniferæ* । **हिं.**—धूपसरल , चिरका पेड़ ; **बं.**—सरलगाछ , तार्पिनतैलेर गाछ ; **म.**—सरळदेवदार , सुरूचें झाड ; **गु.**—पीलो बीरजो , सरलदेवदार ; **द्रखा.**—गन्धबिरोजा ; **आ.**—आलाकुस ; **काश्मी.**—चिर् ; **तै.**—गरिके देवदारिचेट्टु ; **क.**—सरली देवदारु ; **सिं.**—सोर अरट्टु , सोर ; **मल.**—चरळ ചരളം ; **इं.**—Long-leaved pine ; **फ्र.**—Pin a longues feuilles ; **ल.**—*Pinus longifolia* ।

**नामानि**—"सरलः पूतिकाष्ठं च चिडा पित्तद्रुमो मतः । दीपवृक्षः स्निग्धदारुः प्रोक्तो मारीचपत्रकः" । ध. नि । काष्ठं ग्राह्यम् । **गुणाः**—"सरलो मधुरास्तिक्तो कटुपाकरसो लघुः । स्निग्धोष्णः कर्णकण्ठाक्षिरोगरक्षोहरः स्मृतः । कफानिलस्वेददाहकासमूर्च्छाव्र-

णापहः" । भा. प्र । अन्यच्च—"सरलः कटुतिक्तोष्णः कफवातविनाशनः । त्वग्दोषशोफकण्डूतिव्रणघ्नः कोष्ठशुद्धिदः" । रा. नि । रोध्रादिगणे सरलस्थाने साल इत्येव सुश्रुतपाठः ॥

**सरलकाष्ठम्** । उ. १८. सरलवृक्षस्य काष्ठम् ॥

**सरसी** । सू. १५. वनार्जकभेदः । पत्रं ग्राह्यम् । झरसीति केरलपाठः । तुंबरपत्रिकेत्यरुणदत्तः । कपित्थपर्णीति हेमाद्रिः । सुरसीति सुश्रुतपाठः । कपित्थसदृशपत्रा 'बिल्वनासी' इति लोके प्रसिद्धा, श्वेतनिर्गुण्डीत्यन्ये इति डल्हणः । कपित्थपत्रा तुलसीति भाष्यकारः । वनतुलसीति शिवदीपिका । कंवठपत्री इति महाराष्ट्रेषु केचित् । "कपित्थपत्र्यधःपुष्पी व्रणघ्नी झरसी झरा" इति वैजयन्ती ॥

**सरोरुह** । चि. १४. सरसि रोहति । कमलम् ॥

**सर्जः** । चि. १ etc. सर्जरसः ॥

**सर्जः** । उ. २७. सृजति निर्यासम् । शालभेदः । बृहच्छाल इत्येके । गन्धमुण्डोऽश्वत्थसदृशवृक्ष इति डल्हणः । N. O.—*Dipterocarpeæ* । हिं.—शालभेद, झांजिशाल; साखु इत्यन्ये; बं.—शालगाछ, लताशाल; म.—राळेचा वृक्ष; तै.—इनुमद्दि, नल्लमद्दि; जालारिचेट्टु इति केचित्; क.—आसिनमर, आसु, राळदमर; बिले बोवु इत्येके; त.—मरामरं; सिं.—मुरुत; मल.—मरुतु മരുതു, मरामरं; इं.—Sal tree; ल.—*Shorea robusta* । नामगुणाः—"शालस्तु सर्जकार्याश्वकर्णकः सस्यसंवरः । अश्वकर्णः कषायः स्याद्व्रणस्वेदकफक्रिमीन् । भग्नविद्रधिबाधिर्ययोनिकर्णगदान् हरेत्" । भा. प्र । "सर्जेऽश्वकर्णे" इति वैजयन्ती । त्वग् ग्राह्या । see **शालः** ॥

**सर्जजः** । उ. ३४. सर्जरसः ॥

सर्जरसः । सू. २९ etc. राल इति प्रसिद्धः । हिं.—राल, किलि; पञ्जा.—राल अर्लु; नेपा.—अराडि; सिन्धी.—हजेरु; बं.—धुना, धूना; शिकण्टा इत्येके; म.—पिवळी राळ; गु.—राळ; तै.—सर्जरसमु; क.—सर्जरस; त.—कुङ्किलियं; सिं.—वेल्दुम्मल; मल.—चेञ्चल्यं ചെഞ്ചല്യം; पा.—रालमगरेबी; अ.—किकहर; फिरंगी.—नारुस; इं.—Yellow resin; ल.—*Mimosa Rubricaulis or M. Mutabilis* । Rala is the resin of the tree called Shorea Robusta । नामगुणाः—"रालस्तु शालनिर्यासस्तथा सर्जरसः स्मृतः । देवधूपो यक्षधूपस्तथा सर्वरसश्च सः । रालो हिमो गुरुस्तिक्तः कषायो ग्राहको हरेत् । दोषास्रस्वेदवीसर्पज्वरव्रणविपादिकाः । ग्रहभग्नाग्निदग्धाश्रीशूलातीसारनाशनः" । भा. प्र । "रालस्तु शिशिरः स्निग्धः कषायस्तिक्तसंग्रहः । वातपित्तहरः स्फोटकण्डूतिव्रणनाशनः" । रा. नि । निर्यासो ग्राह्यः । उत्तरस्थानसप्तविंशाध्यायव्याख्यायां "सरलसर्जरसामरदारुभि"रित्यत्र 'सर्जो देवधूपः रसो निर्यासः' इति पदद्वयमितीन्दुः ॥

सर्जिः । उ. २८. स्वर्जिक्षारः । सुवर्चिकेति सुश्रुतपाठः । see स्वर्जिकः ॥

सर्पकञ्चुकः । चि. ८. अहिनिर्मोकः ॥

सर्पगन्धाख्या । उ. ५. सर्पं तद्विषं गन्धयति हिनस्ति । नाकुली । वर्षासु छत्राकारा इति डल्हणः । छत्राकीति हाराणचन्द्रः । ईश्वरमूलक इति पाश्चात्यकारः ॥

सर्पत्वक् ॥ शा. १. अहिनिर्मोकः ॥

सर्पमणिः । उ. ३६. सर्पफणोद्भूतो मणिः । उक्तं हि—"शेषस्याऽन्वयिनां फणासु फणिनां यन्मौक्तिकं जायते वृत्तं निर्मलमु-

ज्वलं शशिरुचिश्यामच्छविश्रीकरम् । कंकोलाकृतिकोपि कोटिसुकृतैः प्राप्नोति चेन्मानवः स स्याद्वाजिगजाधिको नृपसमो जातोपि नीचे कुले" इति । माणिक्यमित्येके ॥

**सर्पलोचना** । उ. ३७. गन्धनाकुली । N. O.—*Rubiaceæ* ।
हिं.—सरहटी, सुगन्धनकुलकन्द; बं.—गन्धनाकुली, पानसेउली; म.—सुगंधमुंगुसबेल, नागवेलि; गु.—मुंगुसवेल; तै.—सर्पाक्षिचेट्टु; क.—पाताळगरुड, गरुडपाताळगिड; कों.—गर्डपाताळि; तु.—पाताळगरडे; त.—कीरिप्पूण्डु; मल.—अमल्प्पोरि, अविल्प्पुरि; पेररत्ता इत्येके; इं.—Mongoose plant, Ophioxylon; ल.—*Ophiorrhiza mungos* । It is a kind of herb found in the mountains of Assam, Burma, the Western Peninsula and Ceylon । नामानि—"अन्या महासुगन्धा तु सुवहा गन्धनाकुली । सर्पाक्षी नकुलेष्टा च छत्राक्षी विषमर्दनी" । ध. नि । कन्दो ग्राह्यः । गुणाः—"सर्पाक्षी कटुका तिक्ता सोष्णा कृमिनिकृन्तनी । वृश्चिकोन्दुरसर्पाणां विषघ्नी व्रणरोपिणी" । भा. प्र । see नाकुलीद्वयम् । शंखिनीति पाठ्यकारः । रक्तपुष्पा पूर्वदेशे प्रसिद्धा इत्येके । सर्पाक्षीं गन्धनाकुलीं च पृथक्तया केचित् पठन्ति ॥

**सर्पसुगन्धा** । चि. १४. नाकुली । ईश्वरमूलक इति पाठ्यकारः ॥

**सर्पिः(स्)** । सू. ७ etc. सर्पति । घृतम् ॥

**सर्वगन्धम्** । उ. १, उ. ३४. एलादिगणः । कुष्ठचन्दनोशीरादिगन्धद्रव्याणीति कैरली । "चातुर्जातककर्पूरकक्कोलागरुकुंकुमम् । लवङ्गसहितं चैव सर्वगन्धं प्रकीर्तितं" इत्येके ॥

**सर्षपः** । सू. ५ etc. सरति स्नेहोऽस्मात् । 'सृ गतौ' स्वनामख्यातहृस्वक्षुपविशेषः । N. O.—*Cruciferae* । हिं.—सरसों,

सरौंसा , सर्षों , जिरिया , रायां ; बं.—सरिषा , सर्षे ; पा.—सर्सफ ; अ.—उर्फे अबीयद ; म.—शिरस ; गु.—सरशव ; तै.—आवालु ; क.—सासिवे , सासुवे , सासिमेगिड ; कों.—सासमा ; तु.—दासेमि ; त.—कडुकु ; सिं.—अब , हब ; मल.—कडुकु കടുക ; बर्मा.—कुङ्सियन ; इं.—Indian mustard, Sinapis ; जर्मन.—Sewarzary-senf ; फ्र.—Moutarde noire; ल.—*Brassica juncea, Sinapis juncea* । नामानि—"सर्षपः कटुकः स्नेहस्तुन्तुभश्च कदंबकः । गौरस्तु सर्षपः प्राज्ञैः सिद्धार्थ इति कथ्यते" । भा. प्र । गुणाः—"सर्षपस्तु रसे पाके कटुः स्निग्धः सतिक्तकः । तीक्ष्णोष्णः कफवातघ्नो रक्तपित्ताग्निवर्धनः । रक्षोहरो जयेत् कण्डूं कुष्ठकोष्ठक्रिमिग्रहान् । यथा रक्तस्तथा गौरः किन्तु गौरो वरो मतः" । भा. प्र । पुराणं बीजं ग्राह्यम् ॥

**सर्षपकः** । चि. २२. "सिद्धं सर्षपकै"रित्यत्र "सिद्धं समधुकै"रित्येव चरकपाठः ॥

**सल्लकी** । see **शल्लकी** ॥

**सहकारः** । सू. ३. सह युगपत् किरति सौरभं दूरादौ । सहकारयति मेलयति स्त्रीपुंसौ इति वा । **आम्रः** । अतिसुरभिराम्र इति हेमाद्रिः ॥

**सहचरः** । चि. २१. नीलपुष्पझिण्टी । "भवेत् सहचरो झिण्ट्यां द्वयोरनुचरे त्रिषु" इति मेदिनी । "सैरेयकः सहचरः सैरेयश्च सहाचरः । पीतो रक्तोऽथ नीलश्च कुसुमैस्तं विभावयेत्" । ध. नि । N. O.—*Acanthaceæ* । हिं.—नीली कटसरैया , काला बांसा ; बं.—नीलझिंटी ; म.—काळा कोरांटा ; गु.—नीळो कांटा अशेळीयो ; क.—करि गोरंटे ; कप्पुकुर्णि , कप्पुबोन्दुळि इसोके ;

सिं.—कटुकरण्डु ; मल.—करिंकुरुञ्ञि കരിങ്കുറുഞ്ഞി; ल.—*Justicia Ecbolium* । नामानि—"सैरीयकः सहचरः कोरण्डो मृदुकण्टकः । कुरण्टकः कुरुवको बाणो दासी च झिण्टिका" । स. नि । मूलं ग्राह्यम् । सर्वांशो वा ग्रहणीयः । गुणाः—"नीलः कुरण्टकास्तिक्तः कटुर्वातकफापहः । शोफकण्डूशूलकुष्ठव्रणत्वग्दोषनाशनः" ॥

**सहाचरः** । सू. १५ etc. **सहचरः** । श्वेतझिंटीत्येके ॥

**सहे** । सू. १०. तरणी राजतरणी च । शेवती और राजशेवती । "सहा तु पुष्पस्तंबेषु त्रिपु स्त्री तरणौ तथा । नीलझिण्ट्यां पीतझिण्ट्यामित्यप्यतिबलाह्वये । बलासंज्ञे च भेषज्यस्तंबयोरोपधावपि । मुद्गपर्ण्यभिधानायां भेद्यलिङ्गं तु सोढरि" इति केशवस्वामी । महासहा क्षुद्रसहा चेत्येके । ते पर्णिनीचतुष्कान्तर्भूते । क्षुद्रसहा रक्तकुरवकः, महासहा श्वेतकुरवकश्चेति चरकोपस्कारकारः । क्षुद्रसहा कुमारीति चक्रपाणिदत्तः । तरणीद्वयमिति हेमाद्रिः ॥

**सह्यः** । सू. ५. भारतवर्षस्य कुलाचलभेदः । "सह्यः पुनर्ना पर्वतान्तरे । पश्चिमार्णवतीरस्थे" इति केशवस्वामी । "सह्यः शैलान्तरे पुमान् । सोढव्ये वाच्यलिङ्गः स्यादारोग्ये तु नपुंसकं" इति मेदिनी । "माहेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्वतः । विन्ध्यश्च पारियात्रश्च सप्तैवात्र कुलाचलाः" इति । One of the seven principal chains of mountains in India. It is still known as Sahyadri, and is the same as the Western Ghats, boundary of Kerala as far as their junction with the Nilgiris north of the Malaya ॥

**सातला** । चि. १५. सातं सुखं लाति । सप्तला ॥

**साधारणः** । सू. १ etc. जाङ्गलानूपोभयदेशलक्षणयुक्तः प्रदेशः ।

लक्षणं यथा—"समाः साधारणे यस्माच्छीतवर्षोष्णमारुताः । दोषाणां समता जन्तोस्तस्मात् साधारणो मतः" इति । अपि च—"यत्र द्वयोरपि च लक्षणयोर्निवेशो गोधूममाषचणकाभिनयावनालैः । यो राजितस्समलो जनसौख्यदायी साधारणस्स गदितोऽखिलवैद्यराजैः" इति तन्त्रान्तरे । A wild marshy country ॥

**सामुद्रकः** । उ. ३९. संपुटः । हिं.—डिबिया, डिब्बा ; बं.—पेटरा ; म.—डब्बी ; त.—चिरुटपि ; सिं.—करण्डुव ; मल.—डप्पि ഡപ്പി, अलुक्कु ; इं.—Casket । "समुद्गः संपुटः पुटः" इति वैजयन्ती ॥

**सामुद्रम्** । मू. ५. समुद्रजलम् ॥

**सामुद्रम्** । मू. ६ etc. समुद्रजलवणम् । हिं.—सांगा, समुद्रनोन ; बं.—करकचतुन ; म.—मीठ ; गु.—दरियाईलून, मीठुं ; तै.—उप्पु ; क.—द्रोणिउप्पु, वडागरलवण ; दखा.—निमक् ; कों.—चेमित्मीठ ; त.—उप्पु ; सिं.—लुणु, मुहुदुलुणु ; बर्मा.—तेमुग-डान्-हूसा ; मल.—उप्पु ഉപ്പ്, कटलुप्पु ; पा.—नमके-खुरदम, नमक ; अ.—मिलहुलस-आजिन ; मिलहशोरी ; इं.—Common salt ; Table salt ; Muriate of sodium ; ल.—*Sodia muras* । नामानि—"सामुद्रकं तु सामुद्रं समुद्रलवणं शिवम् । वशिरं सागरोत्थञ्च शिशिरं लवणाब्धिजम्" । रा. नि । शोधितं ग्राह्यम् । गुणाः—"सामुद्रं लघु हृद्यं च पलितासृक्पित्तदम् । विदाहि कफवातघ्नं दीपनं रुचिकृत्परम्" । रा. नि । अन्यच्च—"सामुद्रं मधुरं पाके सतिक्तं मधुरं गुरु । नात्युष्णं दीपनं भेदि सक्षारमविदाहि च । श्लेष्मलं वातनुत्तिक्तमरूक्षं नातिशीतलम्" । सामुद्रं समुद्रसमीपभवं गुर्जरराष्ट्रे प्रचुरं भवतीति

डल्हणः । दक्षिणसमुद्रभवं करकच इति ख्यातं इति चक्रपाणिदत्तः । जलपोताधःसञ्चितं लवणमित्येके ॥

**सारंगः** । शा. ६. सरति सारं गच्छति सहारंगेण वा वर्तते सारङ्गः । चातकपक्षी । "सारङ्गः पुंसि हरिणे चातके च मतंगजे । शबले त्रिषु" इति मेदिनी । हिं.—पपैया, पपीहा ; म.—चातक ; मल.—वेळाम्पल् വേഴാമ്പൽ, कटश्रा, कट्टोटचात्तन्, नरियोङ्कल् ; इं.—Hornbill ; ल.—*Lophoceros birostris* । The hornbill is a frugivorous bird, breeding in hollow trees. On its beak are large horns । **नामानि**—"चातकस्तोकक: सोपि सारङ्गो मेघजीवनः" । रा. नि । "जीवंजीवकसारङ्गसारसप्रियवादिना"मित्यत्र "जीवंजीवकसिद्धार्थसारसप्रियवादिना"मित्येव चरकपाठः । सिद्धार्थः खञ्जन इति चरकोपस्कारकारः ॥

**सारजलम्** । चि. १२. सारांबु ॥

**सारदारु** । चि. १०. शमीखदिरादितरूणामिन्धनम् ॥

**सारद्रुमः** । सू. १५ see **मानद्रुमः** ॥

**सारपदः** । see **शारपदः** ॥

**सारसः** । सू. ६ etc. सरसि भवः सारसो लक्ष्मणाख्यः । प्लवजातीयोभयचरपक्षिविशेषः । रक्तचञ्चुक इत्येके । लक्ष्मणो रक्तशिराः प्रसिद्ध एव इति डल्हणः । "सारसः पक्षिभेदेन्द्वोः क्लीबं तु सरसीरुहे" इति मेदिनी । हिं.—सहरस ; म.—करकोचा ; त.—वण्टानं, कानांकोळि ; सिं.—विह्निहिणिया ; मल.—व(प)ण्टारङ्कोयि വ(പ)ണ്ടാരക്കോഴി, तामरक्कोयि ; इं.—Crane, Jaena ; ल.—*Ardea sibirica* । **नामानि**—"सारसो रसिकः कामी नीलाङ्गो भणितारवः । नीलकण्ठो रक्तनेत्रः काकुवाक्का-

मिवल्लभः" । रा. नि । गुणाः—"मांसं सारसहंसरात्रिविरहि-क्रौञ्चादिजं शीतलं स्निग्धं वातकफापहं गुरु ततः स्वादु त्रिदोषापहम्" । रा. नि । मूत्राघातचिकित्सिते "सारसास्थिश्वदंष्ट्रैला" इत्यत्र 'सारसास्थि' कमलबीजमिति समर्थयतः शिवदीपिकाचरकप्रसादनीकारौ । सरसिभवप्राणिनामस्थीतीन्दुः ॥

सारस्नेहः । see स्नेहफलसारः ॥

सारामुखः । मू. ६. शालामुख इति पाठः । कृष्णशूकव्रीहिधान्यविशेषः । स्वादुपाकरसः । कृष्णशूक इत्यरुणदत्तः । कृष्णशूकाकारतण्डुल इति डल्हणः । उक्तं हि—"शालामुखः कृष्णशूकः कृष्णतण्डुल उच्यते" इति भावमिश्रः । स तु शकुनाहृताद्धीनगुण. ॥

सारांबु । मू. ३ etc. असनखदिरचन्दनादिसारैः क्वथितं जलम् । दाडिमफलसारमिश्राम्लतोयं वेत्येके । खदिरादिसारे षडङ्गविधिना कृतमुदकं सारोदकं ज्ञेयमिति चक्रपाणिदत्तः । प्रमेहचिकित्सायां, "असनञ्च प्रियालञ्च सालं खदिरकं तथा । सारवर्गं तथा ग्राह्यं भवेच्चैतद्विचक्षणैः । मधुमेहत्वमापन्नं भिषग्भिः परिवर्जितम् । योगेनानेन मतिमान् प्रमेहिनमुपाचरेत्" इति वङ्गसेनभावप्रकाशकारौ ॥

सारिका । मू. ३ etc. सरति गच्छति । पक्षिविशेषः । मेधावीति हेमाद्रिः । हिं.—मैना ; बं.—मयना , शालिक पाखी ; म.—साळुंखी ; क.—राजसाळही ; त.—मैना , पूवै ; सिं.—सेळलिहिणि ; मल.—मयिना മയിന , मैना ; अ.—अबलका ; इं.—Talking maina, Hill maina, or Grackle । ल.—*Gracula religiosa* । The talking maina, glossy black in colour with rich yellow cheek lappets, is a well-

known cage bird with wonderful powers sf imitating the human voice । "वाचाला मुखरा शारि"रिति यादवप्रकाशः । नामानि—"गोराटिका गोकिराटी गौरिका कलहप्रिया । मेधाविनी सारिकाऽन्या दूतिका प्रियवादिनी" । ध. नि ॥

**सारिबा** । शा. २ etc. शारिबा ॥

**सारिबाद्वयम्** । उ. ७. कृष्णशारिबा शुक्लशारिबा च । श्यामानन्ते । दोनों शारियाई । कालीसर और गोरसर ॥

**सारिबायुगम्** । उ. २४. सारिबाद्वयम् ॥

**सारिबे** । उ. ३५. सारिबाद्वयम् । "सारिबे बला" इत्यत्र "सारिबोत्पले" इत्यन्ये पठन्तीति डल्हणः ॥

**सारिवा** । see शारिबा ॥

**सार्षपम्** । सू. ५. सर्षपजतैलम् । हिं.—सरसोंका तेल ; म.—शिरसांचें तेल ; मल.—कटुकेण्णा കടുകെണ്ണ । Mustard oil । गुणाः—"दीपनं सार्षपं तैलं कटुपाकरसं लघु । लेखनं स्पर्शवीर्योष्णं तीक्ष्णं पित्तास्रदूषकम् । कफमेदोऽनिलार्शोघ्नं शिरःकर्णामयापहम् । कण्डूकुष्ठकृमिश्वित्रकोठदुष्टक्रिमिप्रणुत् । तद्वद्राजिकयोस्तैलं विशेषान्मूत्रकृच्छ्रकृत्" । भा. प्र ॥

**सार्षपम्** । सू. ६. सर्षपक्षुपस्य पत्रम् । हिं.—सरसोंका शाक ; मल.—कटुकिला കടുകില । गुणाः—"सार्षपं कृमिलं स्वादु त्रिदोषरक्तपित्तकृत्" । रा. व । "सार्षपं पत्रमत्युष्णं रक्तपित्तप्रकोपनम् । विदाहि कटुकं स्वादु शुक्रहृद्बुचिदायकम्" । रा. नि । "विदाहि बद्धविण्मूत्रं रूक्षं तीक्ष्णोष्णमेव च । त्रिदोषं सार्षपं शाकम्" । सु. सू. ४६ ॥

**सार्षपम्** । चि. १९. सर्षपबीजम् । see सर्षपः ॥

**सालः** । see शालः ॥

**सालद्रुमः** । see मानद्रुमः ॥

**सिंहः** । सू. ९ etc. हिनस्ति सिंहः । पशुराजः । "मृगेन्द्रे तु सिंहो द्वे स्त्री तु सिंही" इति केशवस्वामी । "सिंहः कण्ठीरवे राशौ सत्तमे चोत्तरस्थितः" इति मेदिनी । हिं.—शेर, सेर, सिंह; बं.—पशुराज; म.—सिंह; तै.—सिंहमु; त.—चिङ्कं; सिं.—सिंहय; मल.—सिंहं ; पा.—शेर, बबर; अ.—असद; इं.–Lion; ल.–*Leo*; East African.—*Simba* । पराक्रमी निद्रालुरिति डल्हणः । नामानि—"सिंहः पञ्चमुखो नखी मृगपतिर्मानी हरिः केसरी क्रव्यादो नखरायुधो मृगरिपुः शूरश्च कण्ठीरवः । विक्रान्तो द्विरदान्तको बहुबलो दीप्तो बली विक्रमी हर्यक्षः स च दीप्तपिङ्गल इति ख्यातो मृगेन्द्रश्च सः" । रा. नि । गुणाः—"सिंहमांसं गुरु स्वादु बल्यं वातकफापहम् । स्निग्धमुष्णं हितं नित्यं नेत्रगुह्यविकारिणाम्" ॥

**सिंही** । सू. २२ etc. बृहती । "सिंही तु कण्टकार्यां स्याद् वार्ताकौ वासकेऽपि च" इति मेदिनी ॥

**सिक्थम्** । उ. २५. मधूच्छिष्टम् । "मधूच्छिष्टं स्मृतं सिक्थं सिक्थ ओदनसंभवः" इति शाश्वतः । "सिक्थो ना भक्तपूलाके मधूच्छिष्टे क्वचिन्नपुम्" इति यादवः ॥

**सिक्थकम्** । चि. १९. सिच्यति, सिच्यते वा । 'षिच क्षरणे' । मधूच्छिष्टम् । "सिक्थकं मधूच्छिष्टं" इति हलायुधः । हिं.—मोम; बं.—मोम, मम; म.—मेण, मुम; गु.—मीण; कों.—मैना; क.—जेनुमेन, मेण; तै.—मैनं, मोतदर; त.—मेळुकु; सिं.—मीइटिय; मल.—मेळुकु ; बर्मा.—

ह्पा-नौङ्ग (H'pa-noung) ; मलायी.—लिलिन् ; पा.—मोम ; अ.—शमा ; इं.—Wax ; ल.—*Cera flava* । नामानि— "सिक्थकं मधुकं सिक्थं मधूच्छिष्टं मधूत्थितम् । मधुशेषं मदनकं मधुजं माक्षिकाश्रयम्" । ध. नि । शोधितं ग्राह्यम् । गुणाः— "सिक्थकं पिच्छिलं स्वादु कटु स्निग्धं मृदु स्मृतम् । अस्थिसंधिकरं व्रण्यं वातकुष्ठविसर्पनुत् । रक्तदोषं वातरक्तं भूतदोषं च नाशयेत् । स्फुटितस्याङ्गलेपेन त्वचः संधिकरं मतम्" ॥

**सितकाचः** । उ. १३. श्वेतस्फटिकविशेषः ॥

**सितमरिचम्** । उ. १६. श्वेतमरिचम् । तत्तु शोभाञ्जनबीजमिति वृद्धाः । श्वेतवर्णमरिचमिति केचित् । तन्न ; "सितमरिचभागमेक"मित्यत्र "शिग्रुफलमनोह्वाशाबरलोध्रैः क्रमाच्चतुर्गुणप्रवृद्धै"रित्येव संग्रहपाठः समुल्लसति । "शोभांजनस्य यद्बीजं तद् श्वेतमरिचं स्मृतं" इति शब्दचन्द्रिका । "मरीचं शुभ्रमरिचं बीजं शिग्रोस्तु शिग्रुजं" इति धन्वन्तरीयनिघण्टौ । गुणाः "चाक्षुष्यं शिग्रुजं बीजं तीक्ष्णोष्णं विषनाशनम् । अवृष्यं कफवातघ्नं तन्नस्यन्तु शिरोर्तिनुत्" ॥

**सितलशुनः** । उ. ५. लशुनः । चन्दनं लशुनं चेति पदद्वयमितीन्दुः ॥

**सितशर्करा** । चि. १६. सिता ॥

**सिता** । सू. ३ etc. सीयते । शुक्लवर्णत्वाद्वा । शर्करा । "सितम वसिते च बद्धे धवले त्रिषु । शर्करायां स्त्री"रिति मेदिनी । "असंभवे सितायास्तु बुधैः खण्डं प्रयुज्यते" इति भावमिश्रः । हिं.—शक्कर, बूरा, चीनी ; उर्दु.—चक्कर ; बं.—खांड, चिनि ; म.—साखर ; गु.—साकरियाखां ; तै.—चक्करा, पांचदारा ; क.—शक्करे, माळखंड ; त.—चर्क्करै, चीनि ;

सिं.—सीनि; मल.—पञ्चसारा പഞ്ചസാര, पञ्चतारा, पञ्चारा; अ. – सक्कर; पा.—शकर, शक्कर; इं.—Sugar; ल.—*Saccharum* । नामानि—"शर्करोऽक्ता तु मीनाण्डी श्वेता मत्स्यण्डिका सिता । अहिच्छत्रा तु सिकता शुद्धा शुभ्रा सितोपला" । ध. नि । लक्षणगुणाः—"खण्डं तु सिकतारूपं सुश्वेतं शर्करा सिता । सिता सुमधुरा रुच्या वातपित्तास्रदाहहृत् । मूर्च्छाच्छर्दिज्वरान् हन्ति सुशीता शुक्रकारिणी" । भा. प्र । "शर्करा मधुरा शीता पित्तदाहश्रमापहा । रक्तदोषहरा भ्रान्तिकृमिकोपप्रणाशिनी" । रा. नि । अकलुषं मत्स्यन् । सा च खण्डोपला-श्वेतोपलाक्षुद्रागौडीमलखण्डपौण्ड्रकवंशेक्षुकेक्षुश्यामेक्षुरक्तेक्षुरसालेक्षु जपुष्पोद्भव-मधुजयवासशर्कराभेदेन बहुधा । तिमिरप्रतिषेधाध्याये "सितादारुफलत्रयै"रित्यत्र सितास्थाने शिवेति केचित् । शिवा हरीतकी ॥

**सिता** । उ. ३६. श्वेतवचा ॥

**सितैरण्डः** । उ. १३. एरण्ड । सफेद एरण्ड ॥

**सितोपला** । सू. ५ etc. सिता । खण्ड इति केचित् । "तत्राघृत-सितोपल"मित्यत्र "न चाप्यघृतशर्कर"मित्येव चरकपाठः ॥

**सिद्धवास्तिः** । क. ४. निरूहणवस्तिभेदः । "बलोपचयवर्णानां यस्माद्व्याधिशतस्य च । भवत्येतेन सिद्धिस्तु सिद्धवस्तिरतो मतः" । इति सुश्रुतः ॥

**सिद्धार्थः** । सू. १५ etc. सिद्धः अर्थो यस्मात् । श्वेतसर्षपः । "सिद्धार्थः सितसर्षपे" इति यादवः । "सिद्धार्थस्तु पुमान् शाक्यसिंहे च सितसर्षपे" इति मेदिनी । N. O.—*Cruciferae* । हिं.—सफेद सरसों; बं.—श्वेत सरिषा; म.—श्वेतशिरस; गु.—सफेद राई; त.—वेण्कडुकु; सिं.—हेल अब; मल.—वेलुत्त

कटुकु വെളുത്ത കടുക , वेण्कटुकु; इं.—White mustard; जर्मन्.—Weisser-senf; फ.—Moutarde clanche; ल.—*Brassica alba, or B. Campestris* । "सिद्धार्थकस्य चाभावे सामान्यः सर्षपो मतः" । नामानि—"तीक्ष्णकश्च दुराधर्षो रक्षोघ्नः कुष्ठनाशनः । सिद्धप्रयोजनः सिद्धसाधनः सितसर्षपः" । रा. नि । गुणाः—"सिद्धार्थः कटुतिक्तोष्णो वातरक्तमहापहः । त्वग्दोषशमनो रुच्यो विषभूतव्रणापहः" । रा. नि । see सर्षपः ॥

**सिद्धार्थकः** । सू. १९ etc. श्वेतसर्षपः । सिद्धार्थः ॥

**सिद्धार्थयुग्मम्** । उ. ५. आसुरी सिद्धार्थश्च । पीतगौरसर्षपाविव्येके । रक्तश्वेतभेदेनेतीन्दुः ॥

**सिन्दुवारः** । उ. ३८. सिन्धुवार इति पाठः । सिन्धुं गजमदं वारयति तिक्तत्वात् । "सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्धुवारितः । नीलपुष्पः शीतसंह्वो निर्गुण्डी नीलसिन्धुकः" । "मुक्ताकलापीकृतसिन्दुवारं" इति कुमारः । तस्य च श्वेतपुष्पत्वात् मुक्तातुल्यत्वम् । निर्गुण्ड्याकारशुक्लपुष्पवृक्षः, श्वेतनिर्गुण्डीक्षुपः । N. O.—*Verbenaceae* । हिं.—समृहालु, शंभालु; उर्दु.—सेंबालि; बं.—निशि(सि)न्दा; म.—श्वेतनिर्गुण्डी, निर्गुण्ट, लिंगुर; गु.—धोळी नगोड; कों.—निगुण्डु; मुंबापुर्याम्.—कतरी; तै.—तेल्लवाविलि, सिन्धुवारमु; क.—बिळे नेक्कि, कर्लेक्कि, लक्किगिड; तु.—नेक्कि; त.—वेण्णोच्चि, निक्कुण्टि, चिन्तुवारं; सिं.—निक; मल.—वेन्नोच्चि വെണൊച്ചി, वेळुत्त नोच्चि; अ.—असलुक; बर्मा.—कियोनूभानूबिन्; इं.—Five-leaved chaste tree; फ.—Gattilier incise; ल.—*Vitex Negundo, V. Paniculata* । नामगुणाः—"सिन्दुवारः श्वेतपुष्पः सिन्दुकः सिन्दुवारकः । नीलपुष्पी तु निर्गुण्डी

शेफाली सुवहा च सा । सिन्दुकः स्मृतिदस्तिक्तः कषायः कटुको लघुः। केश्यो नेत्रहितो हन्ति शूलशोथाममारुतान् । कृमिकुष्ठारुचिश्लेष्मज्वरान्नीलापि तद्विधा। सिन्दुवारदलं जन्तुवातश्लेष्महरं लघु"। भा. प्र। मूत्रादिकं ग्राह्यम् ॥

**सिन्दुवारिकः**। उ. ३७. सिन्दुवारः ॥

**सिन्दुवारितः**। मू. ७ etc. सिन्धुवारित इति पाठः । सिन्धुः मदजलं वारितास्तिरस्कृतो येन अतितिक्तत्वात् । सिन्दुवारः । निर्गुण्डीति हेमाद्रिः ॥

**सिन्दूरम्**। चि. १९ etc. स्यन्द-ऊरन् सम्प्रसारणम् । स्वनामख्यातरक्तवर्णचूर्णभेदः। सीसकस्योपधातुः । "सिन्दूरं रक्तचूर्णके" इति मेदिनी। "सीसोपधातुः सिन्दूरं गुणैस्तत्सीसवन्मतम्। संयोगजप्रभावेण तस्याप्यन्ये गुणा स्मृताः" इति भावमिश्रः। हिं.—सिन्दूर, इंगुर; बं.—सिन्दुर; दखा.—सिन्दूर; म.—शेंदुर; तै.—सिन्दुरं, येर्रु सेन्दूरमु; क.—शिन्धूर; त.—चेन्तूरं; सिं.—सिनूदूरं; मल.—सिन्दूरं സിന്ദൂരം; चेन्तूरं; अ.—इसरेनूज; पा.—सुरन्ज सन्ग, सिरिनूज; बर्मा.—ह्सान्ग (H'sang); इं.—Red lead, Vermillon, Minium; ल.—*Plumbi oxidum rubrum*। It is obtained by heating oxide of lead to a very high temperature. It is bright orange-red, granular, crystalline powder. On applying more heat it becomes redder than purple and finally black। नामानि—"सिन्दूरं रक्तरेणुश्च नागगर्भं च नागजम्। शृङ्गारभूषणं श्रीमद्वसन्तोत्सवमण्डनम्"। ध. नि। शोधितं ग्राह्यम्। गुणाः—"सिन्दूरमुष्णं वीसर्पकुष्ठकण्डूविषापहम्। भग्नसन्धानजननं व्रणशोधनरोपणम्। दुग्धाम्लयोगतस्तस्य विशुद्धिर्गदिता बुधैः"। भा. प्र॥

**सिन्धुजन्म(न्)** । उ. ३० etc. सैन्धवम् ॥

**सिन्धूत्थम्** । चि. १४. सैन्धवम् ॥

**सिन्धूद्भवम्** । चि. १ etc. सिन्धोः उद्भवति । सैन्धवम् ॥

**सिरा** । धमनीभेदः । सिरा नीलवर्णाः । "सरणात् सिराः" इति चरकसूत्रे । Veins । सिरा नाम—"अविशुद्धशोणितवहाः सर्वदेहगाः प्रणाल्योऽस्मिन् शास्त्रे । ताभिः शरीरप्रचारान्मलिनीभूतं शोणितमभिप्रवर्तते हृदयाभिमुखम् । निखिलदेहव्यापिनामपि तासां मिलितानामाशयो हृदयं समुद्र इवापगानाम्" । प्र. शा ॥

**सिवाटिका** । चि. १७ पुनर्नवा ॥

**सीधुः** । सू. ३ etc. इक्षुरसेन कृतं मद्यम् । Spirit distilled from sugarcane juice । गन्नेके रससे बनायी हुई मद्य । पक्कापक्कभेदाद्द्विधा । "इक्षोः पक्वै रसैः सिद्धः सीधुः पक्वरसश्च सः आमैस्तैरेव यः सीधुः स च शीतरसः स्मृतः" इति भावमिश्रः । "ज्ञेयः शीतरसश्शीधुरपक्वमधुरद्रवैः । सिद्धः पक्वरसश्शीधुस्संपक्वमधुरद्रवैः" इति शार्ङ्गधरः । पुराणं ग्राह्यम् । गुणाः—"सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत् । वातपित्तकरः सद्यः स्नेहनो रोचनो हरेत् । विबन्धमेदःशोफार्शःशोफोदरकफामयान् । तस्मादल्पगुणः शीतरसः संलेखनः स्मृतः" । भा प्र ॥

**सीमन्तः** । शा. ३. अस्थिसंघातसंधानरेखा । "चतुर्दशैव सीमन्ताः; ते चास्थिसंघातवद्गणनीयाः, यतस्तैर्युक्ता अस्थिसंघाताः ; ये ह्युक्ताः संघातास्ते खल्वष्टादशैकेषां" इति सुश्रुतः । वाग्भटस्तु "गुल्फजानुवंक्षणमणिबन्धकूर्परकक्षासु एकैकः, त्रिके एकः, पञ्च शिरसि" इत्यष्टादश सीमन्तानाह ॥

**सीवनी** । शा. ३ मूत्राभावयवविशेषः । "सीवन्यः सप्त कीर्तिताः । एका मेढ्रे च जिह्वायां भवेयुः पञ्च मूर्धनि" इति ॥

**सीसम्** । सू. २९ etc. स्वनामख्यातधातुः । हिं.—सीसा, सीषक, शीषा; बं—सीसा, सीसे; म.—सिसें; गु.—शीसूं, कालुन सिसुन; कों.—शिशे; तै.—सीसमु; क.—सीसा; त.—करुनाकं, करुवंकं, कारीयं; सिं.—कलु ईयं; मल.—कारीयं കാരീയം; बर्मा.—खियिपोक्; अ.—रेससस, रुसासुल; पा.—अनुक्, सुर्ब; इं.—Lead; ल.—*Plumbum* । नामानि—"सीसं तु सीसकं नागं नागाह्वं कृष्णसीसकम् । मृदुलोहं सीसपत्रं भद्रं चेन्द्रं भुजङ्गकम्" । स. नि । शोधितमारितं ग्राह्यम् । गुणाः—"सीसं रङ्गगुणं ज्ञेयं विशेषान्मेहनाशनम् । नागस्तु नागशततुल्यबलं ददाति व्याधिं च नाशयति जीवनमातनोति । वह्निं प्रदीपयति कामबलं करोति मृत्युञ्च नाशयति सन्ततसेवितः सः" । भा. प्र । see वङ्गम् । दूतविज्ञानीये "कार्पासबुससीसास्थी"त्यत्र 'सीस'स्थाने 'मांस'मित्येव शुद्धः पाठः ॥

**सुक्तम्** । see **शुक्तम्** ॥

**सुखांबु** । चि. ६ etc. कोष्णजलं । गर्म जल ॥

**सुखोदकम्** । चि. ६. सुखांबु ॥

**सुगन्धकः** । सू. ६. सुगन्धिक इति पाठः । शालिधान्यभेदः । रोध्रशूकाद्धीनगुणः । सुगन्धको गन्धशालिसंज्ञया जालंधरमगधादिषु ख्यातो देवशालिरित्यपरनामेत्यरुणदत्तः ॥

**सुगन्धा** । उ. ३६. सर्पलोचना ॥

**सुधा** । चि. ८ etc. सुष्ठु धीयते पीयते अर्प्यते वा धे । स्नुही । "विरेचनानां सर्वेषां सुधा तीक्ष्णतमा मता" इति चरकः । "सुधा

सौहित्यमूर्वयोः । गङ्गेष्टिकायां कुड्यादिलेपद्रव्यान्तरेऽमृते । स्नुह्यां" इति केशवस्वामी ॥

**सुधाभस्मशर्करा** । सू. ३०. सुधाशर्करा भस्मशर्करा च ॥

**सुधाशर्करा** । सू. ३०. शुक्लपाषाणभेदः । पदद्वयमिति हाराणचन्द्रः । सुधा पाषाणभेदः घुटीं इति विज्ञायते ; शर्करा क्षुद्रतरपाषाणविशेष इति । हिं.—चूनेके पत्थर ; मल.—कल्च्चुण्णाम्पु കൽച്ചുണ്ണാമ്പ്, चुक्कान्कल्लु , चुण्णाम्पुकल्लु ; कोळिप्परल् इति भास्करव्याख्या । Lime-stone ॥

**सुधाश्म(न्)** । सू. ३०. सुधाशर्करेति सुश्रुतपाठः । see सुधाशर्करा ॥

**सुनिषण्णः** । सू. ६. सुष्ठु निषण्णं स्वप्नो यस्मात् । जलशाकविशेषः । "चाङ्गेरीसदृशैः पत्रैस्सुनिषण्णश्चतुर्दलः । शाको जलान्विते देशे चतुष्पत्रीति चोच्यते" इति ब्रह्मदेवः । शितिवारः । हिं.—सिलवारी , शिरियारी , चौपतिया , कूरडू , उठङ्गन , चणपत्ती ; बं.—शुशुनिशाक , सुनसुनिया , शेमोला , सुपुणीशाक ; म.—कुरडू ; गु.—सुनिसरणक , ओटीगण , लांबडी ; तै.—सुनिषण्णमनेशाकमु , चिक्-लिन्त-कुरा ; क.—कुरडाहके , खड्कातिरा ; उत्.—छुन्छुनिया ; पा.—अंजरा ; त.—नीरारैक्कीरै , आरै ; सिं.—किंबुल्वेन्न ; मल.—नीरारल् നീരാരൽ ; इं.—Marsilia ; ल.—*Marsilia quadrifolia* । Marsilia is a pretty creeping plant with quadrifoliate, folding leaves, common in rice-fields and shallow ponds and on the borders of freshwater lakes, tanks etc, all over India । नामानि—"शितिवारः शितिवरः स्वस्तिकः सुनिषण्णकः । श्रीवारकः सूचिपत्रः पर्णकः कुक्कुटः शिखी" । भा.

प्र । पत्रं ग्राह्यम् । गुणाः—"सुनिषण्णो हिमो ग्राही मोहदोषत्रयापहः । अविदाही लघुः स्वादुः कषायो रूक्षदीपनः । वृष्यो रुच्यो ज्वरश्वासमेहकुष्ठभ्रमप्रणुत्" । भा. प्र । सुनिषण्णो जलमध्ये भवति, पत्रैश्चांगेरीसदृशैर्यः काश्मीरेषु शूल्येषु चातिप्रसिद्ध इतीन्दुः ॥

**सुनिषण्णकः** । सू. २९ etc. सुनिषण्णः ॥

**सुपर्णः** । उ. १३. श्येनः । स्वर्णचूड इत्येके । "क्षिप्रः श्येनः सुपर्णकः" इति वैजयन्ती । "सुपर्णः स्वर्णचूडे च गरुडे कृतमालके" इति मेदिनी ॥

**सुमनःकोरकम्** । उ. ३४. जातीपुष्पमुकुलम् । चमेलीकी कलियां ॥

**सुमनाः** । सू. १९ etc. सुष्ठु मन्यते सुमना मनोज्ञत्वात् । जाती ॥

**सुमुखः** । सू. ६. पर्णासभेदः । वनबर्बरी । N. O.—*Labiatae* । हिं.—वनबबरी ; बं.—वनबाबुई तुलसी ; म.—सुगन्ध आजवला ; तै.—निम्मतुलसी ; क.—सुगन्धि अजरा ; त.—एलुमिच्चं तुळचि ; मल.—काट्टुतृत्तावु കാട്ടുത്തൃാവു , काट्टुतुळसि ; पा.—रयिहने करनफुलि ; अ.—फरनजमिश्क ; फ्र.—Basilic de-ceylon ; इं.—Shrubby Basil ; ल.—*Ocimum Gratissimum* । नामानि—"वनबर्बरिकाऽन्या तु सुगन्धिः सुप्रसन्नकः । दोषोत्क्लेशी विषघ्नश्च सुमुखः सूक्ष्मपत्रकः । निद्रालुः शोफहारी च सुवक्त्रश्च दशाह्वयः" । रा. नि । गुणाः—"पित्तकृत् पार्श्वशूलघ्नः सुमुखः समुदाहृतः । कफानिलविषश्वासकासदौर्गन्ध्यनाशनः" । ध. नि । "वनबर्बरिका चोष्णा सुगन्धा कटुका च सा । पिशाचवान्तिभूतघ्नी घ्राणसंतर्पणी परा" ।

रा. नि । पत्रं ग्राह्यम् । राजिकेति डल्हणः । वनतुलसीति शिवदीपिकाकारः । श्वेतार्जक इति हाराणचन्द्रः । "सुमुखस्तार्क्ष्यतनये शाकनागप्रभेदयोः" इति मेदिनी ॥

**सुरकाष्ठम्** । चि. ३ etc. देवदारु ॥

**सुरतरु** । चि. १९ देवदारु ॥

**सुरदारु** । शा. २ etc. देवदारु ॥

**सुरभिः** । सू. २०. सुष्ठु रमते रम्यते वा । **कुन्दुरुकवृक्षः** । see शल्लकी । "सुरभिः शल्लकीमातृभिन्मुरागोषु योषिति । चम्पके च वसन्ते च तथा जातीफले पुमान् । स्वर्णे गन्धोत्पले क्लीबं सुगन्धिकान्तयोस्त्रिषु । विख्याते साधिते धीरे चैत्रेऽपि च पुमानयं" इति मेदिनी । रास्नेति केचित् । शूकशिंबी वेति चरकोपस्कारे । गन्धमुरेति पदार्थचन्द्रिका ॥

**सुरभिः** । चि. ८. रास्ना । गन्धमुरेतीन्दुः । मुरेत्यपरे ॥

**सुरभी** । उ. ३. रास्ना ॥

**सुरवारुणी** । चि. १९. इन्द्रवारुणी ॥

**सुरसः** । सू. ६ etc. सुरसा । कासचिकित्सिते "पिप्पल्या कटुरोहिण्या काश्मर्याः स्वरसेन च" इत्यत्र "पिप्पल्या कटुकाद्राक्षाकाश्मर्यैः सुरसेन च" इति पठितव्यं चरकमतानुसारिणा । "सुरसं तु त्रिषु स्वादौ पर्णासे तु नपुंसकम् । स्त्रीरास्नानागमात्रोश्च" इति मेदिनी ॥

**सुरसयुगम्** । सू. १५. तुलसीद्वयम् । श्वेतकृष्णकुसुमभेदेन । सुरसा श्वेतसुरसा चेति सुश्रुतपाठः । see सुरसा ॥

**सुरसा** । सू. १७ etc. सुखेन रस्यते । **पर्णासभेदः, तुलसी** । बृहत्पत्रेति भाष्यकारः । N. O.—*Labiatae* । हिं.—तुलसी ;

बं.—तुलसी ; म.—तुळस ; गु.—तुलसी ; कों.—तुळसि ; तै.—तुलसि ; क.—तुळसिगिड ; तु.—तोळसि ; त.—तुळचि , अलङ्कै ; सिं.—तला ; मल.—तृत्तावु ഉത്താവു , तुळसि ; इं.—Holy basil or Tulasi ; Mosquito plant of South Africa ; फ्र.—Basilic Saint ; ल.—*Ocimum sanctum*, *O. Hirsutam* । नामानि—"सुरसा तुलसी ग्राम्या सुरभी बहुमञ्जरी । अपेतराक्षसी गौरी भूतघ्नी देवदुन्दुभिः" । ध. नि । पत्रं ग्राह्यम् । गुणाः—"तुलसी कटुका तिक्ता हृद्योष्णा दाहपित्तकृत् । दीपनी कुष्ठकृच्छ्रास्रपार्श्वरुक्कफवातजित्" । भा. प्र । सुरसे द्वे सितासितकुसुमे । उन्मन्थचिकित्सिते "सुरसालाङ्गलीभ्यां" मित्यत्र "सरलालाङ्गलीभ्यां" इति सुश्रुतपाठो दृश्यते । सरला धूपकाष्ठ इति डल्हणः ॥

**सुरसाग्रजम्** । उ. ३७. सुरसायाः पुष्पसहितपल्लवम् । तुलसीबीजमित्येके । मल्लिकाकुसुममित्यपरे । सिन्दुवारमञ्जरीति केचित् ॥

**सुरसी** । see **सरसी** ॥

**सुरा** । सू. ३ etc. घनसुरा , मद्यम् । मल.—कळ्ळु കള്ള് । Toddy । "सुरा चषकमद्ययोः" इति मेदिनी ॥

**सुरा** । सू. ५ etc. मद्यविशेषः । "परिपक्वान्नसन्धानसमुत्पन्नां सुरां जगुः" इति शार्ङ्गधरः । शराब । Spirit distilled from rice । "शालिषष्टिकपिष्टादिकृतं मद्यं सुरा स्मृता" । इति भावमिश्रः । यवकिण्वेन कृता इति चरकोपस्कारे । सुरा लोहितवर्णा पिष्टकिण्वकल्केन किंचित् कलुषा इति डल्हणः । गुणाः—"सुरा गुर्वी बलस्तन्यपुष्टिमेदःकफप्रदा । ग्राहिणी शोथगुल्मार्शोग्रहणीमूत्रकृच्छ्रनुत्" । भा. प्र । विशेषगुणाः—"कृशानां रक्तमूत्राणां ग्रहण्यर्शोविकारिणाम् । सुरा प्रशस्ता वातघ्नी स्तन्यरक्तक्षयेषु च" ।

पुराणं ग्राह्यम् । उत्तरैकादशाध्याये "सुरादन्तार्णवमलै"रित्यत्र "क्षौद्रदन्तार्णवमलशिरीषकुसुमैरपि" इति सुश्रुतः पठति ॥

**सुरामण्डः** । शा. १ etc. **प्रसन्ना** । "सुरामण्डः प्रसन्ना स्या"दिति भावमिश्रः ॥

**सुराला** । सू. १५. सुराल इति पाठः । **श्रेष्ठसर्जरसः** । सुलक्षणेति पदार्थचन्द्रिका । अतिविषेति पाठ्यकारः ॥

**सुराह्वम्** । चि. ७ etc. **देवदारु** ॥

**सुराह्वयम्** । चि. ११ etc. **देवदारु** ॥

**सुराह्वा** । चि. १७. **देवदारु** । देवदार्विति संग्रहपाठः ॥

**सुरुगी** । उ. १८. मुरुङ्गीति पाठः समीचीनः । मुरुङ्गीति पाठ एव लेखकप्रमादात् सुरुगीति विवर्तः । मुरुङ्गीत्येव संग्रहपाठः । मधुस्रवेतीन्दुः । मुरङ्गीति भाति सुश्रुतपाठः । अत्र तु शिग्रुः मधुशिग्रुः, मुरङ्गी द्वितीयः शोभांजनक इति डल्हणः । see **शिग्रुः** ॥

**सुरुङ्गी** । see **सुरुगी** ॥

**सुवर्चला** । सू. ६ etc. **रविभक्ता** । अन्ये तु मारिषसदृशनालमार्तगलसदृशपत्रं लंफलकमाहुरिति शिवदासः । सूर्यावर्तभेद इत्येके । ब्राह्मीति केचित् । "सुवर्चलां विशल्यां वा" इत्यत्र सूर्यकान्तेति भावमिश्रः । सूर्यमुखीति हाराणचन्द्रः । N. O.—*Compositae* । हिं.—हुलहुल, हुरहुर, सोंचली; बं.—हुडहुडे, वनशलते; सूर्यमुखी; म.—सूर्यफूलवल्ली, आदिता, खोबरदोडी; गु.—सूरजमुखी; तै.—सूर्यकान्ति; क.—होत्तुतिरुगणागिड, सूर्यकान्ति, सूर्यपानदहू, सूर्यमुखी, अर्कपुष्प; कों.—सूर्यकमल; त.—चूरियकान्ति, पोलुतुवणाङ्कि; अरवाट्टिप्पच्चै इत्येके; सिं.—कोबोवक्का; मल.—सूर्यकान्ति സൂര്യകാന്തി, सूर्यप्पू; पा.—

गुले आफताब परस्त ; अ.—अरदमून ; इं.—Sunflower ; ल.—*Helianthus annuus* । This is an annual herb from South America which is now cultivated in gardens all over India. In some countries, chiefly in Southern Russia and in the Balkan states, it is also grown for its seeds, from which a valuable oil is made । **नामानि**—"सुवर्चला सूर्यभक्ता वरदा बदरापि च । सूर्यावर्ता रविप्रीताऽपरा ब्रह्मसुदुर्लभा" । भा. प्र । मूलादिकं ग्राह्यम् । **गुणाः**—"सुवर्चला हिमा रूक्षा स्वादुपाका सरा गुरुः । अपित्तला कटुः क्षारा विष्टंभकफवातजित् । अन्या तिक्ता कषायोष्णा सरा रूक्षा लघुः कटुः । निहन्ति कफपित्तास्रश्वासकासारुचिज्वरान् । विस्फोटकुष्ठमेहास्रयोनिरुक्कृमिपाण्डुताः" । भा. प्र ॥

**सुवर्चिका** । उ. ३५. सुवर्चः देशभेदः अस्त्यस्य आकरत्वेन ठन् । **स्वर्जिकः** । स्वर्जिकभेद इत्येके ॥

**सुवर्णम्** । सू. २३ etc. सुष्ठु वर्णोऽस्य । **कनकम्** । "सुवर्णो ना स्वर्णकर्षे सुवर्णा च मखान्तरे । स्त्री कृष्णागुरुणि क्लीबं काञ्चने हरिचन्दने" इति मेदिनी ॥

**सुवर्णत्वक्** । सू. २१. सुवर्ण त्वक् चेति पदद्वयम् । सुवर्णं नागकेसरम् । केशरमित्येवात्र चरकपाठः । धत्तूर इति केरलेषु केचित् । सुवर्णत्वागित्येकपदेन आरग्वध इति हेमाद्रिः ॥

**सुवर्णदुग्धा** । चि. १९. काञ्चनक्षीरी ॥

**सुषवी** । सू. १५ etc. सुष्ठु सूयते । **कारवेल्लः** । आरग्वधादिगणव्याख्यायां कारवेल्लक इति डल्हणः । "सुषवी कारवेल्ले स्यात् कृष्णजीरकजीरयोः" इति मेदिनी ॥

**सुषवी** । चि. ८ etc. **स्थूलजीरकः** । see **पृथ्वीका** । कृष्णजीरक इति केचित् ॥

**सूकरः** । **व्रीहिविशेषः** । see **शूकरः** ॥

**सूकरः** । शा. ६. सूयतेऽपत्यार्थम् । सू इत्यव्यक्तं शब्दं करोति इति वा । **वराहः** ॥

**सूक्ष्मनेत्रम्** । उ. २६. **व्रणप्रक्षालनयन्त्रम्** । सूक्ष्ममुखवाली पिचकारी । तच्चाष्टांगुलं मुद्गवहस्रोत इति डल्हणः । Syringe । **ग्रीक्.**—Suringx ; **म.**—पिचकारी ; **त.**—पीचांकुळल् ; **मल.**—पीच्चांकुळल् പീച്ചാംകുഴല് , वस्तिकक्कुयन्त्र , पिस्कारि , स्रुच् ॥

**सूक्ष्मैला** । चि. ११ etc. **क्षुद्रैला** । N. O—*Scitamineae* । **हिं.**—छोटी इलायची ; **बं.**—छोट इलायच , गुजराती इलायच ; गुजराटी एलाच् ; **म.**—एलची , लघुवेला , एलदोडे ; **गु.**—झीणी एलची , एलचीकागदी ; **तै.**—एलकी , एलाकु ; **क.**—एलक्किगिड ; **त.**—चिट्टेलं ; **सिं.**—सिहिन् एनसाल् ; **मल.**—एलप्पुट्टिल् ഏലപ്പൂട്ടിൽ , चिट्टेलं ; **पा.**—हैल , हिल , हाल ; **अ.**—काकले सगीर या काकले सिगार ; **इं.**—Lesser cardamom । **नामगुणाः**—"सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी द्राविडी त्रुटिः । एला सूक्ष्मा कफश्वासकासार्शोमूत्रकृच्छ्रहृत् । रसे तु कटुका शीता लघ्वी वातहरी मता" । भा. प्र । बीजं ग्राह्यम् । **अन्यच्च**—"सूक्ष्मैला द्राविडी तुत्था कोरङ्गी बहुला त्रुटिः । एला कपोतवर्णा च चन्द्रबाला च निष्कुटी" । ध. नि ॥

**सूना** । सू. ७. **वध्यस्थानम्** । "सूनं पुष्पे वधालये" इति त्रिकाण्डशेषे । "सूनं पुष्पं वधस्थाने सूना जिह्वातलेऽपि च" इति शाश्वतः । "सूना पुत्र्यां वधस्थानगलशुण्डिकयोः स्त्रियां" इति मेदिनी । "सूना स्यात् घातनस्थानं" इति हलायुधः । **मल.**—कुलनिलं

കൊലനിലം, कुलस्थलं। Place of execution, Slaughter-house। सूनाटवीत्येकपदमितीन्दुः। तत्र। आघातनमटवी चेति पदद्वयेनेव चरकपाठः ॥

**सूपः** । सू. ७. उपदंशविशेषः। दालित्यञ्जनम्। Soup। क्रिया यथा—"द्विदलधान्यसूपे कर्तव्ये तद्धान्यं कृष्णसर्षपतैलेन उद्वर्तनीयं, अथ शुष्कीकृत्य त्वचा हीनं द्विदलं गृहीत्वा तस्य सूपः पाच्यः। "दाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभिः। संयुक्ता सूपनाम्नी स्यात् कथ्यन्ते तद्गुणा अथ। सूपो विष्टंभको रूक्षः शीतस्तु स विशेषतः। निस्तुषो भृष्टसंसिद्धो लाघवं सुतरां व्रजेत्"। भा. प्र ॥

**सूपम्** । दाली ॥

**सूप्यम्** । सू. ६. मुद्गमाषादीनां पत्रम् ॥

**सूप्यपर्णी** । सूर्पपर्णीति वा पाठः। see शूर्पपर्णी ॥

**सूरणः** । चि. ३. सूर्यते। 'सूरी हिंसायाम्'। कन्दशाकविशेषः। N. O.—*Araceæ*। हिं.—सूरन, जिमीकन्द, जमींकन्द, जमिन्कन्द, ओल; बं.—ओल; म.—गोडा सुरण; गु.—सूरण; मुंबापुर्याम्.—जंलिसूरण, जङ्गलि सूरण; तै.—मञ्चाकन्द, मञ्चिकुन्द; क.—सूरणगड्डे; कों.—सूर्णु; त.—करुणैक्किळङ्कु, चूरणं, चेनै; तु.—केने; सिं.—किडारं; मल.—चेना ചേന; बर्मा.—व्वा (Wa); पा.—ओल; इं.—Telugu potato, Telinga potato; Tacca इत्येके; ल.—*Amorphophallus campanulatus, Arum Companulatum*। नामानि—"अर्शोघ्नः सूरणः कन्दः कन्दार्हः कन्दवर्धनः। दुर्नामारिः सुवृत्तश्च वातारिः कन्दसूरणः"। ध. नि। कन्दः ग्राह्यः। गुणाः—सूरणो दीपनो रूक्षः कषायः कण्डुकृत कटुः। विष्टंभी

विशदो रुच्यः कफार्शःकृन्तनो लघुः । विशेषादर्शसे पथ्यः प्लीह-गुल्मविनाशनः । सर्वेषां कन्दशाकानां सूरणः श्रेष्ठ उच्यते । दद्रूणां कुष्ठिनां रक्तपित्तिनां न हितो हि सः । सन्धानयोगं सम्प्राप्तः सूरणो गुणवत्तरः" । भा. प्र ॥

**सूर्पपर्णी** । उ. २ etc. मुद्गपर्णी । माषपर्णी च । सूप्यपर्णीति पाठः ॥

**सूर्यकान्तः** । सू. ३० etc. **स्वनामख्यातस्फटिकमणिः** । "शुद्धः स्निग्धो निर्व्रणो निस्तुषोन्तर्यो निर्घृष्टो व्योमनैर्मल्यमेति । यः सूर्यांशुस्पर्शनिष्ठ्यूतवह्निर्जात्यः सोयं कथ्यते सूर्यकान्तः" । हिं.—सूर्यकान्त, जबरजद ; बं.—आतस पाथर, आतसी ; म.—सूर्यकान्तमणि ; गु.—अगन च शमांनो काच ; मल.—सूर्यकान्तक्कल्लु സൂര്യകാന്തക്കല്ല് । Sunstone, Jasper, Magnifying glass । **नामानि**—"अथ भवति सूर्यकान्तस्तपनमणिस्तपनश्च रविकान्तः । दीप्तोपलोऽग्निगर्भो ज्वलनाश्माऽर्कोपलश्च वसुनामा" । रा. नि । **गुणाः**—"सूर्यकान्तो भवेदुष्णो निर्मलश्च रसायनः । वातश्लेष्महरो मेध्यः पूजनाद्रवितुष्टिदः" । रा. नि ॥

**सूर्यवल्ली** । सू. ३५. **सूर्यतुल्यपुष्पिका वल्ली** । जिज्ञासितव्या । अर्कपुष्पीत्येके । करवीरकाकारपुष्पीत्यरुणदत्तः । अर्क इतीन्दुः । सुवर्चलेत्यपरे । करवीर एवेति केचन । पटोलसदृशपत्रा, यस्याः पत्ररसेनार्क्तं मांसं स्विन्नमिव भवति, अन्ये सूर्यावर्तमाहुरिति डल्हणः । वेम्पाटा इति केरलेष्वेके ॥

**सूषा** । see **शूषा** ॥

**सृमरः** । सू. ६. सरति सृमरः । **चमरवंशीयाश्वाकारमहामृगविशेषः** । वनतुरग इति हेमाद्रिः । महाश्वाकारश्चमरवान् मृगभेद

इति हाराणचन्द्रः । महाश्वाकारपदमेव प्रमादान्महाशूकर इति चक्रपाणिदत्तेन विवृतः । मत्स्याकारमहाशूकर इति च केचित् प्रस्खलन्ति । जङ्गली सूअर इति चरकप्रसादनी । "सृमरः स्याद्वालमृगः" इति वैजयन्ती । मल.—कुतिरमान् കുതിരമാൻ, वर्कंळमान इत्येके । इं.—Hartebeest; ल.—*Bubalis caama* । **मांसगुणाः**—"सृमरस्य तु मांसं च कषायानुरसं स्मृतम् । वातपित्तोपशमनं गुरु शुक्रविवर्धनम्" । सु. सू. ४६ ॥

**सेलुः** । उ. ३६. शेलुः ॥

**सेव्यम्** । सू. ७ etc. सेवितुमर्हम् । उशीरम् । "सेव्यं क्लीबमुशीरे स्यात् सेवार्हे पुनरन्यवत्" इति मेदिनी । महातिक्तकयोगे उशीरमिति चरकसंग्रहयोः पाठः । सुश्रुतसंहितायामिक्षुरगृष्टिके इति पदद्वयं दृश्यते । केषुांचत् ग्रन्थेषु तत्त्रयमपि न विद्यते ॥

**सैन्धवम्** । सू. ६ etc. सिन्धुनद्युपलक्षिते देशे भवम् । सिन्धुदेशोत्थो स्वनामख्यातखनिजलवणम् । "सैन्धवोऽस्त्री माणिमन्थे नाऽश्वे सिन्धुभवे त्रिषु" इति मेदिनी । हिं.—सेंधानोन, लाहौरी निमक; उर्दु.—सोना नमक, बं.—सैन्धवलवण; म.—सेंधे लोण, शेंदे लोण; गु.—सिंधालूण; तै.—सैन्धवलवणमु; सिन्धु उप्पु; क.—सैंधव, इन्तुप्पु; त.—इन्तुप्पु; सिं.—सहिन्दलुणु; मल.—इन्तुप्पु ഇന്തുപ്പ്; पा.—नमकेसङ्ग, बिलोरी, नमके सेंध; अ.—मिल-हे-हिन्दी, मिल-हे-तबासरद; दखा.—सोंदा निमक; इं.—Rock-salt, Bay salt; ल.—*Sodium chloride Impura* । "सैन्धवं स्फटिकप्रभं" इति भावमिश्रः । **नामानि**—"सैन्धवं मानिमन्थं च नादेयं लवणोत्तमम् । सिन्धूद्भवं शीतशिवं विशुद्धलवणं पटु" । स. नि । शोधितं ग्राह्यम् । **गुणाः**—"सैन्धवं लवणं स्वादु दीपनं पाचनं

लघु । स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मं नेत्र्यं त्रिदोषहृत्" । भा. प्र । लवणविशेषानुक्तौ सैन्धवं प्रयोज्यम् ।

**सैर्यकः** । सू. १५ etc. श्वेतझिंटी । N. O.—*Acanthaceae* : हिं.—सफेद फूलकी कटसरैया ; बं.—झिंटी ; म.—श्वेतकोरांटा ; गु.—गोरंटें ; तै.—गोरेंटू ; सिं.—हेलकरण्डु ; मल.—वेण्कुरुञ्ञि വെൺകുറുഞ്ഞി ; ल.—*Barleria prionitis* । सहचर इति केचित् । पीतझिंटीत्यन्ये । **नामानि**—"सैरेयकः श्वेतपुष्पः सैरेयः कटसारिका । सहाचरः सहचरः स च झिंट्यपि कथ्यते । कुरण्टकोऽत्र पीते स्याद्रक्ते कुरवकः स्मृतः । नीले बाणा द्वयोरुक्तो दासी चार्तगलश्च सः" । भा. प्र । मूलं ग्राह्यम् । **गुणाः**—सैरेयः कुष्ठवातास्रकफकण्डूविषापहः । तिक्तोष्णो मधुरोऽनम्लः सुस्निग्धः केशरञ्जनः" । भा. प्र ॥

**सैर्यकयुग्मम्** । सू. १५. सहचरद्वयम् । नीलपीतझिण्टीद्वयम् । एको रक्तपुष्पः कुरवकाख्यः, अन्यः पीतपुष्पः कुरण्टकाख्य इत्येके । रक्तपुष्पनीलपुष्पकण्टशेलुयाद्वयमिति डल्हणः । नीलश्वेतभेदेन इति पाठ्यकारः । पीतारुणपुष्पभेदात् झिण्टीद्वयमिति सुश्रुतभाष्यकारः । कुरण्टककुभाविति कालिकाकारः ॥

**सैला** । सू. १५. सूक्ष्मैला । सशब्द ईषद्वाचीति हेमाद्रिः । सुश्रुतसंहितायां 'सैला' इयथवा एलार्थेनापि च न कश्चिद् दृश्यते पदप्रयोगः ॥

**सोभाञ्जनः** । शिग्रुः । see शोभाञ्जनः ॥

**सोभाञ्जनकः** । शिग्रुः ॥

**सोमत्वक्** । उ. ३५. कट्फलः । कट्फलत्वगितीन्दुः । सोमलतायाः त्वगिति केचित् ॥

**सोमराजी** । चि. १९ etc. सोमेनाऽऽह्लादनेन राजते । वाकुची ।

"हिमवद्गिरिसंभूतां सोमराजी"मित्यत्र सोमराजीशब्दः विशेष्य एवेति केचित् ॥

**सोमवल्कः** । मू. ७ etc. सोमस्येव वल्कोऽस्य । **कट्फलः** । "सोमवल्कस्तु धवलखदिरे कट्फले तथा" इति केशवस्वामी । कत्था इति शिवदीपिका । न्यग्रोधादिगणव्याख्यायां सितसारः खदिर इत्यरुणदत्तः । खदिर इति चक्रपाणिदत्तः । रोहिणीति सुश्रुतपाठः । कटुकीनि भाष्यकारः ॥

**सोमवल्कः** । मू १५. अकण्टकित्वात्–शुक्लत्वाद्वा । **कदरः** । "कट्फले शुक्लखदिरे सोमवल्क उदाहृतः" इति शाश्वतः ॥

**सौगन्धिकम्** । उ. ३०. सुष्टु गन्धः सुगन्धः, तस्येदम् ठन् स्वार्थे अण् । सुगन्धि श्वेतरक्तमिश्रवर्णकमलम् । **महाकह्लारम्** । इन्दीवरमिति केचित् । कमलनलिनशतपत्रपुण्डरीकानि दिवा विकसन्ति । कुमुदमुत्पलं च रात्रौ । सौगन्धिकं सन्ध्यायामेव विकसति । गर्दभपुष्पाभिधानमत्यन्तसुरभि चन्द्रोदयविकासीत्यपरे । "सौगन्धिकं तु कह्लारे पद्मरागेऽपि कत्तृणे । पुंलिङ्गो गन्धपाषाणे सुगन्धिव्यवहारिणि" इति मेदिनी । "सौगन्धिकं नीलपद्मं भद्रं कुवलयं कुजम् । इन्दीवरं तामरसं कुवलं कुड्मलं मतं" इति धन्वन्तरीयनिघण्टौ । "वरोत्पलं तु कह्लारं सौगन्धिकशिशुप्रिये" इति वैजयन्ती । सौगन्धिकं नीलोत्पलाकारवर्णमुत्पलं सुगन्धि चेति डल्हणः । सुन्धी इति विज्ञायते वङ्गेषु । पुष्पं ग्राह्यम् । see **कह्लारः** ॥

**सौधम्** । चि. १८. **स्नुहीक्षीरम्** । कळ्ळिप्पाल् इति केरलेषु ॥

**सौभाञ्जनकः** । चि. ३. **शिग्रुः** ॥

**सौराष्ट्रिका** । उ. ३४. **सौराष्ट्री** ॥

**सौराष्ट्री** । त्रि. ५ etc. सुराष्ट्रदेशे जाता । "सौराष्ट्री तु स्त्रियामियम् । सौराष्ट्रदेशविख्याते मृद्भेदे" इति केशवस्वामी । **स्वनामख्यातसुगन्धमृत्तिका** । तुंबुरुमृत्, गोपीचन्दनम् । तुरीति लोके, अपरे सामान्येन कृष्णमृत्तिकामाहुरिति डल्हणः । "स्फटिकाया गुणाः सर्वे सौराष्ट्र्या अपि कीर्तिताः" इति भावमिश्रः । **हिं.**—सोरठकी मिटी, गोपीचन्दन, पानिसोक ; **बं.**—तिलकमाती ; सुगन्धमिट्टी ; **म.**—गोपीचन्दन, सोरटी माती ; **गु.**—सोरठी माटी ; **क.**—तुरत्रियमणु ; **सिं.**—सुरभेटिय ; **मल.**—तुवरिमण्णु ഉവരിമണ്ണ്, गोपिमण्णु ; **इं.**—Yellow ochre । *Gopichandan* is so named from a lake called Gopi, near Dwaraka, wherefrom it is taken. It is a kind of clay brayed in water like chandan used by the Hindus to make sectarian marks on their faces, chests and arms. It is a manganesium iron and an aluminium yellow earth found in pieces of various shapes. Its smell resembles that of multani mati, another kind of clay. Water poured upon it is soon absorbed । **नामानि**—"सौराष्ट्री चामृतासङ्गा कांक्षी काक्षी सुराष्ट्रजा । अजिता तुवरी तुल्या मृत्स्ना मृत्स्ना मृतालकम्" । ध. नि । शोधितं ग्राह्यम् । उत्पत्तिशोधने—"सौराष्ट्रखनिसंभूता मृत्स्ना सा तुवरी मता । वस्त्रेषु लिप्यते याऽसौ मञ्जिष्ठारागबन्धिनी । तुवरी काञ्जिके क्षिप्ता त्रिदिनाच्छुद्धिमृच्छति । क्षाराम्लैर्मर्दिता ध्माता सत्वं मुञ्चति निश्चितम्" । **गुणाः**—"तुवरी तिक्तकटुका कषायाऽम्ला च लेखनी । चक्षुष्या ग्रहणीछर्दिपित्तसंतापहारिणी" । रा. नि । "सौराष्ट्रमृदभावे च ग्राह्या पङ्कस्य पर्पटी" इति ॥

**सौवर्चलम्** । **सू.** ३ etc. **कृष्णलवणम्** । **हिं.**—कालानोना, संचरनमक, सोचरनोन ; चौहारकोड़ा इत्येके ; **बं.**—सचल

लवण, संचरलवण ; म.—पादेलोण ; गु.—संचललूण ; तै.—नेल्लउप्पु ; सिं.—सुवसलुणु ; मल.—तुवर्चिल उप्पु തുവർച്ചില ഉപ്പ് ; पा.—नमकसियाह ; अ.—मलावसवद ; इं.—Black salt, Sochal salt ; ल.—*Unaqua sodium chloride* । Sauvarchala, Prof. Wilson says, is so called from the district where it abounds. He thinks the substance is Natron । "सौवर्चलं तु काचाभं" इति भावमिश्रः । नामानि—"अक्षं सौवर्चलं प्रोक्तं रुचकं हृद्यगन्धकम् । तिलकं कृष्णलवणं तत्काललवणं स्मृतम्" । ध. नि । शोधितं ग्राह्यम् । गुणाः—"सौवर्चलं लघु क्षारं कटूष्णं गुल्मजन्तुजित् । ऊर्ध्ववातामशूलार्तिविबन्धारोचकापहम्" । रा नि ॥

**सौवीरम्** । मू २ etc. अञ्जनविशेषः । see **सौवीराञ्जनम्** । "सौवीरमञ्जनं नित्यं हितमक्ष्णोस्ततो भजे"दित्यत्र स्रोतोञ्जनमित्येव सुश्रुतपाठः । "स्रोतोञ्जनं तु सौवीर"मिति वैजयन्ती । सौवीरं काञ्जिके स्रोतोञ्जने च बदरीफले" इति मेदिनी ॥

**सौवीरम्** । मू. ६ see **सौवीरबदरम्** ॥

**सौवीरम्** । चि. ६. काञ्जिकविशेषः । म.—जवांची पेज करून आंब वितात तें कांजी । यवकाञ्जिकं । मल.—यवकाटि യവകാടി । "सौवीरं तु यवैरामैः पक्वैर्वा निस्तुषैः कृतम् । गोधूमैरपि सौवीरमाचार्याः केचिदूचिरे" इति भावमिश्रः । गुणाः—"सौवीरं तु ग्रहण्यर्शःकफघ्नं भेदि दीपनम् । उदावर्ताङ्गमर्दास्थिशूलानाहेषु शस्यते" भा. प्र । "सौवीरकं सुवीराम्लं ज्ञेयं गोधूमसंभवं" इति नृसिंहः । "यवगोधूमसंभव"मिति धन्वन्तरीयनिघण्टौ । काञ्जिकमिति केचित् । अतीतसप्तरात्रं ग्राह्यम् ॥

**सौवीरकम्** । चि. ६. काञ्जिकविशेषः । see **सौवीरम्** ॥

**सौवीरकाञ्जनम्** । उ. २ see **सौवीराञ्जनम्** ॥

**सौवीरबदरम्** । **सू. ६. बदरीफलविशेषः** । महत्तरबदरीफलम् । "सौवीरं बदरं महत्" । N. O.—*Rhamneæ* । हिं.—बडाबेर, सौवीरबेर, तितम-बेर, कण्टिआरि ; बं.—बडकुल, नारिकुले-कुल ; म.—रायबोर ; मुंबापुर्याम्.—खोरासानोबोरा ; पा.—सिन्धो-इ-जिलानि, पश्चा.—पश्चित, अ.—उन्नाब ; मल.—वलिय लन्त वलिय ലന്ത ; जर्मन्.—Gemeiner Juden-dorn ; फ्र.—Jujubier cultive ; इं.—Fruit of the big jujube tree ; ल.—*Zizyphus Vulgaris* । This tree is found in the Punjab, Himalayas, Kashmir and Baluchistan । कर्णिकाबदरमित्यरुणदत्तचन्द्रनन्दनौ । गुणाः—"पच्यमानं सुमधुरं सौवीरं बदरं महत् । सौवीरं बदरं शीतं भेदनं गुरु शुक्रलम् । बृंहणं पित्तदाहास्रक्षयतृष्णानिवारणम्" । भा. प्र । "सौवीरं बदरं स्निग्धं मधुरं वातपित्तजित्" इति सुश्रुतः । पदद्वयमिति हेमाद्रिः । see **बदरी** ॥

**सौवीराञ्जनम्** । उ. १३. सौवीराख्यमञ्जनम् । सुवीरा नाम नदी, तद्भवमञ्जनं सौवीराञ्जनम् । अञ्जनविशेषः । हिं.—सफेद सुरमा ; बं.—श्वेतसुरमा ; म.—पांढरा सुरमा ; गु.—सुरमो ; मल.—वेलुत्त अञ्जनक्कल्लु വെളുത്ത അഞ്ജനക്കല്ല് ; इं.—Galena, White antimony, Sulphide of Lead ; ल.—*Plumbi Sulphuretum* । "Galena or sulphide of lead is called anjana or sauviranjana in Sanskrit, and krishna surma in Vernacular. It is called anjana, which literally means collyrium or medicine for the eyes, from the circumstance of its being considered the best application or cosmetic for them. Sauviranjana is said to be obtained from the mountains of Sauvira,

a country along the Indus, whence it derives its name. The article supplied under its vernacular name surma is the sulphide of lead ore. Surma is usually translated as sulphide of antimony, but I have not been able to obtain a single specimen of the antimonial ore from the shops of Calcutta and of some other towns. The sulphide of antimony occurs in fine streaky, fibrous, crystalline masses of a radiated texture. The lead ore on the contrary, occurs in cubic masses destitute of rays and is tabular in its crystalline arrangement". Mat. Med. of the Hindus, by U. C. Dutt । "To the above I should add that the commentator says that Sauviranjana comes from the river called Suvira. Very probably, Suvira is the name of the Indus for some miles above its fall into the sea." A. C. Kaviratna । शोधितं ग्राह्यम् । सौवीराञ्जनमेव कृष्णवर्णमिति नृसिंहमदनपालादयः । see **अञ्जनम्** and **स्रोतोञ्जनम्** ॥

**स्तन्यम्** । चि. ४ etc. स्तने भवं यत् । **मानुषीस्तनदुग्धम्** । "अथ स्तनभवे त्रिषु । स्तन्यं क्षीरे तु तत् क्लीबं" इति केशवस्वामी । "रसप्रसादो मधुरः पक्वाहारनिमित्तजः । कृत्स्नाद्देहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते" । "आहाररसयोनित्वादेवं स्तन्यमपि स्त्रियाः । तदेवापत्यसंस्पर्शात् दर्शनात् स्मरणादपि । ग्रहणाच्च शरीरस्य शुक्रवत् संप्रवर्तते । स्नेहो निरन्तरस्तत्र प्रस्रवे हेतुरुच्यते" । सु. नि १० । तन्नाशकारणम्—"अवात्सल्याद् भयाच्छोकात् क्रोधादत्यपतर्पणात् । स्त्रीणां स्तन्यं भवेत् स्वल्पं गर्भान्तरविधारणात्" । भा. प्र । हिं.—स्त्रीका दूध ; क.—हेंगुसिन हालु ; सिं.—तनकिरि ; मल.—मुलप्पाल् മുലപ്പാല് ; इं.—Human milk ॥

**स्तन्यक्षीरम्** । सू. २४. मानुषीक्षीरम् । see **स्तन्यम्** ॥

**स्त्रैणम्** । सू. ५. स्त्रिया इदम् अण् स्नञ् । **मानुषीक्षीरम्** । see **स्तन्यम्** ॥

**स्थविरम्** । चि. ३. **शैलेयम्** । श्रावणीति पाठ्यकार: । बोटस्थविरमित्येकपदमिति केचित् ॥

**स्थिरा** । सू. १४ etc. **शालपर्णी** । "शालपर्ण्यां स्थिरा मता" इति नरहरि: । "स्थिरा भूशालपर्ण्योर्ना शनौ मोक्षेऽचले त्रिषु" इति मेदिनी ॥

**स्थिरे** । सू. १५ etc. शालपर्णी पृश्निपर्णी च । अंशुमतीद्वयमित्येवाणुतैलयोगे संग्रहपाठ: ॥

**स्थूलकाकादनी** । चि. १७. **श्वेतगुंजा** । गुञ्जेतीन्दु: । see **उच्चटा** ॥

**स्थूलान्त्रम्** । शा. ४. **बृहदन्त्रं नाम कोष्ठाङ्गम्** । Large Intestine । "बृहदन्त्रं नाम क्षुद्रान्त्रविपक्वस्यान्नस्य मलीभूतस्याऽधारभूतं स्थूलनलकम् । तस्य दैर्घ्यं सार्धहस्तत्रयप्रमाणं, परिणाह: पादांगुष्ठवत् स्थूलतरो वा । तच्च उदरगुहायां दक्षिणवंक्षणोत्तरिकप्रदेशादुत्थाय वामावर्तेन क्षुद्रान्त्राणि प्रदक्षिणीकृत्य वामं वंक्षणोत्तरिकप्रदेशं प्राप्नोति, ततश्चादौ कुण्डलिकामारचय्य पश्चान्मध्यरेखानुक्रमेण सरलीभूयाऽवतीर्णं परिणमति गुदनालिकायां मनुर्वक्रायां पृष्ठवंशपुरस्तात् । तस्य च बृहदन्त्रस्य पक्वाशय इति मलाशय इति वा संज्ञा । अन्नस्य खलु विपक्वस्य आप्यभागशोषणात् तत्रैव हि सर्वथा मलभावपरिणाम:" । प्र. शा । see **अन्त्रम्** ॥

**स्थौणेयम्** । सू. १५ etc. **सुगन्धौषधिविशेष:** । ग्रन्थिपर्णस्यैव भेद:

ईषत् सुगन्धं च । अथ धुचिकित्सिते शैलेयादितैलयोगे 'थौणेयक' मिति भाति चरकपाठः । "स्थौणेयकस्याभावे तु भिषग्भिर्दीयते गदः" इति भावमिश्रः । हिं.—थुनेर ; बं.—गांथि आला ; नेपा.—गाटि उग ; म.—थुणेर ; गु.—भरूंठ ; तै.—सुगन्धद्रव्यमु ; क.—स्थौणजे ; मल.—तूणियाक्कं തൂണിയാക്കം ; ल.—*Clerodendron infortunatum* इत्येके । **नामानि**—"स्थौणेयकं बर्हिचूडं शुकपुच्छं शुकच्छदम् । विकर्णं शुकबर्हं च हरितं शीर्णरोमकम्" । ध. नि । मूलं ग्राह्यम् । **गुणाः**—"स्थौणेयकं कटु स्वादु तिक्तं स्निग्धं त्रिदोषनुत् । मेधाशुक्रकरं रुच्यं रक्षोघ्नं ज्वरजन्तुजित् । हन्ति कुष्ठास्रतृड्दाहदौर्गन्ध्यतिलकालकान्" । भा. प्र ॥

**स्नायुः** । वायुवाहिनाडीभेदः । Ligament or Fibrous tissue । स्नायवो नाम—सान्द्रमसृणशणगुच्छसमाकाराः सन्धिबन्धनार्थाः प्रायेण । स्नायुशब्दश्चैष द्वयोरर्थयोर्दृश्यते प्रयुक्तः—स्नायुसंहतौ स्नायुव्यक्तिषु च । तत्र प्रथमः अस्थिसन्धिबन्धनरूपोऽर्थः, स मुख्यः—"प्रतानवतीभिर्हि स्नायुभिर्दृढीकृताः सन्धयः"—इति पूर्वाचार्योक्तेः । अथ द्वितीयः स्नायुव्यक्तिरूपोऽर्थः स गौणः । तेन स्नायुशब्दः क्वचित् शणसूत्रवत् दृढशुभ्रसूक्ष्मसूत्राण्यभिधत्ते । तथाहि कलासु कण्डरासु पार्श्वपृष्ठोरःपेश्यन्तेषु आमाशयपक्वाशयबस्त्यन्तभागेषु च दृश्यते यः स्नायुशब्दः प्रयुक्तः पूर्वैः सोऽस्मिन्नेवार्थे" । प्र. शा । आहुश्च—"स्नायूश्चतुर्विधा विद्यात्तास्तु सर्वा निबोध मे । प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा । प्रतानवत्यः शाखासु सर्वसन्धिषु चाप्यथ । वृत्तास्तु कण्डराः सर्वा विज्ञेयाः कुशलैरिह । आमपक्वाशयान्तेषु बस्तौ च सुषिराः खलु । पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ । नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्वृता । भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता । एवमेव

शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः । स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः" । सु. शा. ५. अ ॥

**स्नुक्** । सू. १५ etc. **स्नुही** । मुष्ककादिगणे 'वज्रवृक्ष' इत्येव सुश्रुतपाठः ॥

**स्नुषा** । चि. ९. कर्कोटः । स्नुहीत्येके ॥

**स्नुही** । शा. १ etc. स्नुह्यति क्षीरं स्नुक् स्नुही च । "स्नुही च स्नुहा स्नुग्भा स्नुङ्" इत्यमरदत्तः । उपविषजातीयक्षीरसारवृक्षः । N. O.—*Euphorbiaceæ* । हिं—थूहर, थेहुर, थोहर, सेहुंड, जाकुनिया ; बं.—मनसासिजु, मनसागाछ, सिजवृक्ष ; म.—निवडुंग ; गु.—खुरासानी थारे, दांडलियो ; तै.—कळ्ळि, जेमुडु ; क.—निवडुङ्ग, निवाडिंगु, बोलिकळ्ळि, चद्रकळ्ळि, बोंतेकळ्ळि ; सिं.—सीनुक्, दलुक् ; मल.—काळ्ळि കള്ളി, चतुरक्कळ्ळि, वैरक्कळ्ळि ; त.—चतुरक्कळ्ळि ; चुताचि, कळ्ळि ; कों.—होडिनिवलि, चतुरक्कळ्ळि ; तु.—कोडेकळ्ळि, दारेकळ्ळि ; अ.—जकुम, फर्युन ; पा.—लादनां ; इं.—Thorny milk hedge plant ; ल.—*Euphorbia nivulia, E. Nerifolia ; E. antiquorum* इत्येके । E. Nivulia is a xerophilous succulent with a milky sap, and having the general appearance of a chandelier. It is out of leaves during the greater part of the year, but with its persistent stipules on, which are modified into sharp spines seated on the tubercled nodes in five spiky lines up the stem । "द्विविधः समतो यैश्च बहुभिश्चैव कण्टकैः । सुतीक्ष्णैः कण्टकैरल्पः प्रवरो बहुकण्टकः" इति चरकः । नामानि—स्नुक् स्नुही च महावृक्षो गुडा निस्त्रिंशपत्रकः । समन्तदुग्धा गण्डीरः सीहुण्डो वज्रकण्ट-

कः" । ध. नि । मूलत्वक् क्षीरं च ग्राह्ये । **गुणाः**—"सीहुण्डो रेचनीस्तीक्ष्णो दीपनः कटुको गुरुः । शूलमष्ठीलिकाध्मानकफगुल्मोदरानिलान् । उन्मादमोहकुष्ठार्शःशोथमेदोऽश्मपाण्डुताः । व्रणशोथज्वरप्लीहविषदूषीविषं हरेत् । उष्णवीर्यं स्नुहीक्षीरं स्निग्धञ्च कटुकं लघु । गुल्मिनां कुष्ठिनाञ्चापि तथैवोदररोगिणाम् । हितमेतद्विरेकार्थे ये चान्ये दीर्घरोगिणः" । भा. प्र । "स्नुहिरुष्णः पित्तदाहकुष्ठवातप्रमेहनुत् । क्षीरं वातविषाध्मानगुल्मोदरहरं परम्" । रा. नि । "बहुदोषे प्रयोक्तव्यमाग्नितुल्यं सुधापयः" इति राजवल्लभः । "शीतवारि सितायुक्तं पानं वज्रीविषापहम् । वस्त्रवायुस्तथा कार्यः शीतछायां च सेवयेत्" इत्यनुपानमञ्जरी ॥

**स्नेहफलसारः । सू. २१.** "स्नेहः फलानां साराणां" इत्यत्र स्नेहफलसारेत्यादिनारभ्यते सुश्रुतसंहितायाम् । तिलादिशिग्रुविभीतकादिफलानां, सारस्तदन्तर्गतो मज्जा इति डल्हणः । फलानां साराणां च स्नेह इत्यर्थेन तु वाग्भटः । फलानामक्षोडनालिकेरादीनां स्नेहस्तथा साराणां खदिरासनादीनां च स्नेह इत्यरुणदत्तः । स्नेहफलानामक्षोडोरुमाणप्रभृतीनां तथा सरलागुरुदेवदारुशिंशपादीनां साराणां स्नेह इति पदार्थचन्द्रिका । फलानां स्नेह एरण्डतैलादिः साराणां स्नेहः, देवदारुतैलादिरिति हेमाद्रिः ॥

**स्पृक् । चि. २१. स्पृका ॥**

**स्पृक्का । सू. १५.** स्पृशति गन्धैः स्पृक्का । **सुगन्धशाकविशेषः ।** कुटिलपुष्पा सुगन्धिद्रव्यमित्युत्तरापथिके इति सुश्रुतटीकायाम् । पिङ्कापुष्पमिति हाराणचन्द्रः । सुगन्धिद्रव्यं शाकभेदो लङ्कोदकपुरीति लोके प्रसिद्धा इति भावप्रकाशे । **हिं.**—**असबरग**, अस्परग, असवर्ग, लङ्कायिका ; **बं.**—पिडिङ्गशाक, गन्धपिंडि, **पिडिंशाक ; उत्.—फिरिङ्किशाक ; म.—कर्पूरवल्ली, कपूरी शाक-**

विशेष, कपुरी मधुरी, गगौना ; गु.–कपूरी मधुरी ; क.–हिक्के ; पेय्मरुट्टि इति केचित् ; सिं.—पिकमल्ल् ; मल.—चोनकप्पुल्लु ചോനകപ്പുല്ല് इत्येके ; पनिक्कूर्क्का इति केचित् । तै.—स्पृक्कुथनेड्डुद्रव्यमु ; पा.–तिरीर ; ल.–*Trifolium officinalis* । Trigonella corniculata इति केचित् । Anisomeles malabarica इत्यपरे । नामानि—"स्पृक्काऽसृक् ब्राह्मणी देवी मालाली कोटिका मता । पञ्चमुष्टिर्देवपुत्री निर्माल्या पिशुना वधूः" । ध. नि । गुणाः—"स्पृक्का कटुः कषाया च तिक्ता श्लेष्मार्तिकासजित् । श्लेष्ममेहाश्मरीकृच्छ्रनाशिनी च सुगन्धिदा" । रा. नि । अन्यच्च—"स्पृक्का स्वाद्वी हिमा वृष्या तिक्ता निखिलदोषनुत् । कुष्ठकण्डूविषस्वेददाहास्रज्वररक्तहृत्" । भा. प्र ॥

**स्फटिकः** । शा. १. सूर्यकान्तः ॥

**स्फटिकः** । उ. ११. मणिविशेषः । हिं.—फटिकमणि ; बं.—फटिक् ; म.—स्फटीक ; गु.—फटकमणि ; सिं.—पलिंगु ; मल.—पळुंकु ; इं.—Crystal । नामानि—"स्फटिकः सितोपलः स्यादमलमणिर्निर्मलोपलः स्वच्छः । स्वच्छमणिरमलरत्नं निस्तुषरत्नं शिवप्रियं नवधा" । रा. नि । गुणाः—"स्फटिकः समवीर्यश्च पित्तदाहार्तिदोषनुत् । तस्याक्षमाला जपतां दत्ते कोटिगुणं फलम्" । रा. नि ॥

**स्फटिककर्पूरम्** । उ. १३. स्फटिकवत् शुभ्रं कर्पूरम् । स्फटिकधवलः कर्पूरः । अग्निसंस्कारादतीतमलस्य शुद्धस्य कर्पूरस्य स्फटिककर्पूरमिति संज्ञेति कैरली । "स्फटिकशुभ्रसुरभिकर्पूर"मिति खदिरादिगुडिकायोगेऽपि दृश्यते । पदद्वयमिति शिवदीपिका ॥

**स्फोटहेतुः** । चि. २०. भल्लातः ॥

**स्योनाकः** । उ. ५. स्योनं सुखमकति । "स्योनः किरणसूर्ययोः"

तेनाकृति, अक्यते, वा । 'अक कुटिलायां गतौ' । **स्वनामख्यातवृक्षः** । N. O.—*Bignoniaceae* । **हिं.**—सोनापाठा, अरलू, टेंटु, टैंटू; **बं.**—सोनागाछ, शोनापाता, सोनालु, नासोना; **उत्.**—फणफणा; **पञ्जा.**—मुलिन्, मिरिङ्गा, तालमोरङ्ग; **नेपा.**—करुमकन्द; **मुंबापुर्याम्.**—तेतु, सौना अरसार; **म.**—दिंडा, टेंटु; खारासिङ्गा इत्येके; **गु.**—अरलू, अरडूशो; **कों.**—चाम्मुयि, जगदळा, फळफळा, टेंटवें; **तै.**—मण्डुकपर्णमु, शुकनासमु, पंपेनचेट्टु, दुण्डिलं; पेद्दमानु इति केचित्; **क.**—आनेमुंगु, दुण्डुकर, बागि, मोक, अळङ्गिमर, शोणा, शोडिलमर; **तु.**—आनेमुंगु; **त.**—पेरुवाकै; वंकमरं इत्यपरे; **सिं.**—तोटिल; **मल.**—पलकप्पयानि(ना) പലകപ്പയ്യാനി(ന), पय्यानि, वेण्पातिरि, पय्यालान्ता, आळान्तल; **ल.**—*Oroxylum Indicum*, *Colosanthes Indica*, *Bignonia Indica* । **नामानि**—"स्योनाकः शोषणश्च स्यान्नटकट्वङ्गटुण्टुकाः । मण्डूकपर्णपत्रोर्णशुकनासकुटन्नटाः । दीर्घवृन्तोऽरलुश्चापि पृथुशिंबः कटंभरः" । भा. प्र । **गुणाः**—"स्योनाको दीपनः पाके कटुकस्तुवरो हिमः । ग्राही तिक्तोऽनिलश्लेष्मपित्तकासप्रणाशनः । टुण्टुकस्य फलं बालं रूक्षं वातकफापहम् । हृद्यं कषायं मधुरं रोचनं लघु दीपनम् । गुल्मार्शःक्रिमिहृत्प्रौढं गुरु वातप्रकोपणम्" । भा प्र । **अन्यच्च**—"टिण्टुकः शिशिरस्तिक्तो बस्तिरोगहरः परः । पित्तश्लेष्मामवातातीसारकासारुचीर्जयेत्" । ध. नि । मूलत्वग् वलफलं च ग्राह्यं । ४०० **दशमूलम्** ॥

**स्रुववृक्षः** । **सू.** १५. स्रुवाया वृक्षः । "स्रुवा द्वयोर्यज्ञपात्रे शल्लकी मूर्वयोः स्त्रियाम्" इति मेदिनी । **विकङ्कतः** । कण्टकी इत्येव सुश्रुतपाठः । पलाश इति केरलेष्वेके ॥

**स्रोतस्** । **शा.** ३ etc. **देहस्थछिद्रम्** । 'स्रवणात् स्रोतांसी'ति

चरकः। स्रोतांसीति—तु शारीरमार्गाणां साधारणी संज्ञा। तथा हि चरकः—"स्रोतांसि खलु परिणाममापद्यमानानां धातूनामभिवाहीनी भवन्त्ययनार्थे" इति। (च. वि. ५ अ)॥

**स्रोतोजम्**। सू. २४. स्रोतोऽञ्जनम्॥

**स्रोतोजाञ्जनम्**। उ. ५ etc. स्रोतोऽञ्जनम्॥

**स्रोतोऽञ्जनम्**। उ. १६. स्रोतसि यमुनास्रोतोजलसन्निकृष्टदेशे भवमञ्जनम्। **अञ्जनविशेषः**। कृष्णपाषाणाकृति धातुद्रव्यम्। हिं.—काला शुर्मा; बं.—नीलसुरमा; म.—काळा सुरमा; गु.—कालो सुरमो, कुहल अंजन; तै.—नीलाञ्जनं, कतुका; क.—अञ्जना; त.—चुरुमाकल्; सिं.—होयन्दुन्; मल.—करुत्त अञ्जनकल्लु കറുത്ത അഞ്ജനക്കല്ല്; कों.—सुरमो; अ.—इसमद कोहल, कुहल इसवद; पा.—सागि सुर्मह्, सूर्मे अस्फहानी; द्रवा.—अञ्जन; बर्मा.—तय्-लक्-योउक्; इं.—Kermes mineral, Black antimony; ल.—*Antimony Sulphide*। **नामलक्षणगुणाः**—"अंजनं यामुनं चापि कपोताञ्जनमित्यपि। तत्तु स्रोतोऽञ्जनं कृष्णं सौवीरं श्वेतमीरितम्। वल्मीकिशिखराकारं भिन्नमञ्जनसन्निभम्। घृष्टं तु गैरिकाकारमेतत् स्रोतोऽञ्जनं स्मृतम्। स्रोतोऽञ्जनसमं ज्ञेयं सौवीरं तत्तु पाण्डरम्। स्रोतोऽञ्जनं स्मृतं स्वादु चक्षुष्यं कफपित्तनुत्। कषायं लेखनं स्निग्धं ग्राहिच्छर्दिविषापहम्। सिध्मक्षयास्रहृच्छीतं सेवनीयं सदा बुधैः। स्रोतोऽञ्जनगुणाः सर्वे सौवीरेऽपि मता बुधैः। किन्तु द्वयोरञ्जनयोः श्रेष्ठं स्रोतोऽञ्जनं स्मृतम्"। भा. प्र। शोधितं ग्राह्यम्। शुद्धिर्यथा—"नीलाञ्जनं चूर्णयित्वा जंबीरद्रवभावितम्। दिनैकमातपे शुष्कं शुद्धं योगेषु योजयेत्"। श्वेतवर्णमेव स्रोतोञ्जनमित्येके। see **अञ्जनं** and **सौवीराञ्जनम्**॥

**स्वगुप्ता** । चि. ३ etc. स्वेनैव गुप्ता । कपिकच्छुः ॥

**स्वगुप्ताह्वा** । चि. ३. कपिकच्छुः ॥

**स्वयंगुप्ता** । चि. ३ etc. स्वयमात्मनैव गुप्ता । कपिकच्छुः ॥

**स्वर्जिकः** । उ. १८. स्वर्जिक्षारः । "मद्रादिविषयोद्भूतान् संछिद्य क्षारवृक्षकान् । दीपयेद्वह्निना सम्यक् तदधः स्थापयेत् घटान् । अदाह्यावरणैर्युक्तान् सूक्ष्मच्छिद्रसमन्वितैः । कृशानौ ज्वलिते तत्र भूयस्तान् सरसद्रुमान् । दहेच्च क्रमशः क्षिप्त्वा तेन तेभ्यः स्रुतो रसः । घटेषु निपतेत्तेषु स शुष्कः स्वर्जिकोऽच्यते" इति । हिं.—सज्जी, साजीखार, कङ्कणखार; बं.—साजिखार; म.—सज्जीखार; गु.—साजीखार; दखा.– चवुर-का-नमक, सज्जीनून; तै.—सविते-मण्णुऽ्‌ु; त.—चूण्टुमण्णु, सनूचिका-रं; क.—साजीखार; मल.—तुवर्च्चिलक्कारं ഉവര്‍ച്ചിലക്കാരം; अ.—कलीव, शब्बुल, अस्पर, तिले-मिलाहुलगिले; पा.—शिखारा, तिने-गसुर, संजारकलिया; इं.—Dhobe's earth, Salsoda, Barilla; ल.—*Soda Carbonas Impura* । **नामानि**—"क्षारोऽन्यः सर्जिकाक्षारः स्वर्जिकाऽथ सुवर्चिका । सुवर्चिकः सुवर्चोऽथ सुखवर्चः स एव च" । ध. नि । शोधितं ग्राह्यम् । **गुणाः**—"स्वर्जिक्षारः कटुश्चोष्णस्तीक्ष्णो गुल्मविनाशकः । शूलं वातं कफं चैव कृमीनाध्मानवातकम् । उदरस्य च वातं च नाशयेदिति कीर्तितः" । नि. र । see **यवक्षारः** ॥

**स्वर्जिका** । सू. ३०. स्वर्जिकः । सुवर्चिकेति सुश्रुतपाठः ॥

**स्वर्णक्षीरी** । सू. १५ etc. स्वर्णमिव पीतत्वात् क्षीरं निर्यासोऽस्यास्य । **काञ्चनक्षीरी** । पीतधत्तूर इत्यरुणदत्तः । अनन्तासदृशपत्रा, 'हियावलि' इति लोके इति च डल्हणः । कंकुष्ठमित्यपरे । सुवर्णक्षीरीति संग्रहपाठः । पीतनिर्यासा प्रायेण सारिवासदृश-

लता मालवे श्रीहट्टे च दृश्यते, तदभावे 'सोनामार्खी' इति प्रसिद्धस्यापि व्यवहारः क्रियते इति भाष्यकारः ॥

**स्वर्णगैरिकम्** । उ. १३. स्वर्णमिव पीतं गैरिकम् । **पीतवर्णमत्युज्वलं गैरिकम्** । **हिं.**—पीलागेरू, सोनागेरू; **बं.**—वर्णकमाटी, लालगिरिमाटी; **म.**—सोनगेरू, हुरमुंजी; **गु.**—सोनागेरू, हडमाची; **क.**—होजाजु; **त.**—पूक्कावि; **मल.**—पूक्कावि പൂക്കാവി, पोन्कावि; **पा.**—गिले सुर्खमिश्री; **अ.**—तीने मगरेवी अह्मर; **फ्र.**—Ocre rouge; **इं.**—Red ochre; **ल.**—*Ferrum Haematite* । **नामानि**—"सुवर्णगैरिकं चान्यत्ततो रक्तरजो विदुः । अत्यन्तशोणितं स्निग्धं मसृणं स्वर्णगैरिकम्" । ध. नि । शोधितं ग्राह्यम् । **गुणाः**—"स्वादु स्निग्धं हिमं नेत्र्यं कषायं रक्तपित्तजित् । हिध्मावमिविषघ्नं च रक्तघ्नं स्वर्णगैरिकम्" । ध. नि । see **गैरिकम्** ॥

**स्वस्तिकः** । चि. ९. **सुनिषण्णः** । "स्वस्तिकस्तु पुमान् गेहवास्तुविन्यसनान्तरे । त्रिकोणसंज्ञके चापि स्त्रीणां स्याद् भूषणान्तरे । सुनिषण्णाह्वये शाकस्तंब पङ्कसमुद्भवे । द्वे तु चाषसमाख्ये स्यात् पक्षिभेदे" इति केशवस्वामी ॥

**स्वस्थः** । सू. २. **नीरोगः** । "समदोषः समाग्निश्च समधातुमलाक्रियः । प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते" इति सुश्रुतः ॥

**स्वादुकण्टकः** । उ. २२. स्वादुः कण्टकोऽस्य । **विकंकतः** । स्वादुकण्टको गोक्षुरः, कण्टकारिवृक्षमन्ये इति डल्हणः । "अथ स्वादुकण्टकः स्याद् विकङ्कते । कोल्यां च गोक्षुरे चापि स्या"दिति केशवस्वामी ॥

**स्वादुवर्गः** । चि. ७. **जीवनीयगणः** ॥

स्वादुस्कन्धः । चि. २१ etc. मधुरवर्गो नाम जीवनीयगणः । मधुरक इत्येव सुश्रुतपाठः ॥

# ह ।

हंसः । मू. ६ etc. हन्ति गच्छति हंसः । प्लवजातीयजलचरपक्षी । "सरःकाकस्तु हंसः स्याज्जालपात् पुरन्दशकः" इति त्रिकाण्डशेषे । "हंसः श्वेतगरुत् मानसौका रक्तपदश्च सः । राजहंसः स्मृतः कृष्णैर्धार्तराष्ट्रः ऽ । मालिकः । मलिनैकलहंसस्तु पीतैः कादंब उच्यते" । म. पा । "हंसो विहङ्गभेदे स्यादर्के विष्णौ हयान्तरे । योगिमन्त्रादिभेदेषु परमात्मन्यमत्सरे । निर्लोभनृपतौ हंसः शारीरमरुदन्तरे" इति विश्वः । हिं.—हंस ; म.—हंसपक्षी ; क.—हणु ; त.—अन्नपट्चि ; सिं.—हंसया ; मल.—अरयन्नं അരയന്നം , अन्नं ; इं.—Swan ; A large handsome webfooted water-fowl with a long neck and beak । नामानि—"हंसो धवलपक्षी स्याच्चक्रांगो मानसालयः । कलहंसस्तु कादंबः कलनादो मरालकः" । रा. नि । मांसगुणाः—"गुरूष्णमधुरः स्निग्धः स्वरवर्णबलप्रदः । बृंहणः शुक्रलस्तेषां हंसो वातविकारनुत्" । सु. सू. ४६ अ । "हंसः स्निग्धो गुरुर्वृष्यो वीर्योष्णः स्वरवर्णकृत् । वातास्रपित्तशमनो बृंहणो बलवर्धनः" । ध. नि । हंसाण्डगुणाः—"धार्तराष्ट्रचकोराणां दक्षाणां शिखिनामपि । चटकानां च यानि स्युरण्डानि च हितानि च । रेतःक्षीणेषु कासेषु हृद्रोगेषु क्षतेषु च । मधुराण्यविपाकीनि सद्योबलकराणि च" । च सू. २७ अ । अन्यच्च—"हंसबीजं परं वृष्यं बृंहणं वातकोपनम् । पाके लघुतरं प्रोक्तं सर्वामयविनाशनम्" । रा. व ॥

**हंसपदी** । चि. २२. हंसपादी । लाजरी इति शिवदीपिका ॥

**हंसपादिका** । उ. ३८. हंसपादी ॥

**हंसपादी** । चि. ५ etc. हंसपदाकारपत्रलता । त्रिपादी । कीटमारिकेत्यरुणदत्तः । "हंसपादी तु संप्रोक्ता रक्तलज्जालुसंज्ञया" इति निघण्टुरत्नाकरे । हंसपादी हंसपदाकारपत्रा पीतपुष्पा जलयुक्तदेशजाता 'हंसपदी' इति लोके प्रसिद्धा इति डल्हणः विदार्यादिगणव्याख्यायाम् । हंसपादी त्रिदलजवापत्रा लताभेदः नामतः 'गोयालिया' इत्याख्यायते इति भाष्यकारः । मण्डूकपर्णीत्यर्थेन केचित् । हिं.—हंसपदी , हंसपगी , हंसराज ; बं. - गोयालिया लता , गोयाले लता , म.—हंसपादी , लाल लाजाळू ; गु.—हंसराज ; क.—नविलडि ; तै.—हंसपादमु ; पा.—परस्या उशान ; अ.—शारुलजीन ; मल.—निलम्परण्टा നിലമ്പരണ്ട , पणप्पुळ्ळटि , चेरुप्पुळ्ळटि ; मोतिरक्कण्णप्पच्च इत्येके ; इं.—Maiden hair ; ल.—*Adiantum Lunulatum* । **नामानि**—"रक्तपाद्यपरा प्रोक्ता विश्वग्रन्थिस्त्रिपाद्यपि । हंसपादी हंसपदी घृतमण्डलिका च सा" । ध. नि । सर्वांशो ग्राह्यः । **गुणाः**—"हंसपादी कटूष्णा स्याद्विषभूतविनाशिनी । भ्रान्त्यपस्मारदोषघ्नी विज्ञेया च रसायनी" । रा. नि । अन्यच्च—"हंसपादी गुरुः शीता हन्ति रक्तविषव्रणान् । विसर्पदाहातीसारलूताभूताग्निरोहिणीः" । भा. प्र ॥

**हंसोदकम्** । सू. ३. शरत्कालीनोदकविशेषः । Limpid and pure water of October-rain । मल.—तुलावेळ्ळं തുലാവെള്ളം । हंसशब्देन सूर्यचन्द्रमसावभिधीयेते , ताभ्यां शोधितमुदकं हंसोदकम् । यदि वा हंससेवायोग्यमुदकं , हंसाः किल विशुद्धमेवोदकं भजन्ते । तच्च हंसोपभोग्यतया हंसवदतिनैर्मल्या-

द्वा हंसोदकं नाम तंत्रकारैरायुर्वेदशास्त्रे संज्ञितमित्यरुणदत्तः । अंशूदकमिति पाठः । "शस्तं शरदि नादेयं नीरमंशूदकं परम् । दिवार्ककिरणैर्जुष्टं निशायामिन्दुरश्मिभिः । अरूक्षमनभिष्यन्दि तत्तुल्यं गगनांबुना" इति सुश्रुतः । "दिवा सूर्यांशुसंतप्तं निशि चन्द्रांशुशीतलम् । कालेन पक्वं निर्दोषमगस्त्येनाविषीकृतम् । हंसोदकमिति ख्यातं शारदं विमलं शुचि । स्नानपानावगाहेषु शस्यते तद्यथामृतं" इति चरकः ॥

हठः । उ. २९. हठते प्लवते । 'हठ प्लुतिशठत्वयोः' । हट इति पाठः । वारिपर्णी । पानीयपृष्ठजा । "हठो वारिपर्ण्यां स्यात् प्रसभेऽपि च" इति विश्वः । "हठः स्यात् प्रसभे पृश्न्यां" इति मेदिनी । N. O.—*Aroideae* । हिं.—जलकुम्भी, काई; बं.—पाना, टोका पाना; म.—जलमण्डवी, जलकुंभी; मुंबापुर्याम्.—प्रश्नि; तै.—अन्तरदामर, नीराकु, तूटिकूर; क.—अन्तरगंगे गिड, हांवलं; त.—कुटैप्पाचि, आकाचत्तामरै; सिं.—दियपरणला; मल.—उण्टप्पायल् ഉണ്ടപ്പായൽ, कुट(ळ)चण्टि, कुटप्पायल्, अक्किळ्ळाप्पोक्कु, नीर्चीरा; इं.—Water-soldier; Tropical Duckweed; जर्मन्.—Schwimmende muschelblume; ल.—*Pistia Stratiotes* । This is a small herb floating on still waters having rosettes of wedge-shaped leaves । "हठः कुंभी वारिपर्णी" इति वैजयन्ती । अभूमिलग्नमूलस्तृणविशेष इत्येके । निर्मूलोद्भवस्तृणविशेष इतीन्दुः । सर्वांशो ग्राह्यः । नामगुणाः—"वारिपर्णी कुंभिका स्याद्वारिमूली खमूलिका । वारिपर्णी हिमा तिक्ता लघ्वी स्वाद्वी सरा पटुः । दोषत्रयकरी रूक्षा शोणितज्वरशोषकृत्" ॥

हपुषा । सू. १४ etc. कटुतिक्तोष्णगुणप्रधानः फलवृक्षविशेषः । हपुषा नाम विस्रगन्धिर्वणिग्द्रव्यभेदः 'आउच' इत्याख्यायते इति

केचित् । जंबूवद्विटपविशेष इति शार्ङ्गधरटीकायामाढमल्लः । रक्त-चन्दनाभः काष्ठभेद इति हाराणचन्द्रः सुश्रुतोत्तरोन्तषष्टितमाध्याय-व्याख्यायाम् । N. O.—*Coniferæ* । हिं.—हऊबेर, होहबेर, आरार ; बं.—हबुषा ; म.—शेरणी, थरडुहब्वे, झाऊ ; गु.—शेरणी, होश ; पश्चा.—अभुल हौबेर ; दखा.—अब्बल ; उत्.—झाऊ ; क.—हौबेर, परडु, हब्वे ; पा.—हब-उला-उशारा ; अ.— अभहल-आरार । कोट्टैकरन्तै इति द्राविडेष्वेके । इं.—Juniper ; फ्र.—Geneverier ; ल.—*Juniperus Communis* । Thevatia Nerifolia इत्यन्ये । सा च मरिचवृन्तवद्दीर्घैकृष्णवर्णा । They are black stalks like those of black pepper, possessed of an aromatic smell । एतत् फलं द्विविधम् । तन्मध्ये प्रथमं फलं मत्स्यसदृशं विस्रगन्धं, द्वितीयमश्वत्थफलसदृशं मत्स्यगन्धम् । उभयविधमेव फलं गुणैस्तुल्यं केवलमाकारतो भिन्नम् । नामानि—"हबुषा वपुषा विस्रा पराश्वत्थफला मता । मत्स्यगन्धा प्लीहहन्त्री विषघ्नी ध्वांक्षनाशिनी" । भा. प्र । फलं ग्राह्यम् । गुणाः—"हपुषा कटुतिक्तोष्णा गुरुः श्लेष्मबलासजित् । प्रदरोदरविड्बन्धशूलगुल्मार्शसां हरा" । रा. नि । अन्यच्च—"हबुषा दीपनी तिक्ता मृदूष्णा तुवरा गुरुः । पित्तोदरसमीरार्शोग्रहणीगुल्मशूलहृत् । पराप्येतद्गुणा प्रोक्ता रूपभेदो द्वयोरपि" । भा. प्र । "हपुषाया अभावे तु चविका तत्र युज्यते" इति पौराणिकाः । श्रावणीति केरलेषु केचित् ॥

**हयगन्धा** । उ. १८. अश्वगन्धा ॥

**हयाह्वया** । चि. १७. अश्वगन्धा । अश्वगन्धेत्येव संग्रहपाठः ॥

**हरिचन्दनम्** । सू. ३. हरेरिन्द्रस्य प्रियं चन्दनं । कोङ्कणदेशप्रसिद्धो कालीयकचन्दनविशेषः । "हरिचन्दनं तु दिव्यं तिक्तहिमं

तदिह दुर्लभं मनुजै"रिति । रक्तचन्दनमिति रघुवंशपदार्थदीपिकायां "कलृप्तांगरागो हरिचन्दनेन" इत्यत्र नारायणपण्डितः। "पीतचन्दनमर्केष्टं गोशीर्षं हरिचन्दनं" इति वैजयन्ती । "हरिचन्दनमस्त्री स्याद्देवानां पादपान्तरे। चन्दने ताम्रसारे च पीतचन्दनसंज्ञके" इति केशवस्वामी । कुंकुमागुरुचन्दनामित्येके । "नारायणप्रियं पीतचन्दनं हरिचन्दनं" इति सरस्वतीनिघण्डौ । यच्छेदे लोहितमतिसुगन्धं सुष्ठु शीतवीर्यं च तद्धरिचन्दनमुच्यते इत्यरुणदत्तः॥

**हरिणः**। सू. ६ etc. ह्रियते गीतेन । **ताम्रवर्णमृगः** । "हरिणस्ताम्र उच्यते" इति सुश्रुतः। गौरहरिण इति डल्हणः। **हिं.**—लाल हिरन; **म.**—लालहरण; **सिं.**—निल्मुवोय; **मल.**—चेम्मान् ചെമ്മാൻ; **इं.**—Red deer; **ल.**—*Cervus elaphus*। **मांसगुणाः**—"मधुरो मधुरः पाके दोषघ्नोऽनलदीपनः। शीतलो बद्धविण्मूत्रः सुगन्धिर्हरिणो लघुः"। सु. सू. ४६. अ। गौरहारिण इति डल्हणः॥

**हरितकम्**। सू. ७ etc. **वासनशाकम्** । *Haritha* is green pot-herb of any kind and not ginger इत्यविनाशचन्द्रः। शालनं हरितकमिति हेमाद्रिः। **उक्तं हि संग्रहे**—"वर्गो हरितकाख्योऽयमुपदंशेषु युज्यते । वासनो व्यञ्जनानां च हृद्यो रोचनदीपनः" इति । कुठेरशिग्रुसुरससुमुखासुरिभूस्तृणाः । मूलकं चुक्रिका चेति वर्गं हरितकं विदुः"। आर्द्रकपलाण्डुप्रभृतीनीत्येके॥

**हरितार्द्रकपेशिका**। see **आर्द्रकपेशिका**॥

**हरितालम्**। चि. २०. हरिवर्णस्य पीतवर्णस्य तालः प्रतिष्ठा यत्र। "हरितालं धातुभेदे स्त्री दूर्वाकाशरेखयोः" इति मेदिनी । पीत-

खनिजोपविषधातुभेदः । हिं.—हरताल ; बं.—हरिताल ; म.—हरताळ ; गु.—हडताल , अरताल ; तै.—हरितालमु , ताळकमु , दहिपाषाणं ; कों.—अरदाला ; क.—हरिदाल , अरिदाल ; त.—ताळकं , अरितारं ; सिं.—हिरियल् ; मल.—अरितारं അരിതാരം ; दखा.—हरताल ; बर्मा.—हसायदान्श्वाल्वा ; पा.—जूतरनेयिक-जूतारद ; अ.—उरसनिगम ; इं.—Orpiment, Yellow orpiment, Yellow sulphuret of arsenic ; ल.—*Arsenicum tersulphureticum* । *Harithala* is found native in China and Persia. Most of the older Sanskrit Mss are written on paper prepared with *Harithala,* to preserve them from the ravages of insects, and this it does most effectually. **नामानि** "हरितालं तु तालं स्यादलं तालकमित्यपि । हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम्" । भा. प्र । पिण्डपत्रगोदन्तबकदलानीति चतुर्धेति केचित् । शोधितं ग्राह्यम् । **शोधनविधिः**—"तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके पचेत् । दोलायन्त्रेण यामैकं ततः कूष्माण्डजद्रवैः । तिलतैले पचेद्यामं यामञ्च त्रिफलाजले । एवं यन्त्रे चतुर्यामं पक्वं शुध्यति तालकम्" । भा. प्र । **गुणाः**—"हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम् । कण्डूकुष्ठास्यरोगासृककफपित्तकचव्रणान्" । **अन्यच्च**—"तालकं हरते रोगान् कुष्ठमृत्युज्वरापहम् । शोधितं कुरुते कान्ति वीर्यवृद्धिं तथायुषम्" । भा. प्र. ॥

**हरिद्रा** । सू. २६ etc. हरि पीतं वर्णं द्राति गच्छति । **स्वनामख्यातकन्दौषधिः** । N. O.—*Scitamineæ* । Zingiberaceæ इत्येके । हिं.—हलदी, हर्दी ; बं.—हलद ; म.—हळद ; गु.—हलदर ; पञ्जा.—हलदी ; काश्मी.—लिदर ; दखा.—हलदी ; कों.—हलद ; तै.—पसुपु ; क.—अरसिन , अरिसि-

न, हळदी; तु.—मंजल्दै; त.—मञ्चळ्, अरिचनं, काञ्चनि; सिं.—कह; मल.—मञ्ञळ् മഞ്ഞൾ; बर्मा.—तानुन्; मला.—कूनेयित्; पा.—जरदचोब, सेरद-चुबह, दारा-सेरदा; अ.—उरुक-एस-सुफ्, ज्सिरसुद; फ्र.—Curcuma long; इं.—Turmeric; Indian saffron; ल.—*Curcuma Longa* । "हरिद्रा शस्यते स्थूला छेदे या कुंकुमच्छविः" इति द्रव्यपरीक्षयाम् । नामानि—"हरिद्रा काञ्चनी पीता निशाख्या वरवर्णिनी । क्रमिघ्ना हलदी योषित्प्रिया हट्टविलासिनी" । भा. प्र । कन्दः ग्राह्यः । गुणाः—"हरिद्रा कटुका तिक्ता रूक्षोष्णा कफपित्तनुत् । वर्ण्या त्वग्दोषमेहास्रशोथपाण्डुव्रणापहा" । भा. प्र । अन्यच्च—"हरिद्रा कटुतिक्तोष्णा कफवातास्रकुष्ठनुत् । मेहकण्डूव्रणान् हन्ति देहवर्णविधायिनी" । रा. नि । हरिद्रा चतुर्धा—हरिद्रा कर्पूरहरिद्रा वनहरिद्रा दारुहरिद्रा चेति ॥

**हरिद्राद्वयम्** । सू. १५. हरिद्रा दारुहरिद्रा च ॥

**हरिद्रे** । सू. ७ etc. हरिद्राद्वयम् ॥

**हरीतकः** । चि. १५. उदरचिकित्सिते "हरीतकत्वचा पिष्टे"रित्यत्र "रोहीतकत्वचा पिष्टै"रित्यवश्यं पठनीयम् ॥

**हरीतकी** । सू. ६ etc. हरिं पीतवर्णं फलद्वारा इता प्राप्ता इण-क्तः । संज्ञायां कन् गौरादिः ङीष् । हरति रोगानिति वा । "हरणात् सर्वरोगाणां या साधुक्ता हरीतकी" इति संग्रहे । "हरीतकी मनुष्याणां मातेव हितकारिणी । कदाचित् कुप्यते माता नोदरस्था हरीतकी" इति वैद्यकम् । "हरस्य भवने जाता हरिता च स्वभावतः । सर्वरोगांश्च हरते तेन ख्याता हरीतकी" । ध. नि । "हरते प्रसभं व्याधीन् भूयस्तरति यद्वपुः । हरीतकी तु सा प्रोक्ता तत्र कीर्द्धातुवाचकः" । रा. नि । "पपात बिन्दुर्मेदिन्यां शक्रस्य

पिबतोऽमृतम् । ओषधीनां ततः श्रेष्ठा प्रादुर्भूता हरीतकी" इति नवनावनीतके । N. O.—*Combretaceae* । हिं.—हरड, हर, हरड़ैं, हडे, हर्रे, पिलेहर्; दक्षिणहिन्दी.—कलरा; उर्दू.—हलदा; उत्.—हरिड़ा, करेड़ा; बं.—हरीतकी; होरा इश्रेके; म.—हर्तकी, हिरडा, हिरडे; गु.—हरडे, हिमाजा, पिलो हर्डे, काबूली हर्डा; पश्चा.—उसरदहलेला; दखा.—पिलेहरा, हर्डा; सिन्धी.—इमाची; काश्मी.—उसरद हलेला; तें.—करकाय; क.—अणिलेकायि, अळलेकायि, कारेकायि, हर्डे-कायिमर; तु.—अणिलेमर; त.—कटुक्काय्, अक्कणं, कटुमरं; सिं.—अरलु; मल.—कटुका കടുക്ക; मलायी.—बुआह कटुका; अ.—एहलीलज; पा.—हलैले जर्द; इं.—Chebulic myrobalan, Ink nut, Black myrobalans; फ्र.—Badamier chebule; जर्मन्.—Rispiger myrobalanenbaum; ल.—*Terminalia Chebula, T. Reticulata* । नामानि—"हरीतक्यभया पथ्या कायस्था पूतनाऽमृता । हैमवत्यव्यथा चापि चेतकी श्रेयसी शिवा । वयस्था विजया चापि जीवन्ती रोहिणीति च" । भा. प्र । पक्वफलं ग्राह्यम् । हरीतकीसप्तभेदाः—"विन्ध्याद्रौ विजया हिमाचलभवा स्याच्चेतकी पूतना सिन्धौ स्यादथ रोहिणी तु गदिता जाता प्रतिस्थानके । चंपायाममृताऽभया च जनिता देशे सुराष्ट्राह्वये जीवन्तीति हरीतकी निगदिता सप्तप्रभेदा बुधैः" । रा. नि । तेषां पृथग्लक्षणानि—"अलाबुवृत्ता विजया वृत्ता सा रोहिणी स्मृता । पूतनास्थिमती सूक्ष्मा कथिता मांसलाऽमृता । पञ्चरेखाऽभया प्रोक्ता जीवन्ती स्वर्णवर्णिनी । त्रिरेखा चेतकी ज्ञेया सप्तानामियमाकृतिः" । भा. प्र । प्रयोगाः—"विजया सर्वरोगेषु रोहिणी व्रणरोहिणी । प्रलेपे पूतना योज्या शोधनार्थेऽमृता हिता । अक्षिरोगेऽभया शस्ता जीवन्ती

जीर्णरोगहृत् । चूर्णार्थे चेतकी शस्ता यथायुक्तं प्रलेपयेत् । काचिदास्वादमात्रेण काचिद्गन्धेन भेदयेत् । काचित् स्पर्शेन दृष्ट्याऽन्या चतुर्धा भेदयेच्छिवा । नृपाणां सुकुमाराणां कृशानां भेषजद्विषाम् । चेतकी परमा शस्ता हिता सुखविरेचनी । सप्तानामपि जातीनां प्रधाना विजया स्मृता । सुखप्रयोगा सुलभा सर्वरोगेषु शस्यते" । भा. प्र । **श्रेष्ठहरीतकीलक्षणम्**—"नवाः स्निग्धा घना वृत्ता गुर्वी क्षिप्ता च याऽम्भसि । निमज्जेत्सा प्रशस्ता च कथिताऽतिगुणप्रदा । नवादिगुणयुक्तत्वं तथैकत्र द्विकर्षता । हरीतक्याः फले यत्र द्वयं तच्छ्रेष्ठमुच्यते" । भा. प्र । **गुणाः**—"हरीतकी पञ्चरसा"मिति चरकः । "हरीतकी पञ्चरसा च रेचनी कोष्ठामयघ्नी लवणेन वर्जिता । रसायनी नेत्ररुजापहारिणी त्वगामयघ्नी किल योगवाहिनी" । रा. नि । **अन्यच्च**—"हरीतकी पञ्चरसाऽलवणा तुवरा परम् । रूक्षोष्णा दीपनी मेध्या स्वादुपाका रसायनी । चक्षुष्या लघुरायुष्या बृंहणी चानुलोमिनी । श्वासकासप्रमेहार्शःकुष्ठशोथोदरक्रिमीन् । वैस्वर्यग्रहणीरोगविबन्धविषमज्वरान् । गुल्माध्मानतृषाछर्दिहिक्काकण्डूहृदामयान् । कामलां शूलमानाहं प्लीहानञ्च यकृत्तथा । अश्मरीं मूत्रकृच्छ्रञ्च मूत्राघातञ्च नाशयेत् । स्वादुतिक्तकषायत्वात् पित्तहृत् कफहृत्तु सा । कटुतिक्तकषायत्वादम्लत्वाद्वातहृच्छिवा । पथ्याया मज्जनि स्वादुः स्नाय्वावम्लो व्यवस्थितः । वृन्ते तिक्तस्त्वचि कटुरस्थिस्थस्तुवरो रसः" । भा. प्र । "ग्रीष्मे तुल्यगुडां ससैन्धवयुतां मेघावनद्धांबरे सार्धं शर्करया शरद्यमलया शुण्ठ्या तुषारागमे । पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजिता त्वाख्यातात्र हरीतकी बुधवरैः सर्वामयध्वंसिनी" इति नवनातनीतके । **हरीतकीसेवननिषेधः**—"अध्वातिखिन्नो बलवर्जितश्च रूक्षः कृशो लंघनकर्शितश्च । पित्ताधिको गर्भवती च नारी विमुक्तरक्तस्त्वभयां न खादेत्" । भा.

म । चिकित्सितैकादशाध्याये "हरीतक्यास्थिसिद्धं वा" इत्यत्र "हरीतक्यादिसिद्धं वा" इत्यवश्यमवगन्तव्यमित्यनुस्मारयामि । हरीतक्यादिस्त्रिफलैव ॥

**हरेणुः** । सू. २३ etc **बृहच्चणकः** । see **सतीनः** । "अथ पुंसि हरेणुः परिकीर्तितः । कलायधान्यभेदे स्याद् रङ्कटीसंज्ञकेऽथ सा । स्त्रियां कौन्तीसमाख्ये स्याद् भेषजे" इति केशवस्वामी ॥

**हरेणुः** । उ. ३४. **कौन्ती** । see **रेणुकः** ॥

**हरेणुका** । चि. २. **सतीनः** ॥

**हरेणुका** । चि. ११. **कौन्ती** । see **रेणुकः** ॥

**हलिनी** । चि. ८. **लाङ्गली** ॥

**हसन्तिका** । चि. १. **अङ्गारशकटी** । **हिं.**—अङ्गेठी, अङ्गीठी; **बं.**—आङ्टा, धुनाची; **मल.**—नेरिप्पोट्टु നെരിപ്പോട; **इं.**—Brasier, a portable fire-place । "हसन्त्यङ्गारशकटी हसन्यङ्गारधान्यपि" इति वैजयन्ती । "अङ्गारशकटीं प्राहुर्हसन्ती च हसन्तिका" इति हलायुधः ॥

**हस्तिकर्णः** । चि. १७. हस्तिनः कर्ण इव पर्णमस्य अच् । **महाकन्दशाकविशेषः** । N. O.—*Aroideae* । **हिं.**—हाथी चिवारी, हस्तिकर्णकन्द; **म.**—हस्तिकर्ण, वहस्त्रिकर्ण; **गु.**—मानकन्दनी; **क.**—मळिरक्कसियगड्डे, मरसणि, मरसणिगे, मुण्टिगिड; **तु.**—रेबेवु; **कों.**—कासाळि; **सिं.**—हबरल; **मल.**—ईळचेम्पु ഇലച്ചേമ്പ്, मारान्, माराम्पु; **ल.**—*Alocasia macrorhiza* । It is a kind of tuber of a plant whose leaves look like the ear of an elephant । **नामानि**—"हस्तिकन्दो हस्तिपत्रः स्थूलकन्दोऽतिकन्दकः । बृहत्पत्रोऽतिपत्रश्च हस्तिकर्णः सुकर्णकः" । रा. नि । **कन्दः ग्राह्यः** ।

गुणाः—"हस्तिकर्णस्तु तिक्तोष्णस्तथा वातकफापहः । शीतज्वरहरः स्वादुः पाके तस्य तु कन्दकः । पाण्डुशोथकृमिप्लीहगुल्मानाहोदरापहः । ग्रहण्यर्शोविकारघ्नो वनसूरणकन्दवत्" । भा. प्र । "हस्तिकर्णः कटूष्णः स्यात् कफवातामयापहः । त्वग्दोषघ्नो महाकुष्ठविषवीसर्पनाशकः" । रा. नि । "वन्यं वारणकर्णिका हस्तिकर्णीति कथ्यते" इति सरस्वतीनिघण्टौ । रक्तैरण्ड इतीन्दुः । मूलक इति केचित् । गजकर्णाकारैकपत्रः, भूपलाश इति लोके इति डल्हणः ॥

हस्तिनी । सू. ५. गजस्त्री । "हस्तिनी गजयोषायां जातिभेदे च योषितः" इति मेदिनी । म.—हत्तिणी ; त.—पानैप्पेण् ; मल.—पिटियाना ; इं.—She-elephant । नामानि—"इभी तु करिणी ज्ञेया हस्तिनी धेनुका वशा । करेणुः पद्मिनी चैव मातङ्गी वासिता च सा" । ध. नि । see गजः ॥

हस्तिपिप्पली । चि. ३ etc. गजपिप्पली ॥

हस्ती(इन्) । उ. ३४. हस्तः शुण्डादण्डोऽस्त्यस्य । गजः ॥

हायनः । सू. ६. शालिविशेषः । हायनकः 'शंगुवाक' इति लोके, जेज्जटस्तु घोटकपुच्छ इत्याह इति सुश्रुतटीकायां डल्हणः । "हायनास्तु महाबुसाः" इति वैजयन्ती । यवकादधिकगुणः । 'ओर्मुण्टकन्' इति केरलेष्वेके ।'

हारिद्रः । सू. ७. हरितलपक्षी । see हारीतः । "हारिद्रः कटुतैलवान्" इत्यत्र कुप्रसवः शाकविशेषः सर्पछत्रानुकारी पीताभास इत्यरुणदत्तादयः । तत्र । "कपोतान् सर्षपतैलभृष्टान्नाद्या"दित्येवात्र सुश्रुतपाठः ॥

हारिद्रम् । सू. ७. दारुहरिद्राकाष्ठम् । दारुहल्दीकी लकड़ी ॥

**हारिद्रशूलकम्** । सू. ७. दारुहरिद्राकाष्ठकृतं शूलम् । हारिद्रसीसकमिति चरकपाठः । हिं.—दारुहल्दीकी सींक ; **मल.**—मरमञ्ञल्क्कोल् മരമഞ്ഞൾക്കോൽ ; इं.—Culm of the tree-turmeric । कदंबकाष्ठेन कृतं शूलमिति चरकांग्लेयानुवादकः ॥

**हारीतः** । **सू.** ६ etc. हारि मनोहरं इतं गमनमस्य । हरिद्रावर्णः प्रतुदपक्षिभेदः । **हारितालपक्षी** । "हारीतः पक्षिभेदे स्यान्मुनिभेदे च कैतवे" इति मेदिनी । हारिद्रक इति केषांचन पाठः । हिं.—हरियल, हारील ; त.—पच्चैप्पुरा ; म.—तिलागिरूपक्षी ; **मल.**—चूळप्रावु ചൂളപ്രാവ്, पच्चप्रावु, पोणा, पूणा, पोकिणा ; इं.—Green pigeon ; Wood pigeon इत्येके ; ल.—*Crocopus* । The green pigeon, said to remain always on the highest trees । हरितपीतवर्ण इति डल्हणः । "हारीतो रक्तपीतः स्याद्धरितोऽपि स कथ्यते" इति भावमिश्रः । अरुणकपोत इति भास्करव्याख्या । **मांसगुणाः**—"हरितालोऽल्पविट्कः स्यात् कषायो विशदो लघुः । रक्तपित्तप्रशमनस्तृष्णाघ्नो वातकोपनः" । रा. व । "हारीतपललं स्वादु कफपित्तास्रदोषजित्" । रा. नि ॥

**हालाहलम्** । उ. ३५. हालेव हलति । **कन्दविषभेदः** । स्थावरविषाणि दशविधानि । **उक्तं हि**—"मूलं पत्रं फलं पुष्पं त्वक् क्षीरं सार एव च । निर्यासो धातवश्चैव कन्दश्च दशमः स्मृतः" इति । " कालकूटवत्सनाभसर्षपपालककर्दमकवैराटकमुस्तकशृङ्गीविषप्रपुण्डरीकमूलकहालाहलमहाविषकर्कटकानीति त्रयोदश कन्दविषाणि" इति सुश्रुतः । **स्वरूपं यथा**—"गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा । तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः । असौ हालाहलो ज्ञेयः किष्किन्धायां हिमालये । दक्षिणाब्धितटे देशे कोंकणेऽपि च जायते" । रा. नि । "चिरेणोच्छ्वसिति श्यावो

नरो हालाहलेन वै" इति सुश्रुतः ॥

**हिंस्रा** । चि. १ etc. **मांसी** ॥

**हिंगु** । सू. ६ etc. हिनोति । 'हि गतौ वृद्धौ च' । हिमं गच्छति वा । **स्वनामख्यातपण्यद्रव्यम्** । N. O.—*Umbelliferae* । हिं.—हींग, हिंगु; बं.—हिङ्; उर्दु.—हिंगु; म.—हिंग, इंगु; गु.—वघारनी, हिंग; दखा.—हिंग; पञ्जा.—हिंग; कों.—हिंगझाड; काश्मी.—याङ्; सिन्धी.—वघायनी, वघारनी; तै.—इंगुवा, रामठं; क.—इंगु, इंगिन, हिंगळद, हिंगु, लेसु; त.—पेरुंकायं, इरामटं, उरुंपरं; तु.—इंग्; सिं.—पेरुंकायं; मल.—पेरुंकायं ൧പെരുങ്കായം; बर्मा.—शिङ्का, सिंगु; मलायी.—हिंगु; अ.—हिलतीत, हिलसीत, तृयिब (Tyib); पा.—अंगझ, अंगुझा खाळीस, अंगुष्टगन्धा; फ्र.—Ferule Asafoetida; जर्मन.—Stinkendes Steckenkrant; इं.—Asafoetida; ल.—*Ferula Asafoetida, F. Narthex* । This small plant grows wild in Punjab, Cashmere, Persia and Afganistan. The gum-resin (asafoetida) obtained by incision from the root । **नामानि**—"हिंगु रामठमत्युग्रं जन्तुघ्नं भूतनाशनम् । अगूढगन्धं बाह्लीकं जरणं सूपधूपनम्" । ध. नि । **गुणाः**—"हृद्यं हिंगु कटूष्णं च क्रिमिवातकफापहम् । विबन्धाध्मानशूलघ्नं चक्षुष्यं गुल्मनाशनम्" । रा. नि । "हिंगूष्णं पाचनं रुच्यं तीक्ष्णं वातबलासहृत् । शूलगुल्मोदरानाहक्रिमिघ्नं पित्तवर्धनम्" । भा. प्र । "लघूष्णं पाचनं हिंगु दीपनं कफवातजित् । कटु स्निग्धं सरं तीक्ष्णं शूलाजीर्णविबन्धनुत्" । सु. सू. ४६. अ । शोधितं ग्राह्यम् । **शोधनविधिः**—"अङ्गारस्थे लोहपात्रे सघृते रामठं क्षिपेत् । चालयेत् किञ्चिदारक्तवर्णं योगेषु योजयेत्" । आ. सं ॥

**हिंगुजटा** । उ. ६. **वाष्पिका** ॥

**हिमम्** । सू. २० etc. **चन्दनम्** । "चन्दने तुहिने हिमम् । कर्पूरे तु पुमान शीतगुणेऽपि त्रिषु तद्वति । हिमा तु स्त्री निशी-थिन्या"मिति केशवस्वामी । "हिमं तुषारमलयोद्भवयोः स्यान्नपुं-सकम् । शीतले वाच्यलिङ्गः" इति मेदिनी ॥

**हिमवद्गिरिसंभूता** । उ. ३६. सोमराजीपदस्य विशेषणम् । श्वे-तवचेतीन्दुः ॥

**हिरण्यम्** । उ. ५. **कनकम्** । उत्तरपञ्चमाध्याये नागकेसरमित्येके ॥

**हिरण्यजं किट्टम्** । चि. १६. **सुवर्णमलम्** । रूप्योत्थं मलमित्य-रुणदत्तः । सुवर्णमाक्षिकमित्येके ॥

**हिरण्यपुष्पी** । शा. १. **लांगली** । कलिकारिकेति डल्हणः । स्वर्ण-केतकीति हाराणचन्द्रः । काञ्चनक्षीरीत्यर्थेन शिवदीपिका । मुश-लीति पाठ्यकारः । आरग्वध इत्यन्ये ॥

**हुताशः** । चि. १९. **चित्रकः** ॥

**हृदयम्** । **चेतनास्थानम्** । Heart । "दिवा प्रबुध्यतेऽर्केण हृदयं पुण्डरीकवत्" इति चरकः । "पुण्डरीकेण सदृशं हृदयं स्यादधो-मुखम् । जाग्रतस्तद्विकसति स्वपतश्च निमीलति" इति सुश्रुतः । "हृदयं नाम स्वतन्त्रपेशीनिर्मितं शून्योदरं यन्त्रम् । तद् अधोमु-खबृहत्पद्ममुकुलाकारं, मध्यमाधरे फुस्फुसान्तराले पुरस्ताद्वामत-स्तिर्यगवस्थितम्, हृदयधराख्येन कलाकोषेण प्रावृतं च । तस्य मू-लदेशः दक्षिणतृतीयोपपर्शुकाया उरःफलकसन्धानादारभ्य वामद्वि-तीयोपपर्शुकाया उरःफलकसन्धानोपकण्ठं यावद्विस्तृतः । अग्रं तु तस्य वामतः पञ्चमषष्ठपर्शुकयोरन्तराले मध्यरेखाया बहिश्चतुरंगु-लाद् दृश्यते, स्पर्शेनानुभूयते च नियतमाहन्यमानम्" । प्र. शा ॥

**ह्रस्वपञ्चमूलम्** । सू. ६ etc. **लघुपञ्चमूलम्** ॥

**हेम(न्)** । सू. ७ etc. **कनकम्** । विसर्पचिकित्सिते "शरैर्हेम्नापि वा हितः" इत्यत्र "शरैर्लेहेन वा हितः" इत्येव चरकपाठः ॥

**हेम(न्)** । उ. २५. **नागकेसरम्** । पद्मकमित्येके । "कालीयकलतामाम्रास्थिहेमकालारसोत्तमैः"रित्यत्र 'मञ्जिष्ठे'त्यर्थेन 'हेमकाला'मेकपदेन चक्रपाणिदत्तः व्याख्यायति ॥

**हेमचूर्णम्** । सू. ७. **सुवर्णभस्म** ॥

**हेमदुग्धा** । सू. १५. **काञ्चनक्षीरी** ॥

**हैमवती** । सू. १५. **श्वेतवचा** । "हैमवत्यभयास्वर्णक्षीरीर्यो: श्वेतवचोमयोः" इति मेदिनी । "पारसीकवचा शुक्ला प्रोक्ता हैमवतीति सा" इति भावमिश्रः ॥

**हैयङ्गवीनम्** । उ. ३९. ह्योगोदोहादुद्धृतमिति । एकरात्रपर्युषिताद्दध्नः सद्योजातं नवनीतम् । ह्यो दोहस्य विकारो नवनीतं, नवीननवनीतम् । "हविर्ह्यस्तनदुग्धोत्थं तत् स्याद्धैयङ्गवीनकम्" इति । हिं.—ताजा मक्खन ; म.—ताजे लोणी ; मल.—पुतुवेण्णा പുതുവെണ്ണ ; इं.—Fresh butter । "तत्तु हैयङ्गवीनं यद् ह्योगोदोहोद्भवं घृतम्" इति सिंहः । **गुणाः**—"हैयंगवीनं चक्षुष्यं दीपनं रुचिकृत्परम् । बलकृद् बृंहणं वृष्यं विशेषाज्ज्वरनाशनं" इति । see **नवनीतम्** ॥

**ह्रीबेरम्** । चि. १ etc. ह्रियै लज्जायै बेरमङ्गमस्य क्षुद्रत्वात् । **वालकम्** । रक्तपित्तचिकित्सिते पेयाकल्पने 'ह्रीबेर'मित्यत्र 'अंबु' इत्येव चरकपाठः ॥

पितामहोऽभून्मम रामवैद्यः
श्रीकुञ्जुमामिस्तु तदीयसूनुः ।
सुतोऽभवं तस्य च तत्पितृव्य-
नामाऽप्यहं केरललब्धजन्मा ॥

पितुः सकाशादवबुद्धशास्त्रो
यः सौगतः शङ्करसोदरश्च ।
स्वतन्त्रचिन्तानुगतप्रतीति-
र्माणिक्यनामाऽस्मि विदां विधेयः ॥

कोषात्मकोऽष्टाङ्गहृदो मयायु-
र्वेदौषधीदुर्ग्रहशब्दचर्चः ।
युगाश्वनागेन्दुशके प्रणीतो
मुदे बुधानां हृदयप्रकाशः ॥

इति वैद्यवरश्रीकुञ्जुमामिमहाशयात्मजश्रीमाणिक्य-
भिषग्विरचितो हृदयप्रकाशाभिध-
टिप्पणसहित अष्टांगहृदयकोषः समाप्तः ॥

# समाधिश्लोकः ।

शोणाजायाशकाब्दे ह्युदगयनयुताऽङ्गीरसे शुक्लपक्षे
पञ्चम्यामादिमर्क्षे मृगपतिकरणे फाल्गुने भौमवारे ।
ब्राह्माख्ये सन्मुहूर्ते वसुरसगवयः स्थूलकायं विहाय
प्रायात् श्रीकुञ्जुमामिर्भिषगमृतपदं ध्याननिष्ठो गुरुर्मे ॥